धातूनां स्नानमायुष्यं भवतीति सहजानुमेयम् । निर्मलत्वात् धातूनां मनोहर्षणाच्च वृष्यत्वसंभवः। पाप्मजिदिति शरीरमलाख्यं पाप्मानं जयतीति शारीरविदामभिप्रायः। निर्मले शरीरे निर्मलव्यापारं मनः पापप्रवृत्तये न भवतीत्यनुमानं सुलभम्।

स्नाने क्रियमाणे 'उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः। तेनैव तूत्तमाङ्गस्य बलहृत्केशचक्षुषाम्, (अ. सं. सू. १०७) इत्यस्य विधेरभिप्रायः सुगम एव। अमुष्मिन्नुष्णकटिबन्धे भारते बहुशः सन्तप्यमानमुत्तमाङ्गं प्रत्यहं शीतेनैव जलेन संप्लाव्यम्। नो चेदूष्माधिक्यात्सञ्जायेरञ् शिरस्तापपलितादयो विकाराः सह नेत्रविकारैः। किन्तु ये केचिच्छ्लेष्मणोऽभीक्ष्णं सन्ति प्रतिश्यायाभिष्यन्दादिभिः परिपीड्यमाना न तेषां कृतेऽयं नियमः। तैः प्रकामं कर्तव्यमुष्णोदकेन शिरःस्नानं सर्वथा शिरो विवर्ज्य वा विशेषतस्तु हिमकाले।

## भोजनविधिः।

तत आयाति लब्धावसरो भोजनविधिः। मलोत्सर्जनादिव्यायामान्तमन्तर्बहिःपरिमार्जनेन शरीरधातुघटकाः पुनः पोषणार्थमधीरा भवन्ति। स्रोतोमार्गेषु संशुद्धेषु पित्तवाहिस्रोतांस्यपि पच्यमानाशयोन्मुखानि भूत्वा स्वप्रत्यनीकं संशामकमभिलषन्तीत्याहारं गृण्हीयात्। नोचेद्विफलत्वं यायात्पैत्तिकः स्रावोऽधोगामी वा भूत्वा पचनेन्द्रियेभ्यो बहिर्निस्सरन्नन्त्राणि संदूषयेत्। अतीतकाले कृते भोजने तस्याभावात्तदन्नमपक्वावस्थां समापादयेत्। शरीरमपि प्राप्तकालेऽलब्धपोषणेन क्षान्तं श्रान्तं च भवेदिति हेतोरन्नकाल एव भोजनं कुर्यात्। तस्य यः पैत्तिककालस्साधुतया निर्दिष्टः सोऽपि विविधपरिमार्जनोपायेषु कृतेषु सत्वरमायाति। नो चेत्पित्तकालं प्रतिपालयेद्भोजनाय।

स्नानाभ्यङ्गव्यायामादिवदुपदेशं नापेक्षते भोजनम्। शरीरवृत्तिसाधनस्य भोजनस्यापेक्षा स्वाभाविकी। किन्तु भोजनमेव विधियुक्तं कृतं चेद्विकारनिकरोत्पादकमिति स्वास्थ्यहेतुर्भोजनविधिरवधानपूर्वमधिगन्तव्यः।

इष्टामिष्टैः सहाश्नीयादित्यनेन मनःप्रधानानामिन्द्रियाणां प्रसादोऽपि सुखपक्तये सुखसंवर्धनायापेक्षितः। प्रसन्नान्येवेन्द्रियाणि स्वाभाविकाः पचनादिकाः क्रियाः सम्यक् संपादयन्ति। अनवस्थितचेतसा स्वादुरसभूयिष्ठं सुरुचिरमप्यभ्यवहृतमन्नं न पक्तये न वा रसायेति बहुभिरनुभूते।

भोजनात् पूर्वं धौतपादकराननेनावश्यं भवितव्यं यावन्न जानुसमफलके विनाङ्गुलिस्पर्शाच्चमसैरेव प्रचारो भोजनस्य संजातः। हस्तस्पर्शं प्रत्यक्षतः कृत्वा भोक्तुकामेन, विना धौताभ्यां हस्ताभ्यां स्पृष्टमन्नं कियद्दूषितं भवतीति तावेव हस्तौ जलपूरितकाचपात्रे निधाय द्रष्टव्यं कियन्मलिनं तदुदकं भवतीति। एवमेव ग्रासा ग्रासा यस्मिन्मुखकुहरे प्रक्षेप्तव्यास्तदपि मुखं प्राग्भोजनतः कवलितं कृत्वैकां चुलिकां काचपात्रे निक्षिप्य दृष्टा चेदेवमेव तदुदकं मलिनं संजातमिति ज्ञायेत मुखधावनस्याप्यावश्यकता मनस्यारूढा भवेत्।

अन्नपात्रसमीपमेव निगूढपादाभ्यामुपविश्यैव भोजनपद्धतिरस्माकमद्यावधि। एवं पादयोः सान्निध्ये सति बहुप्रदेशमनावृतपादाभ्यामाहिण्डमानस्य कदाचित्पादसंबद्धोऽनैकसांसर्गिकरोगबीजयुक्तोऽपि मलः संसृष्टश्चेन्मुखकुहरेऽपि प्रविष्टः स्यादिति हेतोरेव भोजनात्प्राक् पादधावनमप्यत्यावश्यकम्। पुराणपरंपरया भुञ्जानैरधरोत्तरीये वस्त्रे अपि परिवर्त्येते तदपि सांसर्गिकरोगपरिहारार्थमेवेति सोऽयं प्राचीनः समाचारोऽद्यत्वे विलुप्तप्रायोऽपि बहुगुणवत्त्वात्पुनरप्याश्रयणीय एव विहाय लोकलज्जाम्।

नातिद्रुतविलम्बितं भुञ्जीतेति नियमोऽयं प्रत्यक्षफलदः। द्रुतत्वाच्चर्वणाभावे पचनक्रियायां हानिसंभवः। गुरुखरकठिनभक्ष्यभोज्यचर्व्याणां पदार्थानां सम्यकृतया चर्वणं कंचित्कालविलम्बमाश्रित्याऽपि सम्यक्करणीयम्। क्षीरजलादिकं पेयमविलम्बितं पीतं चेन्न तादृशी हानिः। तथा चातिविलम्बितभोजनेनान्नस्य पर्युषितत्वाद्विरसतादि कदाचित्संभवति। तथा चाह वाग्भटः– 'विलम्बितं तु भुञ्जानो न तृप्तिमधिगच्छति, बहु च भुङ्क्ते, शीतीभवति चान्नजातं विषमपाकं च भवति' (अ. सं. सू. ८६२) 'अतिद्रुतं तु भुञ्जानस्य जल्पत् हसतोऽन्यमनसो भवेदुत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं गुणदोषाविभावनं च'। (अ. सं. सू. ८६३.) तस्मान्नातिद्रुतं नातिविलम्बितं च भुञ्जीत।

भोजनं शुचिभक्तजनाहृतमेव भोक्तव्यम्। शुचिभावस्य महत्त्वप्रतिपादनं न खल्वावश्यकम्। तथा च मात्रा स्वस्रा दुहित्रा पत्न्याऽन्येन वा केनचित् भक्तजनेनाहृतमन्नमातृप्ति भोक्त्रा भोक्तव्यमिति भावनयैव परिविष्टं भवतीति कृत्वा तत् भुञ्जानस्य रसादिभिः साकं सात्त्विका भावा अपि प्रादुर्भवन्ति। तथा चोक्तं वाग्भटेन—'शुचिभक्ताक्षुधितानुकूलजनोपाहितं हितमन्नमश्नीयात्' (अ. सं. सू. ८५४) इति।

'मात्रावदश्नीयात्'। ये खलु अन्नमात्रामतीत्य भुञ्जते ते निखिलरोगानांकस्य मूलमजीर्णं प्राप्नुवन्तीति श्रीमता वाग्भटेनाभ्यधायि। (अ.सं.सू.१०११.)

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ।

--अ. सं. सू. ९२०.

इत्यनेन ग्रन्थकृता भोजनेऽन्नजलवायूनां समुचितं प्रमाणं यन्निर्दिष्टं तदभ्यासयोगात्स्वयमेव भोक्ता निश्चिनुयात् । किन्तु संप्रत्येतज्ज्ञात्वाऽपि दैनंदिन-कार्यबाहुल्यपरवशतया नियन्त्रिता इव विमलविपुलधियोऽपि नान्नमात्रां परिपालयन्ति । का पुनरज्ञानामल्पबुद्धीनामशनलोलुपानां घस्मराणां कथा !

आहारे सन्ति केचन गुरवः पदार्थाः केचन लघवश्च। तत्र 'त्रिभागसौहित्यमर्धसौहित्यं वा गुरूणामुपदिश्यते । लघूनामपि नातिसौहित्यम्' । (अ. सं.सू. ९४७, ९४८.) इति मात्राप्रमाणं शास्त्रकारैः सामान्यतो निर्दिष्टमपि सुखं यद्धिजीर्यति तदेव भोजनस्य प्रमाणं भोक्त्रा निश्चेतव्यम् ।

भोजनं तृणकेशादिजुष्टं नाश्नीयात् । तथा चोक्तं वाग्भटेन- केशमक्षिकाद्यनुपजुष्टमनिन्द्यमन्नमश्नीयात्। (अ. सं. सू. ८५४. ) इति । तृणकेशादिजुष्टस्य मलिनस्यान्नस्य दोषा नावश्यं प्रतिपादनीयाः । किन्तु शिक्षितैरपि सर्वविधशुचितासंपादने प्रयत्नशीलैः कथं मलसंसृष्टमन्नं भवतीति न ज्ञायते । स्त्रियः प्रायः शाकादिकं धौतमेव पचन्ति । तथापि प्राक्कर्तनान्न तच्छोधयन्ति । कर्तनानन्तरं शाकधावनेन स्वाभाविकशाकरसस्तावद्दूरमपहियत इति प्रथमतो हानिर्जायते । तस्य च रसस्य संरक्षणे दत्तदृष्टेर्धावनमपूर्णं भवति । मलस्य कियानप्यंशः कृत्तशाकरसाभ्यन्तरेव संलग्नस्तिष्ठति । एवं कृत्तशाकस्य धावने उभयथाऽपि हानिः संभवति । शाकरसो गच्छति । मलोऽपि सशेषस्तिष्ठति । पिधानपात्रविषयेऽप्येवमेव। पिधानपात्र्या बाष्पनियन्त्रणं पल्लीकीटस्थूलमलादिपातप्रतिबन्धश्चेत्येवमेव प्रयोजनमिति मन्यते। वस्तुतोऽन्नपानपात्राणां सम्यक्तया पिधानपात्रेण मुखे पिहिते तदन्तर्गतमन्नं वाताद्यानीतमलादिभिः संरक्ष्यते। परमेतत्तत्त्वमविमृश्य व्यवहर्तारः पाचकाः स्त्रियो वा भूमिष्ठमार्द्रं पिधानपात्रं भाण्डेऽसंमृज्यैव सहसा संस्थापयन्ति।तेन पिधानपात्रतललग्नानि भूमिगततृणपांसुभस्मसूक्ष्मकीटकादीन्यन्ने पाने वा निपतन्ति । अपरं च । पादादिप्रक्षालनाय जलागारे नेम्यां जलाहरणार्थं भाण्डानि स्थाप्यन्ते । तत्र सततजलसंबन्धान्नेमिः पङ्किला भवति । जलग्रहणावसरे जलाशये पङ्किलनेमिसंलग्नं कलशादिपात्रमधस्थपङ्कसहितमेव निक्षिप्यते । एवं मलिनं जलाशयजलं कवलद्वारा मुखकुहरे निक्षिप्यते । ततश्च तत्क्रमेण कोष्ठं गच्छति । बहुजनसंकुले महानगरे संकुचितप्रकोष्ठे निवसतां जनानां गृहेऽयं प्रकारः प्राचुर्येण संदृश्यते । इत्यसेव न । क्वचित् कस्मिंश्चिद्गृहे मलोत्सर्गकूपादागतानां पादधावनार्थमन्या स्रवन्ती नास्ति, तत्र सर्वोऽपि व्यवहार एकस्यामेव स्रवन्त्यां भवति । ईदृशस्थले मलस्य विविधैर्द्वारैः शरीरे प्रवेशः सुशकः । अत उपरिलिखितानि मलसंकरस्थलानि नितान्तं सावधानमनसा विमृश्य दूरतः परिहरणीयानि ।

अन्नं पुनरुष्णीकृतं नाश्नीयादम्लपाकं तद्भवतीति । किमपि जलावशिष्टं तीक्ष्णसंसृष्टं पक्वं द्रव्यं कालान्तरेणाम्लपाकक्षममन्यत्र शीतसंस्थापनात् । उष्णीकृतं च तीक्ष्णत्वं प्राप्य कुपितपित्तस्वरूपं विस्रत्वमियात् । उक्तं च-"शीतेन युक्तास्तीक्ष्णाद्याश्चयं पित्तस्य कुर्वते । उष्णेन कोपमिति ।

आहारो द्विविधः पथ्योऽपथ्यश्च । (अ. सं. सू-८६९) तत्र पथ्यमेव सेव्यम्। पथ्यानि चेमानि-रक्तशालिषष्टिककङ्गुकनीवारकोद्रवश्यामाकगोधूममुद्गमकुष्ठकलायमसुरचणकाढकीसतीनवास्तुकसुनिषण्णकतण्डुलीयकमण्डूकपर्णीगव्यघृतसैन्धवदाडिमामलकादीनि सर्वप्राणिनां सामान्यतः पथ्यतमानि (अ. सं. सू. ९२८) । अपथ्यानि च तावद्बहुविधानि । तत्र कानिचनैकान्ततोऽहितानि किलाटदधिकूर्चिकाक्षारशुक्तामूलकमापनिष्पावशालूकविसपिष्टविरूढकशुष्कशाकयवकफाणितादीनि । ( अ. सं. सू. ९२७; अ. सं. नि. २६, ३१ ) कानिचन संयोगसंस्कारमानादिभिर्विरुद्धतां गतानि, तानि वाग्भटेन स्वस्थवृत्ते विरुद्धान्नविज्ञानीये सुविशदं निरूपितानि। इमान्यपथ्यानि न सेव्यानि । अल्पांशेनापि पथ्येन सह न सेव्यानि । यथा स्वल्पेनापि लवणेन मिश्रितं स्वच्छं पयो बहुलमपि,नश्यत्येवमपथ्येनाल्पेनापि सर्वं पथ्यमपथ्यं भवतीति कृत्वा नाश्नीयान्मिश्रं पथ्यमपथ्यमैकध्यम् । अस्य मिश्रान्नस्य समशनमिति संज्ञा (अ. सं. सू. ८७२) । भुक्तस्योपरि च यद्भुज्यते तदध्यशनमिति व्यवह्रियते (अ. सं. सू. ८७३) । तदपि नाचरणीयम् । आदिमभुक्ते परिपच्यमाने सति नावशिष्यते द्वितीयान्नपचनाय पाचकपित्तम् । तद्धि प्रथमान्नपचने सर्वात्मना व्यापृतं भवति । तेन प्रथमान्नपचनात्प्रागेव गृहीतमन्नं केवलमामरूपेणैव संतिष्ठतेऽजीर्णं च भवति। अतोऽध्यशनं न कुर्यात्। 'अकाले बहु चाल्पं वा भुक्तं तु विषमाशनमित्युच्यते। (अ. सं. सू. ८७५)। अकाले नामान्नालिप्सायामपित्तकाले वा।तदा भुक्ते पित्तस्रावाभावादन्नमामाशयेऽपच्यमानमेव तिष्ठत्यजीर्णाय च कल्पते । तथा बह्वन्नं भुक्तमजीर्णाय भवतीति सर्वेऽपि जानन्त्येव, परन्त्वल्पं किं न भोक्तव्यम्? 'समशनाध्यशनविषमाशनानि त्रीण्यप्येतानि मृत्युं घोरान्व्याधीन् वा सृजन्ति

( सु. सू. ४६. ५०८ )। किं च समशनाद्यन्तर्भूऽतेल्पभोजनेऽपि स एव दोषः किल। अत्राजीर्णस्य तु शंकैव नास्ति। कथं तर्हि घोराणां व्याधीनां संभव इति चेदुच्यते–बुभुक्षासमये पचनेन्द्रियान्तर्गतस्रोतोभ्यः पाचकपित्तोद्गीरणारंभः। स्रुतं पित्तं समभ्यवहृतमन्नं पचति। अल्पमात्राभ्यवहृतेऽपि पित्तं पूर्णतया स्रवति, तीव्रतरां बुभुक्षां च जनयति। तदा मात्रामतीत्य भुज्यते चेन्न तत्पचति। तथात्वेऽप्यातृप्ति भुज्यते चेत्तदा तत्पित्तमन्नं विदहति। विदग्धं चान्नं ग्रहण्यतीसारादीन्विकाराञ्जनयति। एवमल्पेनापि भोजनेन घोरव्याधीनामुद्भवः। इत्येव न किन्त्वल्पभोजनेन बलवर्णोपचयादीनां महती हानिरपि संपद्यते। तथा च वाग्भटः—

'हीनमात्रमशनं बलवर्णोपचयमनोबुद्धीन्द्रियोपघातकरं विबन्धकृदवृष्यमनायुष्यमनौजस्यं सारविध्मापनमलक्ष्मीजननमशीतेश्च वातविकाराणामायतनम्'। (अ. सं.सू.९५२) इति। एतद्द्विधा संसाध्यम्। हीनमात्रमशनं धातूनां बलवर्णोपचयादीनां यथावत्संवर्धनाय नालं भवति। तथा च विमार्गापन्नपित्तेन संजाता ग्रहण्यादिविकारा अपि समधिकं कृशतां नयन्ति। तेन च बलोपचयौजसां हानिरिति समुपपन्नमेव शास्त्रकारवचनम्। केषुचिद्विकारेषु दीर्घकालीनं लंघनं रोगघ्नमपि न सर्वेषु विकारेषु शस्यते। केवलमग्निमान्द्यस्वरूप एव तत्स्तूयते। 'रोगाः सर्वेऽपि मन्देऽग्नौ' (अ. सं. नि. ४५० ) इति शास्त्रकारवचनं प्रमाणीकृत्य केनापि रसरक्तादिधातुगतेषु शिरास्नायुधमनीसमुद्भूतेष्वश्मरीतिमिरान्ध्यप्रभृतिषु सूक्ष्मतमधातुसमुत्थेषु परश्शतेषु विकारेष्वेतदादिकारणमग्निमान्द्यं पर्यवेक्ष्य लङ्घनं प्रयुज्यते चेद्धन्ताग्निसमाक्रान्ते सदनेऽग्निशमनप्रयत्नं समुज्झित्याततायिसंशोधनमेव तेन क्रियते इति वक्तव्यं भवेत्!! यतो ह्यग्निमान्द्यसंभूतेष्वप्येतेषु रोगेषु तदात्वेऽग्निमान्द्यस्य न मनागपि संबंधो दृश्यते। यथाहि दण्डकुलालादिकारणैर्घटो निर्मीयते। तथाऽपि तदुत्पत्तेःपरस्तान्नैतादृशानां कारणानां तत्रास्तित्वम्। अत एव मधुकोशकारः–' न हि दण्डकुलालाद्युच्छेदे घटोच्छेदः' इति खलु समुचितमभाणीत्‌ अतोऽग्निमान्द्यादिविप्रकृष्टकारणे नष्टे स्थानाश्रितदोषस्वरूपं रोगसमवायिकारणं नश्यतीति मन्वाना न चिकित्सकपदमारोढुमर्हन्ति।

## मांसाहारः।

आहारस्त्रिविधः–मांसमयो मांसरहितो मिश्रश्चेति। तत्र केवलमांसाहारिणस्तु प्रायो हिंस्राः प्राणिन इति तत्कथां व्युदस्यात्र मिश्राहारान् निरामिषाहारांश्चाधिकृत्य किंचिदिव विचाराः प्रस्तूयन्ते। निखिलेऽस्मिञ्जगति वर्जयित्वा काश्चिदल्पसंख्याका जातीः सर्वे मानुषा मिश्राहारा इति सामान्यतो वक्तुं शक्यते। एतेषामेव लोके मांसाशिन इति प्रवादस्तथापि नैते केवलं मांसाशिनः किंतु धान्यशाकादिसहितमांसाशिन इति वेदितव्यम्। मांसेषु मध्ये मृगाद्यष्टानां प्राणिवर्गाणामन्तर्भावः। ते च यथा–१ मृगवर्गः २ विष्किरवर्गः ३ प्रतुदवर्गः ४ बिलेशयवर्गः ५ प्रसहवर्गः ६ महामृगवर्गः ७ जलचारिवर्गः ८ मत्स्यवर्गश्चेति। एतेषां मांसवर्गाणां प्रत्येकशो विस्तरेण विवरणमस्मिन् ग्रंथे सप्तमाध्याये श्रीमता वाग्भटेन कृतं वर्तते। तत्र समासतो वक्तव्यं चेत्–मृगवर्गे हरिणादयः पृषतान्ता एकोनविंशतिप्राणिनोऽन्तर्भवन्ति। विष्किरवर्गे लावादयो वारटान्ता एकविंशतिप्राणिनः, प्रतुदवर्गे शतपत्रादयः प्रतुदान्ताश्चतुस्त्रिंशत्संख्याकाः, बिलेशयवर्गे श्वेतादयो नकुलान्ताः पंचदश, प्रसहवर्गे गवादयो मधुहान्तास्त्रिंशत्, महामृगवर्गे महिषादयो गवयान्ता दश, जलचारिवर्गे हंसादयो मल्लिकान्ता एकत्रिंशतिः, मत्स्यवर्गे च रोहिताद्याश्चिलिचिमान्ताश्चैकोनविंशतिसंख्याकाः प्राणिनः प्रदर्शिताः। सेयं संख्या न नियमरूपा किंतु सामान्यतः परिगणनार्थं निर्दिष्टा। यतो हि ग्रंथकृद्वाग्भटोऽपि स्थाने स्थाने,'वृषाहिकदलीश्वाविन्नकुलाद्या बिलेशयाः' (अ. सं. सू. ३४८) 'नन्द्यास्यमाल्लिकाद्याश्च पक्षिणो जलचारिणः' (अ. सं.सू.३५१) 'राजीचिलिचिमाद्याश्च' (अ. सं. सू. ३५२) इत्यादिषु संदर्भेषु प्रभृत्यर्थकमादिशब्दमेतदर्थमेव समाचष्टे। अत इयं प्रदर्शिता संख्या प्राधान्यतस्तत्तद्वर्गेषु निर्दिष्टा इत्येतन्मन्तव्यम्। एतेषां सर्वेषामपि प्राणिनां गुरुलघुतया शीतोष्णतया स्निग्धरूक्षतया चास्ति विशेषो यः संहितायामस्यां सप्तमाध्याये सुविशदतया ग्रन्थकृता निरूपितः। तद्विशेषमधिकृत्य किंचिदिव विवेकः क्रियते–मांसं नाम रसरक्तयोः परिणाममापन्नो मृदुमसृणो धातुः शरीरान्तर्गतः ( मांसघटकानां विविधाकाराः समूहाः पेश्यः )। स एव मांसाशीभिः प्राधान्येनाऽभ्यवह्रियते, यद्यपि रक्तमेदोवसामज्जानोऽपि तैर्भक्ष्यन्त इति न। तथापि तत्र मांसभागस्य एव प्राधान्यात्‌ 'व्यपदेशस्तु भूयसा' इति न्यायेन तेषां मांसाहारा इति संज्ञा। भुक्तस्य कस्याप्यन्नस्य परिपक्वस्य यस्तेजोभूतः सारः स रसधातुरित्यभिधीयते। स एव धात्वग्निभिस्तैस्तैः परिपच्यमानो रक्तादीन् शुक्रान्तान् धातून्निर्मिमीते। एतेषां रससहितानां सप्तानां धातूनां प्रत्येकशो विभिन्नमेव शारीरं कार्यं वर्तते। तथा चोक्तं वाग्भटेन–

प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे।
गर्भोत्पादश्च कर्माणि धातूनां क्रमशो विदुः॥
(अ. सं. सू. २०)

एतत्प्रीणनादिकर्म कुर्वाणस्य धातुभागस्य नापरस्मिन् धातौ परिणामः, परिणाममापद्यमानस्य धातोरवशिष्टभागत्वादन्यस्य । यश्च धातुभागः प्रीणनादिकार्यं कुरुते, यदाश्रित्यैवाहारार्थं स धातुः सेव्यते, नास्ति तत्कार्ये कृते सति मलिनीभावं विनाऽन्यत्कार्यम्। जीवति शरीरे स मलो झटिति वायोर्विक्षेपणक्रियया शरीराद्बहिर्निरस्यते शरीरं च विमलं क्रियते। किन्तु मांसाशिनां शरीरे परिपक्वा एते धातवः प्रीणनादिकार्यं कुर्वाणा अपि मलस्य संचयं कुर्वन्त्येव । अतो मांसाहारिणां शरीरेऽधिकः संभवति तस्य तस्य भुज्यमानस्य धातोर्मलांशो येन ते निरामिषाहारापेक्षयाऽतिशीघ्रमेव रोगाक्रान्ता भवितुं शक्यन्ते ।

निर्मांसाहारिभिस्तु भुज्यमानास्तास्ता वनस्पतयः पक्वभावानन्तरमेव रसादिभावमापद्यन्ते। केवलं पाकक्रमेणैव च तेभ्यस्तेभ्यो धातुभ्यः स्वाभाविकोत्सर्जनक्षमान्मलानुत्पाद्याविकृतानां धातूनां पोषणं कुर्वन्ति। अतो मांसाहारवद्वनस्पत्याहार एव निरामिषाहार एव श्रेष्ठ इत्युच्यते। यत्र तु शरीराद्बहिर्जिगमिषुर्यो यः क्षीणभावमापन्नो धातुर्भवति तस्य तस्य झटिति पुनरानयनार्थं भवति कुत्रचित् स्थलेषु मांसाहारस्याप्यपेक्षा। तमिमं नान्तरीयकं मांसाहारं यथावस्थं निर्दिशन्ति भिषजो वनस्पत्याहारिणोऽपि। तथा चोक्तमात्रेयैः- "तस्मान्मांसमाप्याय्यते मांसेन भूयस्तरमन्येभ्यो धातुभ्यः। तथा लोहितं लोहितेन, मेदो मेदसा, वसा वसया, अस्थि तरुणास्थ्ना, मज्जा मज्ज्ना, शुक्रं, शुक्रेण, गर्भस्त्वामगर्भेण' (च.शा.६.१०)इत्यादि। किन्त्वित्थन्त्वेऽपि सर्वदा सर्वैर्मांसाहारः कर्तव्य इति न सिध्यति । येषां दृढशरीरापेक्षं सामर्थ्यद्योतकं युद्धनियुद्धादि साहसिकमुचितं कार्यं, तैर्यदि झटिति धात्वाप्यायनो मांसाहारः कृतश्चेत्समर्थनीयो भवति सः । किन्तु मांसाहारेणैव शरीरं वर्धतेऽन्यथा न इति न केनापि वक्तुं पार्यते ।

प्राग्ये प्राणिनामष्टौ वर्गाः प्रदर्शितास्तेषां सर्वेषामेव पुनरपि जांगलानूपसाधारणा इति त्रयो वर्गाः संभवन्ति । तत्राद्यास्त्रयो मृगविष्किरप्रतुदा जांगला अन्त्यास्त्रयो महामृगजलचरमत्स्या आनूपाः, मध्यमौ च द्वौ बिलेशयप्रसहौ साधारणौ स्मृतौ (अ.सं. सू. ३५५) । तत्र जांगलाः प्राणिनो रूक्षाः सुपचाश्च, आनूपास्तु शीता दुर्जराश्च, साधारणाश्च मिश्रगुणाः। अतो मांसाहारिभिरपि निजप्रकृत्यग्न्यादिकमनुलक्ष्य अस्माद्वर्गत्रयाद्ये केचन प्रकृतिप्रत्यनीकाः प्राणिनस्तेषामेव मांसादिकं भक्षणीयम् । मृततरुणादिमांसं नाश्नीयादिति बहुविदो विदन्त्येव, किन्तु नगरपालिकायाः समीचीनमांसादिविक्रयव्यवस्थाया अभावश्चेत्सद्योमृतस्य नीरोगस्य च पश्वादेर्मांसं नोपलभ्येत । अतो नगरपालिकया सुनिपुणमवधातव्यम् । रोगविषादिसंसृष्टं कुथितं मांसं भक्षितं चेत्पोषणं दूरमेव; नैकविधरोगपरंपराप्राप्तिरेव भवितुं शक्या, अतो मांसाहारिभिरिदं विमर्शनीयम् ।

## निरामिषाहारः।

धान्याहारे नास्ति मांसाहारस्य लेशतोऽपि संबंधः। किन्तु धान्यशाकफलादीनां तत्रान्तर्भावो भवति, तच्च निरामिषान्नं मांसमिव लवणमरिचधान्यादिकैः संस्कृत्यैव प्रायो भुज्यते दुग्धतक्रपानीयमदिरासीध्वादीनि चानुपीयन्ते। अत्र किंचिदिव विमृशामः– निरामिषाहारिणां धान्यभूयिष्ठा एवाहारा दृश्यन्ते।तत्र स्निग्धरूक्षशीतोष्णादीन्गुणान् जांगलादिभूदेशवशतो दृष्ट्वा निर्मांसाहारः सेवनीयः । तत्र तण्डुलाः सामान्यतः सुपचा अपि शीतवीर्यत्वादवष्टम्भकरत्वादम्लपाकित्वाच्च मन्दाग्नीनां शरीरे कफवातपित्तविकारान् कुर्वन्ति । यदीदृशांस्तण्डुलान्संजातकफादिविकारा भक्षयेयुस्तदा ते ते विकारा वर्धन्ते इति विमृश्य तण्डुलानामुपयोगः कार्यः । किन्तु तण्डुलसात्म्यानां न तावान् तण्डुलदोषः पीडाकरो भवति, यावान् तण्डुलासात्म्यानाम् । गोधूमास्तावत्पुष्टिकरा नीरोगाः स्थैर्यावहाः प्रत्यहं च भोजनार्हास्तथापि स्निग्धश्लक्ष्णत्वात्तेषामाहारस्तदसात्म्यैःकृतश्चेन्न पच्यते, आमं चोत्पादयति । उचितगोधूमैरपि स्वादुत्वादधिकं भुज्यते चेत्सैव गतिः । भुक्त्वा यत् प्रार्थ्यते भूयस्तदुक्तं स्वादु भोजनमित्येषा व्याख्या गोधूमेन्वर्था भवति। यतो गोधूमे स्निग्धादयः सर्वे कफगुणाः परिपूर्णतया निवसन्तीति स पौष्टिकेष्वाहारेषु श्रेष्ठतम इत्युच्यते । उत्तरभारतीयाः प्रायो गोधूमाहारादेव बलिष्ठा दृश्यन्ते। मद्रकोंकणवंगदेशीयेषु तावद्बलवत्त्वं दृढिमा च प्रायो न दृश्यते, तेषां भूरिशालिभक्षणशीलत्वात् ।

महाराष्ट्रे जूर्णाह्व (जोंधळे) 'बाजरी' इत्येतयोराहारे बाहुल्येन समावेशः। तत्र जूर्णाह्वो लघुर्वातलो बाजरी बृंहण्युष्णा च । अतः पित्तकफप्रकृतीनां क्रमेणैतद्द्वयं श्रेयस्करम् ।

मुद्गाढकीमसूरादीनि शिंबीधान्यानि विबंधकारीणीत्यत एतेषामशनं स्वल्पमात्रया विधेयं। मुद्गादिधान्यविरूढास्तु निरतिशयं गुरुतरा आनाहोत्पादकाश्चेतिविचार्याल्पाग्निभिर्न ते सेव्याः। रूक्षं भर्जितं द्विदलं धान्यं यद्यप्यानाहोत्पादकं तथापि तद्विरूढापेक्षया लघुतरं भवति। तंडुलादिनिर्मिता धाना (चुरमुरे) एतस्मादपि लघुतरा, न्यूनीभूतपार्थिवाप्यांशत्वात्। तथापि तस्मादेव साऽनाहोत्पादिनी । पृथुकास्तावद्गुरुतराः । यतः कंडनसंस्कारेण तेषां घटका घनीभूताः सन्तो दुर्जरतां प्रपद्यन्ते। अतस्ते सर्वेषु तंडुलविकारेषु गुरुतमा भवन्ति ।

शाकाः ।

शाकेषु त्रयः प्रकाराः–पर्णशाकाः, फलशाकाः, शिम्बीशाकाश्चेति । तत्र फलशाकाः पुनः कंद-वल्ली-फल-क्षुपफलैस्त्रेधा विभज्यन्ते । तत्र पत्रशाकाः सर्वे आप्याः क्षारमयाश्चेति कृत्वा मूत्रलाः सरास्तथाप्यम्लपाकिनः । अतः प्रायो विष्टभ्य जीर्यन्तीति कृत्वा स्वेदयित्वा जलं निष्पीड्य स्नेहेन च संस्कृत्य ता भक्षयितव्याः । नो चेद्विदाहकारिण्यो भवन्ति । उक्तं च योगरत्नाकरे — " शाकेषु सर्वेषु वसन्ति रोगाः सहेतवो देहविनाशनाय तस्माद्बुधः शाकविवर्जनं हि कुर्यात्तथाम्लेषु स एव दोषः । ' इति । विशेषतश्च कौसुंभाल्लकाम्रष्टालोणिकासर्पपा विदाहिन्यो रक्तदूषका इति कृत्वा एतासामुपयोगो विचार्यैव करणीयः । इत्थंत्वेऽपि सर्वे पत्रशाका प्रायः फलशाकापेक्षया सुपचाः सारकाश्चेत्यविस्मरणीयमेव ।

फलशाकास्तावद्गुरवस्तथापि प्रायस्ते निर्विकारा बृंहणाश्च । तत्रापि फलेषु सन्ति केचन विशेषाः । अलाबुर्मांसवर्धकः, कोषातकी स्नायुधमनीवर्धिनी, वृंताकं यकृत्प्लीहवृक्कपुष्टिदं विशेषतो रक्तस्य, 'टोमॅटो' इत्याख्यं फलं रक्तवर्धनं, ' कोबी ' ' नोलकोल' 'कालीफ्लावर' इमान्यस्थिपोषकाणि विशेषतस्तु शृंगाटकः । ' भेण्डी ' श्लेष्मवर्धिनी, मूलकगृंजनकास्तावद्बहुदवस्त्यंत्रपोषकाः सन्ति । एते गुणास्तावद् वृद्धिः समानैः सर्वेषामिति (अ.सं.सू.२१) नियममनुस्मृत्य प्रभावतो निर्दिष्टाः । एवमादीन् गुणान् रसादिकं लाघवगौरवं पथ्यमपथ्यं च विचार्य तत्तच्छाकानामाहारे उपयोगः कर्तव्यः । यतो हि फलशाकेष्वपि केचिद्दोषाः सन्ति यथाऽलाबुराध्मानकरो वृन्ताकं विष्टभ्य जीर्यतीत्येवमादि । शिम्बीफलानि शिम्बीधान्यवत्किंचिद्दुर्जराणि पाचितानि चेत् स्नायुसमुदायतरुणास्थ्यस्थिसंधिपोषकाणि च । फलानि तावत् रसमांसत्वङ्मज्जामयत्वाच्चतुर्विधानि । तत्र नागरंगादीनि रसमयानि सुपचानि रसलसीकाधातुपोषकाणि च । कदलीफलादीनि मांसमयानि मांसपोषकाणि दुर्जराणि च । बदरजम्बूकरमर्दादीनि त्वङ्मयानि त्वगंत्रकलापोषकाणि । आम्रफलादीनि मज्जमयानि मज्जपोषकाणि च । इमान्यपि सुपचदुष्पचत्वादिकं विचार्यैव सेवनीयानि । द्रवमयं फलं तावन् सुपचम् । यावद्यावच्च फलमज्जा कठिना तावत्तावत्सा दुष्पचा भवतीति दिक् ।

अम्लमधुराणि फलानि भोजनात् प्राङ्नोपभोक्तव्यानि।सर्वेषामपि च फलानां प्रायः शीतवीर्यत्वाद्भोजनात् प्राक् भक्षणेन तैः कफप्रादुर्भावोऽग्निमांद्यं शूलादिकं च सम्भवति। अत्र प्रसंगान् धान्यादिषु प्रशस्तान्युच्यन्ते सुश्रुतात्--

षष्टिका यवगोधूमा लोहिता ये च शालयः ।
मुद्गाढकीमसूराश्च धान्येषु प्रवराः स्मृताः ॥
लावतित्तिरिसारंगकुरंगैणकपिंजलाः ।
मयूरवर्मिकूर्माश्च श्रेष्ठा मांसगणेष्विह ॥
सतीनो वास्तुकश्चुञ्चुचिल्लीमूलकपोतिकाः ।
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥
दाडिमामलकं द्राक्षा खर्जूरं सपरूषकम् ।
राजादनं मातुलुंगं फलवर्गे प्रशस्यते ॥
( सु. सू. ४६. ३३२ ते ३३५ ) इति ।

द्रवद्रव्यविचारः ।

दुग्धविकाराणां भोजने सुमहानुपयोगः । तत्र दुग्धं तक्रवर्ज्यां दुग्धविकाराश्च सर्वान् कफगुणान् दधति विशेषतश्च घृतम् । अतः सर्वं पायसं बृंहणमित्यभिधीयते । आहारस्य प्राणिजौद्भिज्जत्वाद्द्वैविध्यं, तत्र दुग्धं प्राणिजमिति निर्धार्यते। किन्तु प्राणिहिंसां विनैव तस्योपलब्धित्वाद्वनस्पतिवच्च धातुषु तस्य पाकक्रियाक्षमत्वाद् दुग्धस्य निर्मांसाहारेऽप्यन्तर्भावः ।

यद्यपि दुग्धघृते कफगुणेन समाने तथापि घृतं बृंहणमप्यग्निदीपकं स्निग्धत्वेन स्रोतसामामोपलेपापहरणशीलत्वात्।नवनीतं श्लक्ष्णगुणत्वादग्निमांद्यकरम् । तक्रं तावदपहृतस्नेहत्वान्नवनीतापेक्षया सुपचं स्रोतःसंशोधनमग्निमांद्यग्रहण्यादिविकारराशिनाशकं च । दधि चाम्लविपाकित्वाद्विदाहि रक्तदूषकं च। बहवः खलु दुग्धयोनयस्तथापि तत्र गोदुग्धमेवोपयोक्तव्यम् । यतो गौश्चपला बुद्धिमती स्वसदृशबुद्धिमद्वृषभोत्पादिनी च । महिषी च तद्विरुद्धा बहुभुक् स्थूलाऽलसा स्वापशीला जलावगाहप्रिया चेति हेतोस्तस्या दुग्धमतीव कफकरं दुर्जरं विकारकारि चेति कृत्वा तदुपयोगोऽल्पांशेनैव करणीयो व्यायामिबालिभिर्विना। विविधगुणयुक्ता अन्यदुग्धविकारा विस्तरभयान्नात्र विविच्यन्ते। श्रीमता वाग्भटेनापि 'विद्याद्दधिघृतादीनां गुणदोषान्यथापयः ' (अ. सं. सू.२२१ ) इति वदता अन्यदुग्धयोनिसमुद्भवानां दुग्धविकाराणां गुणा दोषाश्चातिदिष्टाः ।

तैलमुष्णं व्यवायि स्निग्धं चेति कृशानां बृंहणाय स्थूलानां कर्शनाय चालं भवतीत्युभयोरपि सम्यग्योजनयोपयोगः कार्यः स्मृत्वा च तत्तीक्ष्णमचक्षुष्य त्वग्दोषकृदिति । अन्यत्तैलं यथायोनिगुणम् । रक्तमरिचवद्व्यंजनं मात्रयैवोपयोक्तव्यम् । अन्यथा तीक्ष्णोष्णतादिवृद्ध्या रक्तदूषणादिकं तत्संजनयेत् ।

भोजनावसरे पानीयं कदा पातव्यं, सर्वथा वा न पातव्यमिति प्रश्नो विचार्यतेऽत्र विषये।उदरव्याधिपीडितानां कथा अन्यादृशी । परं स्वस्थजनैर्भोजनावसरे एव जलं पातव्यमित्यायुर्वेदोपदेशः । षड्विधे भोजने भक्ष्यभोज्ययोरेव प्रायः प्राचुर्यं भवति । तानि भक्ष्यभोज्यानि यद्यपि दंतयंत्रेण सम्यगवचर्व्य पेयलेह्याभ्यां द्रवीकृत्यान्तर्मुखे प्रवेश्यन्ते, अन्नसंघातक्लेदनः क्लेदक

कफस्ताद्रवीकर्तुमुद्युक्तस्तथापि रञ्जकपित्तेनान्नस्य सम्यङ्मिश्रणायेमे द्रवा अपर्याप्ता एव भवन्ति। विशेषतश्चणकादिरूक्षाणां तैलपक्वानां व्यंजनोपलिप्तानां तीक्ष्णोष्णानां पदार्थानां भक्षणेन जलादिसदृशाधिकद्रवापेक्षा भवति । 'षड्रसं मधुरप्रायं' 'नित्यं सर्वरसाभ्यासः' इति वचनाभ्यां सर्वरसयुक्तपदार्थानामशनं न्यूनेनापि प्रमाणेन संजातमपि जलमवश्यकतया किंचिदपि सेवनीयमेव भवेत्। भोजनसमये जलपानं न कृतं चेद्धोरामात्रादनन्तरं नैसर्गिक्यन्नजा तृष्णा संजायत एव । सा कथमिति चेत् पच्यमानावस्थायां न्यूनतामापन्नस्य जलस्य परिपूर्त्यै एव सा भवतीति। अतो भोजनावसर एव यथाप्रमाणं समुचितं जलपानं किं न कर्तव्यम्? एतद्विषय आयुर्वेदीयैस्तत्पानं दोषकरं न स्यादिति हेतोर्बहु विचार्य भोजनस्याद्यन्तयोस्तन्निषिद्धमेव। भोजनस्यादौ जलं पीतं चेदग्निमान्द्यं जायते। अग्निमांद्याच्च सुबहुरोगोत्पत्तिः कृशता च देहस्य। यतो भोजनादौ पीतं जलमुदीर्णोन्मुखं रञ्जकपित्तं शीतीभावं नयत्यन्नं चापक्वभावमावहति। भोजनान्ते च पीतं जलं निम्नगमनस्वभावमप्यन्नेनान्तरितत्वात्तत्रैव स्थगितं भूत्वाऽन्नमेव केवलं निम्नं प्रेरयेत्स्थौल्यादिकं च कुर्यात्। परं भोजनमध्येऽन्तरान्तरा जलपानेन न काचिद्धानिरिति सुधीर्ज्ञातुं शक्नुयात्। आयुर्वेदीयसिद्धान्तस्तु तथैव । यथाह वाग्भटः—

भक्तस्यादौ जलं पीतमग्निसादं कृशांगताम्।
अन्ते करोति स्थूलत्वमूर्ध्वं चामाशयात्कफम्।
मध्ये मध्यांगतां साम्यं धातूनां जरणं सुखम्
(अ. सं. सू. १९६) इति।

जलपानं तावद्भोजनस्यार्धमात्राप्रमाणमेव कार्यम्। दुग्धतक्रसूप्यादिकं तत्प्रमाणं संरक्ष्यं मिलित्वैव। तदपि भोजनावसर एव कृतं चेत्तारतम्येनेष्टप्रमाणभावाय भवेत्।

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत्।
आश्रयं पवनादीनां चतुर्थमवशेषयेत्॥

इत्यादिवचनसमुच्चयेन पानाशनमात्रादिविषये कियान्सूक्ष्मो विचारः प्राक्तनैरायुर्वेदीयैः कृत इति दृष्ट्वा सादरं संनम्यते शिरस्तेषां पुरतः।

## भोजनोत्तरकृत्यम्।

भोजनानंतरं किंचित्कालं न किमपि मानसं शारीरं वा कार्यं कर्तव्यम्।

भुक्त्वा राजवदासीत यावदन्नक्लमो गतः।
ततः पादशतं गत्वा वामपार्श्वेन संविशेत्॥

इति यदुक्तं तत्र भोजनान्ते आभोजनपरिपाकात् सर्वोऽपि पचनक्रिया तत्संचालकः समानोऽग्निश्च निष्प्रतिबन्धमुदर एव कार्यं कर्तुं प्रभवेदिति हेतुः । 'आश्रयं पवनादीनां चतुर्थमवशेषयेदिति श्लोकार्धेनाकण्ठं न भुञ्जीतेति सुनिर्दिष्टम्। वातादीनां पचनक्रियासहायानां संचरणाय चतुर्थं भागमामाशयस्थं सर्वथा रिक्तमेव स्थापयेत्। अतः स्पष्टमुक्तं योगरत्नाकरकर्त्रा—

'वायोः संचारणार्थाय चतुर्थमवशेषयेदिति'। एतेन क्लेदककफोदीरणाख्योऽन्नपचनस्य प्रथमः संस्कारः सौलभ्येन भवेत्।

वामपार्श्वसंनिवेशानन्तरं योगक्षेमार्हमुचितं कार्यं कर्तुं समारभेत । भोजनानन्तरं निद्रा न सेवनीया बालवृद्धक्षीणादीन्विना। किन्तु सर्वैरपि ग्रीष्मर्तौ दिवा निद्रा सेविता चेन्न दोषायेति गुणायैव। बालवृद्धक्षीणादीनां शरीरे दैनिकस्वाभाविकचेष्टाभिर्गमनागमनादिजनितपरिश्रमेण वा झटिति क्षीणता भवतीति कृत्वा तन्निहरणाय दिवाऽपि स्वाप आवश्यकः। वामपार्श्वसंनिवेशो नाम न निद्रावशता किंत्वामाशयस्य वामपार्श्वेतोगतत्वादन्नं तदाशये पाककालं यावत्तिष्ठत्विति हेतोः केवलं भोजनान्ते कियन्तं कालं वामपार्श्वेन भूमिपात एव कर्तव्यः, न नाम निद्रा सेवनीया।

इदानींतने काले प्रातरेव भुक्त्वा तत्तत्कार्यालयाधिकृतैः ( Workers in various offices ) पाठशालां जिगमिषुभिश्च छात्रैर्बालैर्बहिर्गम्यते । कार्यालयादिस्थानं गत्वा च तत्र प्रकामं मानसिकाः परिश्रमाः क्रियन्ते। किन्त्वेतेन कियती हानिर्भवतीति नैतावत्कालपर्यन्तं कैरपि सम्यग्विवेचितमिति भाति। अत्र विषये राजशासनाधिकृताः पुरुषा विचारं कुर्वाणा दृश्यन्ते। न केवलमित्थमपि त्वल्पवयस्कानां बालकानां पाठशालासमयः प्रातर्मध्याह्ने चेति द्वौ कालौ भवत्विति स्वीयेऽधिकारे तैः तत्त्वान्वेषणच्छासितमपि। एतेन पाठशालाकालपरिवर्तनेन बालकानां भोजनान्ते स्वाभाविकमानसिकपरिश्रमदोषा न भविष्यन्ति। परन्तु मातॄणां परिश्रमास्तावद्वृद्धिं यास्यन्ति। ताभिर्हि पतीनां कृते प्रातरेव पाकसिद्धिः समारब्धव्या बालानां कृते च मध्याह्ने। नो चेत्तदेव शीतीभूतमन्नं बालकानां भागधेयेनोपलभ्येत । एतदर्थं प्रथमतः प्रौढपुरुषाणां कार्यालयसमय एव परिवर्तनीयः। एतेषां भोजनं तावद्बालभोजनात् प्रागेव भवति। तदनन्तरं झटिति पद्भ्यां द्विचक्रीयानेन वा शीघ्रवेगेन कार्यालये गन्तव्यम्। गत्वा च तत्र मनोव्यापाराः परिश्रमजनकाः कर्तव्याः। शारीरा मानसाश्च परिश्रमा यथाविधि नातिद्रुतं भुक्तवाप्यपचनाय कल्पन्ते। किं पुनः प्रातः श्लेष्मणः काले क्षुधायामसंजातायां द्रुतमेवान्नं भुक्त्वा? इदानीं वर्धिष्णूनां नैकेषां मलावरोधाग्निमांद्यादिरोगाणां तरुणेऽपि वयसि प्रादुर्भावो मधुमेहवातरोगादीनां चोत्तरे वयसि समुत्पत्तिर्बहुश एतदपथ्यवृत्तावलम्बिन्येव। द्विचक्रीयानेनापि भुक्त्वा झटिति बन्धुरेण पथा गतं चेदग्निमांद्येन सहितार्शोग्रहणीहृद्रोगादयः संभवन्तीति नैतन्न विदितमायुर्वेदप्रवीणानाम्।

**दिवास्वापः ।**

आरोग्याकांक्षिणां दिवास्वापो न विहितस्तंद्राग्निमांद्यादिदोषकरत्वात् श्लेष्मसंवर्धनाच्च । किं तु ग्रीष्मर्तौ रूक्षे भूमिदेहदेशे पथ्य एव । बालवृद्धक्षीणादयो रूक्षा वातलाश्च दिवास्वापार्हाः सर्वदा । विश्रामात् रौक्ष्यविनोदकरत्वाच्चैतेषां स्वास्थ्याभिवृद्धिकरो दिवास्वापः । दिवास्वापाभ्यस्तेनापि सेवनीय इत्यायुर्वेदोपदेशानुसारेण प्रथममभ्यासहेतुना मासं मासार्धं वा सेवनीय पश्चादभ्यस्ताधिकारेण सर्वदा एवमायुर्वेदोपदेशादरो न विधेयः । आजीविकाव्यवहारस्वरूपेणापरिहार्येण हेतुना येन केनापि दिवास्वापश्चेदभ्यस्तो न दोषायेति भूतार्थ आयुर्वेदोपदेशस्य मनसि विधेयः ।

**वामपार्श्वेन संवेशः ।**

वामपार्श्वावस्थित आमाशये सुसमाहितस्याहारस्य यथावत् क्लेदनं भवति सम्यक् द्रवीभूतश्चाहारः सम्यक् पचति । इति भोजनानंतरं वामपार्श्वेन संविशेदित्युपादिष्टम् । सुगमाभिप्रायं चैतत् ।

अधुना विद्यालयेष्वध्ययनारंभो विभिन्नेषु विविधेषु कार्यालयेषु कार्यान्तरारंभश्च प्रायशो मध्यान्हसमय एव भवति । यथाकथमपि भोज्यद्रव्यैरुदरमापूर्य समयातिक्रमणभिया सपदि विद्यालयकार्यालयानुगामिना पथा परिधावद्भिर्भोजनानंतरं विश्रामो वामपार्श्वसंवेशो वा कथमासेवनीय इत्ययं विचारविषयो विशेषेण ।

भोजनानंतरं सद्य एव श्रमकारणमनारोग्यकारणमित्यारोग्यशास्त्राभिप्रायः । कृतभोजनानां सद्यःपरिश्रमादग्निमांद्यानाहार्शोग्रहणीविकारादयश्चानेके – स्वास्थ्याबाधकरा व्याधयः समुत्पद्यंत इत्यनुभव एव प्रत्ययः । प्रातः सायं चेति विभज्याध्ययनसमयमाहारानंतरमुचितस्य विश्रामस्योपलब्धिर्भवेच्छात्राणामारोग्याभिवृद्धिश्चेत्यस्मिन्विषये शासनाधिकृताः समर्थाः शरणीकरणीयाः ।

**सायंविहारः ।**

सायंसमये नगराद्बहिः स्वच्छसमीरसंचारपूते प्रदेशे पादसंचारः, उपवेशनं, चंक्रमणं, क्रीडाश्चानेकविधाश्चैवंविधो विहारः सामर्थ्यानुकूलमासेवितः स्वास्थ्योपकारको भवति ।

जनसंमर्दाकुलेषु नगरेषु सुदुर्लभस्य सुगंधवाहस्यासेवनं प्राणोपबृंहणं पादचारः, क्रीडाश्चानेकविधा व्यायामस्वरूपाः क्षुत्प्रबोधनकराः शरीरलाघवादिव्यायामगुणकारिणश्च संजायंते ।

**रात्रौ भोजनम् ।**

भोजनसंबंधिनामायुर्वेदतंत्रगतानां नियमानां समालोचनादहोरात्रे मध्यान्ह एकदैव भोक्तव्यमित्यभिप्रायोऽनुमीयते । किंतु संवत्सरशतेभ्यः प्रवर्तमानो निशाभोजनाभ्यासो दृश्यते प्रायेण सर्वत्र । एकदैवाहोरात्रे भुंजानाः स्वास्थ्यसंपन्ना विशेषेणेत्यनुभूयते विरलप्रायैरुदाहरणैरधुनाऽपि । अभ्यस्तमपि भोजनं रात्रौ प्रथमयाम एव हितम् । येन भोजनानंतरं मुहूर्तद्वयं यावद्विश्रम्यापि निद्रासमयस्यातिक्रमो न स्यात् । भोजने च द्रवप्रायाणां लघूनां द्रव्याणामुपयोगो विशेषेण विधेयः ।

दिवा कार्यांतरसौकर्यसाधकं शरीरलाघवं संपादनीयमिति सुपचः स्वल्पमात्रश्चाहारो निशायां यथेच्छं गुरूणां संस्कारगुरूणां चाकंठमासवेनमित्याहारपद्धतिः स्वीकर्तव्येति केषांचनाभिप्रायः । लौकिकव्यवहारानुकूलाऽपि पद्धतिरियं यथावदाहारपरिणाममूलस्यारोग्यस्यानुकूला न स्यात् ।

**निद्रा ।**

प्रकृत्याहारोद्यमसात्म्यादीनामनुरोधान्निद्रायाःसमयप्रमाणभेदेऽपि सामान्येन दशमुहूर्तं यावदासेवनीया निद्रा वयस्थैः । बालैर्वृद्धैश्चाधिका । ब्राह्मे मुहूर्ते उत्तिष्ठेदिति नियमादेव प्रथमयामे चतुर्थो मुहूर्तो निद्रासमयो निश्चितो भवति ।

निमित्तेन केनापि रात्रौ जागरणे संजाते प्रातर्जागरार्धसमयं शयितव्यं भोजनात्प्रागेव । भोजनानंतरं शयनाद्रात्रिजागरणात्संजातस्याजीर्णदोषस्याभिवृद्धिर्भवेदिति भोजनानंतरं दिवास्वापो रात्रिजागरणेऽपि निषिद्धः ।

निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥ १ ॥
( अ. हृ. सू. )

इत्यारोग्यसंरक्षणे निद्रायाः प्राधान्यमुपदिष्टम् ।

यथासमयं निद्रासेवनात् श्रांतानामिंद्रियावयवानां क्रमविनोदो भवति । तेषां सामर्थ्यस्याभिवृद्धिर्भवति । सर्वासां शारीरमानसानां क्रियाणां प्रवर्तक इंद्रियोत्साहः समुत्पद्यते । अत आरोग्याभिवृद्धिमिच्छता यथानियमं निद्रासेवनार्थमुन्निद्रेण प्रयतनीयमिति ।

अथ कदाचिच्छारीरमानसैर्हेत्वंतरैर्निद्राल्पत्वे समुत्पन्ने तत्तत्कारणापनोदेनैव निद्रासुखार्थं प्रयतनीयम् ।

निद्राकराण्यपि कियत्कालं रौक्ष्यौष्ण्यादिदोषकरत्वादहितोदर्काणि संमोहनापरपर्यायाणि निद्राकराण्यौषधानि नोपयोज्यानि ।

निद्रावस्थायां कीदृशं शरीरावस्थानं हितायेत्यस्मिन्निश्चयो दुष्करः । स्वभाववैचित्र्यात् । अपि तु वामपार्श्वावस्थितिर्निद्रायां पचनक्रियोपकारिणीति सात्म्यीकर्तव्या । सुखनिद्रासाधिकाऽवस्थितिः शरीरस्य निद्रायां समीचीनेत्यत्र व्यवहारसुलभः स्यान्निर्णयः ।

**अब्रह्मचर्यम् ।**

प्राणिनामाहारादिवत् विशिष्टे वयसि व्यवायप्रवृ-

त्तिरपि स्वाभाविकी। दुरतिक्रमोऽयं स्वभावः शरीरस्य। आहारादिनोपबृंहिताः शारीरा धातवः परिपूर्णाः सन्तो तरुणे वयसि स्वसमानसंतत्युत्पादनाकांक्षिणो भवंति। समुत्पन्नश्चोत्पादनाकांक्षयैव प्रवर्तते जीव इति जीवलोकावलोकनात्सुगमावबोधा नियतिः। आहाररसादुत्क्रांतिपरंपरामनुभवन्तो धातवो रक्तमांसादयः संतत्युत्पादनक्षमेण शुक्रधातुस्वरूपेण बीजरूपेण विपरिणमंति पुंसः। योषितश्चार्तवरूपेण गर्भवृद्धिकरेण। चरमोऽयं धातुः शरीरस्थसाररूपो व्यवायस्यातिसेवनात्क्षीणश्चेदितरेऽपि धातवश्चानुपूर्व्या क्षीयन्ते। उपतप्यते च शरीरमुपतापकरैर्विविधैर्विकारैः। अत एवोपदिश्यते— रक्षेत् शुक्रं प्रयत्नत इति। शुक्रधातुसंरक्षणोपायस्तु व्यवायो परमः स एव ब्रह्मचर्यमित्यपरपर्यायेण व्यवह्रियते। अपरिस्रवच्छरीरगतं शुक्रं परिणमत्योजोरूपेणेति ब्रह्मचर्यावस्थिताः सामर्थ्यातिशयिनो भवंत्योजस्विनः सर्वसहाश्चेति आधिव्याधिस्वरूपैश्चाबाधैरेतेषां मनः शरीरं च नोपप्लवते। स्वास्थ्यसंपन्नं शरीरं समाहितं चेतश्चैतेषामैहिकामुष्मिकस्य श्रेयसः साधकतमामिति ब्रह्मचर्यं प्रशंसंति विपश्चितस्तत्साधनोपायांश्चोपादिशंति।

किं तु स्वाभाविकप्रवृत्तिनिरोधस्वरूपं ब्रह्मचर्यमासाध्यमपि दुःसाध्यमिति स्वभावानुभवाद्विवेकिनो व्यवायनियमोपायानेवोपादिशंति। न चात्यंतमेव व्यवायोपरमोपायान्। स्वाभाविकप्रवृत्त्यनुकूलमपि व्यवायसेवनं यथा शरीरधातुसंघाताघातकरं न स्यान्न च वा शारीरमानसानां विकाराणामुत्पादकं भवेदेवं प्रयतनीयमित्यस्मिन्केचन नियमा उपदिष्टाः।

संपन्नधातुना, वयस्थेन, स्निग्धाहारेण, ऋत्वंतरानुरोधात्र्यहात्, सप्ताहात्, पक्षात्, मासाद्वा व्यवायसेवा विधेया। अबाधाविरहिते शरीरे, प्रसन्ने मनसि, प्रोत्साहिन्यां वेलायामवस्थायां च अनुकूलायामनुगुणायामुचितायां योषिति ऋतुमत्यां व्यवायः स्वास्थ्याबाधकरो न स्यादुत स्वास्थ्योपकारक इत्यासेवनीयः।

अनात्मवंतः केचन ग्राम्यधर्मपरायणा व्यवायातिसेवया शरीरक्षयकरैर्व्याधिभिराक्रम्यंते। क्षीणधातुत्वादसमर्थाः शारीरचेष्टासु सत्वहीनत्वादनवस्थितमनोव्यापाराश्च सर्वोपक्रमेष्वसमर्था भवन्ति। अतः स्वास्थ्यसुखसंपन्नं दीर्घमायुराकांक्षिभिर्धर्मशास्त्रस्याराोग्यशास्त्रस्य चोपदेशानुसारं व्ययायकर्मणि नियमितैर्भाव्यमिति ब्रह्मचर्योपदेशस्याभिप्रायः स चावश्यमनुपालयितव्य इति।

ये केचनास्खलितब्रह्मचर्या महानुभावाः शारीरमानसैर्भावैरादर्शरूपास्ते वंदनीयाः सर्वथा। किन्तु हठात् ब्रह्मचर्यानुपालने दीक्षावन्तो व्यवायपराङ्मुखा अपि येन केनापि मार्गेणास्वाभाविकेन स्रुतरेतस्त्वादसंतुष्टमानसाः केवलं ब्रह्मचर्यं विडम्बयन्तो विचरन्ति। वरं चैतस्मात् व्यवायसेवनं धर्म्यंमिति गार्हस्थ्यमेवोपदिशन्ति सामाजिकस्वास्थ्योत्कर्षचिन्तापरायणाः।

पुरुषाणां स्त्रीणां च सन्तत्युत्पादनाकांक्षामूला एव व्यवायप्रवृत्तिः स्वाभाविकी इत्यवधारिते गर्भोत्पादनस्वरूपेण सफलीभूयादेवंविधं व्यवायसेवनमेव शरीरधर्मानुकूलमित्युपपद्यते। तदनुसारेणैवोपदिष्टाश्चानेकविधा नियमाः। येषां परिपालनात्सत्वसंपन्ना संततिर्जायते। धर्मशास्त्रोपदेशेष्ववद्धादरयोरपि संगमिष्वोः स्त्रीपुंसोः शारीराणां मानसानां च गुणानामानुकूल्यमाहारविहारेच्छादिसाधर्म्यं च व्यवायसुखसाधनमित्यादरणीयमित्यत्र विचारवतां शंकास्पदं न किंचिदुपलक्ष्यते।

स्त्रीपुंसोः सवर्णत्वमसवर्णत्वं, सगोत्रत्वं, वयोमर्यादा, ऋतुकालीनो व्यवहारः समागमसमयश्चेत्यादयो विचारविषयाश्चाधुना मतान्तरसमाकुलाः। समीक्षणं चैतेषां स्वतंत्रतयैव विधेयम्।

व्यवायोत्सुकतायामपि कष्टपूर्णायामाजीविकायामपत्यपोषणाक्षमत्वात्तारुण्यस्य सौन्दर्यस्य वा संरक्षणाकांक्षया गर्भसंभवप्रतिबन्धोपाया उपयुज्यमाना दृश्यन्ते। कियत्प्रमाणं साफल्यमेतेषामुपलभ्यत इत्यानिर्णेयं विवादास्पदं वा प्रश्नं विहायापि स्वभावविरोधिनश्चैवंविधा उपायाः स्वास्थ्यानुकूला न भवन्तीति वक्तुं पार्यते। शास्त्रोपदिष्टनियमानुसारं व्यायच्छतां स्वभावविरोधिनामुपायानामवलम्बनं नैवावश्यमित्यत्र दत्तावधानैर्भाव्यं प्रेक्षावद्भिरिति।

रिरंसापरायणैश्च कैश्चित्स्वाभाविकस्य व्यवायसामर्थ्यस्याभिवृद्ध्यर्थमुपयुज्यमानानि वृष्यभैषज्यानि व्यवायसामर्थ्याभिवृद्धिकराण्यपि तत्त्वतः शरीरापकारकाणीति स्वभाव एवात्रानुसरणीयः सर्वथा।

ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम्।
अप्रियामप्रियाचारां दुष्टसंकीर्णमेहनाम्।
अतिस्थूलकृशां सूतां गर्भिणीम्—

इत्यादिनिषेधोपदेशाभिप्रायस्तु स्पष्ट एव। शरीरस्थित्यनुकूलता सुखायेति। अन्ययोषितं त्यजेत्। देवालयादीनि पूज्यस्थानानि स्मशानादीनि च भयानकस्थानानि मनोऽनवस्थानकराणीति वर्जनीयानि। स्वावस्थितेन शरीरेण प्रसन्नेन च मानसेनासेवितो व्यवायः शरीरमनःसमाधानकरः स्वास्थ्यानुकूलश्चेत्यत्र सुविज्ञेये किंवाऽन्यद्विज्ञापनीयम्।

अथ ऋतुचर्या।

संवत्सरस्य मासद्वयविभक्ताः षड् विभागा ऋतवो नाम। संवत्सरारंभमासं चैत्रं कार्तिकं वा विहाय शरीरपरिणामानुसारतो माघमासादारभ्यायुर्वेदे ऋतुगणना स्वीकृता दृश्यते। माघादिराषाढांतः षाण्मासिको वत्सरार्धः शिशिरवसंतग्रीष्माख्यास्त्रयो ऋतवः। उत्तरस्यां दिश्यारूढस्य भगवतो दिनकरस्यायनत्वादु-

त्तरायणमित्यस्यर्तुत्रयात्मकस्य कालस्यापरा संज्ञा। एवमेव श्रावणादिः पौषान्तःकालो वर्षाशरद्धेमन्ताख्यास्त्रयो ऋतवो दक्षिणायनं च। बीजप्ररोहानुकूलः कालो ऋतुर्नाम। दूरात्सामीप्याद्दिवाकरस्य भूम्यन्तर्गतद्रव्याणां परिपाकप्रभावाच्च सामान्येन प्रतिमासद्वयं जलवातादीनामाहार्यद्रव्याणामौषधीनां च गुणभेदाः प्रकल्प्यन्ते। तदुपयोगाच्छरीरेऽपि ऋत्वन्तरानुसारेण विशिष्टगुणानां वृद्धिर्ह्रासौ भवतः। समालोच्यैतदृत्वनुकूलमाहारविहारादिकमुपयोज्य स्वास्थ्यसंरक्षणार्थमुपदिष्टो विधी ऋतुचर्या नाम।

सामान्येनोक्तायां दिनचर्यायामृत्वनुकूलं किंचित्परिवर्तनं विधेयं विधेयश्चार्तवस्य शीतोष्णादिपरिणामस्य परिहार इति ऋतुचर्याविधिः संक्षेपेण।

ग्रीष्मवर्षाशिशिराख्येषु वातादीनां संचयः, वर्षाशरद्वसन्तेषु च वातपित्तश्लेष्मणां प्रकोपो भवति। अतस्तत्तद्दोषोपशमार्थं स्निग्धोष्णतीक्ष्णादीनामाहारौषधद्रव्याणां विशेषेणोपसेवनं शीतातपवर्षातुषारादिभ्यः परिरक्षणमित्यादयश्चाहारविहारविशेषा ऋतुस्वभावानुसारेण दोषपरिहारार्थमुपदिष्टाः। यथावदाचरिते ऋतुचर्योपदेशे ऋत्वन्तरसंभवानां ज्वरातीसारविषूचिकाप्रतिश्यायादीनां विकाराणां संभवो न भविता।

वर्षादिषूत्पद्यमानानां विषूचिकातिसाराख्यानां विकाराणां जनपदोध्वंसकत्वमपि ऋतुचर्योपदिष्टनियमानुसारेणाचारवतां न पीडायै भवति।

ऋत्वन्तरानुकूलमायुर्वेदोपादिष्टं विशेषविधिं धर्मशास्त्रादिष्टं च मासविशेषाचारविधिं भूम्ना सधर्ममवलोक्य धर्मशास्त्रस्यारोग्यशास्त्रस्य चायमभिसंधिः समानाभिप्रायः शारीरमानसारोग्याभिवृद्धिहेतुश्चेत्यवगम्यते।

## स्वास्थ्यबाधकरो वेगविरोधः।

उत्सर्जनयोग्यानां शारीरद्रव्याणामुत्सर्जनप्रवृत्तिर्वेगः सामान्येन ऊर्ध्वाधोवातमलमूत्राश्रुवम्यार्तवशुक्रादीनि द्रव्याणि शरीरस्वभावादेवोत्सर्गोन्मुखानि जायन्ते। एतेषामुत्सर्जनप्रवृत्तिनिरोधो वेगावरोधः। चलनात्मना समीरणेन विधीयते वेगोत्सर्गः। वेगावरोधाच्च प्रतिहतो वायुर्विकृतिमापद्यते। उत्सर्जनोन्मुखानां शकृन्मूत्रादीनामवरोधात्प्रतिहता प्रवृत्तिरुत्सर्गेन्द्रियाणां सम्यङ्मलोत्सर्जनेऽसमर्थानीन्द्रियाणि विधास्यति। यथावन्मलोत्सर्गाभावान्न केवलं तत्तन्मलोत्सर्गकराण्येवेन्द्रियाणि विकृतिमापद्यन्ते। मलसंसर्गाद्धातवोऽपि सर्वदेहगा विकृतिमापन्ना नानाविकारानुत्पादयन्ति।

वेगत्वसामान्येनोपदिष्टेष्वपि वेगानां विशेषश्चिंतनीयः। त्रयोदशवेगेषूद्गाराधोवातमूत्रशकृदश्रुच्छर्दिश्चैते सप्तसंख्याका मलरूपद्रव्याणामुत्सर्जनरूपा वेगाः। क्षवकासजृम्भाश्रमश्वासाख्याश्चत्वारो वायोरस्वाभाविकप्रवृत्तिस्वरूपाः। निर्मलद्रव्यस्योत्सर्जनोन्मुखतास्वरूपः शुक्रवेगः। क्षुत्पिपासावेगौ तु प्रार्थनारूपौ (अन्नपानं च प्रार्थयतः) विश्रामाभ्यर्थनारूपो निद्रावेगः।

वेगावरोधात्तत्तद्वेगोत्सर्जकेंद्रियक्रियाविघातः सामान्यः। विशेषश्च मलरूपाणां वेगानामवरोधात्समलत्वं तज्जन्याश्च विकाराः। अनैसर्गिकवातप्रवृत्तिरूपाणामवरोधात् प्रवृत्तिस्थानेष्वापीडनं शुक्रावरोधादस्वाभाविका प्रवृत्तिरप्रहर्षो मनोविकाराश्चानेके शुक्राश्मरी च। क्षुदवरोधात्पाक्तिव्यापत्तिरपुष्टिः क्रमः शोषश्च। तृष्णानिरोधान्निद्रावरोधात् ग्लानिरनवस्थितत्वं चेति। प्रत्येकशो वेगावरोधजन्यविकारोपाख्याने चिन्तनीयं तत्त्वस्वरूपमेतत्।

## शकृद्वेगावरोधः।

अभिहते शकृद्वेगे संचितं शकृदानाहादीन्विकारानंत्रगतानुत्पादयेदिति सुगमाववोधम्। किंतु संचितमलस्यांशाः शरीरेऽभिसर्पन्तः सर्वान्धातून्दूषयन्ति। तद्दूषणाच्च प्रतिश्यायादयो विकाराः संजायन्ते। समलानां धातूनां नित्योत्पादनं यथावन्न भवति।

## मूत्रावरोधः।

मलावरोधवन्मूत्रावरोधादपि द्रवरूपस्य मलस्योत्सर्जनाभावे धातूनां समलत्वं विकारोत्पादकम्। मूत्रसंचयाद्बस्तिमेहनयोस्तोदो विशेषेण।

## उद्गारस्याधोवातस्य चावरोधः।

उद्गाराधोवातयोर्निरोधान्मलरूपस्य वायोः कोष्ठ एव संचयो भवति। संचितश्चासौ कियता कालेन धातुष्वनुप्रविष्टो धातून्दूषयति। उद्गारादधोवायुर्विशेषेण मलस्वरूप इति धातुदूषकत्वमास्मिन्नधिकमुद्गारापेक्षया। स्थानाश्रयहेतुनाऽधोवातेनाध्मानाटोपौ विशेषेणोद्गारावरोधाश्च हृद्वक्षसोर्विबंध इत्युपद्रवाः संजायंते।

## शकृन्मूत्रवातवान्त्यवरोधः।

शकृन्मूत्रं वायुश्चैतानि मलस्वरूपाणि द्रव्याणि शरीरेऽवस्थितानि धातून्मलिनीकुर्वन्ति। ततश्च धातुदूषणादनेके शोषकुष्ठशोथादयोऽपि व्याधयः संजायेरन्। वमेर्निरोधोऽप्येवमेव कोष्ठांतर्गतं दूषितं तीक्ष्णोष्णस्वरूपं द्रव्यमवतिष्ठद्धातुप्रसृतं धातून्सन्दूषयेत्। तीक्ष्णोष्णत्वाद्विसर्पोददकुष्ठादयो विकाराः संजायंते।

## जृम्भाकासश्रमश्वासादीनामवरोधः।

जृंभाकासश्रमश्वासादयश्चावरुद्धाः स्वोत्पत्तिस्थानान्तं कठोरःप्रभृतीनां पीडाकरा भवंति।

## निद्रावरोधः।

निद्रा नाम क्रमान्वितानां कर्मात्मनां मनःसहितानां विषयेभ्यो निवृत्तिः। अतः सुषुप्सुना विहायान्य

त्सर्वं निद्रैव सेवनीया । विहते च निद्रावेगेऽलब्ध-विश्रामाणि देहेन्द्रियाण्यपरेद्युरकर्मण्यानि भवन्ति । वातश्च कुप्याति । अपि चाप्रशान्तः कुपितो वायुरंग-मर्दं पचनदौर्बल्यं चापादयति । वारंवारं कृतरात्रि-जागराणां धृतनिद्रावेगानां निद्रा स्वं कालमातिवर्तते । तस्या हानिरपि सम्भवति । निद्राहानेश्च वलीपलितो-प्माधिक्यादयश्च सञ्जायन्त इति न विद्वान् निद्रावेगस्य विघातं कर्तुमर्हाति ।

## क्षुदवरोधः ।

क्षुद्वेगाविघातं तावद्बहुशो जना न कर्तुमिच्छ-न्ति । ये केचित् परवशास्तेपामेव क्षुद्वेगविघातः संभ-वाति । तथापि सन्त्यन्ये स्ववशा अपि केचिन्महाभागा ये स्वेच्छया क्षुद्वेगविघातं कुर्वन्ति । व्रतपरिपालनार्थं चिकित्सेति वा लंघनं कुर्वतामाहितव्रतानां व्रतै-कलग्नचित्तानां क्षुदवरोधो न हानये प्रत्युत लाभायैव भवति । न हि प्रत्यहं प्रत्येकेन मात्रावदेव भोजनं कर्तुं शक्यते । निसर्गश्च किंचिदपि मात्रातिक्रमं न संस-हते । अतो जाग्रमानमजीर्णमन्तरान्तरा कृतेन लंघनेन नश्यतीति व्रतव्याजेन वा कृतं लंघनं लाभायैव भवति। परन्तु सन्त्यन्य आहितनिसर्गोपचारविश्वासाः। ते मन्य-न्ते यो वा को वा रोगो भवत्वग्निमांद्यमेव तस्य मूल-मिति कृत्वा लंघनमेव तत्रोपचारः साधीयान् । तथा-पि लंघनं कियन्ति दिनानि ? त्रिंशच्चत्वारिंशद्दिनावध्य-पि कर्तव्यमिति । परंतु " रोगाः सर्वेऽपि मन्देऽग्नौ " इति शास्त्रकृतामाभिप्रायो लंघनात्मिकैवायुर्वेदीया रोगचिकित्सा,तथापि न सा सततमभोजनात्मिकैव। न हि कारणरूपेऽग्निमांद्ये नष्टे कार्यरूपो रोगोऽपि नश्य-तीति अवितथमेवोच्यते मधुकोशटीकाकृद्भिः ' न हि दंडकुलालाद्युच्छेदे घटोच्छेद ' इति । कदाचित् रोगः समूलनाशं नश्येदपि लंघनसंघेन । किंतु तेन साकं शरीरमपि नाशमियात् । उच्यते च "-आहारं पचति शिखी दोषानाहारवर्जितः पचाति । दोपक्षये च धातून् धातुक्षये च प्राणान्-" । इति क्षुदवरोधेन सद्य एव प्राणा हीयन्ते जायते चाग्निमांद्यामित्युक्तं प्रागतो निषिध्यते क्षुद्वेगावरोधः ।

## अश्रूणामवरोधः ।

अश्रूणामवरोधादनिस्सृतमश्रुजलं संचितं नेत्रना-साभ्यंतरे शिरोगुरुत्वं नासानेत्रविकारानुत्पादयाति ।

इत्येवमादयो विकाराः संजायंते वेगा-वरोधेनेति स्वास्थ्यरक्षार्थं ' न वेगितोऽन्यकार्यः स्या-' दित्युपदिष्टमायुर्विद्भिः । अनुक्तयोः स्तन्यार्त-ववेगयोरवरोधेनापि विकारसंभवश्चितनयिः । शुक्र-वेगावरोधवदार्तवरोधोऽपि योषापस्मारादीन्विकारा-न्गर्भाशयव्यापदश्चापादयेत् । स्तन्यावरोधश्च स्तन-विद्रध्यादीन् ।

## मनोवेगाः ।

लोभेर्ष्याद्वेषमात्सर्यरागादीन् मनोवेगान् यतेंद्रियो धारयेदेव । उद्रिक्ताश्चैते पापाचारप्रवर्तकाः । पापाचा-रैश्च मनः क्षुभ्यत्यवसन्नं वा भवति । ततश्च सदस-द्विवेकोपरमात्पापाचारपरंपरासंभवः । अतः संप्रवृत्ते द्वेषमात्सर्यादिवेगे निग्रहेणैतस्योपशमार्थं प्रयतनीयम् । अनुद्रिक्तोऽपि मनोवेग ईर्ष्यामात्सर्यादिरूपो मनो-दूषकः स्वास्थ्यहानिकरश्चावश्यमिति मनोवेगानां विधारणं नाम न केवलमनुद्रेकः किं तु प्रशमनं सर्व-थेत्याभिप्रायः समादरणीयः ।

मनोवेगानां विधारणार्थं सत्वगुणाभिवृद्धिकरः सदाचारः सर्वदा शीलयितव्यः ।

आर्द्रसंतानतात्यागः कायवाक्चेतसां दमः ।

स्वार्थबुद्धिः परार्थेषु ।

इति सामान्येन सदाचारः । दीनेष्वशरणेष्वनुग्रहः परार्थसाधनं स्वार्थवत्, अपकारिष्वप्युपकरण-मित्यादिभिः क्षमाशांत्यादयश्चाभिवृद्धा मनोगुणाः क्रोधलोभादीनभिभवन्ति । प्रसंगादपकर्तॄणां शास-नमवश्यं विधेयमपि राजसी प्रवृत्तिरियम् । सामा-जिके व्यवहारे समाजोत्कर्षायावश्या मानाहंकारा-दयो गुणाः प्रसंगानुसारं श्लाघ्या अपि मनःसमतां-तरायस्वरूपाः । मानेर्ष्यादिभिराक्रान्तं मनः समतासुखमनुभवितुं नार्हतीत्यनुभवः सर्वदा । उपकारप्रधानः स्यादपकारपरेऽप्यरौ । इत्युप-देशाभिप्रायः सर्वैः सर्वदा हानिकरेष्वपि प्रति-कारपराङ्मुखैर्भाव्यम् । किंतु । उपकारकर एवेति चेत्स्वीकृतस्तर्हि सर्व एवोत्कर्षकरा आरंभाः परिहेया भवेयुः । सर्वथा उत्कर्षोद्योगप्रवृत्तिहानिकर उप-देशे अवश्यमाक्षेपसंभवः । शौर्यधैर्योत्साहादीनां गुणानां हानिकरोऽयं दुर्बलोचितश्चेति । " आत-तायिनमायांतं हन्यादेवाविचारयन्-" इति महाभारतोक्तिमनुस्मरंतोऽप्यकारपरेऽप्यरावुपकुर्यादि-त्यायुर्वेदविदुक्तिरियं "उपकारप्रधानः स्यादपकारपरेऽ-प्यरौ । " इति संशोध्यैवांगीकर्तव्येत्यपि प्रतिपा-दयेयुः । किं च । त्रिवर्गशून्यं नारंभं भजेत्तं चाविरो-धयन् । अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ॥

इति पुरुषार्थसाधनमुपदिष्टवतः, आपन्निवारणार्थं निशि चात्ययिके कार्ये दंडी सहायवांश्च गच्छेदिति सूच-यतः, सर्वारंभेषु चाशावानिति पुरुषस्य लक्षणमाख्यायतो ग्रंथकर्तुरुपदेशोऽयमुचितप्रती-कारेऽपि विद्वेषपरायणेन न भाव्यमित्यभिप्रायाभिव्यं-जक इत्यनुमीयते ।

## साध्वसं साहसं च वर्जयेत् ।

श्मशानाटव्यादीनि भीतिस्थानानि संदिग्धवाहना-दीनि वर्जयेज्जीवितापायशंकयेति स्पष्टाभिप्राय स्पष्टीकरणमनवश्यम् ।

अयथाबलमारंभः साहसं नाम ।

अतिबलेन सह विग्रहोऽबलेन प्लवनं, प्रधावनं, अतिभारोद्वहनमित्यादीनि साहसान्युरःक्षतादीन्विकारानापादयंति शरीरभेदमप्यतस्तानि विवर्जयेत्सर्वथा ।

वस्त्रालंकरणादिविषयः ।

वस्त्राण्यलंकरणानि च कीदृशानि धारणयोग्यानीति विषये देशाचारः प्रमाणम् । उष्णशीतादिनिवारणेन शरीररक्षा विधेयेति वस्त्रधारणहेतुर्मुख्यः । तदनुरोधाद्देशकालसंप्रदायानुकूलं धारणीयान्यपि, स्पर्शसहानि सुशोभीन्यप्यभासुराणि वासांसि धारणयोग्यानीति सामान्यो नियमः । उष्णशीतादिकं देशविषयं कालविषयं वाऽविचार्य केचिदत्यल्पवसनाः केचिद्भूरिवसनानुरागिणो दरीदृश्यते । उभयमप्येतदेकांततोऽपहाय देशकालानुयोग्यानि वासांसि संधारणियानीति मध्यमा वृत्तिरनुसर्तव्या ।

अलंकरणानां ग्रैवेयकांगुलीयककर्णभूषणादीनां मणिमुक्तादीनां च संधारणेनारोग्याभिवृद्धिर्भवतीति प्रतिपादयितुं शक्यमपि शरीरश्रीसंवर्धनहेतुरेव प्रधानः ।

आहारविधौ विरुद्धाहारवर्जनं प्राधान्येन निर्दिष्टम् । षड्सो मधुरप्रायोऽप्याहारो विरुद्धश्चेत् निष्फलो भवेदिति ।

विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ।

इति स्पष्टमेवावोचत् श्रीमद्वाग्भटः । विरुद्धाहारो विशेषतो मानसंयोगसंस्कारैस्त्रिधा संपद्यते यद्यपि देशकालाग्निमात्रासात्म्यानिलरूक्षवीर्यकोष्ठावस्थाक्रमपरिहारोपचारपाकसंयोगहृत्संपद्विधिभिर्दशभिःसशास्त्रकृद्भिर्निर्दिष्टः । ( च. सू. २६-८६।१०१ ) तत्र समप्रमाणमधुसर्पिरादयो मानविरुद्धाः । 'विरुद्धमम्लं पयसे'त्यादयः संयोगविरुद्धाः । 'कांस्य दशाहमुषितं सर्पि'रित्यादयश्च संस्कारविरुद्धाः । किमत्र तत्वमन्तर्भूतम्? न चायं विशेषो दृश्यते पाश्चात्याहारशास्त्रेषु न च व्यवहारेऽपि सर्वथा प्रतिपाल्यते । तर्हि विरुद्धो नाम य आहारस्तत्र तथ्यमपि भवति न वेति तावत्संदेग्धि जनस्वान्तम् । भवतु वा न वा पाश्चात्यवैद्यके विरुद्धाहारकल्पना व्यवहारे वा लोका नांगीकुर्युर्विरुद्धाहारत्यागविधिम् । विरुद्धाहारत्यागेन लाभोऽपि सुदूरो वा भवतु।परन्तु सद्योहानिःप्रायशः स्थ एवानुभूयते।उत्क्लेश्यदोषान्न हरेद्द्रव्यं यत्तत्समासतः।।विरुद्धम्। ( अ.सं सू. ) इत्ययं प्रधानो विरुद्धाहारजन्यो दोषः केनाप्यनुभूयेत । दुग्धतक्रमिश्रणं सदा सेव्यमानं न बहूनामुत्क्लेशकरामिति शंकायां तद्रोचिष्णु भवति किमिति प्रतिशंक्यते सूच्यते च सूक्ष्मदृशाऽवलोकितं चेत्तदप्युत्क्लेशकरामिति । बहवो विरुद्धाहारदोषाः सद्यःपरिणामकरा न भवन्ति किन्तूदर्करोगावहत्वेन निषेधस्तेषामभिहित इति स्मर्तव्यम् ।

अतः परं व्याख्यातव्याऽन्नरक्षा । किन्तु सा विस्तरेणास्मिन्ग्रंथेऽष्टमाध्याये विवेचिताष्टाङ्गसंग्रहकृद्भिः । तत्रत्येन्दुव्याख्यया प्रभाटिप्पण्या च सा सुस्पष्टं विवृता पाठमात्रेणैव सुखबोधाय कल्पेत । इयमन्नरक्षा तावदीश्वरानवसुमतो राज्ञो वाऽधिकृत्य निर्दिष्टा । यतो ह्यमीषां प्राणाः सामान्यानतिशेरते परन्तु सामान्यजनैरपि यावच्छक्यं सा आचरणीया । सुबोधमिति कृत्वा नात्र विविच्यते ।

सार्वजनीनारोग्यम् ।

अथ विचार्यते सार्वजनीनारोग्यम् । यस्याननुपालनेन न केवलं व्यक्तयो अपि तु जनसमूहोऽपि जनपदोध्वंसनीयप्रभृतिभिर्व्याधिभिः परिपीड्यमानः समूलनाशं नश्येति । जनपदध्वंसकानां कासश्वासज्वरातीसारादीनां चरकसुश्रुताभ्यां मरकत्वेनोल्लेखः कृतो दृश्यते । इदानीं योगक्षेमार्थं नगराण्यधिष्ठाय जनैः संकुचितं यथोपलब्धमनारोग्यावहं गृहमधिवास्यते । तेन ग्रन्थिकज्वर ( Plague ) विषूचिका ( Cholera ) श्लेष्मवातज्वर ( Influenza ) प्रभृतयो जनपदोध्वंसका औपसर्गिकरोगाः ( Contagious Diseases) लब्धाधिष्ठानाः प्रसरन्ति। नगरपालिका ( Municipality ) मरकप्रतिकारार्थं प्रयतमानाऽपि न तादृशं साफल्यं लभते । नगराधिष्ठितैर्निखिलैरपि जनैरेतद्विषये प्रयतितं चेदेवौपसर्गिकरोगनिवारणकार्यं यथावत् सफलं भवेत् ।

वायुरुदकं देशः काल इति चत्वारि जनपदोध्वंसकारणानि । तत्र कालस्यर्तुजन्यव्यापदुक्तत्वादवशिष्टेषु दुष्टो वायुः स्वापरदेशं, दुष्टोदकं स्वनगरं, दुष्टो देशश्च स्वगृहाद्दूषणमारभते । वायुदोषप्रतीकारो न व्यक्त्यधीनः तत्कृते नगरपालिका एव प्रभवन्ति । किन्तु दूषितजलक्षितिदोषापहारे नगरवासिभिर्व्यक्तिभिरपि कामं प्रयतनीयम् । वाय्वादीनां दूषितानां सामान्यलक्षणानि सर्वैर्ज्ञातव्यानि । तेन सावधानता सद्यःप्रतीकारश्च समुपजायते । एक एव गदो भिन्नाहारवयःसात्म्यप्रकृतीनां समं भवेदिति ( अ. सं. सू. ७८९ ) संग्रहकृद्भिः स्पष्टं निर्दिष्टो वाय्वादीनां दूषितानां परिणामः । औपसर्गिकरोगग्रस्तैः संत्यक्तैर्मलमूत्रश्लेष्मस्वेदैः कुथितप्राणिशवेन वा प्रायः संसृष्टो वायुस्तदीयं विषं संवहंस्तानि तानि नगराणि प्रसरति तत्रस्थान् नीरोगिणो जनांश्च संदूष्य केवलं नगरं रोगानीकं करोति । अतस्तद्दोषपरिहारार्थं संहत्या एव प्रयत्न आवश्यकः । सामान्यतो वायुदुष्टिपरिहारार्थं गुग्गुल्वादिसुगंधिद्रव्याणां धूपस्योपयोगः साधीयान् यद्यपि सन्ति बहवोऽन्ये धूपाः शास्त्रसंमताः । तथा हि दूषितवायुसंशोधनविषये—

धूमेऽनिले वा विषसंप्रयुक्ते
खगाः श्रमार्ताः प्रपतन्ति भूमौ ।

कासप्रतिश्यायशिरोरुजश्च
भवन्ति तन्निा नयनामयाश्च ॥
लाक्षाहरिद्रातिविषाभयाब्द-
हरेणुकैलादलवक्रकुष्ठम्।
प्रियंगुकां चाप्यनले निधाय
धूमानिलौ चापि विशोधयेत्तत् ॥
सुश्रुतकल्प० अ० ३ श्लो. १६।१७

इति किल समुचितमभाणीत् सुश्रुताचार्यः। एवमुपरितनभावविशेषतः स्नायुकपरिपीडितैर्जलमाभिप्रदूष्यते।।विशेषतश्च खर्वटखेटकग्रामेष्वेकैकतडागवापीकेषु जलं सत्वरं संदूष्यते विषूचिकास्नायुकादयश्च ते ते सांसर्गिका रोगाः समुपजायन्ते। अतो दूषित. जलोपयोक्तृभिः तज्जलमुत्क्वाथ्य सेवनीयम्। सन्त्यन्येऽपि जलसंशोधनविधयः। किन्तु तत्पूर्वं जलभेदाविषयकं किञ्चिद्विमृश्यते।

इमे जलभेदास्तावत्खेटकेष्वेवानुभूयन्ते। "कौपसारसताटाकचौण्डप्रास्त्रवणौद्भिदं। वापीनदीतोयमिति। (अ. सं. सू. १८४) ग्रन्थेऽस्मिन्नष्टौ जलयोनयो निर्दिष्टाः। तत्र बहुश उपलब्धास्त्रय एव जलयोनयः सन्ति नदीवापीप्रस्त्रवणाः। नद्यो द्विविधा उत्ताना शीघ्रवाहिन्यो गभीराश्च मन्दगामिन्यः। तत्र शीघ्रवाहिनीनां जलं सुविशुद्धं सुपचं भवति। तत्प्रवाहस्य शीघ्रवेगेनोपलास्फालनाक्षेपविच्छेदोदकत्वात्तेन चोद्धूतोष्णतया व्यपगतशैत्यगौरवादिदोषवत्वाच्च। यास्तु निम्नोदका उपनद्यस्तासां जलं माहिषसूकरादिगाहनेन मलिनवस्त्रप्रक्षालनेन कूपीवलसंस्थापिताम्बष्ठादिकोथेन वा दुष्टं सद्रोगाय कल्पते। वापीजलं तावत् स्वादु लघु च निर्दिष्टम्। तच्च सर्वखेटकेषु प्राय उपलभ्यते। किन्तु तदपि नैव चेदरहट्टकोद्धूतमुपनदीजलवत्तस्यैव गतिर्भवति। यतो बहवः खेटकनिवासिनो जले मग्नपादा एव जलं गृह्णन्ति, तस्मिन्नेव जले स्नानादिकं कुर्वन्ति मलिनानि वस्त्राण्यपि प्रक्षालयन्ति। तेन च तज्जलं दूषितं भवति। ईदृशदूषितजलपानादिना शरीरं तत्तद्रोगसमुदायस्याधिष्ठानं भवति।

प्रस्त्रवणोदकं प्रायो दोषहरमिति खेटकास्तदेव जलं पिबन्ति चेत्साध्विति वक्तुं शक्यते। अन्येषां जलानां विशेषत उपर्युक्तदोषसंदूषितानां संशोधनमेवावश्यकं रोगपरिहाराय।

जले कियन्तो दोषाः सन्तीति ग्रन्थस्यास्य षष्ठेऽध्याये विस्तरेण निर्दिष्टम् ( अ. सं. सू. १८८)। तद्दोषनिराकरणार्थं च तत्रैव "अग्न्यर्कायसपिण्डकैस्तपनम्" इति सामान्यो विधिरपि निर्दिष्टः। अग्नितापनाख्यो विधिस्तु सर्वत्र प्रथिततर एव। "पर्णीमूलबिसग्रन्थिमुक्ताकतकशैवलैः। वस्त्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम्" (अ. सं. सू. १८८)। इत्येतस्मिन्सूत्रे कथितो जलसंशोधनोपायोऽग्नितापनापेक्षया दुष्करः। तथापि यत्र सुशकं तत्र पर्णीमूलादिभिर्जलं संशोध्य ग्राह्यम्। सुश्रुतेनादिष्टा घटसंशोधनपद्धतिस्तु समीचीना दृश्यते। तथा च सुश्रुतः—

धवाश्वकर्णासनपारिभद्रान्सपाटलान्सिद्धकमोक्षकौ च।
दग्ध्वा सराजद्रुमसोमवल्कांस्तद्भस्म शीतं वितरेत्सरस्सु।
भस्माञ्जलिञ्चापि घटे निधाय
विशोधयेदीप्सितमेवमम्भः॥
—सुश्रुतकल्प अ. ३ श्लो. ९।१०

परन्त्वियमपि जलसंशोधनपद्धतिर्विनायासेन नावलम्बितुं सुलभेति कृत्वाग्नितापनाख्यो जलसंशोधनविधिरेव साधीयान्।अतस्तस्यैवावलम्बनं करणीयं सुधीभिर्विशेषतो यत्र जलस्य न्यूनता।यत्र चैकस्या एव वाप्या जलेन सर्वग्रामस्य जलव्यवहारो नूत्नस्य वा नदीजलस्योपयोगो यदा यदा वा जनपदोध्वंसनीयानां रोगाणां प्रादुर्भावस्तदा तदा सर्वैरग्नितप्तं जलमेव पानादिपूपयोक्तव्यम्। ये च केचिद्वातकफजन्यैरग्निमान्द्यादिविकारैः पीडितास्तैरग्नितप्तमेव जलं सेवनीयम्। एवं दूषितजलपवनयोः संशोधनविधिं विचार्याधुना देशविषये किञ्चिद्विचार्यते।

जाङ्गलानूपसाधारणाश्चेति देशस्य त्रयो भेदाः। तत्र जाङ्गलस्याल्पजलत्वादुष्णरूक्षता। ततस्तत्रस्था जना वातपित्तविकारपीडाक्षमाः। अपि तु कफविकाररहिता मुक्ताग्निमांद्यदुष्टजलवायुजनपदोध्वंसनीय इति केवलं वातपित्तप्रत्यनीकत्वं शीलयन्ति चेन्नीरोगत्वमाप्नुयुः। साधारणदेशीयानां सामान्यदोषत्वान्न कस्यापि देशजरोगस्य प्रादुर्भावो भवितुं शक्यः। आनूपस्थानां तावन्नैकेषां कफजानामाग्निमांद्यमूलानां रोगाणामुत्पत्तिर्भवति। आनूपदेशे हि भूमिगता मृत्सर्वदाऽऽर्द्रा भवति। तेनानेकरोगविषैः समाक्रांता मिताहारविहारा अपि मानवा आगन्तुविकारैर्वारंवारं पीड्यमाना दृश्यन्ते। एनं देशमधिवसद्भी रुग्णैर्न चेत्स्थानत्यागः क्रियते तर्हि कियद्भिरपि महामहिमशालिभीर्भेषग्भिरुपचर्यमाणास्तेषां रोगाःसर्वथा नैव सिद्ध्यन्ति। देशान्तरगमने तु तेषामेव रोगाणां प्रायो विनैवौषधैरुपशमो भवति।

सन्निधौ वर्तमानानां पल्वलतडागभिन्नकेदारकूपवाप्यादिभिरार्द्रा मृत्तिका कोथभावं प्राप्नोति। स च कोथो वायुना मिश्रीभूय तद्भूमिमधिवसतां जनानां श्वासमार्गेणान्तर्गत्वा शरीराणि दूषयति। श्वासकार्यं तावच्छरीराधिष्ठानस्य प्राणवायोरेव। अयं प्राणवायुर्हृदयादीन्द्रियाधारः। दूषितबाह्यवायुसंसृष्टः प्राणोऽपि दुष्टो भूत्वा तानीन्द्रियाणि संदूष्यान्येषामप्युदानादीनां क्रियाः संदूष्य च निखिलदेहस्य चेष्टाः स्तम्भयति, कफपित्ते च विकुरुते। एवं दोषत्रये विकृतिमापन्ने रसादिधातुगतास्ते ते विकाराः समुपजायन्ते। एतया प्रक्रिययाऽऽनूपभूमिष्ठा दोषा देहविकृतिं संपाद्य जनपदोध्वंसनीयानौपसर्गिकान्रोगान्समुत्पादयन्ति। अयं तावत्सार्वत्रिकभूमिविचारः। प्रतिगृहं भूमिविचारः कर्तव्य एव। कानिचित्तु गृहाण्यार्द्रभूमिकानि

१९–रसादयः सप्त धातुसंज्ञाः। शरीरधारणाद्धातवः।ते च दूष्याः वातादिभिर्दोषैर्दूषणीयाः। अनन्तरं मला उच्यन्ते–दोषधातुमलसमुदायात्मकत्वात्कायस्य मलाः मूत्रशकृत्स्वेदादयः। तेऽपि च दूष्याः। न केवलं धातव इत्यपिशब्दार्थः। आदिशब्दात्कर्णमलादीनां ग्रहणम्। चशब्दान्मलानां धातुसंज्ञापि, देहधारकत्वात् १९

**२०–रसादिस्थेषु दोषेषु व्याधयः संभवन्ति ये।**
**तज्जानित्युपचारेण तानाहुर्घृतदाहवत् ॥ २९**

१२ धातूनां कर्माणि।

**प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे।**
**गर्भोत्पादश्च कर्माणि धातूनां क्रमशो विदुः॥ ३०**
**शरीरं धारयन्त्येते धात्वाहाराश्च सर्वदा।**

२०–दोषा एव सर्वेषां रोगाणां कारणं विकृता न धातुमलाः।या तु धातूनां मलानां रोगहेतुकत्वकल्पना सा औपचारिकी। एतदेवाह–**रसादीत्यादि**। रसादिधातुस्थेषु दोषेषु ये व्याधयः संभवन्ति ते रसादिजा इत्याचार्या उपचारेण ब्रुवन्ति। दृष्टान्तः—'घृतदाहवत्' न हि घृतस्य दहनशक्तिः कदाचिदस्ति किं तर्हि तत्स्थस्याग्नेः। एवं चोच्यते 'घृतेनायं दग्धः' इति। एषां च धातूनां सप्तानां यथासंख्येन प्रीणनादीनि सप्त कर्माणि। यानि कुर्वन्तो देहं धारयन्ति। प्रीणनं रसस्य कर्म। प्रीणनं चित्तप्रीतिः। जीवनमसृजः। जीवनं जीवितं प्राणनमिति यावत्। तथा च रक्तमयमष्टबिन्दुकमोजोनाम जीवानां ग्रहणधारणविवेककार्यकरं वक्ष्यते। लेपो मांसस्य, लेपनमस्थ्यादीनां लेपः। शरीरस्नेहो मेदसः। शरीरधारणमस्थ्नः। अन्यथा निरवलंबनं मांसं स्यात्। पूरणमस्थ्नो मज्ज्ञः कर्म। गर्भोत्पादः शुक्रस्य। एते चानन्तरोक्ता धातवः शरीरं धारयन्ति। **धात्वाहाराश्च**–आहारो यथा जन्तूनां वृद्धिकारणं तथैव धातूनां धातव एव वृद्धिकारणम्। पूर्वः पूर्वो धातुरुत्तरस्योत्तरस्याहारः २०

१३ दोषाणां वृद्धिरुपशमश्च।

**२१–वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः॥ ३१**

२१–दोषादीनां वृद्धिहानिकारणवादप्रसंगेन सर्वभावानामपि वृद्धिहानिकारणमाह-**वृद्धिरित्यादि**। समानैः सदृशैः सर्वेषां वृद्धिः। यो यो येन यावता चांशेन यस्य समानः। तेनैव तावता चांशेन सदृशेन स तस्य वृद्धिकारणम्। यथा वायोरन्यो वायुर्द्रव्यस्वभावेनैव समानः। तस्यैव मरिचं लाघवरौक्ष्यगुणतः। तस्यैव सरणादिका क्रिया, चलनादिसाधर्म्यात्। एवं सर्वभावानामप्यूह्यम्। एतत्समानमसमानं च सामान्यविशेषरूपं गोत्वादिविषयमपेक्ष्य विज्ञेयम्। न तु द्रव्यत्वसत्तादिमहाविषयं सामान्यम्। ततो व्यवहारासिद्धेः। तथा च महासामान्यापेक्षया न कस्यचिदपि वस्तुनो वस्त्वन्तरेण समानत्वव्यभिचारो न चासमानत्वसंभवः। यतश्चैकस्यैव वस्तुनः केनचित्साद्दृश्यमन्येन वैपरीत्यमतः सकृदेवोभयस्य वृद्धिहानिलक्षणस्य प्रवृत्तिर्न विरुध्यते। यद्यपि वस्तुनो येनैव वस्तुनोंऽशेन सादृश्यं तेनैवांशेन वैपरीत्यमपि। तथापि तयोर्वस्तुनोरुभयरूपत्वाद्वृद्धिहानिलक्षणमुभयं प्रत्येकदैव कारणत्वम्। कथमेको विरुद्धकार्यकर इति चेन्न। विरुद्धयोः कारणयोरेकस्मिन् द्रव्ये निवेशात्। न हि विरुद्धयोर्जलतेजसोरत्र द्रव्ये न संभवः, पञ्चभूतात्मकत्वात्तस्य। अथैवमुच्यते–यथा सुरया द्रवत्वेन समानस्य स्तन्यस्य वृद्धिः क्रियते तथैव कथमम्लत्वादुष्णत्वाच्च विपरीतत्वे तस्यैव न क्षय इत्येतदपि न। तथाविधस्वभावत्वात्। 'न हि स्वभावः पर्यनुयोक्तव्यः'। तथा च वक्ष्यति शास्त्रकारः—"कटुपाकरसस्निग्धगुरुत्वैः कफवातजित्। लशुनो वातकफकृत्त्व तु तैरेव यद्गुणैः" इति। तच्च तत्रैव व्याख्यातम्। सादृश्यसामान्ययोश्चात्र न कश्चिद्विशेषः, एकेन रूपेण विना सादृश्यमपि न संभवति। तथा सामान्यस्याप्यर्थक्रियासु व्यक्त्यनुविधायित्वात्सामान्यं वृद्धिकारणमित्युक्तेऽपि न गोस्पर्शवद्व्यक्तिविशेषानपेक्षा। न हि सामान्यमनालंबनवद्वृद्धिहेतुतां याति। अपि त्वाश्रययोर्मिश्रीभावविशेषेणेति २१

**टिप्पणी—** वृद्धिरिति–सर्वेषां दोषदूष्याणां समानैस्तुल्यधर्मकैर्द्रव्यैर्वृद्धिर्भवेत्। यथा रूक्षादिगुणकस्य वायोस्तद्गुणं श्यामाकादि वर्धनम्। सस्नेहादिगुणस्य पित्तस्य तैलादि वर्धनम्। स्निग्धादिगुणस्य कफस्य क्षीरादि वर्धनम्। दूष्येषु स्वेदरक्तयोः पित्तवद्वृद्धिहेतुः। शेषाणां श्लेष्मवद्वृद्धिहेतुः। क्षयहेतुमाह–सर्वेषां दोषदूष्याणां विपरीतैर्विरुद्धधर्मकैर्वृद्धेर्विपर्ययः भवेत्। यथा वायोः गोधूमादि क्षपणम्। पित्तस्य यवादि, कफस्य कुलत्थादि। दूष्येषु तु पूर्ववत्। विशेषस्तु सूत्रस्थाने दोषादिविज्ञानीयाध्याये—'तत्रास्थनि स्थितो वायुः' इत्यत्र द्रष्टव्यः। २१

१४ षड्रसाः।

**२२–रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः।**
**षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः॥ ३२**

२२–वातादीनामाध्यात्मिकानां बाह्येन द्रव्येण सादृश्यम्। द्रव्यं च महाभूतकार्यं रसवीर्यविपाकप्रभावैः कार्यकरम्। ते च रसादयोऽस्मिन्नेव सूत्रस्थाने वक्ष्यन्ते। अत्र त्वध्याये तन्त्रार्थसूचनार्थं किञ्चिदुच्यते–**रसा इत्यादि**। स्वाद्वादयः षड्रसाः। रसनेन्द्रियग्राह्यत्वाद्रसाः **द्रव्यं** निर्विशेषं पञ्चभूतात्मकं मूर्तमाश्रिताः। **तेषां च यो यस्मात् पूर्वः स तस्माद्हिनो बलावहः स्वभावविशेषात्** २२

**टिप्पणी—**अथ साधर्म्यवैधर्म्यज्ञानार्थं द्रव्यधर्मानाह। ते च रस–प्रभाव–वीर्य–विपाक–गुण–भेदात्पञ्च। तत्र रसनग्राह्यो रसः, शेषो गुणः। कायाग्निपाकजो विशिष्टो रसो विपाकः। तथैवोत्पन्नो गुणो वीर्यम्। द्रव्यस्यात्मा प्रभावः। तत्र रसभेदानाह—रसा इति। यथापूर्वं बलावहाः इति—सर्वेभ्यो मधुरो रसो बलकरः। कषायस्तु सर्वेभ्यो जघन्यबलावहः। तत्र १ स्वादुर्मधुरो घृतगुडादिः। २ अम्लोऽम्लिकामातुलुङ्गादिः। ३ लवणः–सैन्धवादिः। ४ तिक्तो भूनिम्बादिः। ५ ऊषणः कटुको–मरिचादिः। ६ कषायो–हरीतक्यादिः। षट्, षट् एव, न न्यूना अधिका वा। २२

१५ रसानां कार्याणि ।

**२३–तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ।**
**कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥ ३४**

२३–एषां च रसानां दोषविशेषप्रशमनप्रकोपनविभागं–**तत्रेत्यादिना दर्शयति** । अन्ये तु कुर्वते इत्येतत् घ्नन्तीत्येतच्च मारुतादिभिः प्रत्येकमभिसंबध्यते । तेषु रसेषु मध्ये आद्यास्त्रयः स्वाद्वम्ललवणा मारुतमनिलं घ्नन्ति, अन्ये तु तिक्तोषणकषायाः तमेव चानिलं कुर्वते। तिक्तादयस्त्रयस्तिक्तोषणकषायाः कफं घ्नन्ति । अन्ये तु मधुराम्ललवणास्तमेव कफं कुर्वते । कषायतिक्तमधुराः पित्तं घ्नन्ति नाशयन्ति, अन्ये त्वम्ललवणोषणाः पित्तमेव कुर्वते । तेनैतदुक्तं भवति–**मधुरो** वातपित्तघ्नः श्लेष्मकरः । **अम्लो** वातं हन्ति कफपित्ते तु जनयति । **लवणो** मारुतं हन्ति कफपित्ते तु कुरुते । **तिक्तः** कफपित्ते नाशयति वातं तु जनयति । **ऊषणः** कफं नाशयति वातपित्ते तु जनयति । **कषायः** कफपित्ते हन्ति वातं करोतीति २३

**टिप्पणी**—तत्राद्या इति–यद्यपि दोषेषु रसा नोक्तास्तथापि रसकार्येण ते ते रसास्तेषु तेषु दोषेष्वपि सन्तीत्यनुमीयते । तथा चोक्तं कपिलेन—'कट्वम्ललवणं पित्तं, स्वाद्वम्ललवणः कफः । कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः ' इति । २३

१६ द्रव्याणां त्रैविध्यम् ।

**२४–शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ।**

२४–एषां च रसानामाश्रयो द्रव्यं यद्रसादीननपेक्ष्य प्रभावादेव किञ्चित्करोति । तत्त्रिप्रकारं विशिष्टैः रसादिभिर्युक्तं कुपितानां वातादीनां **शमनं** नाशकरं गुडूच्यादि। अन्यैः युक्तं **कोपनं** साम्यनाशकरं यवकादि । अन्यैः **स्वस्थहितं** शाल्यादि । यन्न कुपितस्य समीकरणे समर्थं नापि समस्य कोपने, केवलं यथास्थितमेव संवाहयति । केचित्तु एकस्यैव द्रव्यस्य योगमात्राकालादिभेदात्त्रिरूपतामाहुः २४

**टिप्पणी**—प्रभावभेदानाह–तत्र प्रभावो रसादिष्वन्तरङ्ग इति द्योतयितुं द्रव्यशब्देनोक्तः । यद्द्रव्यं समैः समविपरीतैर्वा रसादिभिर्युक्तमपि वातादीन्शमयत्येव तत् **शमनम्** । तद्यथा—मधुरशीतापि **जीवन्ती** कफं शमयति । कटुपाकरसो गुरुः स्निग्धोऽपि **रसोनः** कफवातौ शमयति। यद्द्रव्य विपरीतैः समविपरीतैर्वा रसादिभियुक्तमपि वातादीन्कोपयत्येव तत् **कोपनम्** । यथा–गुरूष्णस्निग्धमधुरमपि **फाणितं** वातं कोपयति । तैरेव गुणै**र्माषः** पित्तकफौ कोपयति । यद्द्रव्यं वातादीनां क्षयवृद्ध्योर्हेतुरपि स्वस्थस्य न तथा तत् **स्वस्थहितम्** । यथा गुरुमधुररूक्षशीतोऽपि **यवः** स्वस्थस्य कफं न कोपयति । एवं सर्वत्रापि प्रभाव उदाहरणीयः । उक्तं च—' रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् ' इति । शमनादयो द्रव्यभेदा इति यदरुणदत्तादय आहुस्तद्विप्रतिपत्तिप्रदर्शनपूर्वकं हेमाद्रिरदूदुषत् २४

१७ वीर्यद्वैविध्यम् ।

**२५–उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ॥ ३५**

२५–तत्र द्रव्ये वीर्यं द्विविधमुष्णशीतगुणाधिक्यात् । यद्यपि सर्वं द्रव्यं पञ्चभूतात्मकं, तथाप्यग्नीषोमात्मकत्वात्सर्वभावानां किञ्चिदुष्णगुणोत्कर्षात्तन्मुखेनैव कार्यकरमुष्णवीर्यमुच्यते । तद्विपरीतं शीतवीर्यम् । वीर्यं शक्तिः कार्यकरणहेतुः २५

**टिप्पणी**—वीर्यस्य द्वैविध्यमाह-उष्णेति । ननु, गुरु–लघु–स्निग्ध–रूक्ष–मन्द–तीक्ष्णानामपि वीर्यत्वात्कथं द्वे एवेत्यत आह–उष्णशीतगुणोत्कर्षादिति । गुणान्तरतिरस्कारे शक्त्युत्कर्षः । शक्त्युत्कर्षे वीर्यशब्दोऽपि लोके प्रसिद्धः । तत्र द्रव्ये वीर्यमपि द्रव्याश्रयमित्यर्थः २५

१८ त्रिधा विपाकः ।

**२६–त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ।**

२६–विपाकस्तु त्रिधा । सर्वद्रव्याणां विपाको जाठराग्निसंबन्धाद्द्रव्यस्य स्वरूपान्तरप्रादुर्भावः । तत्र किञ्चित् स्वादुविपाकम्। किञ्चिदम्लविपाकम्।किञ्चित्कटुविपाकम् २६

**टिप्पणी**—विपाकभेदानाह–त्रिधेति । द्रव्यस्येत्युपचाराद्रसानामित्यर्थः । ते च स्वादुरम्लः कटुश्चेति त्रय एव, न षट् । तत्र १ मधुरलवणयोर्मधुरो विपाकः, २ अम्लस्याम्लः, ३ तिक्तकटुकषायाणां कटुकः । स च कार्यानुमेयः २६

१९ द्रव्यगुणाः ।

**२७–गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ॥ ३५**
**गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः ।**

२७–तदेव च द्रव्यमाश्रिता विंशतिर्गुणा गुर्वादयः, सविपर्ययाः सविपरिताः । गुरुर्लघुर्मन्दस्तीक्ष्णः, हिम उष्णः, स्निग्धो रूक्षः, श्लक्ष्णः परुषः, सान्द्रो द्रवः, मृदुः कठिनः, स्थिरश्चलः,सूक्ष्मः स्थूलः, विशदः पिच्छिलः । खरादयस्त्वेतद्भेदा एव यथासंभवं व्याख्येयाः २७

**टिप्पणी**—गुणभेदानाह–गुरुमन्देति । तत्र गुर्वादयो दश, तद्विपर्ययाश्च लघुतीक्ष्णोष्णरूक्षखरद्रवकठिनचलस्थूलपिच्छिला दश । द्रव्यस्य बृंहणे कर्मणि शक्तिर्गुरुः, लंघने लघुः, शमने मन्दः, शोधने तीक्ष्णः, स्तम्भने हिमः, स्वेदने ऊष्णः, क्लेदने स्निग्धः, शोषणे रूक्षः, रोपणे श्लक्ष्णः, लेखने खरः, प्रसादने सान्द्रः, विलोडने द्रवः, श्लथने मृदुः, दृढने कठिनः, धारणे स्थिरः, प्रेरणे चलः, विवरणे सूक्ष्मः, संवरणे स्थूलः, क्षालने विशदः, लेपने पिच्छिलः इति २७

**२८–इन्द्रियार्थो व्यवायी च विकाशी चापरे गुणाः ३६**
**व्यवायी देहमखिलं व्याप्य पाकाय कल्पते ।**
**विकाशी [8]विकसन् धातून् सन्धिबन्धान् विमुञ्चति**
**सरतीक्ष्णप्रकर्षौ तु कैश्चित्तौ [9]परिकीर्तितौ ।**

२० महागुणाः

**सत्त्वं, रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः ॥ ३८**

२८–एतेभ्य अन्ये गुणा इन्द्रियार्थाः शब्दादयः।व्यवायी विकाशी च। इन्द्रियार्थानां प्रासिद्धत्वाल्लक्षणं नोच्यते।

८ 'शी विकसन्नेव–स.' ख. ९ 'तौ परिकल्पितौ—क. ख.

सर्वं देहं व्याप्य यत्पाकं याति स **व्यवायी**। **विकाशी** धातून् विकसन् हिंसन् सन्धिबन्धानुपलेपादिकान्मुञ्चति नाशयति। कैश्चिदाचार्यैर्व्यवायी सरस्यैव प्रकर्ष इति परिकल्पितः। विकाशी तीक्ष्णप्रकर्षस्तथा सत्त्वं रजस्तमश्च तन्त्रे व्यवहारार्थं महागुणशब्देनोक्ताः २८

२१ रोगारोग्यकारणे।

**२९-कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः।**
**सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम्॥ ३९**

२९-दोषादीनां सदृशेन वृद्ध्या विसदृशेन च हान्या रोगकारणत्वमुक्तम्। कालादीनां त्वतियोगादयो दोषवृद्धिक्षयमुखेनैव रोगकारणत्वेनोच्यन्ते-**कालेति**। **कालः** शीतोष्णवर्षलक्षणस्त्रिविधो वक्ष्यते। तस्य स्वरूपहानिर्हीनयोगः। स्वरूपातिशयोऽतियोगः। स्वरूपवैपरीत्यं मिथ्यायोगः। **अर्थाः** इन्द्रियार्थाः शब्दादयः। तेषामिन्द्रियेणाल्पसंयोगः संयोगाभावश्च हीनयोगः। अत्यन्तसंयोगोऽतियोगः। परुषानभिमतादिस्वरूपस्यार्थजातस्य इन्द्रियेण योगो मिथ्यायोगः। कायवाङ्मनसां क्रिया **कर्म**। तस्य हीना प्रवृत्तिर्हीनयोगः। अतिप्रवृत्तिरतियोगः। वेगोदीरणादिकमुत्तरत्र वक्ष्यमाणं मिथ्यायोगः। सर्वेषां समा प्रवृत्तिः समयोगः। हीनादियोगात्रयो रोगकारणम्। सम्यग्योगस्त्वारोग्यकारणम् २९

२२ रोगारोग्यस्वरूपम्।

**३०-रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता।**
**निजागन्तुविभागेन रोगाश्च द्विविधा मताः॥ ४०**
**तेषां कायमनोभेदादधिष्ठानमपि द्विधा।**
**रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ॥ ४१**

३०-रोगारोग्ये के उच्येते इत्याह-**रोग इति**। रोगो वातादीनां विषमता स्वरूपाच्चलनम्। संप्राप्तिवशेन मुख्योक्तिर्हेतुत्वेनौपचारिकी। विशिष्टसंप्राप्तयो हि दोषा एव रोगास्तत्कार्यं वेति पक्षद्वयम्। तेन व्याधिविशेषमनिष्पादयदपि दोषवैषम्यं परिगृहीतं भवति। रोगविशेषाणां ज्वरादीनि नामानि। वातादीनां साम्यमरोगता। ते च रोगा द्विविधा निजागन्तुविभागेन। मिथ्याहारविहारेण यो दोषकोपस्तत्कृता पीडा **निजो रोगः**। अभिघातादिना दोषकोप **आगन्तू रोगः**। तेषां रोगाणां कायमनोभेदेन द्विविधमधिष्ठानं स्थानम्। ज्वरास्रपित्तादीनां **कायः**। रागद्वेषादीनां **मनः**। ननु च रोगाणां वातादयः कारणत्वेनोक्तास्ते च कायिकानामेव संभवन्ति न मानसानामत आह-**रजस्तमश्चेति**। मनः शुद्धं सत्त्वम्। रजस्तमसी दोषौ तस्योपप्लवावविद्यासंभूतौ ३०

२३ रोगिपरीक्षा।

**३१-दर्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणम्।**

३१-रोगो ज्ञातः रोगोपहतशरीरज्ञानोपायमाह-**दर्शनेति**। दर्शनेन दृष्ट्या वर्णसंस्थानादिकम्। **स्पर्शनेन** सन्तापकाठिन्योत्सेधादिकम्। **प्रश्नेन** शूलारोचकादि। एवं रोगोपहतशरीरं दर्शनादिभिर्ज्ञातव्यम् ३१

२४ रोगपरीक्षा।

**३२-रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः॥ ४२**

३२-सामान्येन शरीरस्य रोगसंबन्धे ज्ञाते रोगविशेषाधिगमोपायमाह-**रोगमिति**। निदानादिभिः पञ्चभिर्लक्षणै रोगं परीक्षेत। **निदानं** हेतुः। एवंविधमर्थजातमेवंविधस्य रोगस्य हेतुत्वेनोपदिष्टमेवंविधश्चोत्पन्नः। अतो निदानाज्ज्ञायते रोगः। **प्राग्रूपं** भविष्यतो व्याधेरप्रकाशितदोषविशेषाधिष्ठानस्य लक्षणम्।**लक्षणमुत्पन्नस्य चिन्हम्**।**उपशयः** सुखानुबन्ध्याहाराद्युपयोगः। एवंविधेनाहारादिना ह्यस्य पीडा नाभूदेवंविधेनाभूदत उपशयात् ज्ञायतेऽयं रोग इति। **आप्तिः** संप्राप्तिः। एवंदुष्टेन एवंस्थानस्थितेन एवमनुगतेनानया कल्पनया एवंमार्गेण दोषेणेति परिकल्पनम्। अत आप्त्या ज्ञायतेऽयं रोग इति ३२

२५ देशद्वैविध्यम्।

**३३-भूमिदेहप्रभेदेन देशमाहुरिह द्विधा।**

३३-उपशयादिप्रसङ्गेन च देशकालावप्युपयुज्येते अतस्तावपि सूत्रयति-इहायुर्वेदशास्त्रे आचार्या द्विप्रकारं देशमाहुः। भूमिभेदेन देहभेदेन च। देहदेशः शिरःपाण्यादिः प्रसिद्धः ३३

२६ भूदेशत्रैविध्यम्।

**३४-जाङ्गलं वातभूयिष्ठमानूपं तु कफोल्बणम्॥ ४३**
**साधारणं सममलं त्रिधा भूदेशमादिशेत्।**

३४-भूमिदेश उच्यते-**जांगलमित्यादि**। जांगलो नामाल्पोदकतरुपर्वतत्वेन वक्ष्यमाणलक्षणो वातभूयिष्ठः संजातौषधिखगमृगपुरुषादिर्यो वातप्रधानः। आनूपस्तसाद्विपरीतलक्षणः। स कफप्रायौषधिसलिलः श्लीपदादिरोगदः। साधारण उभयलक्षणमध्यपतितः, सममलः समवातादिदोषः। एवं त्रिविधो भूमिदेशः ३४

२७ भेषजकालः।

**३५-क्षणादिर्व्याध्यवस्था च कालो भैषज्ययोगकृत्॥४४**

३५-कालो द्विविधः क्षणादिर्व्याध्यवस्था च व्यवहारार्थं तन्त्रे प्रयुज्यते। तत्र क्षणादिः प्रसिद्धः। व्याध्यवस्था च पुराणनवत्वादिकं विशिष्टलक्षणसंयुक्तत्वं व्याधेः। द्विविधोऽपि कालो रोगिणो भेषजस्य संबन्धं करोति। तथा च वक्ष्यति-"पूर्वाह्णे वमनं देयं मध्याह्ने तु निरूहणम्" इति। तथा च बस्तिविधौ "निवृत्तिकालः परमस्त्रयो यामाः" इत्यादि। तथा ज्वरे "कषायपानपथ्यान्नैः" इति। "इति दोषे विजिते" इत्यादि कुष्ठे ३५

२८ औषधस्य द्वैविध्यम्।

**३६-शोधनं शमनं चेति समासादौषधं द्विधा।**

३६-कालो भेषजयोगकृदित्युक्तम्। भेषजमौषधमतस्तद्विज्ञानार्थमाह-**शोधनमिति**। यत् द्रव्यमद्रव्यं वाऽभयातपादि कुपितदोषविनाशनार्थमुपयुज्यते तदौषधमित्युच्यते। संक्षेपेण द्विविधमौषधं शोधनं शमनं च। विस्तरतस्तु निरूहपाचनक्वाथचूर्णादिकं बहुविधम्। शोधनं यत्कुपितान्दोषान्निस्सार्य बही रोगोपशमनं करोति। शमनं पुनर्यत् स्वस्थानस्थितानामेव साम्यहेतुः ३६

२९ शारीरमानसरोगयोः परमौषधम्।

**३७-शरीरजानां दोषाणां क्रमेण परमौषधम्॥ ४५**

**बस्तिर्विरेको वमनं तथा तैलं घृतं मधु ।**
**धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥ ४६**

३७–औषधमुक्तं तस्य विशेषतः प्राधान्यमुच्यते–**शरीरजानामित्यादि**। शरीरजानां वातादीनां क्रमेण यथासंख्येन परमौषधं प्रधानौषधम् । किमित्याह–**बस्तिरित्यादि** बस्तिर्गुदप्रणिधेयः स्नेहक्काथादिर्वातस्य परमौषधम् । विरेको मुखपीतं गुदमार्गेणान्तःस्थितस्य दोषस्य निस्सारणं पित्तस्य परमौषधम् । वमनं मुखेन पीतं तेनैव दोषस्य निःसारणं श्लेष्मणः परमौषधम् इति शोधनरूपेण दोषाणामौषधम् । तथैव वातादिषु शमनस्वरूपेणेतदाह–**तथेति** । तैलं वातस्य । घृतं पित्तस्य । मधु श्लेष्मणः । मनोदोषयो रजस्तमसो रोगविघ्नकारि धीधैर्यादिकं परमौषधम । कालविशेषमाश्रित्य सर्वत्र सर्वमेव ३७

३० ग्रन्थाध्यायसंग्रहः ।

**३८–तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसंग्रहः ।**

३८–अस्य चाष्टाङ्गसंग्रहाभिधानस्य तन्त्रस्य सुखस्मरणार्थमध्यायानां संग्रहो वक्ष्यते ३८

३१ सूत्रस्थानाध्यायाः ।

**३९–आयुष्कामीयशिष्यार्थदिनर्तुव्याध्यसंभवाः ॥ ४७**
**द्रवान्नज्ञानसंरक्षाविरुद्धान्नान्नपानिकाः ।**
**मात्राशितौषधज्ञानश्रेष्ठशुद्ध्यादिसंग्रहाः ॥ ४८**
**महाकषायविविधद्रव्यादिरसभेदकाः ।**
**दोषादिज्ञानतद्भेदतत्क्रिया रोगभेषजम् ॥ ४९**
**[10]द्व्यौषधस्नेहनस्वेदशुद्ध्यास्थापननावनम् ।**
**धूमगण्डूषदृक्सेकतृप्तियन्त्रजलौकसः ॥ ५०**
**सिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः ।**
**चत्वारिंशदिमेऽध्यायाः सूत्रं शारीरमुच्यते–५१**

३९–

| | |
|---|---|
| १ आयुष्कामीयः । | २० दोषभेदीयः–तत्क्रिय। |
| २ शिष्यार्थः–शिष्योपनयनीयः । | २१ दोषोपक्रमणीयः । |
| ३ दिनचर्या । | २२ रोगभेदीयः । |
| ४ ऋतुचर्या । | २३ भेषजावचरणीयः । |
| ५ व्याध्यसंभवः-रोगानुत्पादनीयः । | २४ द्विविधोपक्रमणीयः । |
| ६ द्रवद्रव्यविज्ञानीयः । | २५ स्नेहविधिः । |
| ७ अन्नस्वरूपविज्ञानीयः । | २६ स्वेदविधिः । |
| ८ अन्नसंरक्षणीयः । | २७शुद्धिःवमनविरेचनविधिः |
| ९ विरुद्धान्नविज्ञानीयः । | २८ वस्तिविधिः । |
| १० अन्नपानविधिः । | २९ नावनविधिः । |
| ११ मात्राशितीयः । | ३० धूमविधिः । |
| १२ द्विविधौषधविज्ञानीयः | ३१ गण्डूषादिविधिः । |
| १३ श्रेष्ठसंग्रहः-अग्र्यसंग्रहः | ३२ आश्च्योतनविधिः । |
| १४ शोधनादिसंग्रहः । | ३३ तर्पणविधिः । |
| १५ महाकषायसंग्रहः । | ३४ यन्त्रविधिः । |
| १६ विविधगणसंग्रहः । | ३५ जलौकावचरणीयः । |
| १७ द्रव्यादिविज्ञानीयः । | ३६ सिरावेधविधिः । |
| १८ रसभेदीयः । | ३७ शल्यापहरणविधिः । |
| १९ दोषादिविज्ञानीयः । | ३८ शस्त्रकर्मविधिः । |
| | ३९ क्षारकर्मविधिः । |
| | ४० अग्निकर्मविधिः । |

इमे चत्वारिंशदध्यायाः सूत्रस्थानम् । शारीरमुच्यते३९

३२ शारीराध्यायाः ।

**४०–पुत्रार्थगर्भावक्रान्तिचर्याव्यापच्छरीरजाः ।**
**सिरामर्मप्रकृत्याख्या विकृताङ्गेहितामयाः ॥ ५२**
**सदूता द्वादशाध्याया, निदानं सार्वरोगिकम्–**

४०–पुत्रार्थः–

| | |
|---|---|
| १ पुत्रकामीयः । | ७ मर्मविभागः । |
| २ गर्भावक्रान्तीयः । | ८ प्रकृतिभेदीयः । |
| ३ चर्या–गर्भावचरणीयः । | ९ विकृताङ्गविज्ञानीयः । |
| ४ व्यापत्–गर्भव्यापत् । | १० विकृतेहितविज्ञानीयः । |
| ५ शरीरजः–अंगविभागः । | ११ विकृतामयविज्ञानीयः । |
| ६ सिराविभागः । | १२ दूतादिविज्ञानीयः । |

इति द्वादशाध्यायाः शारीरम् ४०

३३ निदानाध्यायाः ।

**४१–ज्वरासृक्श्वासयक्ष्मादिमदाद्यर्शोतिसारिणाम्॥५३**
**मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ।**
**पाण्डुकुष्ठानिलार्तानां वातास्रस्य च षोडश ५४**

४१–निदानमुच्यते–

| | |
|---|---|
| १ सर्वरोगनिदानम् । | ९ मूत्राघातनिदानम् । |
| २ ज्वरनिदानम् । | १० प्रमेहनिदानम् । |
| ३ रक्तपित्तनिदानम् । | ११ विद्रध्यादिनिदानम् । |
| ४ श्वासहिध्मानिदानम् । | १२ उदरनिदानम् । |
| ५ यक्ष्मादिनिदानम् । | १३ पाण्डुरोगनिदानम् । |
| ६ मदात्ययनिदानम् । | १४ कुष्ठनिदानम् । |
| ७ अर्शोनिदानम् । | १५ वातव्याधिनिदानम् । |
| ८ अतिसारनिदानम् । | १६ वातशोणितनिदानम् । |

इति षोडशाध्याया निदानस्थानम् ४१

३४ चिकित्साध्यायाः ।

**४२–[11]चिकित्साज्वरयोरस्रकासयोः श्वासयक्ष्मणोः ।**
**वमौ मदात्ययेऽर्शस्सु विशि द्वौ द्वौ च सूत्रिते ॥**
**विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु ।**
**कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम्॥ ५६**
**चतुर्विंशतिरध्यायाः, कल्पसिद्धिरतःपरम्–**

४२–चिकित्सितमुच्यते–

| | |
|---|---|
| १ ज्वरचिकित्सितम्। | १३ मूत्राघातचिकित्सितम |
| २ जीर्णज्वरचिकित्सितम् । | १४ प्रमेहचिकित्सितम् । |
| ३ रक्तपित्तचिकित्सितम । | १५ विद्रधिवृद्धिचिकित्सितम। |
| ४ कासचिकित्सितम् । | १६ गुल्मचिकित्सितम् । |
| ५ क्षतक्षयकासचिकित्सितम् । | १७ उदरचिकित्सितम् । |
| ६ श्वासचिकित्सितम् । | १८ पाण्डुरोगचिकित्सितम् । |
| ७ यक्ष्मचिकित्सितम् । | १९ शोफचिकित्सितम् । |
| ८ छर्द्यादिचिकित्सितम् । | २० विसर्पचिकित्सितम् । |
| ९ मदात्ययचिकित्सितम् । | २१ कुष्ठचिकित्सितम् । |
| १० अर्शश्चिकित्सितम्। | २२ श्वित्रचिकित्सितम् । |

विशि द्वौ–

| | |
|---|---|
| ११ अतिसारचिकित्सितम् | २३ वातव्याधिचिकित्सितम्। |
| १२ ग्रहणीदोषचिकित्सितम्। | २४ वातशोणितचिकित्सितम् |

इति चतुर्विंशतिरध्यायाश्चिकित्सितस्थानं कल्पस्थानमुच्यते

---

१० जम् । चिकित्सास्ने०—क. ख. ११ °कित्सा च ज्वरस्यास्रकास—ख.

३५ कल्पस्थानाध्यायाः ।

**४३–कल्पो वमेर्विरेकस्य तत्सिद्धिर्बस्तिकल्पना ॥ ५७**
**"कल्पश्च सिद्धबस्तीनां सिद्धिर्बस्त्यनुवासयोः ।**
**द्रव्यकल्पोऽष्टमः, स्थानमत उत्तरमुत्तरम्– ५८**

४३–कल्पस्थानमुच्यते–

| | |
|---|---|
| १ वमनकल्पः । | ५ सिद्धिबस्तिकल्पः । |
| २ विरेचनकल्पः । | ६ बस्तिव्यापत्सिद्धिकल्पः । |
| ३ वमनविरेचनव्यापत्सिद्धिकल्पः । | ७ अनुवासनव्यापत्सिद्धिकल्पः । |
| ४ बस्तिकल्पः । | ८ द्रव्यकल्पः । |

इत्यष्टावध्यायाः कल्पस्थानम् ४३

३६ उत्तरस्थानाध्यायाः ।

**४४–बालोपचरणे[13] व्याधिग्रहज्ञाननिषेधने ।**
**स्नाने पृथग्ग्रहे भूते द्वावुन्मादे स्मृतिक्षये ॥ ५९**
**वर्त्मसन्धिगतौ द्वौ द्वौ दृक्तमोलिंगनाशिषु ।**
**"सर्वदृक्स्यन्ददृक्पाके कर्णनासामुखेषु च ॥ ६०**
**मूर्ध्नि व्रणे तथा द्वौ द्वौ सद्योभङ्गे भगन्दरे ।**
**ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम् ॥ ६१**
**विषे द्वौ भुजगे कीटे द्वौ च लूतासु [15]मूषिके ।**
**विषे विषोपयोगे च तथाध्यायो रसायने ॥ ६२**
**वाजीकरणमुद्दिश्य पञ्चाशोऽष्टाङ्गपूरणः ।**

४४–अत उत्तरमनन्तरमुत्तरस्थानमुच्यते ।

१ बालोपचरणीयः । २ बालामयप्रतिषेधः । ३ बालग्रहविज्ञानीयः । ४ बालग्रहप्रतिषेधः । ५ स्नानविधिः । ६ पृथग्ग्रहे–प्रत्येकग्रहप्रतिषेधः । ७ भूतग्रहविज्ञानीयः । ८ भूतग्रहप्रतिषेधः । ९ उन्मादप्रतिषेधः । १० अपस्मारप्रतिषेधः । वर्त्मसन्धिगतौ द्वौ द्वौ ११ वर्त्मरोगविज्ञानीयः । १२ वर्त्मरोगप्रतिषेधः । १३ सन्धिसितासितरोगविज्ञानीयः । १४ सन्धिसितासितरोगप्रतिषेधः । १५ दृष्टिरोगविज्ञानीयः । १६ तिमिरप्रतिषेधः । १७ लिंगनाशप्रतिषेधः । १८ सर्वाक्षिरोगविज्ञानीयः । १९ अभिष्यन्दप्रतिषेधः । २० दृष्टिपाकप्रतिषेधः । कर्णादिषु व्रणान्तेषु द्वौ द्वौ २१ कर्णरोगविज्ञानीयः । २२ कर्णरोगप्रतिषेधः । २३ नासारोगविज्ञानीयः । २४ नासारोगप्रतिषेधः । २५ मुखरोगविज्ञानीयः । २६ मुखरोगप्रतिषेधः । २७ शिरोरोगविज्ञानीयः । २८ शिरोरोगप्रतिषेधः । २९ व्रणविभक्तिविज्ञनीयः । ३० व्रणविभक्तिप्रतिषेधः । ३१ सद्योव्रणप्रतिषेधः । ३२ भंगप्रतिषेधः । ३३ भगंदरप्रतिषेधः । ग्रन्थ्यादित्रितये द्वौ द्वौ ३४ ग्रन्थ्यादिविज्ञानीयः । ३५ ग्रन्थ्यादिप्रतिषेधः । ३६ क्षुद्ररोगविज्ञानीयः । ३७ क्षुद्ररोगप्रतिषेधः । ३८ गुह्यरोगविज्ञानीयः । ३९ गुह्यरोगप्रतिषेधः । ४० विषप्रतिषेधः । भुजङ्गे द्वौ ४१ सर्पादिदंष्ट्राविज्ञानीयः । ४२ सर्पादिदंष्ट्राप्रतिषेधः । ४३ कीटप्रतिषेधः । ४४ लूतादिविज्ञानीयः लूतादिप्रतिषेधः । ४५ प्रत्येकलूताप्रतिषेधः । ४६ मूषिकालर्कप्रतिषेधः । ४७ विषोपद्रवप्रतिषेधः । ४८ विषोपयोगीयः । ४९ रसायनाध्यायः । ५० वाजीकरणाध्यायः ॥४४

३७ आहत्य ग्रन्थाध्यायाः

**४५–पञ्चाशदध्यायशतं षड्भिः स्थानैः समीरितम् ॥ ६३**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने आयुष्कामीयो नाम प्रथमोऽध्यायः ।**

४५–इति पञ्चाशदधिकमध्यायशतं षड्भिः स्थानैः समीरितं सम्यगुक्तम् ४५

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने प्रथमोऽध्यायः ॥ १ ॥**

---

## शिष्योपनयनीयो द्वितीयोऽध्यायः ।

१ प्रतिज्ञा ।

**४६–अथातः शिष्योपनयनीयमध्यायं[1] व्याख्यास्यामः ।**
**[2]इतिह स्माहुरात्रेयादयो महर्षयः–१**

४६–तन्त्रार्थं सर्वं पूर्वस्मिन्नध्याये सूत्रयित्वा ' एवंविधः शिष्यस्तन्त्रं शिक्षयितव्यः ' इति प्रदर्शनार्थमध्याय आरभ्यते– अथात इति । अथेति सर्वाध्यायेषु मंगलार्थः । तथा अत इत्यानन्तर्ये । 'अधिकृत्य कृते ग्रन्थे' इति छप्रत्ययः ४६

२ शिष्यगुणाः ।

**४७–गुरुभक्तोऽभियुक्तोऽतियुक्तो धीस्मृतिपाटवैः ।**
**ऋज्वास्यनासानयनस्तनुस्निग्धनखच्छविः ॥ २**
**ब्रह्मचारी जितद्वन्द्वो धीरः सुचरितः स्थिरः ।**
**षण्मासानुषितः[3] शक्तो लज्जाशौचकुलान्वितः ॥ ३**
**शिष्योऽध्याप्यो गतो यावदन्तं तन्त्रार्थकर्मणाम् ।**

४७–गुरुभक्तत्वादियुक्तः शिष्योऽध्याप्यः शिक्षयितव्यः आतन्त्रार्थकर्मणामन्तगमनात् । तन्त्रान्तस्तन्त्रपाठनिष्पत्तिः । अर्थान्तस्तन्त्रावबोधः । कर्मान्तो ज्ञातस्य शास्त्रस्य लक्ष्ये नियोगः । गुरोरुपाध्यायस्य भक्तः सेवातत्परः । अभियुक्तः- शास्त्रविज्ञाने यत्नपरः । तथा धीस्मृतिपाटवैरतियुक्तः- अतिशयेन युक्तः । धीर्ग्रहणशक्तिः, स्मृतिः–सरणं, पाटवमिन्द्रियसौष्ठवम् । स्पष्टमुखः, स्पष्टनासः, स्पष्टनेत्रः । तनुनखः- स्निग्धनखः, तनुत्वक्–स्निग्धत्वक् । ब्रह्मचारी–निर्व्यवायः । जितद्वन्द्वो–निर्दोषः । धीरो-विगतभीः । साधुशीलः-सच्चरितः । स्थिरः–अचपलस्वभावः । षण्मासानुपाध्यायनिकटे उषितः । एतावता हि साध्वसाधुस्वभावतां शिष्यस्योपाध्यायोऽधिगच्छति । शक्तः–प्रियंवदः । लज्जयाऽन्वितः शौचेन च शारीरमानसया शुद्ध्या समन्वितः सुकुलीनः ४७

---

१२ कल्पसिद्धिश्च व°–क. ख. १३ चरणव्या०–क. १४ सर्वगस्पन्ददृक्पा०–क., सर्वदृक्स्पन्ददृक्पा०–ख. १५मूषके.–ख

१ 'नीयमध्यायं व्या° क. २ अयं ग्रन्थः नास्ति–ख. ३शक्तः–क. ख.

टिप्पणी—तन्त्रमिति–तन्त्रम्, शास्त्रम्, विद्या, ज्ञानम्, लक्षणम्, इत्यनर्थान्तराणि । आयुर्वेद इति यावत् ।

३ अनध्यायाः ।

**४८–नाकालविद्युत्स्तनिते भूकंपे राहुदर्शने ॥ ४**
**पञ्चदश्यामचन्द्रायां परोक्षे वा गुरोः पठेत् ।**
**नाविच्छिन्नपदं नातिमन्दं नात्युच्चनीचकैः ॥ ५**

४८–स च शिष्यः अकालविद्युदादिषु न पठेत् । अकालविद्युधा वर्षाकालादन्यस्मिन् काले दृष्टा । तद्वदकालस्तनितम् । स्तनितं–मेघशब्दः । भूकम्पराहुदर्शने प्रसिद्धे । अचन्द्रा पञ्चदशी अमावास्या या कुहूरित्युच्यते । गुरावनवस्थिते न पठेत् । एतावता हि दुःशिक्षितो भवति । तथा अविच्छिन्नपदं न पठेत् सहितया न पठेत् । तथाहि विसन्ध्यभ्यासो भवति । अतिमन्दमतिस्तब्धश्च न पठेत् इति प्रयत्नविशेषः । नात्युच्चैर्नातिनीचैश्च इति स्वराविशेषः ४८

४ गुरुपरिचर्या ।

**४९–[4]हीनान्यवेष आचार्यं पर्युपासीत राजवत् ।**
**शयीत सुप्त एवास्मिन्नुत्तिष्ठेतास्य[5] पूर्वतः ॥ ६**
**न ब्रूयात् केवलं नाम नासाध्वपि [6]विनाटयेत् ।**

४९–अन्यच्चेदं शिष्यः कुर्यात्–राजवन्नृपवच्चाचार्यं पर्युपासीत सेवेत । किंभूतः ? हीनान्यवेषः–प्रकरणात् गुरुत एव हीनवेषः, गुरुवेषात् स्वल्पवेषः, अन्यवेषः–विसदृशवेषः । तथा अस्मिन् गुरौ सुप्त एव शयीत नासुप्ते स्वप्यात् । अस्य च गुरोः पूर्वतः पूर्वमुत्तिष्ठेत् । अस्मिन् शयनादनुत्थित एवोत्तिष्ठेत् । अन्यच्च तस्य गुरोः केवलं पूजावाचकोपपदरहितं नाम न कीर्तयेत् न केवलं नाम ब्रूयात् । यावदसाध्वपि न विनाटयेत्–गुरुकृतां दुरीहामुपहासपूर्वकं नानुकुर्यादित्यर्थः ४९

५ भिषग्गुणाः ।

**५०–अभेद्योऽनुद्धतः स्तब्धः[7] सूनृतः प्रियदर्शनः ॥ ७**
**बहुश्रुतः कालवेदी[8] ज्ञातग्रन्थोऽर्थशास्त्रवित् ।**
**अनाथान्रोगिणो यश्च पुत्रवत्समुपाचरेत् ॥ ८**
**गुरुणा समनुज्ञातः स भिषक्छब्दमश्नुते ।**

५०–स च शिष्यः अभेद्यत्वादिगुणयोगात् **भिषक्छब्दं** भिषगिति नाम अश्नुते–प्राप्नोति। **अभेद्यः** परैः प्रतिवादिधूर्तादिभिरधृष्यः। **अनुद्धतः** प्रसिद्धः। **स्तब्धः**–चिरकारी। **सूनृतः**–सुखोपगमनीयः । **प्रियदर्शनः**–सुमुखः, सुवेषश्च । **बहुश्रुतः**–प्रसिद्धः । **कालवेदी**–रोगिणोऽन्यस्य चावस्थास्वभावविशेषं जानाति। **ज्ञातग्रन्थः**–अभ्यस्तशास्त्रः । तथा शास्त्रार्थज्ञश्चिकित्सितज्ञश्च । यश्च शिष्यः अनाथान् स्वामिबान्धवाभावात् निरुपायान् व्याधितान् । पुत्रस्नेहेन परिपालयेत् **गुरुणा** योग्यत्वात् चिकित्साकरणे **समनुज्ञातः** । स भिषक्छब्दमश्नुते ५०

टिप्पणी—भिषक्शब्दमिति–संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम् । व्यक्तिं भेदं च यो वेत्ति दोषाणां स भवेद्भिषक् । इति सुश्रुतोक्तं ( सू. १. २१. ३६ ) लक्षणान्तरमपि वेदितव्यम् ।

६ केवलशास्त्रज्ञस्य दोषाः ।

**५१–यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥ ९**
**स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ।**

५१–यः पुनः केवलशास्त्रज्ञः कर्मसु चिकित्सितेषु अपरिनिष्ठितः अविज्ञातयाथातथ्यः, स आतुरं प्राप्य मुह्यति । यथा भीरुः आहवं संग्रामं प्राप्य मुह्यति । न ह्यातुरस्य ग्रन्थपदार्थवाक्यार्थावबोधाद्रोगोपशमः ५१

७ शास्त्रविधुरस्य निन्दा ।

**५२–यः पुनः कुरुते कर्म [9]धाष्टर्याच्छास्त्रविवर्जितः ॥१०**
**स सत्सु गर्हामाप्नोति वधं चर्च्छति राजतः ।**

५२–यः पुनर्भिषगाभासः शास्त्रार्थज्ञानेनैव रहितः धाष्टर्याच्चिकित्सां करोति । स सत्सु साधुषु मध्ये गर्हां प्राप्नोति राजतश्च वधम् । यतः स राज्यकण्टकत्वाद्राज्ञा वध्यः आम्नातः शास्त्रान्तरे ५२

८ भिषक्तमलक्षणम् ।

**५३–हेतौ, लिंगे, प्रशमने, रोगाणामपुनर्भवे, ॥ ११**
**ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः[10] ।**

५३–भिषग्दोषानुक्त्वा भिषग्गुणानाह–**हेतावित्यादि** । चतुष्प्रकारं यस्य ज्ञानं स **भिषक्तमो** राजार्हः । भिषजश्चिकित्साज्ञानयोगादातिशयः । **हेतौ**–निदाने, **लिंगे**–लक्षणे । **प्रशमने**–रोगाणा चिकित्सिते । **रोगाणामपुनर्भवे**–नष्टो रोगो यथा न पुनर्जायत इति ज्ञानचातुर्विध्यम् ५३

९ बाहुश्रुत्यप्रशंसा ।

**५४–शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये ॥ १२**
**पात्रापेक्षीण्यतः प्रज्ञां बाहुश्रुत्येन बृंहयेत् ।**

५४–अन्यत् भिषजा किं कार्यम्? बाहुश्रुत्येन प्रभूतशास्त्रश्रवणेन प्रज्ञां प्रज्ञानं बृंहयेत् पूरयेत् । यतो दृष्टं गुणदोषकरणे भावाः पात्रमपेक्षन्ते । तथा च शस्त्रं शौर्ययुक्ते पात्रे स्थितं कार्यकरं भवति, भीरौ च दोषकरम् । एवं शास्त्रसलिले अपि परिकल्पनीये । बाहुश्रुत्योपबृंहितप्रज्ञे स्थितं शास्त्रं शोभनतां यातीत्यर्थः ५४

१० प्रज्ञोपबृंहणे हेतुः ।

**५५–प्रदीपभूतं शास्त्रं हि दर्शनं विपुला मतिः ॥ १३**
**ताभ्यां[11] भिषक् सुयुक्ताभ्यां चिकित्सन्नापराध्यति**

५५–किमर्थं प्रज्ञामुपबृंहयेदित्यत आह–**प्रदीपभूतमित्यादि** । शास्त्रप्रदीपयोः सादृश्यम् । विस्तीर्णा मतिर्दृष्ट्या समाना । यथा प्रदीपोपबृंहिता दृष्टिर्भावग्रहणे समर्था भवत्येवं शास्त्रोपबृंहिता विपुला मतिश्चिकित्सितयोग्या । एवं हि चिकित्सन्नापराधवान् भवति ५५

११ रोगोपशमलक्षणा सिद्धिः ।

**५६–आहूत एव यो याति सुवेषः सुनिमित्ततः ॥१४**
**गत्वाऽऽतुरार्थादन्यत्र न निधत्ते मनः क्वचित् ।**
**व्याधीन्परीक्षते सम्यङ्निदानादिविशेषतः ॥ १५**
**दूषणीयां च तद्वार्तां न प्रकाशयते बहिः ।**
**सहसा न च तस्यापि क्रियाकालमहापयन् ॥ १६**
**जानाति चोपचरितुं स वैद्यः सिद्धिमश्नुते ।**

४ हीनान्यतममाचा°–क., हितान्यतम°–ख. ५ °ष्ठेदास्य पू°–क. ६ °पि विनोदयेत्–ख. ७ °ब्धः सुरतः–क. ८ °दी जितग्रन्थो–क. ९ °ष्टर्याच्छास्त्रार्थवर्जि°–क. १० °हो भिषग्वरः–क. घ. ११ °भ्यामतः सुयु°–क. ख. घ.

५६—किंभूतश्च वैद्यः सिद्धिं प्राप्नोतीत्याह—**आहूत इति**। य आहूत एवातुरगृहं याति। **सुवेषः**—दूतादिविशानीयोक्तकुचेलादिवेषराहितः। सुनिमित्ततो याति—दुर्निमित्तं दृष्ट्वा न यातीत्यर्थः। गत्वा चातुरार्थं वर्जयित्वान्यत्र मनो न निधत्ते। आतुरार्थौ निदानादिभिः पञ्चभिर्विशेषैर्व्याधिपरीक्षणं तद्योग्या च चिकित्सा। न्हेपणीयां—गोप्यां लज्जावहां चातुरवार्तां बहिर्जनसंसदि न प्रकाशयेत्। आतुरस्यापि झटिति न प्रकाशयेत्—ईदृशी तवोपगता पीडेति। एवं ह्यातुरस्य व्याधिस्वरूपं कथयतो भिषजः कदाचित् चिकित्साहानिर्भवति। क्रियाकालं—चिकित्साकालमत्ययजन् उपचरितुं—चिकित्सितुं च यो जानाति चिकित्सामार्गे स्पष्टविकल्पयोग्या बुद्धिरित्यर्थः। एवंभूतो वैद्यो रोगोपशमलक्षणां सिद्धिं प्राप्नोति ५६

**टिप्पणी**—टीकायां—स्पष्टविकल्पयोग्या इति—प्रतिरोगमुपस्थाय मिलितानां कुपितवातपित्तकफानां चलोष्णस्थिरादिप्रतिनियतलक्षणानां मध्यात्कतमस्य दोषस्याधिकानि, कतमस्य च न्यूनानि तत्तदात्मलिङ्गानीत्यभिप्रायिका या अंशांशकल्पना सैव विकल्पपदवाच्या ५६

१२ वैद्येन किं वर्जनीयम् ?

**५७—नाददीतामिषं स्त्रीभ्यस्तदध्यक्षे पराङ्मुखे॥**
**ताभिश्च रहसि स्थानं परिहासं च वर्जयेत्॥** १७

५७—एतत्प्रसंगेनैव वैद्येनेदमनुष्ठेयं नेदमनुष्ठेयमित्याह—**नाददीतेति**। परस्त्रीभ्य आमिषमर्थादिकं नाददीत न गृण्हीयात्। 'आमिषं भोग्यवस्तुनि' इति कोषः। तदध्यक्षे आमिषदातृयोषिद्रक्षाधिकृते पराङ्मुखे—परोक्षे ताभिः स्त्रीभिश्च रहस्येकान्ते स्थितिं परिहासं च वर्जयेत् ५७

१३ अचिकित्स्याः।

**५८—आर्तं च नृपसद्वैद्यैर्द्विष्टं तद्द्वेषिणं द्विषम्॥** १८
**चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम्।**
**हीनोपकरणं व्यग्रमविधेयं गतायुषम्॥** १९

५८—आर्तं रोगिणं चैवंभूतं भिषग्वर्जयेत। किंभूतम्? नृपेण—राज्ञा द्विष्टं सद्वैद्यैश्च। अथवा नृपेण सद्भिश्च वैद्यैश्च। तद्द्वेषिणं तान्नृपसद्वैद्यान् यो द्वेष्टि तम्। द्विषं शत्रुं च न चिकित्सेत्। चण्डं—दर्पिणम्। शोकातुरादयः प्रसिद्धाः। वैद्यमानिनम्—अवैद्योऽपि यो वैद्यमात्मानं मन्यते, स्वमतेनौषधं करोतीत्यर्थः। हीनोपकरणं—हीनचिकित्साङ्गम्। व्यग्रं—कार्यबहुलम्। अविधेयं—भिषजः। गतायुषं—रिष्टज्ञानेन ५८

१४ कुवैद्यस्य परिहारः।

**५९—जिजीविषुर्व्याधितोऽपि पूर्वोक्तगुणवर्जितान्।**
**क्रियाविक्रयिणो वैद्यान् मृत्योरग्रेसरा हि ते॥** २०

५९—न केवलं भिषगेवंभूतमातुरं वर्जयेत्, यावदातुरोऽपि जीवितुमिच्छुः पूर्वोक्तवैद्यगुणवर्जितान् वैद्यांस्त्यजेत्। क्रियाविक्रयिणः—पण्याचिकित्सकान्। ते हि मृत्योरग्रेसराः पुरस्सराः, पुरुषाः—पदातयः ५९

१५ चिकित्सायाः षोडशाङ्गानि।

**६०—भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।**
**चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम्॥** २१

६०—चिकित्सायाः प्रकृतत्वादिदमुच्यते—**भिषगित्यादि** चिकित्सितस्य रोगोपशमलक्षणस्य पादचतुष्टयमङ्गचतुष्टयमुक्तम्। प्रत्येकं तच्चतुर्गुणम्। उपस्थाता—परिचारकः ६०

**६१—दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक्।**

६१—भिषग्वैद्यश्चतुर्गुणः। दक्षश्चतुरः, तीर्थात्तशास्त्रार्थः उपाध्यायात्प्राप्तशास्त्रस्वरूपः। दृष्टकर्मा—बहुशश्चिकित्सितरोगः। शुचिः शरीरेण मनसा च ६१

**६२—बहुकल्पं बहुगुणं संपन्नं योग्यमौषधम्॥** २२

६२—औषधमपि चतुर्विधम्। बहुकल्पं बहवः कल्पाः स्वरसक्वाथचूर्णादिकाः कल्पना यस्य न तु लवणवदेककल्पम्। बहवो गुणाः सत्त्वादयो यस्य तद्बहुगुणम्। संपन्नं—पाकसंस्कारादियुक्तम्। योग्यं—रोगस्य रोगिणश्च देशकालाद्यवस्थापेक्षया ६२

**६३—अनुरक्तः शुचिर्दक्षो बुद्धिमान्परिचारकः।**

६३—उपस्थातापि चतुर्विधः। आतुरस्यानुरक्तः। शुचिदक्षौ व्याख्यातौ। बुद्धिमान् प्रसिद्धः ६३

**६४—आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि** २३

६४—रोग्यपि चतुर्विधः। आढ्यो—धनवान्। वैद्यवश्यः। ज्ञापकः—वैद्यं रोगाहारविहारादीनामन्वयव्यतिरेकं बोधयितुं समर्थः। सत्त्ववानभीरुः ६४

१६ चिकित्सायाः प्रधानं कारणम्।

**६५—यद्वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थकाः।**
**स पादहीनानप्यार्तान् गुणवान्[१२] यच्च यापयेत्** २४
**चिकित्सायास्तमेवातः प्रधानं कारणं विदुः।**

६५—चिकित्सायाश्च यद्यपि कारणचतुष्टयमुक्तं तथापि वैद्य एव प्रधानं कारणम्। कुतः? आह—**यद्वैद्य इति**। यस्माद्वैद्ये, विगुणे—यथोक्तगुणरहिते, शेषास्त्रयः पादा गुणवन्तो—यथोक्तगुणा अप्यनर्थकाः। अयमपरो हेतुः—यच्च यस्माच्च वैद्यो गुणवान् पादहीनानप्यार्तान् यापयेत्—मरणाद्रक्षति। अतोऽपि तमेव प्रधानं कारणं विदुर्विद्वांसः ६५

१७ व्याधीनां प्रकाराः।

**६६—साध्योऽसाध्य इति व्याधिर्द्विधा तौ तु पुनर्द्विधा॥**
**सुसाध्यः कृच्छ्रसाध्यश्च याप्यो यश्चानुपक्रमः।**

६६—चिकित्सा प्रकृता। सा च व्याधेर्नाशनम्। अत उच्यते—द्विविधो व्याधिः साध्योऽसाध्यश्च। साध्यो द्विविधः—सुखसाध्यः, कृच्छ्रसाध्यश्च। असाध्योऽपि द्विविधः—याप्यः, अनुपक्रमश्चेति ६६

**६७—सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः॥** २६
**अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः।**
**अतुल्यदूष्यदेशर्तुप्रकृतिः पादसंपदि॥** २७

**६८—ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः।**
**सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते॥** २८

६७-६८—सुखसाध्यादिकस्य व्याधिचतुष्टयस्य लक्षणमुच्यते

१२ 'न् यश्च पालयेत् —क. 'न्परिपालयेत् —ङ.

सर्वौषधक्षमे देहे उत्पन्नो व्याधिः **सुखः**–सुखसाध्यः। यूनस्तरुणस्य। पुंसः–पुरुषस्य। जितात्मनो–जितेन्द्रियस्य नेयशब्दादीनामलोलुपस्य देहे उत्पन्नः, अन्यच्च किंभूतः ? **अमर्मगः**–हृत्कण्ठादिपीडाकरणेऽसमर्थः। स्वल्पनिदानः स्वल्पपूर्वरूपः स्वल्पलक्षणश्च सुसाधः। तथोपद्रवरहितः उत्पन्ने व्याधावुत्पन्नं दुःखानुबन्धि व्याध्यन्तरमुपद्रवशब्देनोच्यते। तथा **अतुल्यदूष्यः**–यस्मिन् व्याधौ विसदृशेन दोषेण दूषितो दूष्यः। यथा–श्लेष्मणा शीतेन रक्तमुष्णं दूषितम्। तथा अतुल्यदेशो व्याधिः, यथा–आनूपदेशे पित्तसंभूतः। अतुल्यर्तुर्यथा–शरदि कफोद्भवः। अतुल्यप्रकृतिर्यथा–पित्तप्रकृतेः श्लेष्मसंभवः। **पादसंपदि**–अंगचतुष्टयपरिपूर्णत्वे सति व्याधिः सुखसाध्यः। तथा ग्रहेषु अनुगुणेषु अनुकूलराशिस्थितेषु। तथा एकेन वातादीनामन्यतमेन दोषेण यो जातः, तथा **एकमार्गः**–अन्तर्मार्गे एव वा बहिर्मार्गे एव वा। एतच्च परस्ताद्वक्ष्यामः। तथा **नवः**। इति सुखसाध्यस्य लक्षणमुक्तम्। तस्यैव सुखसाध्यस्य अन्वर्थताप्युच्यते। सुखसाध्यो यः सुखोपायः स्वल्पोपाय इति अल्पेन च कालेन सिध्यति ६७–६८

**टिप्पणी**—टीकायां-परस्ताद्वक्ष्याम इति-अग्रे सूत्रस्थाने द्वाविंशाध्याये 'त्रयश्च रोगाणां मार्गाः–' इत्यत्र वक्ष्याम इति भावः ६७–६८.

**६९–कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च।**
**असाध्यलिङ्गसंकीर्णस्तथा शस्त्रादिसाधनः॥ २९**

६९—कृच्छ्रसाध्यस्तु कृच्छ्रैः सुदुष्करैरुपायैर्महद्भिः प्रभूतैश्चिरेण च सिध्यति। असाध्यलिंगानि यथास्वं वक्ष्यमाणानि। तैः संकीर्णो मिश्रितः। तथा शस्त्रादिकं साधनमुपायो यस्य। आदिग्रहणेनाग्निक्षारादीनां ग्रहणमिति **कृच्छ्रसाध्यलक्षणानि** ६९

**७०–शेषत्वादायुषः पथ्यैर्याप्यः प्रायो विपर्यये।**
**दत्त्वाल्पं सुखमल्पेन हेतुना[13]स प्रतन्यते॥ ३०**
**याति नाशेषतां रोगः कर्मजो नियतायुषः।**
**प्रपतन्निव विष्कम्भैर्धार्यतेऽत्रातुरो हितैः॥ ३१**

७०—याप्य उच्यते–**शेषत्वादित्यादि**। बाहुल्येन विपर्यये साध्यलक्षणविपरीतत्वे सत्यायुषो जीवितस्य शेषत्वादक्षीणत्वान्मारयितुमसमर्थः। पथ्यैराहारविहारैर्याप्यः स च व्याधिश्चिकित्सितेनाल्पं सुखं दत्वा पुनः सोऽल्पेनैव हेतुना प्रतन्यते–विस्तीर्यते। यतश्च दुष्कृतकर्मजो रोगो नियतायुष उत्पन्नो न च नश्यति नापि मारयति। अत्र च याप्ये व्याधौ आतुरो हितैराहारविहारादिकैर्धार्यते, यथा–प्रपतन् पिपतिषुः कुड्यादिः विष्कम्भैः–स्तम्भैर्धार्यते। इति **याप्यलक्षणानि** ७०

**७१–परोऽसाध्यः क्रियाः सर्वाः प्रत्याख्येयोऽतिवर्तते।**
**तस्मादुपेक्ष्य एवासौ स्थितोऽत्यन्तविपर्यये॥ ३२**
**भ्रममोहारतिकरो दृष्टरिष्टोऽक्षनाशनः।**

७१–अनुपक्रमलक्षणान्युच्यन्ते। परश्चैषां शेष असाध्यः प्रत्याख्येयः सन् सर्वाः क्रियाः–चिकित्सा अतिवर्तते–कुण्ठयति। तस्मात् सुखसाध्यलक्षणेभ्योऽत्यन्तविपरीतत्वे स्थित उपेक्षणीय एव। तथा **भ्रमादिकरः**–भ्रम इव भ्रमः–चित्तस्य बहुस्वरूपमवस्थानम्। **मोहो**–वैचैतन्यम्। **अरतिः**–कुत्रचिदनवस्थितिः। तथा **अक्षनाशनः**– दर्शनादीन्द्रियनाशनः। **इत्यनुपक्रमलक्षणानि** ७१

१८ चिकित्सायाः पूर्वकृत्यम्।

**७२–व्याधीन्पुरा परीक्ष्यैवमारभेत ततः क्रियाम्॥ ३३**
**स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात्।**

७२–इत्येवमनन्तरोक्तप्रकारेण व्याधीन् पुरा–आतुरसंयोग एव समीक्ष्य ततः क्रियां–चिकित्सामारभेत। अन्यथैतदकुर्वन् ध्रुवमवश्यं स्वार्थादिहानिमवाप्नुयात्–अश्नुवीत ७२

१९ साध्यस्याप्यसाध्यत्वम्।

**७३–साध्ययोरपि संयोगो बलिनोर्यात्यसाध्यताम् ३४**
**विद्यादसाध्यमेवातः साध्यासाध्यसमागमम्।**
**नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्**

७३–वैद्यस्य परीक्षणीयप्रसंग इदमप्याह–**साध्ययोरित्यादि**। बलिनोर्बलयुक्तयोः साध्यलक्षणयुक्तयोः संयोगोऽप्यसाध्यतां याति। अत एव संयोगाद्धेतोः साध्यासाध्यसमागममप्यसाध्यं विद्यात्। तथा योऽसाध्यो व्याधिः स न कदाचिदपि साध्यतामेति। साध्यः पुनरसाध्यतामेति ७३

**७४–पादापचाराद्दैवाच्च यान्त्यवस्थान्तरं गदाः।**

७४–कथमित्याह–**पादापचारादित्यादि**। **पादापचारः**-यथोक्तानामङ्गानामपरिपूर्णत्वम्। अथवा सर्व एव व्याधयः पादनिरपेक्षा एव दैवाद्धेतोरवस्थान्तरं–स्वरूपाद्भिलक्षणतां यान्ति। दैवमन्यजन्मकृतं कर्म ७४

२० वैद्यस्य वृत्तिविषये व्यवहारः।

**७५–वरमाशीविषविषं दीप्तमग्निमयोऽपि वा॥ ३६**
**उपयुञ्जीत न त्वातोदामिषं कृपणाज्जनात्।**

७५–वैद्यस्यानुष्ठेयप्रसंग इदमप्याह–**वरमित्यादि**। वरमाशीविषाणां दंष्ट्रिणां विषमुपयुक्तम्। दीप्तो वाऽग्निरुपयुक्तः। दीप्तमयोऽपि वा उपयुक्तं–शरीरेण संयोगं नीतम्। न तु कृपणाज्जनादाभिषमर्थादिकमुपयुक्तम्। अथवा आशीविषाश्च वरम्। विषं च वरम् ७५

**७६–[14]वरो भूतदया धर्म इत्यार्तेषु भिषग्वरः॥ ३७**
**वर्तते [15]यस्तु सिद्धार्थः स सर्वमतिवर्तते॥**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने शिष्योपनयनीयो नाम द्वितीयोऽध्यायः २**

७६–इति यो भिषग्वैद्यः भूतदया वरः श्रेष्ठो धर्म इति विदित्वाऽऽर्तेषु–रोगिषु वर्तते। स सिद्धार्थः–अर्थसिद्ध्या युक्तः सर्व सदाचारं जनमतिवर्तते तेषामुपरि भवतीत्यर्थः।

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने द्वितीयोऽध्यायः २**

---

१३ स. प्रतीयते –क. १४ परो मू॰ –ख १५ यः सुसिद्धार्थः–ग.

# दिनचर्याख्यस्तृतीयोऽध्यायः ।

**७७–[1]अथातो दिनचर्यां नामाध्यायं व्याख्यास्यामः ।**
**[2]इतिह स्माहुरात्रेयादयो महर्षयः–** १

७७–अस्मिंस्तन्त्रे आयुषः पालनं प्रक्रान्तं तच्च द्विविधं स्वस्थवृत्तमातुरवृत्तं च । मंगल्यत्वात् स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावुच्यते–**अथातो दिनचर्यामित्यादि** । प्रतिदिनं कर्तव्या चर्या दिनचर्या ७७

१ ब्राह्मे मुहूर्त उत्थानम् ।

**७८–ब्राह्मे मुहूर्त उत्तिष्ठेज्जीर्णाजीर्णं[3] निरूपयन् ।**
**रक्षार्थमायुषः स्वस्थः**

७८–किं तदित्याह–**ब्राह्म इति** । स्वस्थो नीरोगः । आयुषो यथोपचितस्य रक्षार्थं **ब्राह्मे मुहूर्त उत्तिष्ठेत्** । मुहूर्तो नाडिकाद्वयम् । ब्रह्मणोऽयं ब्राह्मः । ब्रह्म ज्ञानं, तदर्थमध्ययनाद्यपि ब्रह्म, तस्य योग्यो मुहूर्तो ब्राह्मः । ब्रह्मयोग्यश्च कालो योगशास्त्रेषु 'निशायाः पश्चिमो यामः' निश्चितः । तेन निशाक्षये निद्रानाशप्रयुक्तत्वादुत्थानस्याप्राप्तसन्ध्यासंसर्गो मुहूर्तोऽभिमतः । सन्ध्यायां स्वप्नप्रतिषेधात् । यद्यपि च ज्योतिःशास्त्रेषु सूर्योदयात्प्रभृति षड्विंशो मुहूर्तो नाडिकाष्टकव्यवहितद्वितीयसूर्योदयो ब्राह्म इत्युच्यते । तथापि नासाविहाभिप्रेतः । अन्नस्य जरणकाले जागरणप्रसंगात् । तस्मात्सन्ध्यायाः पूर्वो मुहूर्तो ब्रह्मोपासनयोग्यत्वात् **ब्राह्मः** । **अभ्यासाद्यपेक्षं तत्पूर्वोऽपि वा** । तस्मिन् शय्यात उत्तिष्ठेत् । केचित्तु ज्योतिःशास्त्रविदः विरिञ्चप्रभवं मुहूर्तं निशान्तभवमाहुः । किं कुर्वन्नुत्तिष्ठेत् ? **जीर्णाजीर्णं निरूपयन्** । ह्यस्तनमाहारं मया भुक्तं जीर्णं न वेति विकल्पयन् । एतावता हि कदाचित्स्वप्यादजीर्णाति नोत्तिष्ठेत् । अथवा षड्विंश एव ब्राह्मो मुहूर्तः अत्र गृह्यते । जीर्णाजीर्णं निरूपयन्नित्येतच्च दोषपरिहाराय भविष्यति ७८

**टिप्पणी**—रात्रेश्चतुर्दशो मुहूर्तो ब्राह्मो मुहूर्तः । समरात्रिदिवे काले च द्विघटिकोपलक्षणः । मुहूर्तस्य चेह द्विघटिकोपलक्षणार्थत्त्वात्सर्वस्मिन्काले रात्रेश्चतुर्घटिकावशेषे समुत्थानं कार्यमिति भावः । स्वस्थो नाम–समदोषः समाग्निश्च समधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्याभिधीयते (सु. सू. १५. ४४.) इति । समा धातुमलानां क्रिया यस्य स समधातुमलक्रियः ७८

२ शौचविधिः ।

**७९　　–जातवेगः समुत्सृजेत् ॥** २
**उदङ्मुखो मूत्रशकृद्दक्षिणाभिमुखो निशि ।**
**वाचं नियम्य[4] प्रयतः संवीताङ्गोऽवगुण्ठितः ॥** ३
**प्रवर्तयेत्प्रचलितं न तु यत्नादुदीरयेत् ।**
**नामेध्यमार्गभूभस्मगोस्थानाकीर्णगोमये ॥** ४
**पुरान्तिकाग्निवल्मीकरम्योत्कृष्टाचितिद्रुमे ।**
**न नारीपूज्यगोर्केन्दुवाय्वब्दाग्निजलं प्रति ॥** ५
**न चातिरस्कृत्य महीं, भयाशक्त्योस्तु कामतः ।**

७९–उत्थितश्च किं कुर्यादित्याह–**जातवेग इत्यादि** । मूत्रपुरीषमुदङ्मुख उत्तरां दिशं प्रेक्षमाण उत्सृजेत्–त्यजेत् । किंभूतः? **प्राप्तवेगः** नोदीरितवेग इति । एतावता हि वातादीनां कोपो भवति । निशि–रात्रौ दक्षिणदिगभिमुखो मूत्रशकृदुत्सृजेत् । किं कृत्वा मूत्रपुरीषमुत्सृजेत्? वाचं नियम्य–कृतमौनः । प्रयतः–अनन्यकार्यः । संवीतांगः–गृहीतपरिधानः । अवगुंठितः–अनग्नशिराः । स्थानात् प्रचलितं मूत्रशकृत् स्तोकं स्तोकं प्रवर्तयेत्–प्रेरयेत् । न त्वतियत्नेनाचलितमेवोदीरयेत् । नामेध्ये–अत्यन्ताशुचौ स्थाने । मार्गः–रथ्या । तत्रापि नोत्सृजेत् । न मृदि राशीभूतायामपि । न भस्मनि, न गोस्थाने, न **आकीर्णे**–जनसंसदि, न गोमयस्योपरि, न पुरनिकटे, नाग्निनिकटे, न वल्मीकोपरि–मृदा पिपीलिकादिकृतं स्थाण्वाकारं वल्मीकशब्देनोच्यते । नातिरमणीये भूमिभागे, न हललिखिते, न कृताध्वराग्निचये, न वृक्षस्याध उपरि वा । न च नार्याद्यभिमुखम्, पूज्यो गुर्वादिः । गवादयः प्रसिद्धाः । न च महीं–भूमिम् अतिरस्कृत्य-तृणादिभिरनवच्छाद्य । उत्सृजेदिति सर्वत्रानुवर्तते । यदा तु स्वामिचोरादिभयं, यदा वा शरीराशक्तता तदा कामतो यथेच्छम् ७९

**८०–न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यमामयम् ॥**

८०–तथा वेगितः प्राप्तमूत्रादिवेगो नान्यकार्यो भवेत् । अन्यकार्यप्रतिषेधप्रसंगेनाह–साध्यमपि रोगमजित्वा नान्यकार्यो भवेदिति ८०

**८१–निःशल्यादुष्टमृत्पिण्डीपरिमृष्टमलायनः ।**
**अभ्युद्धृताभिः शुचिभिरद्भिर्मृद्भिश्च योजयेत् ॥** ७
**[5]लेपगन्धावहं शौचमनुत्पतितबिन्दुभिः ।**

८१–उत्सृष्टवेगश्च शौचं योजयेत्–कुर्यात् । किंभूतः कुर्यादत आह–**निःशल्यया** काष्ठादिशल्यरहितया । अदुष्टया योग्यया मृत्पिण्ड्या परिमृष्टमलायनः–संमार्जितगुदः । केन शौचं योजयेदत आह—**अभ्युद्धृताभिरद्भिः** नदीतटाकादितः कलशपाण्यादिना उद्धृताभिः । न तु कटीमेव नद्यामवगाह्य शौचयेत् । न चाशुचिना करेण मृत्साहिताभिरद्भिः । किंभूतं शौचमित्याह—**लेपगन्धावहमिति** । लेपगन्धावहं मलायने लेपगन्धौ, लेपश्च गन्धश्च येन नश्यति । एतेन मृदोऽपां शौचस्य च मानमुक्तं भवति । अनुत्पतितबिन्दुभिरद्भिः–यत उत्पतिता बिन्दवोऽस्पृश्याः ८१

**८२–सृष्ट्वा धातून् [6]मलानश्रु वसाकेशनखांश्च्युतान् ८**
**स्नात्वा भोक्तुमना भुक्त्वा सुप्त्वा क्षुत्वा सुरार्चने**
**रथ्यामाक्रम्य चाचामेदुपविष्ट उदङ्मुखः ॥** ९
**प्राङ्मुखो वा विविक्तस्थो न बहिर्जानु नान्यदृक् ।**
**अजल्पन्नुत्तरासङ्गी स्वच्छैरङ्गुष्ठमूलगैः ॥** १०
**[7]नोद्धृतैर्नानतो नोर्ध्वं नाग्निपक्वैर्न पूतिभिः ।**
**न फेनबुद्बुदक्षारैर्नैकहस्तार्पितैर्जलैः ॥** ११
**नार्द्रैकपाणिर्नामेध्यहस्तपादो न शब्दवत् ।**

---

१ अथातो दिनचर्याध्यायं व्या°–क. ख. २ नास्ति –क. ख. ३ °जीर्णाजीर्णो नि°–क. ख. । ४ °म्य प्रणतः सं° –क. ख. । ५ गन्धापहं शौ° –क. ख, ६ °लानश्रु दृशं केश°–क. ख. ७ नोद्वृत्तैर्ना°–क.

८२–अन्यच्चेदं कुर्यात्, आचामेत्–जलेन उपस्पृशेत्। किं कृत्वाऽऽह–धात्वादिकान् स्पृष्ट्वा। किंभूतान्? शरीराच्चलितान्। धातवः–रक्तादयः। मलाः–मूत्रशकृत्कर्णमलादयः। अश्रु–दृशोर्जलम्। अप्सदृशो मेदसो भागो वसा। तथा च “ शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता ” इति **चरकः**। स्नात्वा चाचामेत्। भोक्तुमनाः–बुभुक्षुः। भुक्त्वा च, सुप्त्वा च, क्षुत्त्वा च क्षवथुं कृत्वा, सुरार्चने देवार्चनारंभे, रथ्यामाक्रम्य–मार्गं परिभ्रम्य, चकारात्प्रकृतं शौचं कृत्वा। किंभूतः? पूर्वामुत्तरां वा दिशमीक्षमाण उपविष्टः। न बहिर्जानु–जानुभ्यां बहिः पाणी अकृत्वा। नान्यदृक्–आचमनजलादन्यत्र न दृष्टिं कुर्वन्। अजल्पन्–कृतमौनः। उत्तरासंगी–गृहीतोपरिवसनः। कैराचामेत्? जलैः। किंभूतैः? स्वच्छैः–निर्मलैः, अंगुष्ठमूलगैः–ब्राह्मतीर्थोपवेशिभिः। नोध्दृतैराचामेत्–किं तर्हि अविच्छिन्नधारया दत्तैः। नानतः–न नमिताङ्गः; नोर्ध्वं–उत्थितो न। नाग्निपक्वैः, न दुर्गन्धिभिः, न फेनिलैः, न बुद्बुदिभिः, न क्षारैः–विरसैः, नाप्येकहस्तदत्तैः। आर्द्रैकपाणिर्नाचामेत्। यावद्द्वावपि पाणी न प्रक्षालितौ। नाशुचिहस्तपादः। जलपाने शब्दं न कुर्वन् ८२

३ दन्तधावनम्।

**८३–वटासनार्कखदिरकरञ्जकरवीरजम्[8] ॥ १२**
**सर्जारिमेदापामार्गमालतीककुभोद्भवम्।**
**कषायतिक्तकटुकं मूलमन्यदपीदृशम् ॥ १३**
**विज्ञातवृक्षं[9] क्षुण्णाग्रमृज्वग्रन्थि सुभूमिजम्।**
**कनीन्यग्रसमस्थौल्यं सुकूर्चं द्वादशाङ्गुलम् ॥ १४**
**प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम्।**
**[10]व्याप्यत्रिवर्गत्रितयक्षौद्राक्तेन च घर्षयेत् ॥ १५**
**शनैस्तेन ततो दन्तान्दन्तमांसान्यबाधयन्।**

८३–अन्यच्च किं कुर्यात्? कृतशौचो दन्तधावनकाष्ठं भक्षयेत्। किं तत्? वटादिवृक्षाणामन्यतमस्य मूलं यत् कषायादिरससंयुक्तं न त्वन्यरसं वटादिजं मूलं वटादिमूलादन्यदपीदृशं कषायादिरससंयुक्तं मूलं वा काष्ठं वा सर्वं भक्षयेत्। विज्ञातवृक्षम्–वृक्षा हि मोहनादिनानाशक्तयो दृश्यन्ते। क्षुण्णाग्रमापोथिताग्रं, ऋजु–स्पष्टं, तथा ग्रन्थिरहितं, सुभूमिजं–श्मशानाद्यजातं, स्थूलतया च कनीनिकाप्रान्तसमं कनीनिका–कनिष्ठांगुलिः, सुकूर्च्चं–अपरुषकूर्च्चं, परिमाणेन द्वादशाङ्गुलम्। **द्वौ कालौ** दन्तमांसं रक्षन् दन्तपवनं भक्षयेत्। **दिनारंभे भोजनान्ते च**। यतवाङ्मौनी। ततो दन्तपवनं मलापनुत्त्यर्थं भक्षयित्वा अनन्तरं शनैः व्याप्यादिक्षौद्रान्तान्वितप्रान्तेन दन्तकाष्ठेन दन्तान् घर्षयेत्। व्याप्यं–कुष्ठम्। त्रिवर्गत्रितयं–त्रिकटु–त्रिफला–त्रिजातकं च। ८३

**टिप्पणी**—कषायेति–सुश्रुते तु ( चि. अ. २४–६ ) मधुररसोऽप्युक्तः। व्याप्येति–सुश्रुते तु ( चि. अ. २४–८ ) ‘चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत्’ इत्यनेन दन्तधावनार्थं तेजोवत्याश्चूर्णमेव प्रोक्तम् ८३

४ जिह्वानिर्लेखनम्।

**८४–लिखेदनुसुखं जिह्वां जिह्वानिर्लेखनेन च ॥ १६**
**तथास्य मलवैरस्यगन्धा जिह्वास्यदन्तजाः।**
**रुचिवैशद्यलघुता न भवन्ति भवन्ति च ॥ १७**

८४–अनु पश्चात् तेनैव लेखनयोग्यकृतेन दन्तपवनेन जिह्वां सुखं लिखेत्, जिह्वानिर्लेखनेन लोहादिकृतेन वा जिह्वां सुखं लिखेत्। स्वल्पमपि मांसमबाधमानस्तां लिखेत्। एवं हि दन्तपवनजिह्वानिर्लेखनाभ्यामस्य पुंसो मलादयो जिह्वादिजा न भवन्ति। यथासंख्यं विवक्षिता रुच्यादयो लघुतान्ताश्च भवन्ति ८४

५ दन्तधावननिषेधः।

**८५–नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती।**
**तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥ १८**

८५–तच्च दन्तपवनमजीर्णादियुतः पुरुषो नाद्यात्। वमथुः–च्छर्दिः, श्वासादयो वक्ष्यमाणलक्षणाः। आमयशब्देन रोगपर्यायेण हृदादीनां संबन्धः ८५

६ दन्तधावने निषिद्धानि।

**८६–नैव श्लेष्मातकारिष्टबिभीतधवधन्वजान्[11]।**
**[12]बिल्ववञ्जुलनिर्गुण्डीशिग्रुतिल्वकतिन्दुकान् ॥ १९**
**कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलून्।**
**पारिभद्रकमम्लीकामोचक्यौ[13] शाल्मलीं शणम् २०**
**स्वाद्वम्ललवणं शुष्कं सुषिरं पूति पिच्छिलम्।**

८६–श्लेष्मातकादिकं दन्तपवनमवश्यमेव नाद्यात्। तथा प्रथमरसत्रययुक्तं, दुर्गन्धिपिच्छिलं च, शुष्कं–नीरसं, सुषिरमन्तःशून्यम्। श्लेष्मातकादीनां शणान्तानां पर्यायाणि नोच्यन्ते, विशिष्टदेशप्रसिद्धत्वात्। या चात्राकांक्षा सा निघण्टुज्ञानादेव नश्यति ८६

**टिप्पणी**—पारिभद्रेति–यद्यप्यत्र मोचकी शाल्मलीत्येतौ समानार्थकौ, तथापि श्वेतरक्तयोर्द्वयोरपि संग्रहान्न द्विरुक्तिदोष इति प्रतिभाति ८६

**८७–पालाशमासनं दन्तधावनं पादुके त्यजेत् ॥ २१**

८७–दन्तपवनप्रसंगेनाह–पलाशवृक्षजातम्–आसनं, दन्तधावनं, पादुके च त्यजेत् ८७

७ दन्तधावनक्रमः।

**८८–दन्तान् पूर्वमधो घर्षेत् प्रातः सिञ्चेच्च लोचने।**
**तोयपूर्णमुखो ग्रीष्मशरदोः शीतवारिणा ॥ २२**

८८–दन्तपवने चाधोदन्तान् पूर्वं घर्षेत्। प्रतिदिनं प्रातर्दिनारंभे आक्षिणी सिञ्चेत् तोयपूर्णमुखः सन्। केन सिञ्चेत्? **शीतवारिणा**। किं नित्यमेव शीतवारिणा? ग्रीष्मशरदोरेव। अन्यस्मिन्नृतौ कोष्णवारिणेत्यर्थाल्लभ्यते ८८

८ मङ्गलकृत्यम्।

**८९–प्रणम्य देवान् वृद्धांश्च मंगलाष्टशतं शुभम्।**
**शृण्वन्काञ्चनविन्यस्तं सर्पिः पश्येदनन्तरम् ॥ २३**

८९–इदञ्चानन्तरं कुर्यात्–देवान् वृद्धांश्च प्रणम्य मंगला-

---

८ °र. करीरकरवीरजम्–ङ. ९ °ण्णाग्रमृद्वग्रन्थिसु°–ङ. १० वाप्यत्रि°–घ. ११ °न्वनान्–क. १२ विल्वबम्बुलनि° १३ मोरक्यो शा°–ङ.



आदर्शः ( सू. ९४ )



जलजम् ( सू. ९५ )



पुष्पमाला ( सू. ९५ )



पुष्पम् ( सू. ९५ )



ताम्बूलीपत्रम् ( सू. ९६ )

ष्टशतं शुभं शृण्वन् सौवर्णभाण्डस्थं घृतमवाङ्मुखः पश्येत्, मंगलाष्टशतं दूतादिविज्ञानीये ( शा. अ. १२ ) वक्ष्यते ८९

९ अञ्जनकर्म ।

९०–सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ।
लोचने तेन भवतो मनोज्ञे सूक्ष्मदर्शने ॥ २४
व्यक्तत्रिवर्णे विमले सुस्निग्धघनपक्ष्मणी ।

९०–ततः सौवीरमञ्जनमक्षिभ्यां हितं नित्यं भजेत् । तेन चाञ्जनेन लोचने–नेत्रे, मनोज्ञे–दर्शनीये भवतः । सूक्ष्मं च रूपं पश्यतः । व्यक्तत्रिवर्णत्वाच्च निर्मले, रक्तशुक्लकृष्णं वर्णत्रयम् । सुस्निग्धानि सुघनानि च पक्ष्माणि ययोस्ते तथाविधे ९०

९१–चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो भयम् ॥ २५
योजयेत्सप्तरात्रेऽस्मात् स्रावणार्थं[१४] रसाञ्जनम् ।

९१–तथा सप्तरात्रान्तरेण चक्षुषः श्लेष्मस्रावणार्थं रसाञ्जनं योजयेत् । कुतः ? यतश्चक्षुस्तेजोमयं, चक्षुषस्तेजोमयव्यपदेशो भूयसा । यतः पञ्चभूतात्मकमिन्द्रियं तस्य च वातादितो विशेषाच्छ्लेष्मणो विपरीतत्वात् भयमिति ९१

**टिप्पणी**—सौवीरापवादेन रसाञ्जनं विधत्ते–चक्षुरिति । रसाञ्जनं दार्वीक्वाथसमुद्भवम् । उक्तं हि–'दार्वीक्वाथमजाक्षीरपादं पक्त्वा यदा घनम् । तदा रसाञ्जनाख्यं तन्नेत्रयोश्च प्रयोजयेत्' इति ९१

१० नस्यगण्डूषादि ।

९२–अणुतैलं ततो नस्यं ततो गण्डूषधारणम् । २६
घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ॥
सुगन्धिवदनाः स्निग्धनिःस्वना विमलेन्द्रियाः २७
निर्वलीपलितव्यंगा भवेयुर्नस्यशीलिनः ॥
ओष्ठस्फुटनपारुष्यमुखशोषद्विजामयाः । २८
न स्युः स्वरोपघाताश्च स्नेहगण्डूषधारणात् ॥
"खादिरक्षीरिवृक्षारिमेदांबुकवलग्रहः[१६] । २९
अरोचकास्यवैरस्यमलपूतिप्रसेकजित् ॥
सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् । ३०

९२–अनन्तरं वक्ष्यमाणमणुतैलं नस्यं योज्यम् । अनन्तरं गण्डूषधारणम् । नस्यशीलिन एवं भवन्ति–घनोन्नतप्रसन्नास्त्वगादयः येषां ते तथाविधाः । घनत्वादिभिस्त्वगादीनां यथासंभवं संबंधः । प्रसन्नत्वचः–उन्नतस्कन्धाः, घनग्रीवाः, प्रसन्नमुखाः, घनवक्षसः, सुगन्धास्याः, मधुरस्वराः, वलीपलितव्यंगरहिताश्च । वल्यस्त्वक्संकोचः, व्यंगानि–मुखे श्यावानि मण्डलानि । स्नेहगण्डूषधारणादोष्ठस्फुटनादयो न भवन्ति । पारुष्यमोष्ठयोरेव, तथा आस्यशोषः, दन्तरोगः, स्वरहानिश्च । तथा अरोचकादिनाशकामेन खदिराद्यम्बुकवलग्रहः कार्यः । तथा वक्त्रलाघवकामेन उष्णोदकगण्डूषः । कवलगण्डूषयोर्भेदो गण्डूषादिविधौ वक्ष्यते । प्रसेक आस्यस्रावः ९२

**टिप्पणी**-अणिवति–एतदणुतैलविधानं तूपरिष्टादस्मिन्सूत्रस्थाने एकोनत्रिंशाध्याये 'माञ्जिष्ठामधुक—' इत्यादिना वक्ष्यति स्वयमेव ग्रन्थकारः । गण्डूष इति–मुखे पूर्णे सति यः सञ्चारयितुमशक्यः स्यात्स गण्डूष उच्यते । कवल इति–मुखे अपूर्णे सति यः संचारयितुं शक्यते स कवलः । अयमेव हि गण्डूषकवलयोर्भेदः । खदिरेत्यादि–क्षीरिवृक्षाः–क्षीरप्रधानवृक्षाः । ते च न्यग्रोधोदुम्बराश्वत्थप्लक्षादयः ९२

११ प्रायोगिकधूमसेवनम् ।

९३–प्रायोगिकं ततो धूमं गन्धमाल्यादि चाचरेत्
धूमादस्योर्ध्वजत्रूत्था[१७] न स्युर्वातकफामयाः । ३१

९३–अनन्तरं वक्ष्यमाणलक्षणं प्रायोगिकं धूमं गन्धमाल्यादि चाचरेत् । आदिशब्देन वासःप्रभृतीनां ग्रहणम् । धूमपस्य किं भवति ? जत्रो रक्षकसन्ध्यभिधानस्य, ऊर्ध्वमुपरि शिरसि वातकफजा रोगा न भवन्ति ९३

**टिप्पणी**—टीकायां – वक्ष्यमाणलक्षणमिति – सूत्रस्थाने त्रिंशाध्याये इति भावः । प्रयोगः–स्वस्थस्य सततोपयोगः, तत्र साधुः प्रायोगिकः ९३

१२ अञ्जनादिक्रमनिदानम् ।

९४–अञ्जनोत्क्लेशितं नस्यैः, कवलैर्नावनेरितम् ॥
धूमेन कवलोत्क्लिष्टं क्रमाद्वातकफं जयेत् । ३२

१३ गन्धमाल्यादिधारणम् ।

गन्धमाल्यादिकं वृष्यमलक्ष्मीघ्नं प्रसाधनम् ॥

९४–नन्वञ्जनादीनामेवंभूतः क्रमः किमर्थमाश्रित इत्याह—अञ्जनोत्क्लेशितमित्यादि । गन्धमाल्यादिकमुपयुज्यमानं वृष्यमलक्ष्मीघ्नं कान्तिकरं च भवति ९४

१४ जीर्णवस्त्रधारणादिनिषेधः ।

९५–वासो न धारयेज्जीर्णं मलिनं रक्तमुल्बणम् । ३३
माल्यं न लंबं न बहिर्न रक्तं जलजादृते ॥
नैव चान्येन विधृतं वस्त्रं पुष्पमुपानहौ । ३४

९५–अन्यच्चेदमिदं कुर्यात् । जीर्णं जीर्णप्रायं वासः परिधानं न धारयेत् । मलिनं रक्तमुल्बणं च, उन्नद्ध[उल्बण] मुद्भटं माल्यं पुष्पं, लंबं स्रद्दामादि, न धारयेत् । न बाहिः राजमार्गे दृश्यमानं वा । जलजं वर्जयित्वा रक्तमन्यन्माल्यं न धारयेत् । प्रसंगेनाह–अन्येन विधृतं वस्त्रं न धारयेत् । पुष्पमुपानहौ चर्मपादुके तथा ९५

१५ ताम्बूलसेवनम् ।

९६–रुचिवैशद्यसौगन्ध्यमिच्छन्वक्त्रेण धारयेत् ॥
जातीलवङ्गकर्पूरकंकोलकटुकैः सह । ३५
तांबूलीनां किसलयं हृद्यं पूगफलान्वितम् ॥
रक्तपित्तक्षतक्षीणरूक्षोत्कुपितचक्षुषाम् । ३६
विषमूर्च्छामदार्तानामपथ्यं शोषिणां च तत् ॥
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे । ३७
द्विपत्रमेकं[१८] पूगं च सचूर्णखदिरं च-तत् ॥

९६–रुच्यादिकमिच्छन्वक्त्रेण जात्यादिभिः सह पूगफलान्वितं तांबूलीनां नागलतानां किसलयं–पल्लवं धारयेत् । रक्तपित्ताद्युपहतस्य शोषिणश्च तत्सेवनमपथ्यम् । रूक्षेण हेतुनोत्कुपितानि चक्षूंषि येषां ते रूक्षोत्कुपितचक्षुषः, तेषाम् अथवा रूक्षाणामुत्कुपितचक्षुषां च । सुबोधम् ९६

**टिप्पणी**–शोषिणामिति-शोषो मुखशोषो राजयक्ष्मा च

[१४] 'णार्थे रसा'–क. [१५] 'रक्षीरवृ'–क. घ. [१६] 'रिमेदोम्बुक'–क. [१७] धूमपस्योर्ध्वज'–घ. [१८] द्विपत्रमेकपू'–क.

१६ जीविकार्थं यत्नः ।

**९७–उत्तिष्ठेत ततोऽत्यर्थमर्थेष्वर्थानुबन्धिषु । ३८**
**निन्दितं दीर्घमप्यायुरसन्निहितसाधनम् ॥**
**कृषिं, वणिज्यां, गोरक्षामुपायैर्गुणिनं नृपम् । ३९**
**लोकद्वयाविरुद्धां च धनार्थी संश्रयेत् क्रियाम् ॥**
**मुक्तवेगश्च गमनस्वप्नाहारसभाश्रियः । ४०**

९७–ततोऽनन्तरमर्थानुबन्धिषु धनहेतुषु कार्येष्वत्यर्थमुत्तिष्ठेत यत्नो[त्ना]चेष्टेत । यस्माद्दीर्घमप्यायुरसन्निहितसाधनं दारिद्र्ययुक्तं निन्दितं गर्हितम् । तथा धनार्थी कृष्यादिकमारभेत । अन्यां च क्रियां धनलाभहेतुकीमुभयलोकाविरुद्धां सतीमाश्रयेत् । तथा मुक्तवेग उत्सृष्टमूत्रपुरीषादिवेगश्च अध्वगमनादिकम् ९७

१७ निष्क्रमणविधिः ।

**९८–पाणिनालभ्य निष्क्रामेद्रत्नपूज्याज्यमङ्गलम् ॥**
**सातपत्रपदत्राणो विचरेद्युगमात्रदृक् । ४१**
**निशि चात्ययिके कार्ये दण्डी मौली सहायवान् ॥**
**प्रावृत्य पर्यटेद्रात्रौ न प्रावृत्य शिरोऽहनि । ४२**

९८–तथा रत्नादिकमालभ्य सपूजं संस्पृश्य, कार्यार्थं निष्क्रामेत् । निर्गतश्च छत्रपादत्राणसंयुक्तो युगमात्रदृग्विचरेत् । युगो हस्तद्वयम्, अन्ये हस्तचतुष्टयं युगमाहुः; तन्मात्रमग्रतः पश्यन्कृमिस्थाण्वादिभयात् । निशि–रात्रावात्ययिके अतिप्रयोजनवति कार्ये,**दण्डी मौली सहायवांश्च** विचरेत् । अर्थबलादुक्तम्–अनात्ययिके कार्ये नैव विचरेन्निशीति । मौली–वेष्टितशिराः । तथा रात्रौ शिरः पिधाय पर्यटेत्, न त्वहनि शिरः पिधाय पर्यटेत्परिभ्रमेदिति ९८

१८ चैत्यादिस्थानानातिक्रमः ।

**९९–चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ॥**
**नाक्रामेच्छर्करालोष्टबलिस्नानभुवो न च । ४३**

९९–चैत्यादीनां छायां नाक्रामेत् पादाभ्यां न लंघयेत् । चैत्यः प्रसिद्धः, पूज्यो गुर्वादिः, अशस्तममङ्गल्यं वस्तु, तथा भस्मादिकमपि । तथा शर्करादिकमपि । शर्करा–शिलाचूर्णम्, बलिर्भूतोपहारः, स्नानभूः–यत्र कश्चित्स्नातः ९९

१९ मध्याह्नादौ चतुष्पथादिसेवननिषेधः ।

**१००–मध्याह्ने सन्ध्ययो रात्रावर्धरात्रे चतुष्पथम् ॥**
**न सेवेत न शर्वर्यां [19]वृक्षचैत्यं न चत्वरम् । ४४**
**[20]सूनाटवीशून्यगृहश्मशानानि दिवाऽपि न ॥**

१००–तथा मध्याह्नादिषु कालेषु चतुष्पथं न सेवेत । तथा शर्वर्यां सर्वस्यामपि रात्रौ, वृक्षादिकं न सेवेत । चत्वरं त्रिपथमाहुः, ग्रामाद्बहिरवतारास्रयमन्ये, ग्रामीणसमाजस्थानमित्यन्ये, यस्तु लोके चत्वर इति प्रसिद्धः । सूनाटव्यादिकं दिवापि न सेवेत । सूनाटवी–वधारण्यम् १००

२० शवहुंकारादीनां प्रतिषेधः ।

**१०१–न[21] हुंकुर्याच्छवं पूज्यं प्रशस्तान्मंगलानि च । ४५**
**नापसव्यं परिक्रामेन्नेतराण्यनुदक्षिणम् ॥**
**चतुष्पथं नमस्कुर्यात्प्रज्ञातांश्च वनस्पतीन् । ४६**
**न व्यालव्याधिताशस्तैर्नादान्तक्षुत्पिपासितैः ॥**
**न च्छिन्नपुच्छैर्नैकाक्षैर्गोपृष्ठेन च न व्रजेत् । ४७**
**नातिप्रगेऽतिसायं[22] वा न नभोमध्यगे रवौ ॥**
**नासन्निहितपानीयो नातितूर्णं न संततम् । ४८**
**न शत्रुणा नाविदितैर्नैको नाधार्मिकैः सह ॥**

१०१–शवं न हुंकुर्यात्–मृतशरीरं हुंकारेण न तर्जयेत् । पूज्यादीनि चापसव्यं वामं परित्यज्य न गच्छेत् । इतराणि तद्विपरीतानि दक्षिणं त्यक्त्वा न गच्छेत् । चतुष्पथं, प्रज्ञातान् प्रसिद्धांश्च वनस्पतीन्–वृक्षान्, नमस्कुर्यात् । व्यालादिभिश्च वाहैर्न व्रजेत् । व्यालः–दुष्टः,क्षुद्रः, अतिपूर्वाह्णादिकाले च न व्रजेत् । असन्निहितपानीयः–अगृहीतपानीयः, तूर्णं–वेगेन, न सन्ततं बहुकालमपि तु विश्रम्यैव गन्तव्यमित्यभिप्रायः, शत्रुणा सह न व्रजेत्, अविदितैरविज्ञातस्वरूपैः सह न व्रजेत्, एकाकी न व्रजेत्, अधार्मिकैश्च सह १०१

**१०२–दद्याद्वर्त्मार्तवृद्धस्त्रीभारिचक्रिद्विजन्मने । ४९**
**स्नानभोजनपानानि वाहेभ्यो नाचरेत्पुरः॥**
**नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् । ५०**
**नारोहेद्विषमं शैलं नावं संशयितां, तरुम् ॥**
**निपातयेन्न लोष्टेन न फलेन फलं द्रुमात् । ५१**
**न वार्यमाणः प्रविशेन्नाद्वारेण न चासने ॥**
**स्वयं तिष्ठेत्परगृहे, युक्तनिद्रं न बोधयेत् । ५२**
**नाचरेत्पाणिवाक्पादद्धमेढ्रोदरचापलम् ॥**
**त्रिः पक्षस्य कचश्मश्रुनखरोमाणि वर्धयेत् । ५३**
**न स्वहस्तेन दन्तैर्वा स्नानं चानुसमाचरेत् ॥**

१०२–तथा आर्तादिभ्यो वर्त्म दद्यात्–मार्गं त्यजेत् । भारी–भारवाहकः, चक्री–गन्त्र्यादिः। **वाहेभ्यः पुरः स्नानादिकं नाचरेत्**। पूर्वं स्ववाहानश्वादीन् स्नपयेत भोजयेत पाययेच्च पश्चात्स्वयं स्नायात भुञ्जीत चेत्यर्थः । बाहुभ्यां च नदीं न तरेत् । अग्निस्कन्धाभिमुखो न गच्छेत । अग्निस्कन्धो महानग्निराशिः । विषममतिनिम्नोन्नतप्रदेशं, शैलं–पर्वतं, नारोहेत् । संशयितामविज्ञातस्वरूपां नावं, वृक्षं च सर्वं नारोहेत् । द्रुमाद्वृक्षात्, लोष्टेन, फलेन वा फलं न पातयेत् । परगृहे वार्यमाणः प्रतिषिध्यमानप्रवेशो न प्रविशेत् । अप्रसिद्धेन मार्गेण न प्रविशेत् । प्रविष्टश्च अदत्ते आसने न स्वयं तिष्ठेत्–नोपविशेत् । युक्ता अविरुद्धा निद्रा यस्य तं न बोधयेत् । पाण्यादिचापलं च नाचरेत् । हस्तचापलं–वाद्यानुकरणादि, पादचापलमप्येवंप्रकारमेव, वाक्चापलं यत्किञ्चिनवादित्वं,दृक्चापलं परयुवत्यादिदर्शनं, मेढ्रचापलं[म]प्रासङ्गिकानुचितयोषिद्गमनादि, उदरचापलं–भोजनगृध्नुता । पक्षस्य मध्ये त्रीन् वारान् केशादीन् कर्तयेत्, स्वहस्तेन दन्तैर्वा न कर्तयेत् । कर्तयित्वा च स्नानमाचरेत् १०२

**टिप्पणी**—त्रिःपक्षस्येति–पञ्चभिः पञ्चभिर्दिनैः । यदि वा पतति ऋतुर्मासाभ्यां पक्षरूपाभ्यामिति मासोऽपि पक्षाभिधेयः । उक्तं च क्षारपाणौ–'त्रिर्मासस्य रोमनखान्संहारयेत्' इति दिक् १०२

---

१९ 'क्षचैत्याच च'-क. २० शून्याट'-क. २१ 'यांच्छवं पू'-क. ख. २२ 'प्रगे नातिसा'-क.



अभ्यङ्गः ( सू. १०३ )



स्नानम् ( सू. १०७ )

२१ अभ्यङ्गविधिः ।

**१०३–अथ जातान्नपानेच्छो मारुतघ्नैः सुगन्धिभिः ।**
**यथर्तुसंस्पर्शसुखैस्तैलैरभ्यङ्गमाचरेत् ॥ ५४**
**अभ्यङ्गो वातहा पुष्टिस्वप्नदार्ढ्यबृहत्वकृत् ।**
**दग्धभग्नक्षतरुजाक्लमश्रमजरापहः ॥ ५५**
**रथाक्षचर्मघटवद्भवन्त्यभ्यङ्गतो गुणाः ।**
**स्पर्शनेऽभ्यधिको वायुः स्पर्शनं च त्वगाश्रयम् ॥**
**त्वच्यश्च परमभ्यङ्गो यस्मात्तं शीलयेदतः ।**
**शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥ ५७**
**स केश्यः शीलितो मूर्ध्नि कपालेन्द्रियतर्पणः ।**
**हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम् ॥ ५८**
**पादाभ्यङ्गस्तु तत्स्थैर्यनिद्रादृष्टिप्रसादकृत् ।**
**पादसुप्तिश्रमस्तंभसंकोचस्फुटनप्रणुत् ॥ ५९**
**वर्ज्योऽभ्यङ्गः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः ।**

१०३–अथानन्तरमनन्तरोक्तप्रकारेण कालमतिवाह्य उत्पन्नान्नपानेच्छोऽभ्यङ्गमाचरेत् । केनेत्याह–तैलैः किंभूतैः । **वातघ्नैः सुगन्धिभिश्च** ऋत्वनतिक्रमेण संस्पर्शसुखकरैश्च उष्णकाले शीतैः, शीतकाले चोष्णैरित्यर्थः। अभ्यङ्गगुणानाह–**अभ्यङ्गेति** । दग्धादित्रयस्य रुजया संबन्धः । क्षतः शस्त्रादिना । तथा रथाक्षादिवदभ्यङ्गाद्गुणा भवन्ति, रथाक्षं–चक्रनाभिः,तस्य चर्मघटयोश्च यथा अभ्यङ्गेन श्लक्ष्णत्वं,यथा मार्दवं, यथा च दार्ढ्यं, तथा शरीरस्यापि । यथा च रथाक्षस्य स्नेहस्पर्शनमात्रेण,चर्मणो मर्दनेन, घटस्य स्नेहसंस्कारेणेति। यतश्च परमत्यर्थं त्वच्यश्चाभ्यङ्गः, तस्मादभ्यङ्गमाचरेत् । कथमित्याह **स्पर्श इति** । स्पर्शनं त्वगाश्रितम् । स्पर्शने चावश्यं वायुना भवितव्यम् ।अतो वाताऽऽबाधभयादित्यर्थः। शिरःप्रभृतिषु तमभ्यङ्गं विशेषेण शीलयेत्। किमर्थमित्याह–सोऽभ्यङ्गः मूर्ध्नि शिरसि, शीलितः केश्यः केशेभ्यो हितः, कपालस्येन्द्रियाणां च तर्पणः–तृप्तिकरः । स्नेहेन कर्णपूरणं हनुमन्यादिशूलघ्नम् । पादादिषु तमभ्यङ्गं विशेषेण शीलयेत् । पादाभ्यङ्गस्तु तत्स्थैर्यादिकृत्पादसुप्त्यादिघ्नश्च । सुप्तिरिव सुप्तिः अभिघाताद्यचैतन्यम् । सर्वोऽभ्यङ्गः कफग्रस्तादिभिर्वर्ज्यः–न सेव्यः । कफग्रस्तः श्लेष्मरोगार्तः । ग्रस्तग्रहणमतिशयोपलक्षणार्थम् । कृतसंशुद्धिः–वमनविरेचनादिभिरचिरकालनिःसृतदोषः १०३

**टिप्पणी**—रथाक्षेत्यादि–अक्षः–रथस्य चक्रनिबन्धनम्। स्पर्शनेऽभ्यधिको वायुरिति–तथा ह्युक्तं चरकेण ‘तत्रानुमानगम्यानां पञ्चमहाभूतविकारसमुदायात्मकानामपि सतामिन्द्रियाणां–तेजश्चक्षुषि, खं श्रोत्रे, घ्राणे क्षितिः, आपो रसने, **स्पर्शनेऽनिलो** विशेषेणोपपद्यते’ (सू. ८·१४) इति । त्वच्यश्चेति–शरीरसंतर्पणकालं केचिदत्र पठन्ति–‘रोमान्तेष्वनुदेहस्य स्थित्वा मात्राशतत्रयम् । ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति त्वचम् । रक्तं गच्छति मात्राणां शतैः पञ्चभिरेव तु । षड्भिर्मांसं प्रपद्येत मेदः सप्तभिरेव च । शतैरष्टाभिरस्थीनि मज्जानं नवभिर्व्रजेत् । तत्रस्थाञ्शमयेद्रोगान्वातपित्तकफात्मकान्’ (डल्हणः सु. चि. २४–३०), इति १०३

२२ व्यायामः ।

**१०४–शरीरायासजननं[23] कर्म व्यायाम उच्यते ॥ ६०**
**लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ।**
**विभक्तघनगात्रत्वं व्यायामादुपजायते ॥ ६१**
**वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् ।**
**अर्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः**
**शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ।**

१०४—अनन्तरं व्यायाम शीलयेत् । क उच्यते व्यायामः ? आह–**शरीरेति** । येन कर्मणा क्रियमाणेन शरीरमायस्यते तद्व्यायामशब्देन वाच्यम् । तेनैतदुक्तं भवति–कस्य चिच्चंक्रमणमेव व्यायामः, कस्यचिदन्यदाधिकमिति । तेन कृतेन किं भवतीत्याह—**लाघवमित्यादि** । लाघवं देहस्य लघुत्वम् । अन्यत्सुबोधम् । वातपित्तरोगार्तो बालो वृद्धश्च व्यायामं त्यजेत् । स च व्यायामो बलवद्भिः पुरुषैः शीतकाले हेमन्तशिशिरयोः, वसन्ते च स्निग्धान्नभोजिभिः सद्भिरर्धशक्त्या (सु. चि. २४-४७) निषेवणीयः यावच्छक्यं ततोऽर्धमिति। अन्यस्मिन्पुनःऋतौ स्वल्पमेव१०४

**टिप्पणी**—शरीरेति। तथा चोक्तं चरकेण–‘शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्धिनी। देहव्यायामसंख्याता मात्रया तां समाचरेत् । (सू. ७·३१) इति । चेष्टेति–या च इष्टा–अभिप्रेता, तेन भारहरणाद्यनिष्टा कार्यवशात्क्रियमाणा चेष्टा निरस्यते । चंक्रमणरूपा तु क्रिया प्राप्यते । तथा चोक्तं सुश्रुतेन–‘यत्तु चंक्रमणं नातिदेहपीडाकरं भवेत् । तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् (चि. २४–८०) इति । चंक्रमणं कुटिलगत्या भ्रमणम् १०४

**१०५–तं कृत्वानुसुखं देहं मर्दयेच्च समंततः॥ ६३**
**तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ।**
**अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ ६४**
**व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसम् ।**
**गजं सिंह इवाकर्षन् भजन्नति विनश्यति ॥ ६५**

१०५—तं च व्यायामं कृत्वा यथासुखं देहं मर्दयेत्सर्वम् । यथोक्तप्रमाणातिक्रमादतिव्यायामेन कासादिरोगोत्पत्तिः । प्रसंगेनाह–व्यायामादीनां साहसमतिसेवां भजन्पुरुषो विनश्यति । यथा सिंहो विक्रमवानतिस्वल्पबलः महाबलं दन्तिनमाकर्षन्स्वयमेव विनश्यतीति १०५

२३ उद्वर्तनम् ।

**१०६–उद्वर्तनं कफहरं मेदसः प्रविलायनम्[24] ।**
**स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥ ६६**

१०६–अनन्तरं कषायद्रव्यैरुद्वर्तनं कुर्यात । तद्गुणानाह–**कफहरमित्यादि** * १०६

२४ स्नानम् ।

**१०७–दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ।**
**कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ॥ ६७**

---

२३ °सजनकं–क. घ. २४ °विलापनम्–ग. * प्रविलायनं–द्रवीकरणम् । द्रवीकृत्य मेदसः शोषणमित्यर्थः ।

*उष्णाम्बुनाधःकायस्य परिषेको बलावहः ।
तेनैव [25]तूत्तमाङ्गस्य बलहृत्केशचक्षुषाम् ॥ ६८
नाऽनाप्लुत्य शिरः स्नायान्न जलेऽल्पे न शीतले ।
स्नानोदकावतरणस्वप्नान्नग्नो न चाचरेत् ॥ ६९
पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिणि ।

१०७–तदनु स्नानमाचरेत् । तच्चाग्न्युदीरणत्वादियुक्तं कण्ड्वादिघ्नं च । उष्णाम्बुनेत्यादि सुबोधम् । शिरस्यनाप्लुते असिक्ते, न स्नायात् । जले नद्यादिस्थे स्वल्पे शीतले च न स्नायात् । नग्नः अगृहीतपरिधानः, स्नानमुदकावतरणं च नाऽऽचरेत् । तथा स्वप्नं च नग्नो नाचरेत् । परवारिणि अन्यकृते तटाकादौ पञ्च पिण्डाननुद्धृत्य न स्नायात् । पञ्चभिः पिण्डैरुद्धृतैरात्मनैव स्नानार्थं जलाशयः कृतो भवति । १०७

टिप्पणी—वृष्यलक्षणम् उ. अ. ५०

१०८–नात्मानमीक्षेत जले न तटस्थो जलाशयम् ॥ ७०
न प्रतिस्फालयेदम्बु पाणिना चरणेन वा ।
स्नात्वा न मृज्याद्गात्राणि धुनुयान्न शिरोरुहान् ॥
निवसीतार्द्र एवाशु सोष्णीषे धौतवाससी ।
न त्वम्बरं पूर्वधृतं न च तैलवसे स्पृशेत् ॥ ७२
वासोऽन्यदन्यच्छयने निर्गमे देवतार्चने ।

२५ स्नाने वर्ज्याः ।

स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ॥ ७३
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ।

१०८–दर्पणवदात्मानं जले नेक्षेत । तटस्थः—कूलस्थो, जलाशयं कूपादिकं नेक्षेत । पाणिना पादेन वा जलं न प्रतिस्फालयेत् नाभिहन्यात् । स्नात्वा च पाण्यादिनाऽङ्गानि न परिमार्जयेत् । केशांश्च स्नात्वा न धुनुयात् । आर्द्र एव धौतोष्णीषं धौतवाससी च निवसीत–परिदध्यात् । उष्णीषः शिरःपट्टकम् । स्नात्वा च. स्नानकालधृतं वासो न स्पृशेत् । तैलं वसां च स्नात्वा न स्पृशेत् । शयनाद्यवसरे अन्यदन्यद्वासः परिवर्तयेत् । निर्गमे देवतार्चने चान्यदन्यद्वासो निवसीत । अर्दिताद्यार्तानां स्नानं गर्हितं–निन्द्यम् । आध्मानं–वायुना जठरापूरणं, पीनसो–नासास्रावः । १०८

२६ भोजनविधिः ।

१०९–अन्नपानविधानेन भुञ्जीतान्नं विनाऽत्ययात् ॥ ७४
अभिनन्द्य प्रसन्नात्मा हुत्वा दत्त्वा च शक्तितः ।
पाकं सजलमेकान्ते यथासुखामिति[26] ब्रुवन् ॥ ७५
प्रयच्छेत्सर्वमुद्दिश्य पाचयेन्नान्नमात्मने ।
नाद्यमद्यान्मुमूर्षूणां मृतानां दुःखजीविनाम् ।
स्त्रीजितक्लीबपतितक्रूरदुष्कृतकारिणाम् ।
गणारिगणिकासत्रधूर्तानापणिकं[27] च न ॥ ७७
नोत्सङ्गे भक्षयेद्भक्ष्यान्जलं नाञ्जलिना पिबेत् ।
सर्वं च तिलसंबद्धं नाद्यादस्तमिते रवौ ॥ ७८
न भुक्तमात्र आयस्येन्न निषिद्धं भजेत्सुखम् ।

१०९–ततोऽनन्तरमन्नपानविधानेनान्नं भुञ्जीत । अत्यये तु यथेच्छमेव । प्राप्तमाहारमभिनन्द्य प्रसन्नात्मा-प्रसन्नहृदयः, हुत्वा चाग्निमुखे, शक्तितश्च दत्त्वा–कृपणादिभ्यो यथाशक्ति दत्त्वा सर्वं भूतग्राममुद्दिश्य, एकान्ते पाकं सर्वमाहार्यं सोदकं यथासुखामिति मन्त्रपदमिव ब्रुवन् दद्यात् । दानादिव्यवच्छेदेनात्मार्थमन्नं न पाचयेत् । मुमूर्षुप्रभृतीनामन्नं नाद्यात् । गणान्नं बह्वायत्तमन्नं नाद्यात् । आपणिको वणिक् । उत्सङ्गे गृहीत्वा भक्ष्यान्न भक्षयेत् । अञ्जलिना पाणिसंपुटेन जलं न पिबेत् । रवौ–दिनकृति, अस्तमिते तिलसंबद्धं सर्वं भक्ष्यं नाद्यात् । भोजनादुत्थितः शरीरायास न कुर्यात् । स्मृत्यादिप्रतिषिद्धं सुखं न सेवेत १०९

२७ सद्वर्तननियमाः ।

११०–धर्मोत्तराभिरर्थ्याभिः कथाभिस्त्रिगुणात्मभिः ॥
मध्यं दिनस्य गमयेदिष्टाशिष्टसहायवान् ।

११०–दिनस्य च मध्यमिष्टैः शिष्टैश्च सहायैर्युतः कथाभिर्गमयेत् । किंभूताभिः ? धर्मप्रधानाभिः, मध्यार्थाभिः, अर्थबलात् स्वल्पकामाभिः । एवं त्रिगुणात्मभिः–त्रिगुणो धर्मादीनां स्थानवृद्धिक्षयलक्षणः ११०

१११–न लोकभूपविद्विष्टैर्न संगच्छेत नास्तिकैः ॥ ८०
कलिवैररुचिर्न स्याद्धीरः संपद्विपत्सु ।
श्रुतादन्यत्र संतुष्टस्तत्रैव च कुतूहली ॥ ८१
क्षान्तिमान्दक्षिणो दक्षः [28]सुसमीक्षितकार्यकृत् ।
ह्रीमान् धीमान्महोत्साहः संविभागी प्रियातिथिः
अक्षुद्रवृत्तिर्गंभीरः साधुराश्रितवत्सलः ।
दाता पितृभ्यः पिण्डस्य यष्टा होता कृपात्मकः ।
अनुज्ञाता सुवार्तानां दीनानामनुकम्पकः ॥ ८३
आश्वासकारी भीतानां क्रुद्धानामनुनायकः ।
पूर्वाभिभाषी सुमुखः सुशीलः पूज्यपूजकः ॥ ८४
वित्तबन्धुवयोविद्यावृत्तैः पूज्या यथोत्तरम् ।

१११–लोकद्विष्टै राजद्विष्टैश्च सह संगतिं न कुर्यात्, नास्तिकैश्च । अदृष्टं नास्तीति वोद्धारो नास्तिकाः । कलहं वैरं च न रोचयेत् । संपत्स्वापत्सु च धैर्यमवलम्बेत । शास्त्रश्रवणादन्यत्राशनादिके संतुष्टः श्रुते त्वसंतुष्टः । उपनतादधिकेनाकांक्षा–असन्तोषः । तत्रैव च श्रुते शेषविषये कुतूहलवान् । सर्वभूतेषु क्षान्तिमत्त्वादियुक्तो भवेत् । दक्षिणः-पक्षपाती । अन्यत्सुबोधम् । पूज्यांश्च पूजयेत् । अत आह–वित्तेत्यादि । (१) धनवान् पूज्यः, (२) अतोऽधिकं बन्धुः, (३) अतोऽधिकमधिकवयाः, (४) ततोऽधिकं विद्यावान्, (५) ततोऽधिकं शीलवान् पूज्य इति यथोत्तरार्थः । यो यस्मादुत्तरः स तस्मात्पूज्य इति १११

११२–आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् ॥ ८५
[29]सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम् ।
धर्म्यमर्थ्यं प्रियं तथ्यं मितं पथ्यं वदेद्वचः ॥ ८६
नात्मानमवजानीयान्न सूयान्न च पीडयेत् ।
न हीनानवमन्येत[30] वृत्तार्थाङ्गबलश्रुतैः ॥ ८७
नारुंतुदः स्यान्न क्रूरो न तीक्ष्णो नोपतापवान् ।
हेतावीर्ष्येन्न तु फले पापं पापेऽपि नाचरेत् ॥ ८८

२५ 'व चोत्त°'–क. २६ 'सुखमविब्रुवन्–ख. २७ 'त्रधूर्तानां पाणिकं न च–क. ख., 'त्रधूर्तानां पणिनां न च–घ. २८ 'समीरितका°'–क. २९ 'रामप्युपेक्षेत नर°'–क., 'रामभ्युपेक्षेत न°'–ख. ३० 'त वृत्त्यर्थाङ्गब°'–क. ख. *सु.चि.२४-५९

परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत् ।
अन्यत्र पुत्राच्छिष्याद्वा शासनार्हाद्धिताशयः ॥८९
नृत्यवादित्रगीतादि नोल्बणमाचरेत्क्रियाम् । *
प्रसिद्धकेशवाग्वेषशमसान्त्वपरायणः ॥ ९०
ऊर्ध्वं नाभेः शरीरस्य स्पृशेन्नाधरवाससा ।
न कुर्यान्मिथुनीभूय शौचं प्रति विलम्बनम् ॥
नासंवृतमुखो हास्यक्षवोद्गारविजृंभणम् ।
पाणिद्वयेन युगपत्कण्डूयेन्नात्मनः शिरः ॥ ९२
वहेन्न भारं शिरसा युगपच्चाग्निवारिणी ।
नासिकां न विकुष्णीयाद्दशनान्न विघट्टयेत् ॥ ९३
कुर्याद्विलेखनच्छेदभेदास्फोटनमर्दनम् ।
[³¹नाऽकार्ये न च कार्येऽपि मुखाङ्गनखवादनम् ।]
पादं पादेन नाक्रामेन्न कण्डूयेन्न शौचयेत् ॥ ९४
न कांस्यभाजने तौ च नोपविष्टः प्रसारयेत्* ।

११२–आत्मद्रोहाद्ियुक्तमत्यन्तं कृपया सत्पथयोजनादिना, परमनुकम्पेत । सर्वस्य च धर्म्यादिकं वाक्यं वदेत् । धर्मादनपेतं धर्म्यं, अर्थादनपेतमर्थ्यं, प्रियं श्रोतुः, तथ्यं सत्यं, मितं स्वल्पं, पथ्यं हितानुबन्धि । आत्मनः शरीरस्यावज्ञां न कुर्यात् । न चात्मानं स्तूयात् । न च पीडयेत् । वृत्तादिहीनानामवमानो न विधेयः । अरुंतुदो–मर्मस्पृक् । उपतापः–परनिर्बन्धः । हेतौ सेवादिके ईर्ष्येत् । ईर्ष्या नाम–यत् परस्य भूतं तत् कथं मम नेति बुद्धिः । न तु तत्फले अर्थादिके, फलार्थिना हि तत्कारणे प्रयतितव्यमित्यर्थः । पापशीलेऽप्यभद्रं नाचरेत् । परस्य च दण्डं नोद्यच्छेत् । क्रुद्धश्च सन् परस्य एनं दण्डं न पातयेत्, पुत्रं शासनार्हं शिष्यं चान्यत्र वर्जयित्वा । अशासनार्हयोस्तयोरपि न निपातयेत् । हिताशयस्तद्धितकामः । नृत्तादिक्रियामुल्बणामतिमात्रं नाचरेत् । देशकालादप्रसिद्धान् केशादीन् न धारयेत् । नाभेरुपरिशरीरमधःकायवाससा न स्पृशेत् । कृतव्यवायश्च शीघ्रं शौचमाचरेत् । अस्थगितास्यो हास्यादिकं नाचरेत् । हस्तद्वयेन युगपच्छिरो न कण्डूयेत् । अन्यत्सुबोधम् । निष्प्रयोजनं विलेखनादिकं नाचरेत् । आस्यादिवादनं सर्वथैव न कुर्यात् । पादेन पादं नाक्रामेत् । न च कण्डूयेत् । न च शौचयेत् । तौ पादौ कांस्यमये भाजने कृत्वा न शौचयेत् ११२

११३–अभीक्ष्णं निर्मलान् दध्यान्नखपादमलाशयान् ।
³²नासमिद्धमुपासीत हुताशं नैव चाशुचिः ।
नानुवातं ³³न विवृतो न क्लान्तो नान्यमानसः ॥
धमेन्नास्येन न स्कन्देन्नाधः कुर्यान्न पादतः ।
सततं न निरीक्षेत चलसूक्ष्माप्रियाणि च ॥ ९७
नाप्रशस्तं न विण्मूत्रं न दर्पणममार्जितम् ।
उद्यन्तमस्तमायान्तं तपन्तं प्रतिमागतम् ॥ ९८
उपरक्तं च भास्वन्तं वाससा वा तिरोहितम् ।
नान्यदप्यतितेजस्वि न क्रुद्धस्य गुरोर्मुखम् ॥ ९९
स्त्रीं न³⁴ स्रवन्तीं नोदक्यां न नग्नां नान्यसंगताम् ।
न³⁵ पत्नीं भोजनस्वप्नक्षुतजृंभादुरासने ॥ १००
शयीत नैकशयने न चाश्नीयात्तया सह ।
तामनीर्ष्यंश्च गोपायेत् ³⁶स्वैरिणीं नाधिवासयेत् ॥
नोच्छिष्टस्तारकाराहुतुहिनांशुदिवाकरान् ।
पश्येन्न यायान्न पठेन्न स्वप्यान्न स्पृशेच्छिरः ॥ १०२
पाययन्तीं चरन्तीं वा नान्यस्मै गां निवेदयेत् ।
अर्केन्दुपरिवेषोल्काशतक्रतुधनूंषि च ॥ १०२
नान्यद्देवार्चने कर्म कुर्याद्धावेन्न वर्षति ।
तिथिं पक्षस्य न ब्रूयात्, नक्षत्राणि न निर्दिशेत्
नात्मनो जन्मलग्नर्क्षधनसारं गृहे मलम् ।
प्रकाशयेन्नावमानं न च निःस्नेहतां प्रभोः ॥ १०५

११३–नखादीन् निर्मलान् दध्याद्धारयेत् । मुखेन हुताशनमग्निं न धमेत्–मुखवातेन नोदीरयेदित्यर्थः । न स्कन्देत्–न विकिरेत् शयनासनादिष्वधो न कुर्यात् । उद्यदाद्यवस्थास्थितं सूर्यं नेक्षेत । उपरक्तो–राहुच्छादितः । अन्यदप्य तितेजोयुक्तं नेक्षेत । गुरोः क्रुद्धस्य मुखं नेक्षेत । स्रवन्तीं मूत्रयमाणां स्त्रियं नेक्षेत । उदक्यां–रजस्वलामपि नेक्षेत । अन्यपुरुषमिथुनीभूतां च नेक्षेत । भोजनादिकां क्रियां कुर्वन्तीं दुरासने चोपविष्टां स्वपत्नीं नेक्षेत । न च स्वभार्यया सहैकशयने शयीत । तया सह नाश्नीयात् । ईर्ष्यां चाकुर्वन् स्वगृहिणीं रक्षेत् । स्वैरिणीं च स्त्रियं स्वगृहे नाधिवासयेत्, भर्तारं जीवन्तं परित्यज्य स्वेच्छया गृहान्निर्गता स्वैरिणी । उच्छिष्टः–अप्रयतः, तारकादीन् न पश्येत् । यानादिकं च न कुर्यात् । पाययन्तीं वत्सं, चरन्तीं भक्षयन्तीं सस्यादि, गामन्यस्मै न दर्शयेत् । अर्केन्दुपरिवेषादिकं चान्यस्मै न दर्शयेत् । परिवेषो मण्डलम्, देवार्चनप्रसंगे अन्यत् कर्म न कुर्वीत । वर्षति पतति पानीये, न धावेत् । पक्षस्य तिथिं न ब्रूयात्—अद्यामावास्येति न कस्मैचित् कथयेदित्यर्थः । पक्षस्य मध्ये सर्वां तिथिं न ब्रूयात् इति केचित्, ते पक्षशब्दस्य प्रयोजनं प्रष्टव्याः । आत्मनश्च जन्मलग्ननक्षत्रादिकं न कथयेत् । गृहे मलं–गृहदोषं, आत्मन्यवमानं प्रभोः निस्नेहतां च न लोके प्रकाशयेत् ११३

११४–पुरोवातातपरजस्तुषारपरुषानिलान् ।
अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् ॥ १०६
सशब्दमनिलं§ हस्तभ्रूनेत्रोत्क्षेपवादिताम् ।
कूलच्छायां† सुरापानं व्यालदंष्ट्रिविषाणिनः ॥ १०७
हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ।
संध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम् ॥
आरोग्यजीवितश्चर्यावद्यासु³⁷ स्थिरमानिताम् ।
तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥ १०९
मद्यातिसक्तिं³⁸ विस्रंभस्वातन्त्र्ये स्त्रीषु च त्यजेत् ।

११४–पुरोवातादीनां त्यजेदित्युत्तरेण संबन्धः । हस्ताद्युत्क्षेपेण प्रायेण जनो वदति तत् प्रतिषिद्धम् । हीनातिसेवां च

३१ [ ] गपुस्तके नास्ति । * °साधयं°–ग. ३२ त्रि.संमिद्ध°–क. ३३ °तं न तु वृ°–क. ३४ स्त्रियं स्र°–ख. ग. ३५ न पानभोजने स्वप्नक्षुति जृ°–क. ख., °प्नक्षुत्तृड्जृंभादु–घ. ३६ °त् स्वैरिणी नाशयेद्गृहम्–क. ख. § °मलिनं ह°–ग. † °यां नृपद्विष्टव्याल° इति हृदयपाठः । ३७ °सुस्थितमा°–क. °स्थितिमा°–ख. ३८ विश्रम्भं स्वातन्त्र्यं, स्त्रीषु–क.
* °गीतादिनोल्बणां ना च °–ख., °गीतादिं नोल्बणाम च° क, °गीतादिषूल्बणां ना च – घ.

त्यजेत्। आरोग्यादीनां स्थिरज्ञानं विश्वासः [तं], 'अहमरोगः' 'अहं गृहीतविद्यः' इत्यादिकं त्यजेदुपेक्षया नाशभयात् ११४

**११५–नैकाहमप्यधिवसेद्वास्तुतच्छास्त्रगर्हितम्॥ ११०**
**न देशं व्याधिबहुलं, नावद्यं, नाप्यनायकम्।**
**नाधार्मिकजनभूयिष्ठं नोपसृष्टं न पर्वतम्॥ १११**

११५–एकाहमपि वास्तुविद्यागर्हितं गृहं नाधिवसेत्। व्याधिबहुलादिकं देशं च। उपसृष्टं सोपसर्गं मारकादिना ११५

**११६–वसेत्प्राज्याम्बुभैषज्यसमित्पुष्पतृणेन्धने।**
**सुभिक्षक्षेमरम्यान्ते पण्डितैर्मण्डिते पुरे॥ ११२**
**नरामराणां सिद्धानां शास्त्राणां चाजुगुप्सकः।**
**आधारकस्त्रिवर्गस्य यथायोग्यं जनस्य च॥ ११३**
**दश[३९] कर्मपथान्रक्षञ्जयन्नभ्यन्तरानरीन्।**
**हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृतम्॥ ११४**
**संभिन्नालापं व्यापादमभिध्यां दृग्विपर्ययम्।**
**पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत्॥ ११५**

११६–प्रभूताम्ब्वादिके पुरे वसेत् । गुणवन्नरादीनां चाजुगुप्सकोऽद्वेष्टा। दश कर्मपथान्रक्षन् अभ्यन्तरानरीन् रागादीन् जयन् त्रिवर्गं साधयेत्। दश कर्मपथाः–कायवाङ्मानसाः तत्र **कायिकास्त्रयः**–( १ ) प्राणातिपातः, ( २ ) परद्रव्यापहारः, ( ३ ) अगम्यागमनमिति। **वाचिकं चतुर्विधम्**–( ४ ) असत्यवचनं, ( ५ ) परेषां भेदकृद्वचनं, ( ६ ) परुषवचनं, (७) असम्बद्धप्रलापश्च। **मानसं त्रिविधं**–( ८ ) अभिध्या, (९) व्यापादो, (१०) मिथ्यादृष्टिश्च। परस्वस्यान्यायेन स्पृहा **अभिध्या**। **व्यापादः** सत्त्वविद्वेषः। **दृग्विपर्ययः** शास्त्रदृष्टिवैपरीत्यम्, नास्तिकत्वमिति यावत् ११६

**११७–परोपघातक्रियया[४०] वर्जयेदार्जनं श्रियः।**
**अर्थानां[४१] धर्मलब्धानामदातापि ह्यसंभवात्॥ ११६**
**स्वर्गापवर्गविभवानयत्नेनाधितिष्ठति।**

११७–परोपघातेन श्रिय आर्जनं वर्जयेत्। यो ह्यर्थो दानाद्यर्थमुपयुज्यते सोऽधर्मेणार्जितो यदि दत्तो निष्फल एव। वरं धर्मपरस्य साधुधनासंभवाददानम् । एतदेवाह–**अर्थानामित्यादि**। धर्मलब्धानामर्थानामसंभवाददातापि स्वर्गादीनयत्नेनैवाधितिष्ठति ११७

२८ रात्रिचर्या।

**११८–सायं भुक्त्वा लघु हितं समाहितमनाः शुचिः॥**
**शास्तारमनुसंस्मृत्य [४२]स्वचर्यां चाथ संविशेत्।**
**देशे शुचावनाकीर्णे द्वित्राप्तपरिचारकः॥ ११८**
**युक्तोपधानं स्वास्तीर्णं विस्तीर्णाविषमं सुखम्।**
**जानुतुल्यं मृदु शुभं सेवेत शयनासनम्॥ ११९**
**प्राग्दक्षिणशिराः पादावकुर्वाणो गुरून्प्रति।**
**पूर्वापरदिशोर्भागे[४३] धर्ममेवानुचिन्तयन्॥ १२०**

११८–अथ सायाह्ने पुनर्भोजनं कृत्वा समाहितमनाः शास्तारं महेश्वरादिकं संस्मृत्य स्वचर्यां च शरीरस्थितिं विकल्प्य शय्यायां संविशेत्। संवेशनं निषदनाध्यासनम्। शुच्यादौ देशे शयनमासनं च सेवेत। आकीर्णं बहुजनाध्यासितं, युक्तोपधानं दर्शनीयशिरोगण्डिकं, जानुतुल्यमुच्चतया, प्राचीं दक्षिणां वा दिशं प्रति कृतशिराः। गुरून् प्रति च पादावकुर्वाणः। वेश्मनः पूर्वे अपरे वा दिग्भागे शयनासनं सेवेत ११८

**टिप्पणी**—उक्तं हि–' रात्रौ तु भोजनं कुर्यात्प्रथमप्रहरान्तरे। किंचिदूनं समश्नीयाद्दुर्जरं तत्र वर्जयेत्॥ ( यो. र. ) प्रदोषः पश्चिमौ यामौ वेदाभ्यासेन तौ नयेत्। प्रहरद्वयं शयानो हि ब्रह्मभूयाय कल्पते ( दक्षस्मृ. ) इति ११८

२९ उपसंहारः।

**११९–आददीत सदा देहादित्थं सारमसारतः।**
**बिभ्यत्प्रतिक्षणं [४४]मृत्योरयथातथचेष्टितात्॥ १२१**
**आरोग्यविभवप्रज्ञावयोधर्मक्रियावतः।**
**सुखमाहुर्हितं चोक्तं विपरीतं विपर्यये॥ १२२**

११९–इत्थमनेनानन्तरोक्तप्रकारेण सारं गृह्णीयात् असाराद्देहात्। ' एतदेव हि तत्सारं देहे यत्साधुशीलता '। किं कुर्वन्नाह–**अयथातथचेष्टितात्**–अनियताचारिणो मृत्योः प्रतिक्षणं बिभ्यत्–भयमाकलयन् मम कदाचिन्मृत्युरापतिष्यतीति। यच्चायुर्जीवितं तदारोग्यादियुक्तस्य हितं सुखं च साधुभिरुक्तम्। एतद्विपर्यये विपरीतमसुखमहितं च ११९

**१२०–सर्वतेजोनिधानं हि नृप इत्युच्यते भुवि।**
**अदूषयन्मनस्तस्माद्भक्तिमांस्तमुपाचरेत्॥ १२३**

१२०–तथा सकलतेजोनिधानं राजशब्दवाच्यम्। मनसा शुद्धेन भक्त्या चोपचरेत्–सेवेत १२०

**१२१–[४५]पर्यस्तिकोपाश्रयकोपहास–**
**विवादनिष्ठीवनजृंभणानि।**
**सर्वाः प्रकृत्यभ्यधिकाश्च चेष्टा–**
**स्तत्सन्निधाने परिवर्जयेत्तु॥ १२४**

१२१–तत्सन्निधाने च पर्यस्तिकादीनि वर्जयेत्। **पर्यस्तिका**–वस्त्रादिना स्वपृष्ठजानुपरिवेष्टनम् । **उपविष्टस्य उपाश्रयो** भित्त्यादिके शरीरसंक्रमणम् १२१

**१२२–[४६]सत्त्वाद्यवस्था विविधाश्च तास्ताः**
**सम्यक् समीक्ष्यात्महितं विदध्यात्।**
**अन्योऽपि यः कश्चिदिहास्ति मार्गो**
**हितोपदेशेषु भजेत तं च॥ १२५**

१२२–सत्त्वरजस्तमसां नानाविधानवस्थाविशेषान् परीक्ष्यात्महितं करणीयम्। दुस्तरा हि धर्मप्रतिबन्धका रजस्तमोविकाराः। तथा मनुबुद्धादिप्रणीतेषु हितोपदेशशास्त्रेषु यो मार्गोऽस्ति तमपि सेवेत १२२

---

३९ दश धर्मप°–क. ख. ४० °या वर्जयन्नर्जनं–क. °र्जयेदर्जं°–ख. ४१ अर्थानां बहूनर्थानामदा°–क. ख. ४२ °स्मृत्य शर्वर्यां चाथ सं°–क, स्वशय्यां चाथ सं°–ख. ४३ पूर्वापरनिशाभागे–क. ख. ४४ °णं मृत्युहेतोर°–क. ४५ पर्यङ्किको°–ङ. ४६ सर्वा ह्यव°–ङ.

१२३–इति चरितमुपेतः सर्वजीवोपजीव्यं
प्रथितपृथुगुणाघो रक्षितो देवताभिः ।
समधिकशतजीवी निर्वृतः पुण्यकर्मा
व्रजति सुगतिनिम्नो देहभेदेऽपि तुष्टिम् ॥
इति *वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्ग-
संग्रहसंहितायां सूत्रस्थाने दिनचर्याख्य-
स्तृतीयोऽध्यायः ॥ ३ ॥

१२३–इति सर्वभूतोपजीव्यं चरितं प्राप्तः पुरुषः तथा प्रख्यातविस्तीर्णगुणसमूहः देवताभी रक्षितः परिपूर्णसंवत्सरशतजीवी च देहनाशेऽपि तुष्टिमपवर्गाख्यां व्रजति–गच्छति । किंभूतः–सुगतौ सुवर्त्मनि, निम्नः–मग्नः १२३

इतिश्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्ग-
संग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने
तृतीयोऽध्यायः ॥ ३ ॥

# ऋतुचर्या नाम चतुर्थोऽध्यायः ।

१२४–अथात ऋतुचर्यां नामाध्यायं व्याख्यास्यामः ।
इतिह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

१२४–इह स्वस्थवृत्तं प्रकृतम् । तच्च पूर्वस्मिन्नध्याये ऋतुसाधारण्येनोक्तम् । अतः ऋतुविशेषप्रदर्शनार्थमध्याय आरभ्यते–अथात इत्यादि । पूर्ववत् १२४

टिप्पणी—ऋतुचर्यामिति–ऋतवो द्विमासिका हेमन्तादयः शरदन्ताः षट्, तेषु चर्या–चरणं वर्तनं ऋतुचर्या । वर्तनमिहाहारविहारादिः शास्त्रनियमिताचारः १२४

१ काललक्षणम् ।

१२५–कालो हि नाम भगवाननादिनिधनो यथोपचितकर्मानुसारी यदनुरोधादादित्यादयः खादयश्च महाभूतविशेषास्तथातथा विपरिणमन्तो जन्मवतां जन्ममरणस्यर्तुरसवीर्यदोषदेहबलव्यापत्संपदां च कारणत्वं प्रत्ययतां प्रतिपद्यन्ते ॥ २ ॥

१२५–ऋतुः कालविभागः, अत उच्यते–कालो हीति । न विद्यते आदिनिधने प्रारंभपरिसमाप्ती यस्य स तथाविधः यथोपचितकर्मानुसारी सर्वभूतानि च पूर्वदेहोपचितकर्मानुगुण्येनानुसरतीति । उपचितकर्मानुगुण्येन कर्मफलेषु निमित्तकारणतां यातीत्यर्थः । यदनुरोधेन यस्य कालस्यानुरोधेन निर्वाहिणादित्यादय आकाशादयश्च पञ्चमहाभूतविशेषाः, तथातथा नानाविधैः प्रमाणजातिसंस्थानवर्णादिविशेषैः, परिणमन्तो जन्मवतां भूतानां, जन्मनो मरणस्य च प्रत्ययतां कारणतां, प्रतिपद्यन्ते अंगीकुर्वन्ति । एकेनादिशब्देन ग्रहनक्षत्रादीनां ग्रहणम्, द्वितीयेनानलपवनादीनां महाभूतानाम्, तथा ऋतूनां रसादीनां च यथास्वं व्यापदः संपदश्च । तत्रादित्यादयः परिणमन्तो यदनुरोधाद्यस्य निर्वाहात्, कारणतां प्रतिपद्यन्ते स कालः । तथाहि । त एवादित्यादयः प्रतापादिपरित्यागसंग्रहादिना ऋतुविशेषान् कुर्वन्तः कालानुरोधेन दृश्यन्ते कालविशेषेण च महाभूतानां केनचित् परिणामेन जन्म प्राणिनामन्येन मरणम् । एवं रसादीनां विशेषो महाभूतपरिणामेन कालकृत एव । एतेन कालसद्भावे प्रमाणमप्युक्तम् । यतो योऽयं जगत्कारणाभिमतेष्वादित्यखादिषु सदैव परिनिष्ठितात्मस्वातिशयेन कदाचित्कस्यचिद्वावस्याविर्भावो भवति, कदाचित्कस्यचित्तिरोभावो न च तेषामेवादित्यादीनामन्यथाभावः । तत्रावश्यं निमित्तान्तरेण भवितव्यम् । एवम्–अन्यथानुपपत्त्या यत्तन्निमित्तान्तरं स कालः इति १२५

टिप्पणी—काल इति–कालयति मृत्युसमीपं नयति इति कालः । कलयते संख्यायते इति वा १२५

२ कालस्य द्वादश भेदाः ।

१२६–स मात्राकाष्ठाकलानाडिकामुहूर्तयामाहोरात्र-पक्षमासर्त्वयनवर्षभेदेन द्वादशधा विभज्यते ॥३॥

१२६–स च कालो मात्रादिभिर्भेदैर्द्वादशभिस्तन्त्रव्यवहारार्थं विभज्यते १२६

३ मात्रादीनां लक्षणानि ।

१२७–तत्राक्षिनिमेषो मात्रा । ताः पञ्चदश काष्ठा । तास्त्रिंशत्कला । ताः सदशभागा विंशतिर्नाडिका । नाडिकाद्वयं मुहूर्तश्च । ते तुल्यरात्रिदिवे रात्रिभागे चत्वारः पादोना यामः । तैश्चतुर्भिरहोरात्रिश्च । पञ्चदशाहोरात्राः पक्षः । पक्षद्वयं मासः । स शुक्लान्तः । तैर्मार्गशीर्षादिभिर्द्विसंख्यैः क्रमाद्धेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदाख्याः षडृतवो भवन्ति । तेषु शिशिरादयस्त्रयो रवेरुदगयनमादानं च । शेषा दक्षिणायनं विसर्गश्च । तावादानविसर्गौ वर्षम् ॥ ४ ॥

१२७–सुबोधम् । विंशतिः कलाः कलाया दशभागसहिता नाडिका । नाडिकाद्वयशब्देनोच्यते मुहूर्तः । ते च मुहूर्ताश्चत्वारः मुहूर्तचतुर्भागेन हीना यामः । यत्र रात्रेर्दिव[स]स्य च साम्यं तत्रैवम् । अन्यत्र तु वृद्धिहानी स्वबुद्ध्योह्ये । मार्गशीर्षादिमासद्वयक्रमेण हेमन्ताद्याख्याः षडृतवो भवन्ति । तेषु षड्तुषु मध्ये त्रयः शिशिरवसन्तग्रीष्मा रवेस्तिग्मांशोरुदगयनमुदीचीप्रस्थानमादानं च तदुच्यते । शेषास्त्रयो रवेर्दक्षिणायनं विसर्गश्चोच्यते । तौ वर्षम् १२७

टिप्पणी—अक्षिनिमेषेत्यादि––लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः १२७

४ आदानकालः ।

१२८–तयोरादानमाग्नेयम् । तस्मिन् खलु कालस्वभावमार्गपरिगृहीतोऽत्यर्थोष्णगभस्तिजालमण्डलोऽर्कस्तत्संपर्काद्वायवश्च तीव्ररूक्षाः सोमजं गुणमुपशोषयन्तो जगतः स्नेहमाददाना ऋतुक्रमेणोपजनितरौक्ष्या[२] रूक्षान् रसांस्तिक्तकषायकटुकानभिप्रबलयन्तो नृणां दौर्बल्यमावहन्ति ॥ ५ ॥

१२८–तयोश्चादानविसर्गयोरादानमाग्नेयम् । तदा हि भावारंभकस्याग्नेर्बलमवश्यं भवतीत्यर्थः । तस्मिन्नित्यादि-

* क चिद्वैद्यपतिसंघगुप्तस्य इति पाठो दृश्यते । १ 'होरात्रि प'–क. २ 'जनितरौक्ष्यादूक्षा'–क. ख.

आदानकालस्वभावेनोत्तरमार्गगमनेन चात्यर्थमुष्णकिरणसमूहव्याप्तमण्डलो भगवानंशुमाली तत्संबन्धेन च वायवोऽत्यन्तरूक्षाः सोमजं गुणमम्भागमुपशोषयन्तो जगतः स्थावरजंगमस्य, ऋतुक्रमेण दिनानुदिनं स्नेहं गृह्णाना दत्तरौक्ष्याश्चातिरौक्ष्येण युक्तांस्तिक्तकषायकटुकान् रसानभिवर्धयन्तो नृणां मनुष्यजातीनां, दौर्बल्यं हीनबलतां कुर्वन्ति १२८

**टिप्पणी**—कालस्वभावमोगत्यादि–मार्गोऽत्र मकरादिराशिपरिच्छिन्न आकाशभागः १२८

५ विसर्गकालः ।

**१२९–विसर्गस्तु सौम्यः । तस्मिन्नपि[3] कालमार्गमेघवातवर्षाभिहतप्रभावे दक्षिणायनगेऽर्के शशिनि चाव्याहतबले शिशिराभिर्भाभिः शश्वदाप्याय्यमाने माहेन्द्रसलिलप्रशान्तसंतापे जगत्यरूक्षा रसाः प्रवर्धन्तेऽम्ललवणमधुरा यथाक्रमं बलं चोपचीयते नृणामिति ॥ ६ ॥**

१२९–एतद्विपर्ययत्वाद्विसर्गस्य । सुबोधम् १२९

**१३०–भवति चात्र—**

**हेमन्ते शिशिरे चाग्र्यं विसर्गादानयोर्बलम् ।**
**शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः ॥ ७ ॥**

१३०–भवति चात्रेति पद्यारंभे तन्त्ररीतिः $ । विसर्गादानयोर्मध्ये हेमन्ते शिशिरे च पुरुषाणां बलाधिकता भवति । हेमन्ते विसर्गस्य परप्रकर्षाधिरोहात् । शिशिरे त्वादानेनाव्याप्तत्वात् । शरद्वसन्तयोरादानविसर्गयोर्मध्यत्वान्मध्यबलता । ग्रीष्मे आदानस्य परप्रकर्षाधिरोहात्, वर्षासु च विसर्गेणाव्याप्तत्वाद्धीनबलत्वम् १३० $ च.नि.अ.१–४१

६ हेमन्तर्तुः ।

**१३१–[4]धूमधूम्रा रजोमन्दास्तुषाराविलमण्डलाः ।**
**दिगादित्या मरुच्छैत्यादुत्तरो रोमहर्षणः ॥ ८ ॥**
**लोध्रप्रियङ्गुपुन्नागलवल्यः कुसुमोज्ज्वलाः ।**
**दृप्ता गजाजमहिषवाजिवायससूकराः ॥ ९ ॥**
**हिमानीपटलच्छन्ना लीनमीनाविहंगमाः ।**
**नद्यः सबाष्पाः सोष्माणः कूपाश्च हिमागमे १०**

१३१–शिशिरे हेमन्तविधेरतिदेशाय लाघवविकल्पात्-आदानक्रमभङ्गेनादौ हेमन्त उच्यते। त्रिविधो हि ऋतुः–मासस्वरूपेण, राशिस्वरूपेण, स्वलक्षणस्वरूपेण च। तत्र मासस्वरूपं द्विसंख्यैर्मार्गशीर्षादिभिरित्यादिनोक्तम् । राशिस्वरूपं लोके प्रसिद्धं यथा धनुर्मकरौ हेमन्त इत्यादि। धूमधूम्रेत्यादिना स्वरूपलक्षणमुच्यते—प्रयोजनं च विद्यते ऋतुस्वलक्षणोक्तेर्हीनयोगागादिचतुष्टयं यज्ज्ञानम्। धूमवद् धूम्रेण मलिनेन रजसा मन्दाः–अपटवः दिशः आदित्यश्च। तथा तुषारेणाविलानि मण्डलानि यासां ता दिशस्तथोक्ताः, आदित्यश्च तुषाराविलमण्डलः । उत्तर उत्तरीयो वायुः शैत्येन रोमहर्षणः । लोध्रादयश्च तदा कुसुमैरुज्ज्वला भवन्ति । गजादयश्च दृप्ताः–सदर्पाः । नद्यश्च हिमानीपटलेन छन्नाः–स्थगिताः, मीनाः विहंगमाश्च लीनाः—निःसंचारा यासु तास्तथोक्ताः तथा सबाष्पाः । तथा कूपाः सोष्माणो भवन्ति १३१

**टिप्पणी**—टीकायां त्रिविधो हीत्यादि–मार्गशीर्षपौषौ–हेमन्तः, माघफाल्गुनौ–शिशिरः, चैत्रवैशाखौ–वसन्तः, ज्येष्ठाषाढौ–ग्रीष्मः, श्रावणभाद्रपदौ–वर्षाः, आश्विनकार्तिकौ–शरत्–इति मासस्वरूपेण ऋतूनां निर्देशः । धनुर्मकरौ हेमन्तः, कुम्भमीनौ–शिशिरः, मेषवृषभौ वसन्तः, मिथुनकर्कौ ग्रीष्मः। सिंहकन्ये–वर्षाः। तूलवृश्चिकौ–शरत् इति राशिस्वरूपेण ऋतूनां निर्देशः १३१

**१३२–देहोष्माणो विशन्तोऽन्तः शीते शीतानिलाहताः**
**जठरे पिण्डितोष्माणं प्रबलं कुर्वतेऽनलम् ॥ ११ ॥**
**विसर्गे बलिनां प्रायः स्वभावादिगुरुक्षमम् ।**
**बृंहणान्यन्नपानानि योजयेत्तस्य युक्तये ॥ १२ ॥**
**अनिन्धनोऽन्यथा सीदेदत्युदीर्णतयाऽथवा ।**
**धातूनपि पचेदस्य ततस्तेषां क्षयान्मरुत्– १३**
**तेजःसहचरः कुप्येच्छीतः शीते विशेषतः ।**

१३२–तथा शीते काले हेमन्तशिशिरयोः, पुरुषाणां देहोष्माणः स्वभावादिगुरुक्षमं प्रबलमनलं कुर्वते। किंभूतानां विसर्गत्वाद्बलवताम्। किंभूता देहोष्माणः? **बहिः**, रूक्षेन बलवता च शीतेन वायुना आहता पुनरन्तरे प्रविशन्तः । किंभूतमग्निं ? पिण्डितोष्माणं प्रविष्टैर्देहोष्मभिर्मिश्रीभूतमित्यर्थः। स्वभावादिगुरुक्षमं तज्जरयितुं शक्नोतीत्यर्थः। स्वभावगुरु–द्रव्यस्वरूपेणैव गुरु, यथा माषादि। आदिग्रहणेन मात्रा-संयोग-संस्कार-परिणामानां ग्रहणम्। तस्याग्नेर्युक्तये समवाहनाय बृंहणान्यन्नपानानि योजयेत्। यद्येवं न क्रियते ततो वाह्याग्निरिव निरिन्धनः सीदेत् नाशं प्राप्नुयात्। अत्युदीर्णतया वा धातूनपि पचेत्। तेषां धातूनां क्षयान्मरुद्वायुस्तेजोमिश्रितः कुप्येत् १३२

**टिप्पणी**—बहिस्त्वचि ।

**१३३–अतो हिमे भजेत्स्निग्धान्स्वाद्वम्ललवणान्रसान्॥**
**बिलेशयौदकानूपप्रसहानां भृतानि च ॥**
**मांसानि गुडपिष्टोत्थमद्यान्यभिनवानि च ॥ १५**
**माषेक्षुक्षीरविकृतिवसातैलनवौदनान् ।**
**व्यायामोद्वर्तनाभ्यंगस्वेदधूमाञ्जनातपान् ॥ १६**
**सुखोदकं शौचविधौ भूमिगर्भगृहाणि च ।**
**साङ्गारयानां शय्यां च कुथकम्बलसंस्कृताम् ॥१७**
**[5]कुंकुमेनानुलिप्ताङ्गो[6]गुरुणाऽगुरुणापि वा ।**
**लघुष्णैः प्रावृतः स्वप्यात्काले धूपाधिवासितः॥१८**
***पीनाङ्गनाङ्गसंसर्गनिवारितहिमानिलः ।**

१३३–शीतकाले तस्मात्स्निग्धमधुरादीन्रसान्भजेत्तस्य मरुतः कोपरक्षार्थम् । स्निग्धानिति–घृतादिसंस्कृतान्। अन्यत्सुबोधम्। बिलेशयादेर्मांसानि भृतानि यत्पुष्टस्य प्राणिनः संबन्धीनि, तथा गुडोत्थानि पिष्टोत्थानि च नवानि मद्यानि । गुडोत्थानि–यानि गुडेन प्रधानेन क्रियन्ते, न त्विक्षुरसेन, पिष्टं शालिपिष्टम्। अङ्गारयानमाग्निशकटिका। कुथं–कार्पासादिपूर्णम् । गुरुणा अगरुणा–बहुना

३ 'अपि काले मा'–क. ४ धूमधूम्ररजोम'–क. ख. ग. ५ कुंकुमेनानुदिग्धाङ्गो गु'–क. ख. ६ 'ऽगुरूणागुरुण'० क. ख.




संवत्सरे रवे राशिषु संक्रमः ( सू. १३१ )



हेमन्तः ( सू. १३१ )

अगरुसारेण, कुंकुमेन वा दिग्धः उपलिप्ताङ्गः, लघूष्णैश्चर्मकौशेयादिभिः प्रावृतः सन्नुचिते काले स्वप्यात्। उपचितशरीरकामिनीवपुःसंबन्धपरिहृतशीतपवनः सन् १३३

७ शिशिरर्तुः।

१३४–शिशिरे शीतमधिकं मेघमारुतवर्षजम्॥ १९
रौक्ष्यं चादानजं तस्मात्कार्यः पूर्वोऽधिकं विधिः।

१३४–शिशिरे हेमन्तस्वरूपाधिक्याद्धेमन्तविधिरेवाधिकः कार्यः। यतः शिशिरे बहिः शीतेनात्यन्तं रुध्यन्ते देहोष्माणः। आदानत्वाच्च रौक्ष्यं जायते १३४

८ वसन्तर्तुः।

१३५–वसन्ते दक्षिणो वायुराताम्रकिरणो रविः॥ २०
नवप्रवालत्वक्पत्राः पादपाः [7]ककुभोऽमलाः।
किंशुकाशोकचूतादिवनराजिविराजिताः॥ २१
कोकिलालिकुलालापकलकोलाहलाकुलाः।
शिशिरे संचितः श्लेष्मा दिनकृद्भाभिरीरितः॥२२
तदा प्रबाधमानोऽग्निं रोगान्प्रकुरुते बहून्।

१३५–वसन्तेत्यादिना वसन्तस्वरूपलक्षणं वर्णयति–वसन्ते वायुर्दाक्षिणात्यो भवति, रविश्चैष लोहितदीधितिः नवाः प्रवालादयो येषु पादपेषु ते तथोक्ताः। प्रवालमभिनवोद्भिन्नं किसलयम्। ककुभो–दिशो निर्मलाः। तथा किंशुकादिभिः या वनराजयः ता[भिः]विराजिताः ककुभो भवन्ति तथा कोकिलानामलिकुलानां भ्रमरसन्ततीनां चालापैर्यः कलो मधुरः कोलाहलस्तेनाकुलाः। पूर्वं शिशिरे मधुरस्निग्धादिना आहारेण श्लेष्मा संचितोऽतिशीतेन स्त्यानत्वान्न कुपितः, संप्रति दिनकृत्प्रभाभिर्विलायितो द्रवस्वरूपत्वाद्विपरीतस्याग्नेर्बाधां करोति। तद्बाधया चानेकरोगोत्पत्तिः ११३

१३६–अतोऽस्मिंस्तीक्ष्णवमनधूमगण्डूषनावनम्॥ २३
व्यायामोद्वर्तनक्षौद्रयवगोधूमजाङ्गलान्।
सेवेत सुहृदुद्यानयुवतीश्च मनोरमाः॥ २४
स्नातः स्वलंकृतः स्रग्वी चन्दनागरुरूषितः।
विचित्रामत्रविन्यस्तान्सहकारोत्पलाङ्कितान्॥२५
* निर्गदांश्चासवारिष्टशीधुमार्द्वीकमाधवान्।
क्वथितं मुस्तशुण्ठ्यम्बु साराम्भः क्षौद्रवारि वा॥२६
गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत्।

१३६–अतः कारणाच्छ्लेष्मशमनार्थं तीक्ष्णवमनादिकं सेवेत। अन्यत्सुबोधम्। चन्दनागरुभ्यां रूषितः उपलिप्तः। आसवादीन्निर्गदान् देशकालाद्यनुपहतान्। सारांभः–असनखदिरचन्दनादिसारसंस्कृताम्भः। तदा गुर्वादींस्त्यजेत् १३६

टिप्पणी—निर्गदानिति–निवृत्तगदान्–निर्दोषान्। आसवः–अक्वथितानि द्रव्याण्यासुत्य क्रियते यन्मद्यं सः। अरिष्टः–क्वथितैर्यः क्रियते। सीधुः–य इक्षुरसेन क्रियते। मार्द्वीकम्–यत् द्राक्षारसेन क्रियते। माधवः–मधुना यः क्रियते। क्वथितमिति–सारः–असनचन्दनादिजः, तेन क्वथितमम्भः–साराम्भः, एवं सर्वत्र। क्षौद्रं मधु। तेन युक्तं वारि क्षौद्रवारि। पानीयसाधने च तन्त्रान्तरे विधिरुक्तः–'कर्षं गृहीत्वा द्रव्यस्य, तोयस्य प्रस्थमावपेत्। अर्धावशेषं तद् ग्राह्यं तोयपाने त्वयं विधिः' इति। [illegible]ु क्वथितशीत एव निक्षिपेत्। १३६

९ ग्रीष्मर्तुः।

१३७–ग्रीष्मेऽतसीपुष्पनिभस्तीक्ष्णांशुर्दावदीपिताः॥२७
दिशो ज्वलन्ति भूमिश्च मारुतो नैर्ऋतः सुखः।
पवनातपसंस्वेदैर्जन्तवो ज्वरिता इव॥ २८
तापार्ततुङ्गमातङ्गमहिषैः कलुषीकृताः।
दिवाकरकराङ्गारनिकरक्षपिताम्भसः॥ २९
प्रवृद्धरोधसो नद्यश्छायाहीना महीरुहाः।
विशीर्णजीर्णपर्णाश्च [8]शुष्कवल्कलताङ्किताः॥ ३०

१३७–ग्रीष्मेत्यादिना ग्रीष्मस्वरूपलक्षणं दर्शयति—ग्रीष्मे तीक्ष्णांशुः सूर्योऽतसीपुष्पसन्निभः, आनील इव। दावो–वनाग्निः। नैर्ऋतो वायुः दक्षिणपश्चिमदिशोरन्तरः। तदा हि पवनादिभिर्जन्तवो ज्वरिता इव भवन्ति। तथा नद्यस्तापार्तत्वादिविशिष्टैर्मातङ्गादिभिः कलुषीकृताः, दिवाकरकरा एवाङ्गारास्तेषां निकरेण क्षपितमम्भो यासां तास्तथोक्ताः, तथा प्रवृद्धानि रोधांसि तदानीं स्वल्पोदकत्वात्तास्तथा। महीरुहा वृक्षाः च्छायाहीनत्वादिगुणयुक्ताः १३७

१३८–आदत्ते [9]जगतस्तेजस्तदादित्यो भृशं यतः।
व्यायामातपकट्वम्ललवणोष्णं त्यजेदतः॥ ३१
मद्यं न सेव्यं स्वल्पं वा सेव्यं सुबहुवारि वा।
अन्यथा "[10]शोषशैथिल्यदाहमोहान्करोति तत्॥ ३२
नवमृद्भाजनस्थानि हृद्यानि सुरभीणि च"।
पानकानि समन्थानि सिताढ्यानि हिमानि च॥३३
स्वादु शीतं द्रवं चान्नं जाङ्गलान्मृगपक्षिणः।
शालिक्षीरघृतद्राक्षानालिकेराम्बुशर्कराः॥ ३४
तालवृन्तानिलान्हारान्स्रजः सकमलोत्पलाः।
तन्वीर्मृणालवलयाः कान्ताश्चन्दनरूषिताः॥ ३५
सरांसि वापीः सरितः काननानि हिमानि च।
सुरभीणि निषेवेत वासांसि सुलघूनि च॥ ३६
निष्पतद्यन्त्रसलिले स्वप्याद्धारागृहे दिवा।
रात्रौ चाकाशतलके सुगन्धिकुसुमास्तृते॥ ३७
कर्पूरचन्दनार्द्राङ्गो विरलानङ्गसंगमः।

१३८–यतः आदित्योऽतिशयेन तेज आदत्ते। तेजः–शुक्रान्तानां धातूनां स्नेहः (–सारः)। अतो व्यायामादींस्त्यजेत्। अन्यत्सुबोधम्। सुबहुवारि यस्मिन् मद्ये तत् तथोक्तम्। मन्थः प्रभूतोदकाः सक्तवः। तालवृन्तमुत्क्षेपकम्। निष्पतद्यन्त्रवाहि जलं यस्मिन् धारागृहे तत्तथोक्तम्। आकाशतलकं शरणपृष्ठम्॥ १३८

टिप्पणी—सक्तव इति–तथा चोक्तं सक्तुलक्षणम्–'धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि सक्तवः' इति। तेषां गुणाः–'शीतलाः सारका रूक्षा बलशुक्रप्रदाः स्मृताः। कफश्रमग्लानिदाहभ्रमपित्तनिवारणाः' इति। ग्रीष्मे चणकयवसक्तुविधानम्–'निस्तुषैश्चणकैर्भृष्टैस्तुर्यांशैश्च यवैः कृताः सक्तवः शर्करासर्पिर्युक्ता ग्रीष्मेऽतिपूजिताः। शुक्रला लघवो बल्याः शीतास्[illegible]चप्रदाः' इति १३८

१० वर्षर्तुः।

१३९–वर्षासु वारुणो वायुः सर्वसस्यसमुद्गमः॥ ३८

७ ककुभोज्ज्वलाः—क. * 'निगदान् इत्यपि पाठः'। ८ शुष्कवल्लीलता० क. ९ जगतः स्नेहांस्तदादि०–क. ख. १० ०थाशोफशै० ग. ११ ०णि ग्रु–क

मिन्नेन्द्रनीलनीलाभ्रवृन्दमन्दाविलं नभः ।
दीर्घिका नववार्यौघमग्नसोपानपङ्क्तयः ॥ ३९
वारिधाराभृशाघातविकासितसरोरुहाः[१२] ।
सरितः सागराकारा भूरव्यक्तजलस्थला ॥ ४०
मन्द्रस्तनितजीमूतशिखिदर्दुरनादिता ।
इन्द्रगोपधनुःखण्डविद्युदुद्योतदीपिता ॥ ४१
परितः श्यामलतृणा [१३]सिलिन्ध्रकुटजोज्ज्वला ।

१३९-वर्षास्वित्यादिना तस्यैव स्वरूपलक्षणमुच्यते—तदा वरुणदिक्को वायुर्वहति सर्वसस्यानां समुद्गमहेतुः । तथा भिन्नेन्द्रनीलेन तुल्यनीलत्वैरभ्रवृन्दैर्मन्दमपङ्क आविलमाकुलं च नभो भवति । भेदे हीन्द्रनीलोऽतिशयनीलत्वान् भवति । नवेन वार्यौघेन मग्नाः स्थगिताः सोपानपंक्तयो यासु दीर्धिकासु पुष्करिणीषु तास्तथोक्ताः । तथा ता एव मेघवारिधाराभियोऽसौ भृशमत्यर्थमाघातस्तेन विकासितसरोरुहाः । नद्यश्च समुद्रसदृशाः । भूश्च बहुलजलप्लावितत्वादव्यक्तजलस्थला भूतपूर्वस्य जलस्य व्यक्तदेशो न ज्ञायत इत्यर्थः । तथा मन्द्रस्तनिता मधुरशब्दा ये जीमूता मेघाः शिखिनो मयूरा दर्दुरा मण्डूकाः, तैर्नादिता कृतशब्दा भूर्भवति । तथा इन्द्रगोपैर्भास्वरैः कृमिविशेषैर्धनुःखण्डेन चैन्द्रेण विद्युद्भिश्च य उद्योतः प्रकाशः, तेन दीपिता प्रकटा भूर्भवति । तथा परितः समन्तात् श्यामलानि तृणानि यस्याः सा तथोक्ता । तथा सिलिन्ध्रैः कुटजैश्च पुष्पविशेषैरुज्ज्वला १३९

१४०-तदाऽऽदानावले देहे मन्देऽग्नौ बाधिते पुनः ४२
वृष्टिभूबाष्पतोयाम्लपाकदुष्टश्चलादिभिः ।
बस्तिकर्म निषेवेत कृतसंशोधनक्रमः ॥ ४३
पुराणशालिगोधूमयवान्यूषरसैः कृतैः ।
निर्गदं मदिरारिष्टमार्द्वीकं स्वल्पमम्बु वा ॥ ४४
दिव्यं क्वथित(?)कूपोत्थं चौण्डं [१४]सारसमेव वा ।
वृष्टिवाताकुले त्वह्नि भोजनं क्लेदवातजित् ॥ ४५
परिशुष्कं लघु स्निग्धमुष्णाम्ललवणं भजेत् ।
प्रायोऽन्नपानं सक्षौद्रं संस्कृतं च घनोदये ॥ ४६
असरीसृपभूबाष्पशीतमारुतशीकरम् ।
साग्नियानं च भवनं निर्दंशमशकोन्दुरम् ॥ ४७
प्रघर्षोद्वर्तनस्नानधूमगन्धागरुप्रियः ।
यायात्करेणुमुख्याभिश्चित्रस्रग्वस्त्रभूषितः ॥ ४८
नदीजलोदमन्थाहः स्वप्नातिद्रवमैथुनम् ।
तुषारपादचरणव्यायामार्ककरांस्त्यजेत् ॥ ४९

१४०-तदा वर्षास्वादानत्वादबलत्वेनाग्निमान्द्यम् । पुनश्च वृष्ट्यादिदुष्टैर्वातादिभिरत्यर्थं बाधितेऽग्नौ तदुपकाराय बस्तिकर्मादिकं निषेवेत । किंभूत इत्याह-कृतसंशोधनक्रमः । यथोक्तौ वमनविरेकौ कृतौ येन स तथोक्तः । कृता यूषादयः स्नेहशुण्ठ्यादियुक्ताः दिव्याम्बु क्वथितं पिबेत्, चौण्डं-पर्वते शिलाकूपिकाभवम् । वृष्ट्या वातेन चाकुले वृष्टिवातभूयिष्ठे, संस्कृतं कालयोग्यैर्द्रव्यैः । सरीसृपाः- सर्पवृश्चिकादयः १४०

टिप्पणी—बस्तिकर्मेति-बस्तिकर्मशब्देनात्राऽऽस्थापनानु-

वासने ग्राह्ये । सक्षौद्रमिति-क्षौद्रं मधु, तेन सहितम् । ननु वातलं मधु, पवनश्चात्र प्रकुप्यति । अतो माक्षिकस्योपयोगो न युक्तः । अत्रोच्यते-देहधातवोऽस्मिन्काले क्लेदमुपयान्ति, ततश्च क्लेदसंरक्षणे एवोपक्षीणप्रभावान्मधु मरुत्कोपं विधातुमसमर्थम् । तस्मान्मधूपयोगो न्याय्य एव । तथा च वक्ष्यति-'वातलं वातकोपेऽपि वर्षासु मधु शस्यते' इति ( सू. अ. ७ ) १४०

११ शरदृतुः ।

१४१-शरदि व्योम शुभ्राभ्रं किञ्चित्पङ्काङ्किता मही ।
प्रकाशकाशसप्ताह्वकुमुदा शालिशालिनी ॥ ५०
विक्षिप्ततीक्ष्णकिरणो मेघौघविगमाद्रविः[१५] ।
बभ्रुवर्णोऽतिविमलाः क्रौञ्चमालाकुला दिशः॥५१
कमलान्तरसंलीनमीनहंसांसघट्टनैः[१६] ।
तरङ्गभङ्गतुङ्गानि सरांसि विमलानि च ॥ ५२
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानां सञ्चितं पूर्वं तदा पित्तं प्रकुप्यति ॥ ५३

१४१-शरदि व्योमेत्यादिना शरत्स्वरूपं वर्णयति—प्रकाशाः काशाः सप्ताह्वपुष्पं कुमुदानि च यस्यां भुवि सा तथोक्ता । तथा मेघौघविगमाद्धेतोः रविर्विक्षिप्ततीक्ष्णकिरणो बभ्रुवर्णश्च भवति, बभ्रुः-कपिलः । तथा कमलानामन्तरे ये संलीना मीना हंसाश्च तेषां संघट्टनैर्यै तरङ्गभङ्गास्तैस्तुंगान्युन्नतानि यानि सरांसि तानि तथोक्तानि । वर्षास्वम्लविपाकजलमद्यादिभिः पित्तं संचितं कालस्य शैत्यादकुपितमादित्यकिरणसन्तापेन शरदि कुप्यति १४१

१४२-शस्तं तिक्तहविःपानं विरेकोऽस्रस्रुतिः सदा ।
शीतं लघ्वन्नपानं च कषायस्वादुतिक्तकम् ॥ ५४
शालिषष्टिकगोधूमयवमुद्गसिता मधु ।
पटोलामलकं द्राक्षा जाङ्गलं क्षुद्वतां भृशम् ॥ ५५
दिवा दिवाकरकरैर्निशाकरकरैर्निशि ।
संतप्तं ह्लादितं तोयमगस्त्येनाविषीकृतम् ॥ ५६
निर्मलं शुचि कालेन पक्वं पानेऽमृतोपमम् ।
हंसौघपक्षविक्षेपभ्रमद्भ्रमरपंक्तिषु ॥ ५७
सुसरोरुहसेव्यासु सरसीषु प्लवेत च ।
लघुशुद्धाम्बरः स्रग्वी शीतोशीरविलेपनः ॥ ५८
सेवेत चन्द्रकिरणान्प्रदोषे सौधमाश्रितः ।
तृप्तिदध्यातपक्षारवसातैलपुरोनिलान् ॥ ५९
तीक्ष्णमद्यदिवास्वप्नतुषारांश्च विवर्जयेत् ।

१४२-अतस्तिक्तघृतपानादिकं पित्तजयाय सेवेत, तिक्तं नाम घृतं वक्ष्यते, (चि. अ. २१) अन्ये तु महातिक्तपञ्चतिक्तादि सर्वं तिक्तद्रव्यसिद्धमिच्छन्ति । अन्यत्सुबोधम् १४२

टिप्पणी-शस्तमिति।विरेचनाङ्गत्वात्तपित्तजयाय तिक्तहविषः-तिक्तघृतस्य पूर्वमुपन्यासः । न ह्यस्निग्धस्य विरेचनप्राप्तिरस्ति । तथा विरिक्तस्य स्रुतरक्तस्य च पवनप्रकोपभयम् । कालस्वाभाव्याच्च पित्तकोपभयम् । तदेतत्परिहर्तुं, तथा देहपुष्ट्यर्थमग्निसंधुक्षणार्थं च तिक्तघृतोपयोगः कार्यः । इत्यनेककार्यकरणत्वेन प्राधान्याच्च तिक्तहविषः प्रथममुपन्यासः । नैतानि तिक्तहविरादीनि सर्वाणि तदा कार्याणि । किंतर्हि ? देशाद्यनुरोधात्-कदाचित्पित्तविजयाय

१२ ०तशिरोरु०-क. १३सिलीध्र०-ख. १४ चौण्डसा०-क., चौण्ड्यं सा०-ख. १५ ०घनिगमा०-क. १६ सांसघट्ट-ख.



वर्षाः ( सू. १३९ )



शरद् ( सू. १४१ )

# नक्षत्रपट नंबर १.




प्रत
१ली.
२री.
३री.
४थी
५वी.
६वी.

नक्षत्रपटांतील स्थिती-
दिसणाऱ्या रात्रीच्यां-
वेळा.

| महिना. | तारीख. | तास |
|---|---|---|
| एप्रिल | ६ | ७ |
| मार्च | २१ | ८ |
| | ६ | ९ |
| फेब्रुवारी | २१ | १० |
| | ६ | ११ |
| जानेवारी | २१ | १२ |
| | ६ | १ |
| डिसेंबर | २१ | २ |
| | ६ | ३ |
| नवंबर | २१ | ४ |
| | ५ | ५ |

राशिचक्रम् क्र. १
( सू. १४६ )

# नक्षत्रपट नंबर २

नक्षत्रपटातील स्थिती दिसणाऱ्या रात्रीच्या-वेळा.

| महिना | तारीख | तास |
|---|---|---|
| आक्टोबर | ५ | ७ |
| सप्टेंबर | २० | ८ |
| | ५ | ९ |
| आगस्ट | २० | १० |
| | ५ | ११ |
| जुलै | २० | १२ |
| | ५ | १ |
| जून | २० | २ |
| | ५ | ३ |
| मे | २० | ४ |
| | ५ | ५ |
| एप्रिल | २१ | ५ |




राशिचक्रम् क्र. २
(सू. १४६)

तिक्तहविःपानम्, कदाचिद्विरेकः, कदाचिद्रक्तमोक्षः, कदाचिद्द्वयमपि कदाचित्सकलान्येव। विरेकस्तु पित्तविजयार्थमवश्यमेव शरदि कार्यः। दिवा दिवाकरकरैरिति-अस्यैव हंसोदकमिति नाम चरक (सू. अ. ६-४६) आह १४२

१२ ऋतुसन्धिः।

**१४३–नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ॥**

१४३–नित्यं सर्वेष्वृतुषु सर्वरसाभ्यासः ये च रसा यस्मिन्नृतावुक्तास्तत्राधिक्येन सेव्या इति १४३

**१४४–ऋत्वोरन्तादिसप्ताहावृतुसन्धिरिति स्मृतः।**
**तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात्॥**
**असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्**

१४४–गच्छत ऋतोरन्तसप्ताह आगच्छत ऋतोरादिसप्ताह इति दिवसाश्चतुर्दश ऋतुसन्धिशब्दवाच्याः। तस्मिंश्च ऋतुसन्धौ गच्छतस्तु विधिः क्रमेण त्याज्यः। तथैव क्रमेण वर्तमानस्य विधिः सेव्यः सेवनीयः। क्रमश्च 'पादेनापथ्यमभ्यस्तम्' (सू. अ.९) इत्यादिना वक्ष्यते (?)। अन्यथा झटिति विधित्यागोपादाने कुर्वतोऽसात्म्यत्वाद्रोगोत्पत्तिः १४४

**टिप्पणी**—पादेनेति–'पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत्। निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम्' (अ. हृ. सू. अ. ७-४८) इति समग्रः श्लोकः १४४

१३ उपसंहारः।

**१४५–ऋतुष्वेवंविधेष्वेव विधिः स्वास्थ्ये च देहिनाम्॥**
**निर्दिश्यतेऽन्यरूपेषु विरुद्धज्ञानिको विधिः।**

१४५–एवंविधेष्वृतुषु यथोक्तकालस्वरूपलक्षणेष्वेवायं यथोक्तविधिः। अनेन च विधिनैवंविधेष्वेव स्वास्थ्यम्। अन्यरूपेषु तु विरुद्धविज्ञानप्रसंगे निर्देक्ष्यते (सू. अ. ९) १४५

१४ ऋतुस्वरूपे बलवत्त्वम्।

**१४६–मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम्॥ ६३**
**यथोत्तरं भजेत्तयां तत्र तस्य बलादिति।**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने ऋतुचर्या नाम चतुर्थोऽध्यायः॥ ४॥**

१४६–अस्य च ऋतोर्मासादिस्वरूपेण यल्लक्षणत्रयं प्रसिद्धं तत्र यथोत्तरं चर्यां सेवेत यथोत्तरस्यैव बलवत्त्वात्। तेनैतदुक्तं भवति–यो यस्यर्तोर्विधिरुक्तः स तन्मासप्रारंभ एव जाते राशिस्वरूपाभ्यां रहितस्य स्वल्पं योज्यः। अथ चेत्कदाचिद्राशिरपि प्राप्तो न तु यथोक्तस्वलक्षणस्तत्र स एव विधिः किञ्चित्परिपूरणीयः। यत्र तु मासे राशिः स्वरूपलक्षणं च परिपूर्णं तत्र विधिरपि परिपूर्ण एव। तथा यत्रापि मासेन विना राशिः प्राप्तः न तु स्वरूपलक्षणं, तत्र मध्यो विधिः। मासस्वरूपलक्षणयोरन्तरस्त्वाद्राशेर्बलवत्त्वम्। यत्र मासराशिभ्यां विनैव पूर्णं स्वरूपलक्षणं, तत्र पूर्णो विधिः। स्वरूपलक्षणस्य सर्वबलवत्त्वादिति १४६

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने चतुर्थोऽध्यायः॥ ४॥**

# रोगानुत्पादनीयो नाम पञ्चमोऽध्यायः।

**१४७–अथातो रोगानुत्पादनीयं[17] नामाध्यायं व्याख्यास्यामः। [18]इति ह स्माहुरात्रेयादयो महर्षयः–**

१४७–स्वस्थवृत्तं प्रकृतम्। वेगधारणशीलस्य च स्वास्थ्यासंभवः। अतो वेगधारणप्रतिषेधेन च रोगानुत्पत्तिः। तामधिकृत्याध्याय आरभ्यते–अथात इत्यादि १४७

१ वेगधारणनिषेधः।

**१४८–वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम्।**
**निद्राकासश्रमश्वासजृंभाश्रुछर्दिरेतसाम्॥ १**

१४८–वेगानां प्राप्तानामप्रतिषेधाद्रोगोत्पत्तिरुच्यते–वेगानित्यादि। वातादीनां प्राप्त उत्सर्गो न प्रतिषेद्धव्यः। वातादिक्रमेणैवोद्देशवन्निर्देशः १४८

**टिप्पणी**–वेगान्न धारयेदिति–तथा चोक्तं सुश्रुतेन–'वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः। व्याहन्यमानैरुदितैरुदावर्तो निरुच्यते' इति (उ. ५५-४)। अत्र इन्द्रियशब्देन शुक्रं गृह्यते। नन्वधोवेगरोधादपानप्रकोपादुदावर्तसंभवो युक्तः। अश्रुजृम्भादिवेगधारणात्कथं तस्योत्पत्तिः? उच्यते–अश्रुजृम्भादिवेगरोधात्कोष्ठगतो वायुर्यदा भवति, तदाऽपानप्रकोपादुदावर्तसंभवः इति। एते वातादयस्त्रयोदश नियमार्थाः। तेन अन्येषां क्रोधादीनां वेगविधारणं न रोगहेतुः। स्वास्थ्यहेतुत्वात्। यदाह चरकः–'लोभशोकभयक्रोधमानवेगान्विधारयेत्' (सू. अ. ७-२७) इति। अत एवोक्तम्–'वेगान्न धारयेज्जातु, मनोवेगान्विधारयेत्' इति १४८

२ अधोवातनिरोधः।

**१४९–अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः।**
**वातमूत्रशकृत्संगदृष्ट्यग्निवधहृद्गदाः॥ २**
**[19]स्नेहस्वेदाविधिस्तत्र वर्तयो भोजनानि च।**
**पानानि बस्तयश्चैव शस्तं वातानुलोमनम्॥ ३॥**

१४९–ऊर्ध्वाधोभेदेन द्विविधो वातः। तत्र मूत्रपुरीषसमानयोगक्षेमत्वादधोवातः प्रथममुच्यते–अधोवातस्य–गुदवातस्य रोधेन गुल्माद्युत्पत्तिः। उदावर्तं अर्शोनिदाने वक्ष्यते। तथा रुग्भवति क्लमश्च। पुनश्च वातादीनामप्रवृत्तिः। दृष्टेरग्नेश्च नाशः १४९

**टिप्पणी**—उदावर्तं इति–ऊर्ध्वेन वेगविधारणेनावृतस्य वायोर्वर्तनमित्युदावर्तः १४९

३ विड्रोधः।

**१५०–शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः।**
**ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम्॥ ३**
**मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः।**

१३०–शकृतः पुरीषस्य रोधेन पिण्डिकोद्वेष्टादयः। उद्वेष्टन

[17] 'दवीयमध्या'—क. ख. [18] इति हेति ग्रन्थः—क. ख. पुस्तकयोर्न। [19] स्नेहस्वेदेत्यादिश्लोको गपुस्तके न।

मिवोद्वेष्टः, पिण्डिकयोरुद्वेष्टः पिण्डिकोद्वेष्टः। पिण्डिकेति जंघाकाण्डस्य पश्चिमे भागे पिण्डाकृति कठिनं मांसम्। तत्र उद्वेष्टनेनेव रुग्भवतीत्यर्थः। सर्वे चेहोक्तरोगा वक्ष्यमाणलक्षणाः। विशा च मार्गस्य निरोधात् प्रतिहतनिवृत्तस्य वायोरूर्ध्वं प्रवृत्तिः। जठरे समन्तात् च्छेदमिव परिकर्तनम्। हृदयस्य च बन्धः। **पूर्वोक्ताः** वातरोधरोगाश्च १५०

४ मूत्ररोधः।

**१५१–अङ्गभङ्गाश्मरीबस्तिमेढ्रवंक्षणवेदनाः[20]॥**
**मूत्रस्य रोधात्पूर्वे च प्रायो रोगास्तदौषधम्।**

१५१ –मूत्रस्य रोधादङ्गभङ्गादयः। भङ्ग इव स्फोटनमिव भङ्गोऽङ्गभङ्गः। बस्त्यादीनां वेदनया संबन्धः। पूर्वे च वातमूत्रपुरीषोक्ता रोगाश्च। तेषां वातादित्रयरोधजातानां रोगाणां फलवर्त्यादि सामान्यमौषधम् १५१

**१५२–वर्त्यभ्यङ्गावगाहाश्च स्वेदनं बस्तिकर्म च॥ ५**
**अन्नं पानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु॥**

१५२–**वर्तिः**–तीक्ष्णद्रव्यकृता गुदप्रणिधेया। **अवगाहो**–वातहरद्रव्यसाधिते द्रवे द्रोणीस्थिते मग्नदेहस्यावस्थानम्। **बस्तिकर्म**–मलप्रवृत्तये निरूहयोजना वक्ष्यमाणा (सू. अ. २८)। विड्रोधोत्थेषु विड्भेद्यन्नं पानं विशेषेण १५२

**टिप्पणी**—विड्भेदीति–विशं भिनत्तीति विड्भेदि १५२

५ अवपीडकसंज्ञकं घृतम्।

**१५३–मूत्रजेषु तु पाने च प्रागभक्तं[21] शस्यते घृतम्।**
**जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्॥६**
**अवपीडकमेतच्च संज्ञितं,**

१५३–**मूत्ररोधजेषु तु** विशेषेण भोजनपूर्वं घृतपानं जीर्णान्तिकं च घृतं प्रशस्यते। जीर्णान्तिकं यत् ह्यस्तनेऽन्ने जीर्णे युज्यते–**उत्तमया मात्रया**–अहोरात्रजरणलक्षणया इति प्राग्भक्तस्नेहयोजना जीर्णान्तिकस्नेहयोजना च। उभयमवपीडकमुच्यते। तेन प्रदेशेष्ववपीडकशब्देन इदं योजनाद्वयं विज्ञेयम् १५३

**टिप्पणी**—घृतमिति–ननु वेगधारणेन बाहुल्येन मरुत एव कोपः। तथा च वक्ष्यति–'ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति' (सू. अ. ५–२४) इति। पवनविजये च तैलं यथा वरं न तथा घृतम्, तथा चोक्तं–'शरीरजानां दोषाणां क्रमेण परमौषधम्। बस्तिर्विरेको वमनं तथा **तैलं** घृतं, म..' (सू. अ. १–४६ पृ. ८) इति। अतस्तैलस्यैवावपीडकयोजनमत्रोचितं, न सर्पिषः। अत्रोच्यते–तैलस्य वातजितोऽपि बद्धविट्काल्पमूत्रस्वभावत्वादत्रायोग्यं पानम्। तथा च वक्ष्यति–'तैलं स्वयोनिवत्' इत्यारभ्य 'बद्धविट्कम्–' इत्यन्तं (सू. अ. ६) अत्र स्वयोनिवदित्युक्तेश्चाल्पमूत्रत्वम्। तथा च वक्ष्यति–'स्निग्धोष्णतिक्तकटुकः कषायमधुरस्तिलः।...... अल्पमूत्रः कटुः पाके–' इत्यादि (सू. अ. ७) तदेवं तैलस्य बद्धविट्काल्पमूत्रस्वभावतया तदीयोऽवपीडको मूत्ररोधोत्थेषु रोगेष्वौषधत्वेन न युक्तः। अपि तु सर्पिष एव युक्तः। योजनाद्वयमिति–प्राग्भक्तस्नेहयोजना, जीर्णान्तिकस्नेहयोजना च। तत्र प्राग्भक्तं–यत्र अल्पं घृतपानमनन्तरं भक्तं भुज्यते तत्,जीर्णान्तिकं–यत् पूर्वतनेऽन्ने जीर्णे उत्तममात्रया घृतं प्रयुज्यते। एतच्चावपीडकं रात्रिभोजनात्प्राक् परेद्यवि च प्रातः इति योजनाद्वयेन बोध्यम्। 'ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः–' (सू. अ. २५) इत्यादिवचनबलात् १५३

५ उद्गारस्य रोधः।

**१५४– धारणात्पुनः ७**
**उद्गारस्यारुचिः कंपो विबन्धो हृदयोरसोः।**
**आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम्॥ ८**

१५४–पुनःशब्दः सामान्यानिर्दिष्टवातप्रकारोक्ताशिष्टोद्गाराख्यवातपरामर्शाय। उद्गारस्य पुनर्धारणादरुच्यादयः। उरो वक्षः, हृदयं तस्याधस्तयोर्विबन्धः अन्तःस्तंभ इव। वायुना कुपितेन नाभेरधः सशूलमापूर आध्मानः। एतेषु रोगेषु चिकित्सितस्थाने वक्ष्यमाणा(अ.६)हिध्माचिकित्सा कार्या १५४

७ क्षुते रोधः।

**१५५–शिरोर्तीन्द्रियदौर्बल्यमन्यास्तंभार्दितं क्षुतेः।**
**तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः॥ ९**
**प्रवर्तयेत् क्षुतिं सक्तां स्वेदाभ्यंगौ च शीलयेत्।**
**योज्यं वातघ्नमन्नं च घृतं चौत्तरभक्तिकम्॥ १०**

१५५–क्षुतेः क्षवथो रोधात् शिरोर्त्यादिरोगोत्पत्तिः, इन्द्रियाणां दर्शनादीनामशक्तत्वं स्वविषयग्रहणे दौर्बल्यम्, अत्र तीक्ष्णधूमादिभिः सक्तामप्रवर्तमानां क्षुतिं प्रवर्तयेत् तीक्ष्णो धूमो वक्ष्यमाणलक्षणः (सू. अ. ३०)। तीक्ष्णाघ्राणं नासया मरिचादिग्रहणम्। **औत्तरभक्तिकं** (सू. अ. २५) भोजनस्य पश्चात्तत्कालिकमेव घृतं योज्यम् १५५

८ तृष्णानिरोधः।

**१५६–शोषाङ्गसादबाधिर्यसंमोहभ्रमहृद्गदाः।**
**तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः॥ ११**

१५६–तृष्णाया निग्रहाद्रोधात् शोषाद्युद्भवः। बाधिर्यमश्रुतिः। मोह एव सम्मोहः। तत्र तृड्रोधे सर्वो विधिः स्नानान्नपानादिकः शीतः कार्यः १५६

९ क्षुधो रोधः।

**१५७–अङ्गभङ्गारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः।**
**तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम्॥**

१५७–क्षुधो वेगरोधादङ्गभङ्गाद्युत्पत्तिः। तत्र च लघु शाल्यादि स्निग्धमुष्णमल्पं च भोजनं विधेयम् १५७

१० निद्रारोधः।

**१५८–निद्राया मोहमूर्धाक्षिगौरवालस्यजृंभिकाः।**
**अङ्गमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च॥ १३**

१५८–निद्रावेगधारणान्मोहशिरोगौरवादयः। तत्र स्वप्नः संवाहनानि च योज्यानि। **संवाहनं**–स्वल्पमर्दनम् १५८

११ कासरोधः।

**१५९–कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः।**
**शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः।**

१५९–कासस्य वेगरोधात् कासवृद्ध्याद्युत्पत्तिः। तत्र कासचिकित्सितोक्तो (चि. अ. ४) विधिः कार्यः १५९

२० ...नाः। ...मूत्रगो° –क. ख. २१ प्राग्भक्ताच्छस्य°–क. ख.।

१२ श्रमश्वासरोधः ।

**१६०–गुल्महृद्रोगसंमोहाः श्रमश्वासाद्विधारितात् ॥१४**
**हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ।**

१६०–अध्वव्यायामादिसाहसेन सद्य उत्पन्नः श्वासः श्रमश्वासः, तद्वेगरोधाद्गुल्माद्युत्पत्तिः । तत्र विश्रमणं, वातघ्नी च क्रिया हिता १६०

१३ जृंभारोधः ।

**१६१–जृंभायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः ॥**

१६१–जृंभावेगरोधात् क्षुतिवद्रोगोत्पत्तिः । तत्र वातघ्नी क्रिया हिता । जृंभा–समुखविकासो गात्रविनामः १६१

१४ अश्रुरोधः ।

**१६२–पीनसाक्षिशिरोहृद्रुङ्मन्यास्तंभारुचिभ्रमाः ।**
**सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥**

१६२–बाष्पस्याश्रुणो वेगरोधात्पीनसाद्युत्पत्तिः । पीनसो नासास्रावः । अक्ष्यादीनां रुजया संबन्धः । तत्र स्वप्नादिका चिकित्सा १६२

१५ वमेर्निग्रहः ।

**१६३–विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ।**
**सकासश्वासहृल्लासव्यङ्गश्वयथवो वमेः ॥ १८**
**गण्डूषधूमानाहारं[22] रूक्षं भुक्त्वा तदुद्वमः ।**
**व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ।**
**सक्षारलवणं तैलमभ्यङ्गार्थे[23] च शस्यते ॥ १९**

१६३–वमेः च्छर्दिषः वेगधारणाद्विसर्पाद्युत्पत्तिः । **कोठः** श्यावानि मण्डलानि । तत्र गण्डूषादिका चिकित्सा रूक्षं चान्नं भुक्त्वा उद्वमेत् । स्निग्धस्य कफोत्क्लेशकरत्वात् । एतावता हि प्राणो वायुः स्वमार्गं गृह्णाति । क्षारलवणाभ्यां युक्तं तैलमभ्यङ्गे च योजयेत् १६३

१६ शुक्रवेगविधारणम् ।

**१६४–शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुज्वराः ।**
**हृद्व्यथा मूत्रसङ्गाङ्गभङ्गवर्ध्माश्मपण्डताः[24] ॥ २०**
**ताम्रचूडसुराशालिवस्त्यभ्यङ्गावगाहनम् ।**
**वस्तिशुद्धिकरैः सिद्धं भजेत्क्षीरं प्रियाः[25] स्त्रियः ॥**
**तत्र सेवेत–**

१६४–शुक्रवेगरोधाच्छुक्रस्रावाद्युत्पत्तिः । **पण्डता** स्त्रीगमनाशक्तता । तत्र च ताम्रचूडादिका चिकित्सा । **ताम्रचूडः** कुक्कुटः । वस्तिशुद्धिकरैः त्रपुसप्रभृतिभिः सिद्धं क्षीरं भजेत् । प्रियाश्च युवतीः १६४

१७ वेगरोधिषु चिकित्सानर्हाः ।

**१६५– सर्वं च वर्जयेद्वेगधारिणम् ।**
**विड्वामिनं परिक्लिष्टं क्षीणं तृट्च्छूलपीडितम् ॥**

१६५–न च सर्वस्मिन् वेगरोधिनि चिकित्सा कार्या १६५

१८ रोगाणां सामान्यं निदानं चिकित्सा च ।

**१६६–रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ।**

१६६–वेगधारणे दोषानुक्त्वा उदीरणे रोगानाह–**रोगा इत्यादि ।** यद्येवं धारणग्रहणं न कर्तव्यमुदीरणेन सर्वरोगोत्पत्तेः । उदीरणेनापि धारणे निर्दिष्टानामेव रोगाणामुत्पत्तिः प्रसज्यते तन्निवृत्त्यर्थं धारणग्रहणम् १६६

**१६७–निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान्प्रति ॥ २३**
**ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति ।**
**अन्नपानौषधं[26] तस्य युञ्जीतातोऽनुलोमनम् ॥ २४**

१६७–यदि धारणोदीरणाभ्यां सर्वे रोगाः प्रजायन्तेऽतो वातादिरोधेन गुल्मादिवचनमनर्थकमित्याह–**निर्दिष्टमित्यादि ।** तत्र तयोर्वेगधारणोदीरणयोर्मध्ये वेगधारणाच्चिरकालभाविनः सप्रत्यवाया रोगा भवन्ति । उदीरणान्न तथा । तेन भूयिष्ठं ये संभवन्ति तान्प्रति चिकित्सितं निर्दिष्टमित्यर्थः । अस्माद्वेगधारणादितरेभ्यः पवन एव कुप्यति यत्तस्मादनुलोमनमस्य हितम् १६७

**१६८–पायुमेहनमुष्केषु शूलं शोषो हृदि व्यथा[27] ।**
**तेषु तेषु विकारेषु यथास्वं च चिकित्सितम् ॥२५**

१९ मलविशोधनावश्यकता ।

**१६९–क्रमादपामपि सर्णा पंकोऽवश्यं भवत्यतः[28] ।**
**उत्तिष्ठेत यथाकालं मलानां शोधनं प्रति ॥ २६**

१६९–एवं स्वास्थ्यसंवाहनरोगोत्पत्तिरक्षणप्रसंगेनेदमुच्यते–**क्रमादित्यादि ।** यथा निर्मलेऽपि सर्णावल्लिश्चरे स्थितानां स्वभावनिर्मलानामप्यपां क्रमात्कालपरिवासात् पंकोऽवश्यं भवति तथा ऋतुचर्याया अनुष्ठातुरपि देहे दोषसञ्चयः । अतो हेतोर्यथाकालमुक्तशोधनकालानतिक्रमेण मलानां दोषाणां शोधनं प्रति सेवार्थमुत्तिष्ठेत चेष्टेत १६९

२० उपेक्षिता मला कान्रोगान्कुर्युः ?

**१७०–चयकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिताः ।**
**प्रायशः सुचिरेणापि भेषजद्वेषिणो गदान् ॥ २७**
**अतिस्थौल्याग्निसदनमेहकुष्ठहृतौजसः[29] ।**
**स्रोतोरोधाक्षविभ्रंशश्वासश्वयथुपाण्डुताः[30] ॥ २८**
**आमोरुस्तंभजठरकृच्छ्रालसकदण्डकान् ।**
**तृप्तिप्रमीलकालस्यग्रहण्यर्शोभगंदरान् ।**
**प्लीहविद्रधिवीसर्पमदसंन्यासपीनसान्[31] ।**
**च्छर्दिगण्डकृमिग्रन्थितन्द्रादुःस्वप्नदर्शनम् ॥ २९**
**कण्ठामयान्मूर्धरुजं प्रणाशं बुद्धिनिद्रयोः ।**
**तेजोवर्णबलानां च तृप्यतो बृंहणैरपि ॥ ३०**
**उचितैरपि चाहारैर्यस्मादस्य वहन्ति न ।**
**दोषोपलिप्तवदना रसं रसवहाः सिराः ॥ ३१**
**वमनादीनतो[32] युञ्ज्यात्स्वस्थस्यैव यथाविधि ।**

२१ संशोधनस्यैवाभ्यर्हत्वम् ।

**दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ॥३२**
**ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ।**

---

२२ गण्डूषधूमावाहा°—क. ख. २३ °ङ्गार्थं च—क. ख. २४ भङ्गवृद्ध्यश्मपण्डताः—क. ख. २५ प्रियाः स्त्रियः । तृट्च्छूलार्तं त्यजेत्क्षीणं विड्वमं वेगरोधिनम् । रोगाः स°—क. ख. २६ नौषधं तत्र यु°—क. २७ पायुमेहनेत्यादिश्लोकार्धं कपुस्तके नास्ति । २८ क्रमादपङ्केऽपि सर्णौ पङ्कोऽवश्यं भवेद्यतः । उत्ति°—क. २९ °नकुष्ठमेहहृतौजसः—क. ख. ३० °क्षाव-भ्रंभश्वासश्वयथुपाण्डुताः—क. ३१ तृप्तिप्रमीलकादिः श्लोको गपुस्तके नास्ति । ३२ वमनादीन्यतो यु°—क.

२२ चिकित्साक्रमः ।

**यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत् ॥ ३३**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ।**

१७०-हि यसाद्भेषजं वमनादि ये द्विषन्ति न सेवन्ते तेषां दोषाश्रयावस्थामुपारूढा उपेक्षिताश्च सुचिरेणापि रोगान्कुर्वते यथासंभवमातिस्थौल्यादीन् । **हृतौजःशब्दः** पुल्लिंगः सान्निपातज्वरपर्यायः । "सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम्," **अक्षविभ्रंश** इन्द्रियविनाशः । **अलसकदण्डकौ** वक्ष्यमाणलक्षणौ (सू.अ.११)। **तृप्तिः** अभुक्तेऽपि भुक्ताभिमानिता । **प्रमीलकं** स्तैमित्यम् **अम्लपित्तस्यापरनामे**त्यन्ये पठन्ति यथा—

'पच्यमानं विदाह्यन्नं रक्तादीन्कोपयेद्यदा ।
पित्तं च कोपयेदाशु कफस्थानानिलेरितम् ॥ १ ॥
तदा भवति हृच्छूलमुखवैरस्यसादनम् ।
लवणं तिक्तमम्लं च सततं च्छर्दयत्यपि ॥ २ ॥
दाहोऽतिनिद्रा विट्सङ्गो वैवर्ण्यं कार्श्यमेव च ।
अरोचको क्षुत्तुकिता प्रसेकः श्लेष्मणस्तथा ॥ ३ ॥
स्युर्यत्रैतानि लिंगानि निर्दिशेत्तत्प्रमीलकम् ।
पर्यायादम्लपित्तं च तथा पित्तविषूचका॥४॥ ' इति ।

उचितैः सात्म्यैर्बृंहणैरपि चाहारैः तृप्तिं यातस्तेजसो वर्णस्य बलस्य च नाशः । यस्माद्दोषोपलिप्तमुखा रसवहाः सिरा रसं न वहन्ति । तदर्थं वमनादीनुपक्रमान् योजयेत् स्वस्थस्यैव। न तु रोगविशेषान्तरत्वेन। अन्यत्सुबोधम् ।१७०

**१७१-भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ॥ ३४**
**शालिषष्टिकगोधूममांसक्षीरघृतादिभिः[33] ।**
**हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः ॥ ३५**
**साभ्यङ्गोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ।**
**तथा स लभते शर्म सर्वपावकपाटवम् ॥ ३६**
**धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ।**

१७१-बहुशो भेषजप्रयोगात्क्षपिते शरीरे आहारैरेव बृंहणं क्रमात्स्वल्पं स्वल्पं पुष्टिकरं सर्वं पथ्यम् । किंभूतैराहारैः ? शाल्यादिभिर्हृद्येन दीपनेन चौषधेन संयोगाद्रुचिप्रदैरग्निबलप्रदैश्च । सर्वपावकानां—जाठरस्य (—अग्नेः) धात्वग्नीनां च पटुत्वम् १७१

२३ आगन्तवो रोगाः ।

**१७२-ये भूतविषवाय्वग्निक्षतभंगादिसंभवाः ॥ ३७**
**कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः ।**

१७२-निजरोगोत्पत्तिकारणपरिहारप्रसङ्गेनागन्तवो रोगास्तत्परिहाराश्चोच्यन्ते-ये भूतेत्यादि । भूतादिसंभवा रोगा रागादयश्चागन्तवो व्याधयः । आगन्तुत्वं वक्ष्यमाणलक्षणम् १७२ (चरक. सू. अ. २०-७)

२४ निजागन्तुविकारचिकित्सा ।

**१७३-त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ॥**
**देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ।**
**अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम् ॥ ३९**
***भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक् ।**
**अनुत्पत्त्यै समासेन विधिरेषः प्रदर्शितः ॥ ४०**
**निजागन्तुविकाराणामुत्पन्नानां च शान्तये ।**

१७३-तेषामागन्तूनामनुत्पत्त्यै विधिः प्रज्ञापराधत्यागादिः । **प्रज्ञापराधः**—दिनचर्याद्युक्तविध्यतिक्रमः । देशादिविज्ञानेन विषयस्थं मनः स्पष्टतां याति । एवमभिजनोऽहम्, तत्र चेदमुचितमिदमनुचितम् । एवमहमर्थवानेवमहं शूरः । इदमस्मिन् देशे काले चोचितमिदं नेति बहुविधं परिकल्पनं देशकालात्मविज्ञानम् । भूतग्रहादीनामस्पर्शने य उपायो भूतविद्यायां निर्दिष्टः । तथा च तेषु भूतेषु केचित्स्पृशन्तोऽधितिष्ठन्ति केचिज्जिघ्रक्षन्ते इत्येवमाद्युक्तामिति । द्विविधो रोगोत्पत्त्यभावाय उत्पन्नानां च रोगाणां नाशाय विधिः प्रदर्शितः ( उ. अ. ७, ८, ९, १० ) १७३

२५ दोषाणां शोधनकालः ।

**१७४-शीतोद्भवं दोषचयं वसन्ते**
**विशोधयन्ग्रीष्मजमभ्रकाले ।**
**घनात्यये वार्षिकमाशु सम्यक्**
**प्राप्नोति रोगानृतुजान् न जातु ॥ ४१**

१७४-दोषाणां हि शोधनमुक्तम्, तस्य तु काल उच्यते-शीतोद्भवमित्यादि । इति साधारणेषु कालेषु दोषानतिवाहयन् ऋतुजान् रोगान् न कदाचित्प्राप्नोति । अतिशीतादिकालेषु अयोगादिशंका १७४

२६ अध्यायोपसंहारः ।

**१७५-नित्यं हिताहारविहारसेवी**
**समीक्ष्यकारी विषयेष्वसक्तः ।**
**दाता समः सत्यपरः क्षमावा-**
**नाप्तोपसेवी च भवत्यरोगः ॥ ४२**

१७५-नित्यं हिताहारेत्यादि सुबोधम् १७५

**टिप्पणी**—आप्तोपसेवीति-आप्तस्तु यथार्थवक्ता ।

**१७६-अर्थेष्वलभ्येष्वकृतप्रयत्नं**
**कृतादरं नित्यमुपायवत्सु ।**
**जितेन्द्रियं नानुपतन्ति रोगा-**
**स्तत्कालयुक्तं यदि नास्ति दैवम् ॥ ४३**

१७६-तथा यः पुरुषार्थेष्वलभ्येष्वपरिच्छिन्नलाभेषु वस्तुष्वनारभ्ययत्नः उपायवत्सु शक्यमानेषु कृतप्रयत्नः जितेन्द्रियश्च तं रोगा नानुपतन्ति तत्कालयुक्ताद्विना दैवात् । दैवे पूर्वकृते कर्मणि दुष्टे तत्काले फलवत्यवश्यमेव रोगोत्पत्तिः १७६

**१७७-कालोऽनुकूलो विषया मनोज्ञा**
**धर्म्याः क्रियाः कर्म सुखानुबन्धि ।**
**सत्त्वं विधेयं विशदा च बुद्धि-**
**र्भवन्ति धीरस्य सदा सुखाय ॥ ४४**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने रोगानुत्पादनीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

१७७-कालोऽनुकूलः हीनातिमिथ्यायोगपवर्जितः अर्थलाभादिफलप्रदश्च । विषयाः शब्दादयः मनोज्ञाः-प्रियाः ।

---

३३ 'गोधूममुद्गमांसघृतादिभिः—क.ख. * अस्पर्शने—असंबन्धे उपायः, भूतप्रतिषेधादौ निर्दिष्टः

क्रियाश्च धर्मप्रधानाः। कर्म चोभयलोकसुखानुबन्धि। सत्त्वं मनः। विधेयमपरवशम्। विशदा निर्मला बुद्धिः। एतानि धैर्ययुक्तस्य सुखाय कल्पन्ते १७७

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने पंचमोऽध्यायः ॥५॥**

## द्रवद्रव्य[स्वरूप]विज्ञानीयः षष्ठोऽध्यायः

**१७८–अथातो द्रवद्रव्यविज्ञानीयं नामाध्यायं व्याख्यास्यामः। इतिहस्माहुरात्रेयादयो महर्षयः १**

१७८–स्वस्थहितप्रसंगेनान्नपानमुच्यते। तत्रान्नपानानां संस्काराद्युपयोगो द्रवे तोयादिके संभवति, अतः प्रथमं तोयादीन्युच्यन्ते–अथात इत्यादि १७८

**टिप्पणी**–अथात इति। स्वस्थहितप्रसंगेन पूर्वं त्रिभिरध्यायैर्विहार उक्तः, अधुनाऽऽहारो वक्तव्यः। स च द्विविधः-द्रवोऽद्रवश्च। तत्र द्रवोऽस्मिन्नध्याय उच्यते। अत एवायं द्रवद्रव्यविज्ञानीयः। द्रवाणि च तानि द्रव्याणि च द्रवद्रव्याणि, तेषां विज्ञानमवबोधः, तस्मै हितो द्रवद्रव्यविज्ञानीयोऽध्यायः, तं व्याख्यास्यामः १७८

(१) तोयवर्गः।

१ जलगुणाः।

**१७९–जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम्।**
**तन्वव्यक्तरसं मृष्टं शीतं शुच्यमृतोपमम् २**
**सूर्येन्द्वृतप्रमुक्तत्वाल्लघु वातकफापहम्।**
**शैत्यजीवनसौम्यत्वैः पित्तरक्तविषार्तिजित् ३**
**गङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः।**
**हिताहितत्वे तद्भूयो देशकालावपेक्षते ४**

१७९–जलस्य च प्राधान्यादग्रे ग्रहणम्। अत आह–**जीवनमित्यादि**। गङ्गाम्बु जीवनत्वादिगुणयुक्तम्। **जीवनं** सौम्यधातुवृद्धिकरम्। ओजोवृद्धिकरामित्यन्ये। **तर्पणं** तृप्तिकृत्। हृदयस्य प्रियं **हृद्यम्**। **ह्लादि** आह्लादकरम्। **बुद्धेः प्रबोधनं** पटुत्वकरम्। **तनु** स्वच्छम्। **अव्यक्तरसं** माधुर्यादिना अविविक्तम्। **मृष्टं** स्वादुत्वादिगुणयुक्तम्। **शीतं** वीर्येण। अन्यातपाद्यतप्तमन्योदकेभ्यः स्वभावेन शीततरम्। **शुचि** पवित्रम्। **अमृतोपमं** प्राणसन्धारकत्वात्। सूर्येण रविणोद्धृत्य यतो मुक्तमतः क्रियायोगादागतलाघवं च। वातश्लेष्मघ्नं च अन्यपानीयापेक्षया। शीतत्वादिना च पित्तादिविनाशनम्। किंभूतं गङ्गाम्बु नभसोऽन्तरिक्षात् भ्रष्टं पतितम्। तथा रविचन्द्रवायुभिः पतदेव स्पृष्टम्। एवंस्वरूपमपि गङ्गाम्बु पथ्यत्वे अपथ्यत्वे च देशं कालं चापेक्षते। एवंविधे देशे च यतः पतितमत एवंगुणम् एवं कालेऽपि। देशकालौ च गुणविशेषेण वक्ष्यमाणलक्षणौ १७९

**टिप्पणी**—टीकायां हृदयस्य प्रियं हृद्यमिति-अत्र अरुणदत्तस्त्वाह–हृदयाय हितं हृद्यम्। न तु हृदयस्य प्रियं हृद्यम्। एवं व्याख्यायमाने 'अम्लं हृद्यानाम्' (सू. अ. १३) इत्यन्यानां मध्ये तत्पाठं मुनिर्नैवाकरिष्यत्। यस्मात्किंचिद्द्रव्यं कस्यचित्प्रियं भवति न सर्वं सर्वस्य। तस्मात् हृदयाय हितं हृद्यम् इति बोध्यम्। परं हेमाद्रिस्तु 'हृदयस्य प्रियं तत्प्रसादकरत्वात्' इति व्याख्याय इन्दुमतमेव स्वीकरोति। अव्यक्तरसमिति–अनभिव्यक्तषड्रसमित्यर्थः। मृष्टमिति–मृष्टशब्दोऽत्र मनःप्रीणनार्थः। तथाचोक्तं चरके-ण–'शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम्। प्रकृत्या दिव्यमुदकम्–' (सू. २७–१९८) १७९

२ गाङ्गसामुद्रलक्षणे।

**१८०–येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम्।**
**अक्लिन्नमविवर्णं वा तत् पेयं गाङ्गमन्यथा ५**
**सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना।**

१८०–ननु गङ्गाम्बु न ज्ञायते। कतमत्तादित्यत उच्यते–**येनाभिवृष्टमिति**। येनाम्बुनाभिवृष्टं सिक्तममलं निर्मलं शाल्यन्नमक्लिन्न मविवर्णं वा भवति तदम्बु गाङ्गत्वात् पेयम्। वेति समुच्चये। एतद्विपर्ययेण सामुद्रम्। तच्चाश्वयुजं मासं वर्जयित्वान्यस्मिन् मासि न पेयम् १८०

**टिप्पणी**—मासादाश्वयुजाद्विनेति–आश्वयुजः आश्विनः। अत्र सुश्रुतः–'आंतरिक्षं चतुर्विधम्–धारं, कारं तौषारम् हैमम्। तेषां धारं प्रधानम्। लघुत्वात्। तत्पुनर्द्विविधम् गाङ्गं सामुद्रं च। (सू. ४५–७) इति। तस्यार्थः—धाराभिः पततीति धारम्। करा वर्षोपलास्तेषां तोयं कारम्। तौषारमवश्यायजं निशाजलम्। तदेव संहतावयवत्वेन स्फटिकशिलाशकलसदृशावयवं हिमम्। तद्भवं हैमम् इति। गाङ्गमाकाशाधिष्ठानम्। सामुद्रं पुनरवन्यधिष्ठानम्। अन्यथेति–सुश्रुतोदर्वागिव (सु.सू.अ.४५-७) वर्णान्यत्वे सिक्थप्रक्लेदे च सामुद्रमिति विद्यादिति भावः १८०

३ दिव्योदकपानम्।

**१८१–खातधौतशिलापृष्ठवस्त्रादिभ्यश्च्युतं जलम् ६**
**हैममृन्मयपात्रस्थमविपन्नं सदा पिबेत्।**

१८१–एतच्चाभिवृष्टं प्रथमं खातादिनोपायेन गृह्यते। खातात् गृहीतम्। धौतशिलापृष्ठात् गृहीतम्। धौतवस्त्रादिभ्यो वा च्युतम्। हैमे सौवर्णे मृन्मये वा पात्रेऽवस्थितमविकृतम्। तत्सदा पिबेत्। **खातो** जलग्रहणार्था भूकुण्डिका १८१

४ भूमिष्ठोदकम्।

**१८२–तदभावे च भूमिष्ठमान्तरिक्षानुकारि यत् ७**

१८२–तदभावे भूमिष्ठं पेयम्। यत् गुणैः स्वच्छत्वादिभिरान्तरिक्षमनुकरोति तत्सदृशं गुणैरित्यर्थः १८२

५ देशभेदेन जलगुणाः।

**१८३–श्वेते कषायं, तत्स्वादु कृष्णे, तिक्तं च पाण्डुरे।**
**नीले कषायमधुरं, देशे लवणमूषरे, ८**
**सक्षारं कपिले, मिश्रं मिश्रेऽथाम्बुगुणाधिके।**
**मधुरं, लवणाम्लं तु भवेद्भूमिगुणाधिके, ९**

१ नीयमध्यायं व्याख्यास्यामः। जीवनं तर्पणं–क. ख. २ 'तं लध्वमृतो'–क. ख. ३ हैमम्.–४ 'श्रेऽथोऽम्बुगु'–क.

**तेजोधिके तिक्तकटु, कषायं पवनाधिके, ।**
**दिव्यानुकारि त्वव्यक्तरसत्वात् खगुणाधिके, ८**
**शुचिपृथ्वसितश्वेते [5] देशे चार्कानिलाहतम् ।**

१८३-भूमिष्ठमुक्तं तस्यैव विशेष उच्यते देशविशेषेण । श्वेते मृदि प्रदेशे स्थितमुदकं कषायरसतां याति । एवं कृष्णे मधुरताम् । पाण्डुरे तिक्तताम् । नीलं कषायमधुरताम् । ऊषरे च लावण्यम् । ऊषरो यो दग्धमृदिव प्रदेशः स ऊषरः स्यात् "ऊषरः क्षारमृत्तिका" । कपिले सक्षारमुदकं भवति । सक्षारं क्षारत्वगुणयुक्तं, क्षारो नाम रसविशेषः । क्षारोऽसौम्यः कठिनभाववैपरीत्यकृत् । मिश्रलक्षणे मिश्रगुणः । सर्वश्च भूप्रदेशः पञ्चभूतात्मकः न सर्वत्र भूतसाम्यं भवति । अत उच्यते आप्यभागाधिके देशे मधुरमुदकं भवति । पार्थिवगुणाधिके लवणाम्लम् । तेजोभागाधिके तिक्तकटुकम् । वायुभागाधिके कषायम् । आकाशगुणाधिके चाव्यक्तरसत्वादान्तरिक्षसमगुणम् । भूताधिक्यं च विशिष्टमनेनैव मधुरत्वादिना ज्ञायते । 'गुणशब्दश्च भागपर्यायः' । 'संख्याया गुणस्य निमाने'-इत्यादिना (पा. सू.५-२-४७) काशिका) विभागो गुण इति च । यथा । अव्यक्तरसत्वम् । मूर्तमहाभूतस्वल्पत्वादिदमपि दिव्यसदृशं शुचौ विस्तीर्णे कृष्णे श्वेतमृदि च स्थितमर्केण वायुना चाहतम् १८३

६ जलस्याष्टौ भेदास्तेषां गुणाश्च ।

**१८४-[6]कौपसारसताटाकचौण्डप्रास्रवणौद्भिदम् ११**
**वापीनदीतोयमिति तत्पुनः स्मृतमष्टधा ।**

१८४-तद्भूमिष्ठमष्टधाष्टभिः प्रकारैः स्मृतं कौपत्वादिभिः कूपे भवं कौपम् । सरसि भवं सारसम् । तथा ताटाकम् । चौण्डं-पर्वतादौ पाषाणनिम्नस्थितम् । ताटाकं चान्तरिक्षात्पतित्वा भूमौ स्थितम् । प्रास्रवणं पर्वतात्स्रुतम् । औद्भिदं भूमावुद्भिद्य तत्रैव तिष्ठति । वापी कूपवत्सर्वतः कृतसोपानपंक्तिः । नदी प्रसिद्धा । एतेषां क्रमेण गुणनिदर्शनम् १८४

**१८५-सक्षारं पित्तकृत्कौपं दीपनं नातिवातलम् १२**
**सारसं स्वादु लघु च, ताटाकं [7] गुरु वातलम् ।**
**[8]चौण्डं तु पित्तलं, दोषहरं प्रास्रवणोदकम् १३**
**औद्भिदं स्वादु पित्तघ्नं, स्वादु वापीजलं लघु ।**
**नादेयं वातलं रूक्षं कटुकं च, [9]तदाऽऽदिशेत् १४**
**धन्वानूपमहीध्राणां सामीप्याद्गुरुलाघवम् ।**

१८५-कौपं क्षारगुणयुक्तं पित्तलम् अग्निदीपनं अल्पवातलं च सारसं मधुरं लघु च । ताटाकं गुरु वातकरं च । चौण्डं पित्तलम् । प्रास्रवणं त्रिदोषहरम् । औद्भिदं मधुरं पित्तघ्नम् । वापीजलं मधुरं लघु च । सामान्येन वातलं रूक्षं कटुकं च नादेयम् । कौपादीनां * च समानां धन्वादिसामीप्याद्गुरुत्वं लघुत्वं च विज्ञेयम् । तेनैतदुक्तं भवति- आनूपे यथोक्तलक्षणे स्थिताः कूपादयो गुरवः । धन्वनि जाङ्गले देशे स्थिता आनूपेभ्यो लघवो बहूदकसंबन्धाभावात् । तेभ्यो जांगलेभ्यः पर्वतस्थानां कूपादीनामतिलघुत्वमुदकानामत्यन्ताभावादित्यत्र चोत्सर्गापवादोपबृंहकवचनकल्पना च स्वबुध्या योज्या १८५

७ पथ्या अपथ्याश्च नद्यः ।

**१८६-पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः १५**
**[10]"पथ्याः समासात्ता नद्यो विपरीतास्ततोऽन्यथा ।**
**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः १६**
**हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिताः" ।**
**क्रिमिश्लीपदहृत्कण्ठशिरोरोगान्प्रकुर्वते १७**

१८६-नद्य उच्यन्ते । समासात्संक्षेपतः इदमुच्यते-पश्चिमसमुद्रगाः शीघ्रवाहिन्यो निर्मलपानीयाश्च नद्यः पथ्याः । एतद्विपरीतलक्षणा विपरीता अपथ्याः । हिमवदुद्भूता मलयोद्भूताश्च पाषाणक्षुण्णाः पथ्याः । स्थितास्ता एवापथ्याः क्रिमिश्लीपदादिकराश्च १८६

टिप्पणी—उपलेति-अयं विषयः प्रथमाध्याये 'स्वान्यतन्त्रेत्यादिश्लोकव्याख्यायामिन्दुना परिष्कृतः ( पृ. ३ )

**१८७-प्राच्यावन्त्यपरान्तोत्था दुर्नामानि, महेन्द्रजाः ।**
**उदरश्लीपदातङ्कान्, सह्यविन्ध्यभवाः पुनः १८**
**कुष्ठपाण्डुशिरोरोगान्, दोषघ्न्यः पारियात्रजाः ।**
**बलपौरुषकारिण्यः, सागरांभस्त्रिदोषकृत् १९**

१८७-प्राच्यादिजाता दुर्नामानि कुर्वते । प्राच्या-गौडाः । अवन्तयो-मालवाः । अपरान्ताः-कोंकणाः । महेन्द्रजा उदरादिकं कुर्वते । सह्याद्विन्ध्याच्च जाताः कुष्ठादिकं कुर्वते । पारियात्रजास्त्रिदोषहरा बल्याः पौरुषकारिण्यः । पौरुषं वृषत्वम् । समुद्रजलं त्रिदोषकरम् १८७

८ दुष्टानि जलानि तेषां संस्काराश्च ।

**१८८-कीटाहिमूत्रविट्कोथतृणजालोत्कराविलम् ।**
**[11]"पङ्कपङ्कजशैवालहठपर्णादिसंस्तृतम् २०**
**सूर्येन्दुपवनादृष्टं जुष्टं च क्षुद्रजन्तुभिः ।**
**अभिवृष्टं विवर्णं च कलुषं स्थूलफेनिलम् २१**
**विरसं गन्धवत्तप्तं दन्तग्राह्यतिशैत्यतः ।**
**अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत् २२**
**लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम् ।**
**तत्कुर्यात्स्नानपानाभ्यां [12]तृष्णाऽऽध्मानोदरज्वरान्**
**कासाग्निसादाभिष्यन्दकण्डूगण्डादिकानतः ।**
**तद्वर्जयेदभावे वा तोयस्यान्यस्य शस्यते ॥ २४**
**घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम् ।**
**व्यापन्नस्यास्य तपनमग्न्यर्कायसपिण्डकैः ॥ २५**
**पर्णीमूलबिसग्रन्थिमुक्ताकतकशैवलैः ।**
**[13]"वस्त्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम् ॥ २६**
**पाटलाकरवीरादिकुसुमैर्गन्धनाशनम् ।**

१८८-कीटमूत्रादियुक्तं जलं स्नानपानादिना तृष्णादीन्कुर्यात् । कीटादीनां क्रिम्यादीनां मूत्रेण, विशा, कोथेन चाविलं मिश्रीभूतम् । कोथो-मृतशरीरक्लेदः । तृणसमूहेन चावि-

५ "ते नीलें चार्का"-क. ६ "ताडागैश्चौण्ड्यप्रास्रव"-क. ख. ७ ताडागं गु० -क. ख. ८ चौण्ड्यं तु-क. ख. ९ "कं च तथाऽऽदि" क. ख. १० "थ्याः समासतो न"-क. ११ स्थिराः-क. ख. १२ "जसेवाल"-क. १३ "ष्णादादाहादेरज्व" -क. १४ वस्त्रगो०-क. ग. * कौपादीनां वाप्यन्तानामिति शेषः । नादेयजलस्याग्रे वक्ष्यमाणत्वात् ।



प्रास्रवणोदकम् ( सू. १८४ )



कूपः ( सू. १८४ )



तडागः ( सू. १८४ )



नदी ( सू. १८४ )



उपलास्फालनाक्षेपेण खेदितोदका नदी ( सू. १८६ )

लम् । उत्करो—गृहादिमार्जनराशिः । पङ्कादिभिश्च संस्तृतं गृहीतप्रस्तारम् । हठो–निर्मूलोद्भवस्तृणविशेषः । तथा सूर्यादिभिरदृष्टम् तथा क्षुद्रजन्तुभिः क्रिमिभिर्जुष्टं सेवितम् । अभिवृष्टं तत्कालपतितान्यवर्षमिश्रीभूतम् । तथा घनम् । तथा स्थूलफेनिलं बृहत्फेनयुक्तम् । विरसं दुर्गन्धि । अतिशीतं च । दिव्यमान्तरिक्षमनार्तवमनृतौ पतितम् । ऋतुर्देशविशेषेण नियत एव । वर्षस्य वर्षा एवेति केचित् । ऋतावपि प्रथमपतितं न पेयम् । लूतादिदूषितं च । एतच्च यतस्तृष्णाध्मानादिकान् कुरुते अतो वर्जयेत् । सर्वे चेमे रोगा वक्ष्यमाणलक्षणाः । एतैश्चोपहतमन्यजलालाभे कृतसंस्कारं शस्यते । तमेव च संस्कारं दर्शयति–घनवस्त्रपरिस्रावणेन क्षुद्रजन्त्वाभिरक्षणं कार्यम् । व्यापन्नस्य पैच्छिल्यादियुक्तस्य अग्निना, सूर्येण, तप्तशस्त्रपिण्डमज्जनेन वा तापनं कार्यम् । पर्णीमूलादिना प्रसादनं निर्मलीकरणं कार्यम् । पर्णीमूलमेरकामूलम् । एरका काश्मीरेषु " पित्ती ", अन्यत्र दण्डेरकपट्टेरकभेदेन प्रसिद्धा । बिसग्रन्थिना, मुक्ताभिः, कतकफलेन, शैवलेन, वस्त्रस्रावणेन, गोमेदकेन वा । बिसग्रन्थिस्त्रिपादिका । कतकं प्रसिद्धम् । शैवालं कच्छम् । गोमेदकमंकोलकं मणिविशेषश्च । पाटलादिपुष्पैः दुर्गन्धनाशनं संपादनीयम् १८८

९ पानीयपानविमर्शः ।

१८९–पानीयं[15] न तु पानीयं पानीयेऽन्यप्रदेशजे ॥ २७
अजीर्णे क्वथितं चामे पक्वे जीर्णेऽपि नेतरत् ।
शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् २८

१९८–सर्वं पानीयमन्यप्रदेशजे पानीयेऽजीर्णे न पानीयं न पेयमिति । तेनैतदुक्तं भवति–विजातीये पानीये पीते तज्जरणान्तं यावद्विजातीयं पानीयं न पेयमिति । यथा कौपे–ताटाकं, ताटाके–कौपमिति । एवं सर्वत्र । तथा आमे अपक्वजले अजीर्णे क्वथितं पक्वं न पेयम् । तथा पक्वे क्वथिते जीर्णेऽपि इतरदामं न पेयम् । सजातीयमपि पक्वे जर्णेऽपि यावन्न भुक्तं तावदामं न पेयमित्यर्थः । एष च विधिर्द्वयोरप्यामपक्वयोः शीतयोः, तप्ते त्वजीर्ण एव शीतं त्यजेन्न जीर्णे १८९

**टिप्पणी**—शीते विधिरयम्–क्वथितशीते एतद्विधानमित्यर्थः । तु अवधारणे ततो अजर्णे एव शिशिरं त्यजेत् । जर्णे तु शीतं पिबेदित्यर्थः १८९

१९०–पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम् ।
अतोऽत्यन्तनिषेधेऽपि[16] न क्वचिद्वारि वार्यते ॥ २९
[17]आस्यशोषाङ्गसादाद्या मृत्युर्वा[18] तदलाभतः ।
न हि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य च ३०

१९०–अत्यन्तप्रतिषेधेन न कुत्रचिद्वारि वार्यते । यतः पानीयमाह्लादकत्वात्–प्राणिनां प्राणाः, विश्वं च सस्थावरजंगमं पानीयमयमेव । यतः स्वस्थस्य व्याधितस्य च तोयाद्विना वर्तनं न भवति १९०

१९१–केवलं सौषधं पक्वमाममुष्णं हितं च तद् ।
समीक्ष्य मात्रया युक्तममृतं, विषमन्यथा ॥ ३१

१९१–अवस्थाविशेषेण च (१) केवलं (२) सौषधं वा (३) पक्वम् (४) आमं (५) शीतम् उष्णं च तद्धितम् । तच्च पानीयं समीक्ष्य विषये मात्रया युक्तममृतम् । विपर्ययेण युक्तं विषम्

१९२–अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् ।
[19]प्रयाति पित्तश्लेष्मत्वं ज्वरितस्य विशेषतः ॥ ३२
वर्धयत्यामतृण्निद्रातन्द्राध्मानाङ्गगौरवम् ।
कासाग्निसादहृल्लासप्रसेकश्वासपीनसान् ॥ ३३

१९२–अतियोगेन बाहुल्येन तृष्णावतोऽपि प्रयुक्तं सर्वस्य पित्तश्लेष्मतां याति । ज्वरितस्य विशेषतः आमेनाग्नौ बहिष्कृते ज्वरोत्पत्तिः आमस्य च पानीयं तर्पकम् (वर्धकम्) । तस्य च ज्वरितस्यामतृडादीन् वर्धयति । हृल्लासः सप्रसेको हृदयोत्क्लेशः, प्रसेकः स्वतन्त्र एव, तच्च ष्ठीवनम् १९२

१९३–पाके स्वादु हिमं वीर्ये तदुष्णमपि योजितम् ।
तस्मादयोगपानेन लाघवान्न[20] वियोजयेत् ॥ ३४

१९३–सर्वं च जलं मधुरविपाकं यतस्तत्स्पर्शोष्णमपि शीतवीर्यम् । अतः अयोगपानेनातिस्वल्पपानेन लाघवात्स्वल्पत्वान्न वियोजयेत् । स्वल्पत्वं तस्य न चालनीयमित्यर्थः १९३

**टिप्पणी**—पूर्वमतियोगेनेत्यादिना शीतजलातिपानं सपरिकरं निषिद्धम् । अधुनोष्णमपि जलं बहु न पेयमित्याह–पाक इति । यस्मात्स्पर्शोष्णमपि जलं शीतवीर्यं, मधुरविपाकि च भवति, तस्मात्तस्याप्यतिपानं न करणीयम् । किं तु स्वल्पमेव पीत्वा तस्य पीतस्याल्पं प्रमाणं संरक्षणीयमिति भावः । अल्पत्वं च बहुत्वापेक्षया । सम्यग्योग इति यावत् १९३

१० कोष्णजलम् ।

१९४–आमविष्टब्धयोः कोष्णा[21] निष्पिपासोऽप्यपः पिबेत्
यावत्यः क्लेदयन्त्यन्नमतिक्लेदोऽग्निनाशनः ॥ ३५
विबद्धः कफवाताभ्यां मुक्तामाशयबन्धनः ।
पच्यते क्षिप्रमाहारः कोष्णतोयद्रवीकृतः ॥ ३६

१९४–आमविष्टब्धयोः पिपासारहितोऽप्युपकारायैव ईषदुष्णा अपः पिबेत् । आमं श्लेष्मणोपहतजठरत्वादजीर्णमन्नम् । विष्टब्धम् अप्येवं वाताजीर्णम् । एतौ द्वावप्यामविष्टब्धौ मात्राशितीये वक्ष्यमाणलक्षणौ (सू० अ११) । तयोश्च तावती अपः पिबेत् यावत्योऽन्नं क्लेदयितुं समर्थाः । अतिक्लेदेन चाग्निनाशभयात् बह्व्यो न पेयाः । कफवाताभ्यां जठरे विबद्धं निश्चलमपच्यमानमन्नं कोष्णतोयद्रवीकरणान्मुक्तामाशयबन्धनं सत् क्षिप्रमेव पच्यते । मुक्तं बन्धनमामाशये निबन्धनं येन स तथा १९४

१९५–अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च ।
नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत् ॥ ३७
तेजसः प्रतिपक्षत्वान्मन्दाग्निर्वर्जयेज्जलम् ।

११ जलपानं केन विधेयम् ?

सर्वमेव तथा स्यन्दप्लीहविद्रधिगुल्मिनः ॥ ३८

---

१५ न च पा°–क. १६ °धेऽपि न क०–क.ख. १७ तस्य शो०–क. ख. तत्र शो°–ध. १८ °र्वा रु ादल°–क. ख. १९ °ति श्लेष्मपित्तत्वं प्र°–क. ग. २० °न्न नियो°–क. °धवं न नियच्छति–ङ–२१ कोष्णं नि°–ख. ग.

पाण्डूदरातिसारार्शोग्रहणीशोषशोफिनः ।
काममल्पमशक्तौ तु पेयमौषधसंस्कृतम् ॥ ३९
ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः ।

१९५-अनवस्थितदोषस्यानवस्थिताग्नेश्च स्वल्पमप्यामं जलं न पथ्यम् । तद्यथामेषां त्रिदोषकरम् । अनवस्थिताः स्वरूपाच्चलिता अनेकरूपाश्च दोषा यस्य स तथाविधः । एवमनवस्थिताग्निरपि । तथा व्याधिभिः क्षीणं बलं यस्य तस्यामसुदकं त्रिदोषकरम् । तथा मन्दाग्निः सर्वमेव जलं कौपादिकमामं स्वल्पं, पक्वं बहु च वर्जयेत् । तथाभिष्यन्दार्तैश्च सर्वमेव जलं वर्जनीयम् । अभिष्यन्दो नाम चक्षूरोगो वक्ष्यमाणः (उ.अ.१८) अशक्तौ तु विना जलं प्राणसंधारणासामर्थ्ये कदाचित्पेयम् । तच्च स्वल्पम् । किंभूतमल्पं पेयम्? आह । रोगयोग्यैरौषधैः संस्कृतम् । तथा शरदं निदाघं च वर्जयित्वा, अन्यस्मिन्नृतौ स्वस्थेनापि स्वल्पं पेयमेतयोस्तु यथेच्छमेव १९५

१२ भोजनेऽम्बुपानविधिः ।

१९६-भक्तस्यादौ जलं पीतमग्निसादं कृशाङ्गताम् ॥ ४०
अन्ते करोति स्थूलत्वमूर्ध्वं चामाशयात्कफम् ।
मध्ये मध्याङ्गतां साम्यं धातूनां जरणं सुखम् ॥ ४१

१९६-तच्च जलं भोजनकाले अन्नात् पूर्वं पीतमग्निमान्द्यं कार्श्यं च करोति । सर्वं च भुक्त्वा अन्ते पीतं शरीरस्य स्थौल्यमामाशयादुपरि च श्लेष्मवृद्धिं करोति । मध्ये त्वन्नस्य पीतं समाङ्गतां समधातुतां च करोति । सुखेन चान्नं जरयति १९६

१३ शीतजलगुणाः ।

१९७-शीतं मदात्ययग्लानिमूर्छाच्छर्दिश्रमभ्रमान् ॥
तृष्णोष्णदाहपित्तास्रविषाणि च निहन्ति तत् ४२

१९७-शीतं च तदम्बु मदात्ययादीन्वक्ष्यमाणलक्षणान्निहन्ति नाशयति । उष्णेन कालेन उष्णेनाहारादिना च दाह उष्णदाहः १९७

१४ उष्णजलगुणाः ।

१९८-क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात् ।
क्वथितं[22] फेनरहितमवेगममलं हितम् ॥ ४३
हिध्माऽऽध्मानानिलश्लेष्मतृट्कासश्वासपीनसे ।
पार्श्वशूलाममेदःसु सद्यः शुद्धौ नवज्वरे ॥ ४४
दीपनं, पाचनं, कण्ठ्यं, लघु, बस्तिविशोधनम् ॥

१९८-तच्चाम्बु हिध्मादिषु क्वथितं पेयम् । का क्वथनमात्रेत्यत्रोच्यते-देशर्तुगुरुलाघवं विकल्प्य क्षीणचतुर्भागं वा क्षीणत्रिभागं वा क्षीणार्धं वेति त्रिधा । तेनैतदुक्तं भवति-यत् क्वचिद्देशे ऋतौ वा स्वल्पेन गुरुत्वेन युक्तमुदकं तत्क्वथनेन क्षीणचतुर्भागम् । अधिकगुरौ क्षीणत्रिभागम् । अत्यन्तगुरौ अर्धक्षीणमिति । एतद्विपरीतं च लाघवेऽप्येवं व्याख्येयम् । तच्च जलमग्निसंयोगेऽपि आफेनपरिक्षयादामं भवति । फेनरहितं तु क्वथितं भवति । वेगरहितत्वं च पक्वलक्षणं निर्मलत्वं च । तच्च पक्वं हिध्मादीनां हितम् । उष्णमुदकं दीपनमामदोषपाचनम् । स्वयं लघु बस्तिशोधनं च १९८

टिप्पणी—तथा चोक्तं-'यत्क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु । चतुर्भागावशिष्टं तु तत्तोयं कफरोगनुत् । तत्पादहीनं पित्तघ्नं हीनमर्धेन वातनुत्' इति । (अ.हृ.सू.अ.५-१८ अरुणदत्तः १९८ )

१९९-[23]पाषाणरूप्यमृद्धेमजतुतापार्कतापितम् ॥ ४५
पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजित् ।
लघ्वरूक्षं क्रमघ्नं च तोयं क्वथितशीतलम् ॥ ४६
संसर्गे पित्तकफयोः सन्निपाते च शस्यते ।

१५ पर्युषितादिजलम् ।

तोयं वह्निगुणभ्रष्टं पाकेऽम्लं सर्वदोषकृत् ॥ ४७
भवेत् पर्युषितं तच्च-

१९९-तैश्च पाषाणादिभिस्तापितं तत्कालोष्णं शीतमेव वा पीतं त्रिदोषघ्नं तृष्णाघ्नं च । क्वथितशीतलं लघुत्वादियुक्तम् । संसर्गे पित्तश्लेष्मणोः, सन्निपाते च पथ्यम् । उत्तरत्र शीतस्य वातश्लेष्मकोपहेतुत्वेनोक्तेः । वाते वातश्लेष्मणि कफे च न पथ्यम् । तच्च क्वथितशीतलं पर्युषितं विगताहोरात्रं सद्वह्निगुणाल्लघुत्वदीपनयित्वादितो भ्रष्टं रहितं भवति । अम्लविपाकं दोषकरं च १९९

२००- तोयं हिमकरोद्भवम्[24] ।
अतिशैत्यगुरुस्थैर्यसंघातैः कफवातकृत् ॥ ४८
चन्द्रकान्तभवं रक्षोविषपित्तज्वरापहम् ।
दृष्टिमेधावपुस्थैर्यकरं स्वादु हिमं लघु ॥ ४९

१६ नारिकेलोदकम् ।

नारिकेलोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥ ५०

२००-हिमकरस्रुतं (?) तोयमतिशैत्यादिना । वातश्लेष्मकृत् चन्द्रकान्तमणिस्रुतं रक्षोघ्नत्वादियुक्तम् । नारिकेलान्तर्जातं स्निग्धत्वादियुक्तम् २००

टिप्पणी—संक्षेपतयाऽल्पयोगित्वाच्चावश्यायादिगुणा ग्रन्थकृता नोक्ताः । तांश्चात्र शिष्यहिताय ब्रूमः-'रूक्षस्तनुरवश्यायः शीतो वातास्रकोपनः । पानतृड्दाहपित्तास्रकुष्ठोरुस्तम्भमेहजित् । ग्रीष्मे तु सर्वजन्तूनां स्पर्शनादपि शस्यते । पाग्निन्यम्बु च पित्तघ्नं कफकृद्विरसं गुरु । हिमं तु शीतलं रूक्षं दारुणं सूक्ष्ममेव च । कफं न संदूषयति न पित्तं न च मारुतम् । तथाऽश्मवर्षप्रालेयं हिमादल्पान्तरं गुणैः । चराचराणामहितं तुषारं त्वग्निनाशनम् ' इत्यरुणदत्तः। नारिकेलोदकामिति-तथा चोक्तं राजनिघण्टौ-' नारिकेलसलिलं लघु बल्यं शीतलं च मधुरं गुरु पाके' इति । भावप्रकाशे-'तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु । पिपासापित्तजित् स्वादु बस्तिशुद्धिकरं परम्'(पू.ख.६४१)इति२००

१६ जलानां वरावरत्वे ।

२०१-[25]दिव्यं वारि वरं वर्षे नादेयमवरं परम् ।

२०१-वर्गार्थमुपसंहरति-वर्षकाले आन्तरिक्षं जलमत्यन्तपथ्यं नदीगृहीतमपथ्यम् । इति तोयवर्गः २०१

२२ 'हितमावे'..क. २३ 'भजातता'-क. २४ 'तद्वत्तोयं तु करकोद्भ' क. ख. २५ वर्षासु दिव्यनादेये परं तोये वरावरे..क. ख.

( २ ) क्षीरवर्गः ।

२०२-[ "गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम् ५१
ऐभमैकशफं चेति क्षीरमष्टविधं स्मृतम् । ]

१ क्षीरसामान्यगुणाः ।

स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ॥ ५२
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ।

प्रायः पयः—

२०२-तोयान्युक्त्वा क्षीराण्युच्यन्ते-स्वादुपाकरसमित्यादि । सर्वमपि विशेषेण क्षीरजातं मधुररसं मधुरविपाकत्वादियुक्तम् । ओजसे हितमोजस्यम् । ओजो नाम धातुसारभूतं वक्ष्यमाणलक्षणम् ( सू. अ. ९ ) । वृष्यत्वेन शुक्राख्यधातुवृद्ध्यतिशयस्त्रीगमनशक्तता चोक्ता । प्रायो बाहुल्येन सर्वमेवंविधं पय इति २०२

टिप्पणी—संबंधः-परिशेषेभ्यो वर्गेभ्यः प्राज्यजनोपयोगितयोपकारित्वेनाजन्मसात्म्येन प्राधान्यात्पयःसंज्ञासामान्यात्पयस इव जीवनादिगुणयोगाच्च तोयवर्गादनु क्षीरवर्गः प्रक्रम्यते । तत्रापि दध्यादीनां मूलकारणत्वात्क्षीरस्य प्रागुपादानम् । प्राय इति-प्रायोग्रहणात्काचित्क्षीरमेवं न भवति । अजाक्षीरं च लघु, आविकमुष्णम् । ऐकशफमुष्णं साम्ललवणं च । तस्मात्प्रायोग्रहणं कृतम् २०२

२ गव्यादिक्षीराणां गुणाः ।

२०३- —अत्र गव्यं तु जीवनीयं रसायनम् ॥ ५३
क्षतक्षीणहितं मेध्यं * वर्ण्यं स्तन्यकरं सरम् ।
श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः[२७] ॥ ५४
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ।

२०३-सामान्येन पयोगुणसंकीर्तनं कृत्वा गवां विशेषेण क्रियते । तत्र च सामान्योक्तगुणविपरीतो यो विशेषगुणः सोऽपवादो विज्ञेयः । अथ चेत् सदृशः स तस्यैवोपबृंहकः । गव्यं तु जीवनीयत्वादियुक्तम् । जीवनीयं सौम्यधातुवृद्धिकरम् । रसायनमिव रसायनम्, प्राणसन्धारकत्वाच्छ्रस्तरसादिधातुलाभोपायत्वाच्च । उरःक्षतयुक्ताय क्षीणाय च हितम् । क्षीणः-क्षीणधातुः । मेधायै बुध्यै हितं मेध्यम् । स्त्रीणां च स्तन्यवृद्धिं करोति । सरं शरीरे नैकत्र तिष्ठति । श्रमादींश्च नाशयेत् २०३

टिप्पणी—अत्रेति-जीवनीयम्-प्राणधारणम्, रसायनम्-रसरक्तादीनां धातूनां लाभोपायः । तथा—'लाभोपायो हि शस्तानां रसादीनां रसायनम्' २०३

२०४-हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ५५

२०४-माहिषं पयोऽत्यग्नीनामनिद्राणां च हितम्-पथ्यम् । अतिगुरु च । वीर्येण च हिमम् २०४

२०५-अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ।
[२८]आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ॥ ५६

२०५-अजानां पयः अल्पाम्बुपानादिहेतोर्लघु । हेतुकीर्तनमस्यान्यस्या अप्येवंहेतुयुक्ताया जातेः क्षीरलघुत्वज्ञापनार्थम् । एतद्विपरीतायाश्च गुरुत्वं सामर्थ्यलभ्यम् । अजानां तु स्वल्पाम्बुपानादिस्वभावः । अन्यासां तु देशापेक्षया । एतच्चाजं शोषादिविनाशनम् २०५

२०६-[२९]ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।
शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ॥ ५७

२०६-औष्ट्रमौष्ट्रकं क्षीरमीषद्रूक्षमीषल्लवणमीषदुष्णम् । दीपनं लघु च, वातश्लेष्मार्तानां च पथ्यम् २०६

२०७-मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ।
तर्पणाश्च्योतनैर्नस्यैः—

२०७-मानुषं क्षीरं वातेन पित्तेनासृजा अभिघातेन चोत्पन्नानां चक्षूरोगाणां नाशनम् । कथमित्युच्यते-तर्पणेनाश्च्योतनेन नस्येन च । एतानि चास्मिन्नेव स्थाने वक्ष्यमाणलक्षणानि ( सू. २९, ३२, ३३ अ. ) २०७

२०८- —अहृद्यं तूष्णमाविकम् ॥ ५८
वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ।

२०८-आविकमहृद्यमुष्णवीर्यं वातव्याधिविनाशनं हिध्मादिकरं च २०८

२०९-हस्तिन्याः स्थैर्यकृत् बाढं—

२०९-हस्तिन्याः पयो बाढमतिशयेन शरीरस्थैर्यकृत् २०९

२१०- —उष्णं त्वैकशफं लघु ॥ ५९
शाखावातहरं साम्ललवणं जडताकरम् ।

२१०-एकशफस्येदमैकशफं पयः उष्णवीर्यं शाखावातहरं मधुररसमीषदम्ललवणेन च रसेन युक्तं जाड्यकरं च । एकविभागः खुरो यस्य स एकशफः अश्वगर्दभादिः । शाखा रक्तादयो धातवस्त्वक्च । तत्र स्थितस्य वातस्य नाशनम् । जाड्यं स्तैमित्यम् ॥ इति पयः स्वरूपेणोक्त्वा संस्कारेणोच्यते—२१०

३ आम-शृत-धारोष्ण-पयोगुणाः ।

२११-पयोऽभिष्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा ६०
[३०]विना तु वनितास्तन्यमाममेव तु तद्धितम् ।
भवेद्गरीयोऽतिशृतं धारोष्णममृतोपमम् ॥ ६१

२११-आममपक्वं पयः अभिष्यन्दि गुरु च । अभिष्यन्दि मालिन्येन स्रोतसां स्रावकम् । युक्त्या शृतं पयः आमाद्विपरीतम् । नातिशृतं न स्वल्पशृतमिति युक्तिः । अतिशृतं चातिगुरु । धारोष्णममृतोपमं पथ्यत्वेन २११

४ आहारादिवशेन लाघवगौरवम् ।

२१२-पिण्याकाम्लाशिनीनां तु गुर्वभिष्यन्दि तच्छृतम्
अचेष्टया च प्रादोषात् गरीयः स्मृतमौषसम् ॥ ६२
व्याख्यातस्तेन लघिमा चेष्टावत्प्रकृतिष्वपि ।
हृस्वेषु चातिदेहेभ्यो मांसेष्वप्येवमादिशेत् ॥ ६३

२१२-पिण्याकं निष्पीडितरसं तिलादि । अम्लरसं चान्यत्किञ्चित् याः क्षीरयोनय अश्नन्ति तासां पयः अतिगुर्वत्यभिष्यन्दि च । प्रदोषे अपराह्णे गृहीतं यत् पयः तदपेक्षया औषसं प्रभातगृहीतमतिगुरु । कुतः चेष्टारहितत्वात् । यस्मात् प्राणिनां रात्रौ न कदाचिच्चेष्टा भवति । अत औषसं

२६ गव्यं म.हिषमित्यादिश्लोकः क-ख पुस्तक एव दृश्यते। *बल्यं स्त°-ख. २७ 'साधितृट्क्षु:° क. ख. २८ आजमिति श्लोकार्धं कपुस्तके नास्ति । २९ ईषद्रूक्षेत्यादि श्लोकार्धं कपुस्तके नास्ति । ३० विना त्वित्यादि पद्यार्धं गपुस्तके नास्ति ।

गुरु। दिवा च धावनप्लवनादिकया चेष्टया प्रादोषं लघु। अनया च दिशा चेष्टावत्प्रकृतिष्वपि लघिमा व्याख्यातः। तेनैतदुक्तं भवति-चेष्टास्वभावेषु हरिणादिषु लघु। अचेष्टास्वभावेषु सूकरादिषु गुरु। अतिदेहान्महाभोगशरीरानपेक्ष्य स्वल्पाभोगशरीरेषु लघु पयः। न केवलं पयःसु यावन्मांसेष्वपि चेष्टास्वल्पत्वबृहत्त्वविशेषेण गुरुलाघवं विशेयम् २१२

५ दधिगुणाः।

२१३-अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित्। ६४
मेदःशुक्रबलश्लेष्मरक्तपित्ताग्निशोफकृत्[३१]।
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे॥ ६५
पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे।
नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न॥ ६६
नामुद्गसूपं नाक्षौद्रं नाघृतं नासितोपलम्[३२]।
न चानामलकं नापि नित्यं नो मन्दमन्यथा॥ ६७
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयप्रदम्[३३]।

२१३-दधि त्वम्लविपाकत्वादियुक्तम्। रोचिष्णु साधु रोचते। अरुचौ पथ्यम्। अन्यदप्याहारं रोचयतीत्यर्थः। शीतके-शीतपूर्वके विषमज्वरे सततकादौ पथ्यम्। पीनसो नासास्रावः। रूक्षं तूद्धृतसारं ग्रहणीदोषे हितम्। तच्च दधि रात्रौ न भोज्यम्। एवकारो रात्रावुष्णे चात्यन्तप्रतिषेधाय। वसन्तग्रीष्मशरत्सु न भोज्यं, न च मुद्गसूपादीनामन्यतमेन रहितम्। नापि नित्यं-सातत्येन न भोज्यं, न च मन्दमजातम्। एवं च सति यदि कश्चित् भुंक्ते सोऽवश्यं ज्वरादीन् प्राप्नोति २१३ (मन्दं सम्यक न निष्पन्नम् 'अदमुरें')

६ तक्रगुणाः।

२१४-तक्रं लघु कषायाम्लं दीपनं कफवातजित्॥ ६८
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः।
गुल्मप्लीहघृतव्यापद्गरपाण्ड्वामयाञ्जयेत्॥ ६९
[ नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके॥ ] ७०

२१४-तक्रं दण्डेन मथिताद्दध्नः उद्धृतेऽनुद्धृते वा स्नेहे। तत्तक्रं लघुत्वादियुक्तम्। * घृतव्यापत्-घृतस्यातिपानादुत्पन्नो रोगः। गरो वक्ष्यमाणलक्षणः (उत्त. अ. ४०) २१४

७ मस्तुगुणाः।

२१५-तद्वन्मस्तु सरं स्रोतःशोधि विष्टम्भजिल्लघु।

२१५-तद्वत्तक्रवत् गुणैर्मस्तु विशेयं, मस्तुनः स्रोतःशोधकत्वेन विष्टंभनाशकत्वेन च विशेषः। तक्रस्य स्रोतःशोधकत्वेऽपि मस्तुनोऽतिशयः २१५

८ नवनीतगुणाः।

२१६-शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतम्॥ ७१
यक्ष्मार्शोऽर्दितपित्तासृग्वातजिद् ग्राहि दीपनम्।

२१६-नवोद्धृतं-सद्य उद्धृतं नवनीतं शीतं-शीतवीर्यं मधुरं कषायाम्लत्वेन च युक्तं राजयक्ष्मादिनाशनं संग्राहि दीपनं च। संग्राहि-यद्द्रवान् भावान् पिण्डीकरोति २१६

२१७-क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित्॥ ७२

२१७-क्षीरोद्भवनवनीतं रक्तपित्ताक्षिरोगं नाशयति संग्राहि च। क्षीरोद्भवं यत् क्षीरमेव मथित्वोत्पादितम् २१७

९ घृतगुणाः।

२१८-शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम्।
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम्॥ ७३
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम्।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम्॥ ७४
स्नेहानामुत्तमं शीतं वयसः स्थापनं[३४] घृतम्।
सहस्रवीर्यं विधिभिः श्रुतं कर्मसहस्रकृत्॥ ७५
मदापस्मारमूर्च्छायशिरःकर्णाक्षियोनिजान्।
पुराणं जयति व्याधीन्व्रणशोधनरोपणम्॥ ७६
पूर्वोक्तांश्चाधिकान्कुर्याद्गुणांस्तदमृतोपमम्।

२१८-घृतं तु धीप्रभृतीनामग्निग्लपितात्मान्तानां शस्तं हितम्। धीर्बुद्धिर्वस्तुग्रहणे शक्तिः। स्मृतिरतीतविचारे शक्तिः। मेधा प्रज्ञा-वस्तुविवेकशक्तिः। प्रजार्थिनां च-प्रजा अपत्यं शुक्रस्य सफलताकरमित्यर्थः। वयःस्थापनं जरया विना वयः स्थापयतीति वयःस्थापनम्। सहस्रवीर्यमनेकशक्ति। तथा विधिभिर्विधानैर्नानाविधाभिर्योजनाभिः। कर्मसहस्रकृदनेककार्यकृदित्यर्थः। तच्च घृतं पुराणमतीतबहुकालं मदादीन् व्याधीन् जयति। व्रणानां पैच्छिल्यादिकं शोधयति। व्रणांश्च रोपयति। तच्च पुराणं-पूर्वोक्तान् सामान्यघृतोक्तान् गुणाधिक्येन करोति। अमृतोपमं च २१८

१० घृतमण्डः।

२१९-तद्वच्च घृतमण्डोऽपि रूक्षस्तीक्ष्णस्तनुश्च सः॥ ७७

२१९-घृतमण्डोऽपि घृतगुणानधिकं कुर्यादमृतोपमश्च रूक्षत्वेन तीक्ष्णत्वेन तनुत्वेन चास्य विशेषः। मण्ड उपरिभवः स्वच्छः २१९

११ कीलाटादिक्षीरविकाराः।

२२०-बल्याः [३५]कीलाटकूचीकातक्रपिण्डकमोरटाः[३६]।
सक्षीरशाकपीयूषा रोचना वह्निसादनाः॥ ७८
शुक्रनिद्राकफकरा विष्टंभिगुरुदोषलाः।

२२०-कीलाटादयः सर्वे क्षीरविकाराः तद्विकृतिविकाराश्च। बलकराः रुच्याः अग्निनाशनाः शुक्रादिकराश्च विष्टंभिनो गुरवो दोषलाश्च। दोषला अपथ्यत्वेन विकारकारिणः। कीलाटास्तक्रादिकृताः। कूचीका: क्षीरकीलाटिकाः। मोरटः क्षीरसदृशः कीलाटिका। पीडन उत्तरापथे प्रसिद्धः। क्षीरशाकं प्रसिद्धं, पीयूषं सद्यःसूतायाः क्षीरकृतं दधि २२०

टिप्पणी-दध्ना तक्रेण वा सह पाकात्पृथग्भूतघनद्रवभागं क्षीरं कूचीका, सैव पाकादिना क्षीरशाकः, तयोर्घनभागः पृथगुद्धृतः कीलाटः। द्रवभागो मोरटः, प्रसूतिदिनादारभ्य यावन्मलिनं घनं क्षीरं तावत्पीयूषः, घनवस्त्रबद्धं स्वयंस्रुतद्रवभागं पिण्डीभूतं तक्रं तक्रपिण्डकः इति २२०

३१ 'ग्निशोथकृ'-क, ३२ 'द्रं तन्नाघृतसितो'-क. ख. ३३ 'पाण्डुभ्रमप्रदम्'-क. ख. ३४ नं परम्-ख. ३५ किलाट'-क. ख. ३६ रणाः-क. ख. * तथा च चरकः-' तक्रसिद्धा यवागूः स्यात् घृतव्यापत्तिनाशिनी' (सू. अ. ३-३०)

२२१–विद्याद्दधिघृतादीनां गुणदोषान् यथापयः॥ ७९

२२१–घृतानां च पयोगुणानतिक्रमेण गुणान् विद्यात्। तेनैतदुक्तं भवति–यथा स्वादुपाकरसमित्यादिना सामान्येन क्षीरगुणा उक्तास्तद्वत्सामान्येन दध्यादिगुणा अपि। विशेषाकांक्षायां तु दध्यादीनां सत्स्वपि सामान्यगुणेषु प्रकृतिभूतक्षीरगुणान्वयोऽपि ग्राह्यः २२१

२२२–गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसंभवे।

२२२–वर्गार्थं निर्धारयति–क्षीरं घृतं च गव्यं श्रेष्ठम्। आविकं निन्दितं, प्राधान्यात्तु क्षीरघृतयोरेव ग्रहणम्। इति क्षीरवर्गः २२२

(३) इक्षुवर्गः।

१ इक्षुरसगुणाः।

२२३–इक्षो रसो गुरुः स्निग्धो बृंहणः कफमूत्रकृत्॥ ८०
वृष्यः शीतः पवनजित् भुक्ते वातप्रकोपनः।
रक्तपित्तप्रशमनः स्वादुपाकरसः सरः॥ ८१

२२३–इक्षुरसवर्गो द्रवप्रसंगेनोच्यते। इक्षो रसः सरत्वादिगुणयुक्तः, बृंहणो वक्ष्यमाणलक्षणः (सू. अ. २४) पवनजिद्वातनाशनः। भुक्ते–भुक्तमात्रे पीतो वातप्रकोपनः २२३

टिप्पणी–क्षीरवर्गानन्तरमिक्षुवर्ग उच्यते। गुणक्रियातुल्यत्वात्–इक्षुरपि क्षीरवत् सरगुरुस्निग्धबृंहणादिगुणकर्मा। भुक्ते वातप्रकोपन इति–तथा चोक्तम्–'अभुक्ते पित्तहाश्चैते भुक्ते वातप्रकोपनाः। भुक्तमध्ये गुरुतरा इतीक्षूणां गुणास्त्रयः' इति २२३

२ दन्तपीडितरसगुणाः।

२२४–सोऽग्रे सलवणो दन्तपीडितः शर्करासमः।

२२४–स च रसः अग्रे इक्षोः प्रान्ते जातः सलवणः ईषल्लवणः दन्तपीडितो यन्त्रकालाद्यनुपहतत्वाद्गुणैः शर्करया समः २२४

टिप्पणी–सोऽग्र इति–इक्षुः मूले मध्ये च मधुरः, अग्रे ग्रन्थौ च लवणः। बालेक्षुः कफकरो मदोमेहकरश्च, युवा च वातघ्नः स्वादुः पित्तघ्नः ईषत्तीक्ष्णश्चेति २२४

२२५–[37]मूलाग्रजन्तुजग्धादिपीडनान्मलसंकरात्॥ ८२
किञ्चित्कालविधृत्या च विकृतिं याति यान्त्रिकः।
विदाही गुरुविष्टंभी तेनासौ—

२२५–यस्तु यान्त्रिको यन्त्रपीडितो मूलादिमिश्रपीडनात् मलसंकराद्विकृत्वं प्राप्नोत्यतोऽसौ यान्त्रिको विदाही विष्टंभकरश्च। जन्तुजग्धः–कृमिभक्षितः, विदाही–सौम्यभावविदहनशीलः। हेतुनिर्देशो हेत्वभावात् कार्याभावप्रतिपादनार्थः। रक्तपित्ते च विशिष्टे विशेषेण विदहनशीलस्यापि प्रयोगो न विरुद्धः २२५

टिप्पणी—यान्त्रिक-इति–'यन्त्रेण पीडितरसः कथितो गुरुश्च वृष्यः कफं च कुरुतेऽथ सुशीतलश्च। पाके विदाहिबलकृच्च सुशोभनश्च संसेवितो रुधिरपित्तरुजं निहन्ति। दन्तैर्निपीडितरसो रुचिकृद्गुरुश्च संतर्पणो बलकरः कफकृच्छ्रमघ्नः' इति। पर्युषितरसगुणाः–'रसः पर्युषितो नेष्टस्तापहैकमते गुरुः। कफपित्तकरः शोषी भेदनो वाथ मूत्रलः'। पक्वरसगुणाः–'पक्वो गुरुरतः स्निग्धः सुतीक्ष्णकफवातहा। पित्तघ्नोऽपि विशेषेण गुल्मातीसारकासहा' इति। विदाहीति–विदाहिद्रव्यलक्षणम्–'विदाहि द्रव्यमुद्गारमम्लं कुर्यात्तथा तृषाम्। हृदि दाहं च जनयेत्पाकं गच्छति तच्चिरात्' इति २२५

३ पौण्ड्रकादीनां गुणाः।

२२६— —तत्र पौण्ड्रकः ८३
शैत्यप्रसादमाधुर्यैर्वरस्तमनु वांशिकः।
[38]शतपर्वककान्तारनैपालाद्यास्ततः[39] क्रमात्॥ ८४
सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः।

२२६–तत्र चेक्षुरसेषु मध्ये पौण्ड्रकः शैत्येन प्रसन्नत्वेन माधुर्येण च श्रेष्ठः सर्वेक्षुरसेभ्यः। तमनु वांशिकः शैत्यादिभिः पौण्ड्रकाद्धीनो वांशिक इत्यर्थः। शतपर्वकादयश्च रसाः क्रमादुत्तरोत्तरं शैत्यादिभिर्हीनाः। ते च शतपर्वकादयः ईषत्क्षारत्वेन युक्ताः ईषत्कषायरसा ईषदुष्णवीर्याः किञ्चिद्विदाहिनश्च २२६

टिप्पणी—पौण्ड्रक इति। पौण्ड्रकः–श्वेतेक्षुः, प्रसादो–नैर्मल्यम्। वांशिको नीलेक्षुः पौण्ड्रकाद्धीनः। शतपर्वको–ह्रस्वबहुपर्वा, आद्यशब्दात् दीर्घपत्रकः, नीलपोरः, काष्ठेक्षुः, सूचीपत्रकः, तापसेक्षुः, कोशकृत्, भीरुकश्चेत्येतेषामिक्षूणां ग्रहणम् २२६

४ फाणितगुणाः।

२२७–फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम्॥ ८५

२२७–फाणितं क्षुद्रगुडीभूतमिक्षुरसः। तत् गुर्वभिष्यन्दि त्रिदोषसञ्चयकृत् मूत्रसंशोधनं मूत्रमतिवाहयति २२७

५ धौतगुडगुणाः।

२२८–नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः।

२२८–गुडः संस्कारवशेन निर्मलः नातिश्लेष्मकर ईषच्छ्लेष्मकर इत्यर्थः। तथा मूत्रं शकृच्च सृजति–बहिः क्षिपति २२८

६ अधौतगुडगुणाः।

२२९–प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः[40]॥ ८६

२२९–तथा अपरः–अधौतः प्रभूतान् क्रिम्यादीन् करोतीत्युपचारात् स एवोक्तः २२९

७ नवपुराणगुडगुणाः।

२३०–हृद्यः पुराणः पथ्यश्च, नवः श्लेष्माग्निसादकृत्।

२३०–स एव च गुडः पुराणो हृद्यः शरीरस्य च पथ्यः। नवस्तु कफमग्निसादं च करोति २३०

८ शर्करागुणाः।

२३१–वृष्याः क्षीणक्षतहिता रक्तपित्तानिलापहाः॥ ८७
मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः।
तद्गुणा तिक्तमधुरा[41] कषाया यासशर्करा*॥ ८८
त्रिदोषघ्नी सिता काशेक्षुदर्भेच्छदसंभवा।
दाहतृट्छर्दिमूर्च्छासृक्पित्तघ्न्यः सर्वशर्कराः॥ ८९

२३१–मत्स्यण्डिकादयस्तिस्रो वृष्यत्वादियुक्ताः क्रमेण। पूर्व-

३७ मूलाग्रजन्तुजुष्टादि पी°–क. ख. ३८ शातप°–ग. ३९ °न्तारनेपा°–क. ४० °सकफोऽपरः–क. ४१° रा सकषाया हिमा लघुः–क. * इयं यासशर्करा 'म्याना' 'तुरंजबीन' इति पर्यायाभ्यां लोके प्रसिद्धा।

स्मादुत्तरो वृष्यत्वादिभिरातिशयेन युक्तः । मत्स्यण्डिकागुडा निर्मलाः प्रसिद्धाश्च लोके । ततोऽपि संस्कारेण गुणैश्चाधिकः खण्डः । ततोऽपि सिता शर्करा । यासशर्करा तु तद्गुणा मत्स्यण्डिकादिगुणा तिक्तमधुरकषायरसा च । यासशर्करा लोके यवासशर्करेति प्रसिद्धा*। केचित् ब्रुवन्ति—दुरालभारसेन सा क्रियत इति । एता अन्याश्च काश्चन सर्वाः शर्कराः दाहादिनाशनाः ( च. सू. अ. २७–२३८–२४२ ) २३१

९ शर्कराफाणितयोर्वरावरत्वम् ।

**२३२–शर्करेक्षुविकाराणां फाणितं च वरावरे ।**

२३२–वर्गार्थं निर्धारयति—इक्षुविकाराणां मध्ये शर्करा श्रेष्ठा । फाणितमश्रेष्ठामीति २३२

१० मधुगुणाः ।

**२३३–चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रापित्तनुत् ॥९०**
**कुष्ठमेहकृमिच्छर्दिश्वासकासातिसाराजित् ।**
**व्रणशोधनसंधानरोपणं वातलं मधु ॥ ९१**
**रूक्षं[४२] कषायमधुरं तत्तुल्या मधुशर्करा ।**

२३३–शर्करायोनिप्रसङ्गेन मधुनोऽपि गुणा उच्यन्ते । मधु माक्षिकं वातलं चक्षुषश्च पथ्यम् । छेदि–विच्छेदि यत्तैक्ष्ण्याद्देहे पिण्डितान् भावान् छिनत्ति–विभजति, तृडादींश्च नाशयति । व्रणानां शोधनं तत्–यत् पूयपैच्छिल्यादिप्रेरकम् । सन्धानं तत्–यत् द्वौ व्रणोष्ठावेकीकरोति । रोपणं प्रसिद्धम् । तथा मधु रूक्षम् । रसेन च कषायमधुरम् । अस्य च सर्वात्मकस्यापि कारणविशेषात् प्रभावाद्वानुमीयते वातलत्वादियोगः । तत्तुल्या मधुसमा गुणैर्मधुशर्करा २३३

**टिप्पणी**—चक्षुष्यमिति–चक्षुष्यं छेदीत्यादिना **कर्मनिर्देशः** । रूक्षं कषायमित्यादिना चास्य **स्वरूपनिर्देशः** । छेदि यत्संहतान्कफादीन्विश्लेषयति । शोधनं–दुष्टपूयादिनिर्हरणम् । सन्धानम्–विच्छिन्नास्थ्यादिसंश्लेषकम् । रोपणम्–क्षीणमांसादिवर्धनम् । वातलमिति–ननु इह वातलं, सुश्रुतवाक्ये तु त्रिदोषशमनम् ( सू. ४५–१३२ ) इति विरोधः । नैवम् । विषयभेदात् । यत्र शुद्धो वायुः, शुद्धं मधु तत्र वातलत्वम् । यत्र वातघातिभिर्मिश्रं मधु, पित्ताद्यैर्वामिश्रो वायुः, तत्र वातघ्नत्वम् । उभयोर्योगवाहित्वात् । सुश्रुतेन हि पित्तश्लेष्मघ्नत्वं पठित्वा त्रिदोषशमनत्वं पठता पित्तश्लेष्माणौ शुद्धौ वातमिश्रौ वा, वायुं तु मिश्रमेव मधु हन्तीति द्योतितम् । यच्च चरकेण ( सू. २७–२४५ ) मधुनो गुरुत्वमुक्तं, सुश्रुतेन लघुत्वमुक्तम् ( सू. ४५–१३२) तत्र गुरुत्वं गुणेन, लघुत्वं पाकेनेत्यविरोधः । चरको हि गुरुलघुगुणावेवेच्छति, सुश्रुतस्तु पाकावपि। तत्र यच्चिरेण पच्यते तद्गुरुगुणम्, यच्छीघ्रं तल्लघुगुणम्, यत्पक्वं विण्मूत्रे सृजति, श्लेष्माणं च करोति तद्गुरुपाकम्—यद्विण्मूत्रे गृह्णाति वायुं च करोति तल्लघुपाकम् । मधुशर्करा—वह्निपाकात्कालपाकाद्वा शर्करारूपतां गतं मधु मधुशर्करा २३३

११ उष्णमधुनोर्विरोधः ।

**२३४–उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ९२**
**विषान्वयत्वेन विषपुष्पेभ्योऽपि यतो मधु ।**
**कुर्वते ते स्वयं यच्च सविषा भ्रमरादयः ॥ ९३**

२३४–तच्च मधु उष्णं निहन्ति मारयति । उष्णार्तं च पुरुषं मारयति । अत उच्यते विषान्वयत्वेन । कुतो विषान्वयत्वं मधुनः अत आह–विषपुष्पेभ्योऽपि यतो मधु कुर्वन्ति तत्कृतः । न केवलमन्यपुष्पेभ्यः इत्यपि शब्दस्यार्थः। यद्यस्माच्च भ्रमरादयः स्वयं शरीरेणैव सविषा मधु कुर्वन्त्यत उष्णादियुक्तं मारयति ( सु. सू. ४५–१४४ ) २३४

**टिप्पणी**—उष्णेन मधुनो विरोधमाह-उष्णमुष्णार्तमिति । उष्णं मधु–अग्न्यादितापितं सत् मारयति । उष्णार्तम्–उष्णैरातपादिभिः पीडितं नरं मारयति । उष्णे–उष्णदेशे काले वा प्रयुक्तं मधु मारयति । उष्णैः—उष्णस्पर्शैः द्रव्यैः सहोपयुक्तं मधु मारयति–निहन्ति । इति प्रत्येकं संबंधः२३४

१२ उष्णाविरोधस्यापादः ।

**२३५–प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ।**
**अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ॥ ९४**

२३५–तच्च मधु प्रच्छर्दने वमने, निरूहे, च उष्णमपि न निवार्यते । यतः अपक्वमाश्वेव प्रयुक्तं निवर्तते पुनरागच्छति २३५

**टिप्पणी**—उष्णाविरोधस्यापवादमाह—प्रच्छर्दन इति । प्रच्छर्दने वमने; तथा निरूहे च उष्णं न निवार्यते–न निषिध्यते । यस्मात्कारणात्तयोः–वमननिरूहयोः; अलब्धपाकम् अपक्वमेवाशु, निवर्तते–पुनरागच्छति २३५

१३ मधुनो मात्रा ।

**२३६–गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ।**
**न हि कष्टतमं किञ्चित्तदजीर्णाद्यतो नरम् ॥ ९५**
**[४३]उपक्रमाविरोधित्वात्सद्यो हन्याद्यथा विषम् ।**

२३६–गुरुत्वादितो हेतोः शरीरे चाल्पं पथ्यम् । तथा च मधुनः अजीर्णादन्यत्कष्टतमं न विद्यते । कुतः ? यतो विरुद्धोपक्रमत्वाद्विषवन्नरं नाशयति । अजीर्णे ह्युष्णोदकपानादिकं विहितम् । तच्च मधुनो विरुद्धम् । अथ च शीता क्रिया क्रियते । सा ह्यजीर्णेऽप्यपथ्या । अत उपक्रमविरोधः ( च. सू. अ. २७–२४८ ) २३६

१५ मधुनो योगवाहित्वम् ।

**२३७–नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥ ९६**
**वृष्ययोगैरतो युक्तं वृषतामनुवर्तते ।**

२३७–तच्च मधु नानाद्रव्यस्वरूपत्वादत्यर्थं योगवाहित्वेन युक्तम् । तेनैतदुक्तं भवति–सर्वाः शक्तयः प्रसेकवत्तत्र स्थिताः केवलं या या शक्तिः सदृशी संयोगिद्रव्ये शक्तिं सहायभूतामासादयति सा सा तामतिशयेनाभिव्यनक्ति। एतदेव हि योगवाहित्वं–यत्, स्वगुणापरित्यागेनांशेन सादृश्यात् परस्य च शक्तिपरिपूरणमत एव कारणाद्वृष्यैर्योगैर्युक्तं मधु वृष्यतां याति । एतावता हि वृष्ययोगस्य तु शक्तिः तेन परिपूरिता भवति २३७

१६ मधुजातयः।

**२३८–भ्रामरं पौत्तिकं[४४] क्षौद्रं माक्षिकं च यथोत्तरम् ९७**
**वरं जीर्णं च तेष्वन्त्ये द्वे एव ह्युपयोजयेत् ।**

४२ °मधु । मधुरं कटुकं पाके तत्तु°–क. ४३ °विरोधत्वं°–क. ४४ °रं पौष्पिकं क्षौ° ग. * सु. सू. ४५–१६७ डल्हणः ।



इक्षुः ( सू. २३२ )



मधुकोषाः ( क्रमेण वर्धमानाः ) मधुनिर्माणम् ।







मधुमक्षिकाः । ( सू. २३८ )

२३८–भ्रमरादिभिश्च कृतं मधु यथोत्तरं श्रेष्ठम्। यद्यस्मादुत्तरं तत्तस्माच्छ्रेष्ठमिति। जीर्णं पुराणं मधु श्रेष्ठम्। तेषु भ्रमरादिषु मध्ये द्वे एवान्त्ये–क्षौद्रं माक्षिकं च पथ्यत्वादुपयोजयेत्। **इति इक्षुवर्गः** २३८

**टिप्पणी**—पौत्तिकमिति–पिङ्गला महत्यो मक्षिकाः पुत्तिकाः, तद्भवं पौत्तिकम्। अन्ये मशकोपममाक्षिकाः कृष्णवर्णाः पुत्तिका इति वदन्ति। यथोत्तरमिति–अत्र केषु चिदादर्शेष्वधिकाः श्लोकाः—"**वरं स्याद्भ्रामरं शुक्लं घृतवर्णं तु पौत्तिकम्। क्षौद्रं तु कपिलं प्रोक्तं तैलाभं माक्षिकं स्मृतम्। विशेषाद्गुर्वभिष्यन्दि भ्रामरं स्वादु तर्पणम्। क्षौद्रं सातिक्तमधुरं लघु रूक्षं विशोधनम्। पौत्तिकं बृंहणं रूक्षं कफव्रणहितं लघु**" इति।

## (४) तैलवर्गः

### १ तैलगुणाः

**२३९–तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ९८**
**त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च।**
**कृशानां बृंहणायालं स्थूलानां कर्शनाय च॥ ९९**
**बद्धविट्कं क्रिमिघ्नं च संस्कारात्सर्वरोगजित्***।

२३९–द्रवत्वात्तैलमुच्यते–तैलं स्वयोनिवत्–सर्वं तैलं स्वकारणसमगुणम्। तत्र तैलेषु मध्ये मुख्यं तिलोद्भवं **तीक्ष्णम्। व्यवायि**–व्याप्तिशीलम्। यद्देहं व्याप्य पाकं याति। त्वग्दोषकृत्–पानाभ्यासेन त्वचं दूषयति। यैस्तु त्वग्दोषहरमित्युक्तं तैर्वातादिके अभ्यंगेन। अथवा त्वग्दोषं कृन्ततीति त्वग्दोषकृदिति। कृती छेदने (६ प.) इत्यस्य धातोः प्रयोगः। चक्षुषश्चाहितम्, सूक्ष्मस्रोतःप्रवेशि। उष्णवीर्यम्। तिलोद्भवत्वाच्छ्लेष्मकरत्वं प्राप्तमत उच्यते–**कफकृन्न चेति।** संस्कारवशात् कृशस्य बृंहणायालं पर्याप्तम्। स्थूलानां च कर्शनाय। अथवा केवलमपि येनैव हेतुना स्रोतःशोधकत्वादिना कृशानां बृंहणायालं पर्याप्तम्। तेनैव हेतुना स्थूलानां कर्शनायेति न कश्चिद्विरोधः। अस्यैव च पक्षस्य युक्तत्वं संस्कारात् सर्वरोगजिदिति स्वयं पाठात्। विशं पुरीषं बध्नाति ग्रथयतीति बद्धविट्कम्। संस्कारं प्रतिरोगं विशिष्टमाश्रित्य **सर्वरोगजित्** २३९

**टिप्पणी**—सर्पिषोऽनन्तरं स्नेहसामान्यात्तैलवर्गे वक्तव्ये गुडस्य समानरसवीर्यविपाककर्मत्वात्प्रायेण चाहारेषु भक्ष्यभोज्येष्वस्यैव तैलेभ्यः सुतरां भोजनोपयोगित्वादिक्षुवर्गोऽन्तरा निर्दिष्टः। भूरिभोजनोपयोगितया च मद्यात्प्राक्तैलवर्गो वक्तव्यः इत्याह–तैलमिति। सर्वं तैलं स्वकारणसमगुणम् भवति, यतो यदभिनिर्वृत्तं तत्स्वरूपमेव तदित्यर्थः। यथा–तिलतैलं तिलगुणम्, सर्षपतैलं सर्षपगुणम् इत्यादिवत्। तत्र यानि तैलानि स्वयोनेर्विशिष्टानि तेषां गुणाः–मुख्यं तिलतैलम्। मुख्यमिति वदता तैलशब्दप्रयोगे तिलतैलं ग्राह्यमिति द्योतयति। 'गौणमुख्ययोर्मुख्ये कार्ये संप्रत्ययः' इतिन्यायात्। व्यवायि–यदादौ देहं व्याप्नोति पश्चाज्जीर्यति तत्। उष्णम्–उष्णस्पर्शम्, स्वयोनिवदित्यतिदेशात्कफकृत्त्वं प्राप्तमत आह–कफकृन्न चेति। अलम्–समर्थम्। ननु एकस्य बृंहणसमर्थत्वकर्शनसमर्थत्वे अनुपपन्ने। मैवम्। कृशस्य हि स्रोतांसि संकुचितत्वात्सम्यग्रसं न वहन्ति स्थूलस्य च मेदसा पूर्णत्वात्। तैलं तु सूक्ष्मव्यवायितीक्ष्णोष्णत्वात्स्रोतांसि शोधयति। शुद्धेषु स्रोतःसु रसः सम्यग्वहन् कृशस्य धातुपुष्टिं विधत्ते। स्थूलस्य धातुसाम्यम्। द्रव्यान्तरसंयोगजनितं गुणान्तरं **संस्कारः**। ननु अत्र 'त्वग्दोषकृदचक्षुष्यम्' इति प्रोक्तम्। सुश्रुते तु 'त्वक्प्रसादनं...चक्षुष्यम्' (सू. ४५–११२) इति विरोधः। मैवम्। त्वग्दोषकरत्वमचक्षुष्यत्वं चाभ्यवहारे। त्वक्प्रसादनत्वं चक्षुष्यत्वं चाभ्यङ्गे। तथा चोक्तम्–'पादाभ्यङ्गस्तु तत्स्थैर्यनिद्रादृष्टिप्रसादकृत्' इति। (सू. ३–१०३ पृ. १७). २३९

### २ तैलप्रयोगेतिहासः।

**२४०–तैलप्रयोगादजरा निर्विकारा जितश्रमाः॥ १००**
**आसन्नतिबला युद्धे दैत्याधिपतयः पुरा।**

२४०–तैलप्रयोगानितिहासरूपेण कथयति–**तैलप्रयोगादित्यादिना। दैत्याधिपतयः पुरा युद्धे** अतिबलाः जरादिरहिताश्चासन् २४०

### ३ ऐरण्डतैलम्।

**२४१–सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु॥ १०१**
**वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम्।**
**रुक्छोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत्॥ १०२**

२४१–ऐरण्डं तैलं तु ईषत्तिक्तकटुकं, रसेन मधुरं वर्ध्मादीञ्जयेत्। कट्यादिस्थितौ तु रुक्छोफौ नाशयति २४१

**टिप्पणी**—ऐरण्डं तैलमिति–ननु तिलस्येदं तैलमित्यन्वर्थता तिलोद्भवस्यैव तैलस्य संभवति। अत्रोच्यते–तैलमित्युच्यन्ते सर्व एव स्थावरस्नेहा रूढ्या। तथा चोक्तं सुश्रुतेन 'निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि' इति। यथा तिलानां तैलं निष्पद्यते तथैवैरण्डादितैलमपीति निष्पत्तिसाम्यादित्यर्थः। तद्गुणत्वाच्चेति–कैश्चित्तिलतैलकर्मभिः, कैश्चित् तिलतैलधर्मैश्च समानत्वात् इति भावः सरमिति–तथा चोक्तं 'अग्र्यमैरण्डं तु विरेचने' (च. सू. १३–१२) इति। वर्ध्म–मुष्कवृद्धिः २४१

### ४ रक्तैरण्डतैलम्।

**२४२–तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं [४५]त्वति।**

२४२–लोहितैरण्डतैलमतिशयेन तैक्ष्ण्यादियुक्तम् २४२

**टिप्पणी**—विस्रम् आमगन्धि। अतिग्रहणाच्छुक्लैरण्डोद्भवमपि तीक्ष्णादिगुणम् इति सूचितम् २४२

**२४३–[[४६]कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम्॥**
**लघु पित्तास्रकृत्कोठकुष्ठार्शोव्रणजन्तुजित्]।**

**टिप्पणी**—कटूष्णमिति—सर्षपाणामिदं सार्षपं तैलं कटूष्णं च भवति। तथा तीक्ष्णं कफशुक्रानिलापहं च। पित्तास्रकृत्–रक्तपित्तकोपनम्। कोठलक्षणम्–'वरटीदष्टकण्डूमाँल्लोहितोऽस्रकफपित्तात्। क्षणिकोत्पादविनाशः कोठः' इति। जन्तवो बाह्या आभ्यन्तराश्च कृमयः २४३

* 'सर्वदोषजित्' इति पाठान्तरम्। ४५ 'वं भृशम्। कटू°–क. ख. ४६ कटूष्णमित्यादिश्लोको गपुस्तके नास्ति। परं पूर्वार्धस्य कखपुस्तकयोः सत्त्वादुत्तरार्धमपि तत्संबंधितया हृदयस्थमप्यत्र मूलतया स्वीकृतं वेदितव्यम्।

५ उमाकुसुंभतैले।

२४४-उमाकुसुंभजं [47]चोष्णं त्वग्दोषकफपित्तकृत् १०४

२४४-उमातैलं कुसुंभतैलं चोष्णवीर्यं त्वग्दोषं च करोति पित्तश्लेष्माणौ च २४४

टिप्पणी—उमेति-तथा चोक्तं सुश्रुतेन 'विपाके कटुकं तैलं कौसुम्भं सर्वदोषकृत्' (सू. ४५-११९) अन्यच 'कौसुम्भतैलं कटुकमचक्षुष्यं बलप्रदम्। केवलानिलनुत् तीक्ष्णं विदाह्युष्णं त्रिदोषकृत्। अपथ्यं शिरसः कासश्वास-हृल्लासकारकम्' (बृ. यो. त. २६-२२) इति २४४

६ दन्त्यादितैलानि।

२४५-दन्तीमूलकरक्षोघ्नकरञ्जारिष्टशिग्रुजम्।
सुवर्चलेङ्गुदीपीलुशंखिनीनीपसंभवम्॥ १०५
सरलागुरुदेवाह्वशिंशपासारजन्म[48] च।
तुवरारुष्करोत्थं च तीक्ष्णं कट्वस्रपित्तकृत्॥ १०६
अर्शःकुष्ठक्रिमिश्लेष्मशुक्रमेदोनिलापहम्।

२४५-दन्त्यादिजं तैलं तैक्ष्ण्यादिगुणयुक्तम्। रक्षोघ्नं-सार्षपम्। सरलादीनां सारशब्देन संबन्धः २४५

टिप्पणी—दन्तीति-दन्ती, तस्याः बीजम्—जयपालः, मूलकं प्रसिद्धम्। तस्य बीजम्। रक्षोघ्नम्-सार्षपम्, करञ्जः-स्वनामख्यातो वृक्षः। अरिष्टः-निंबः, पारिभद्रकः शिग्रुः-'शेवगा' इति ख्यातः। सुवर्चला:-सूर्यावर्तः (सूर्यफुली), इंगुदी (हिंगणबेट) कण्टकमयः फेनिलो वृक्षः। पीलुः (हिं. खरजाल), शंखिनी-यवतिक्ता (काळा दाणा), नीपः—कदम्बः, सरलः-देवाह्वभेदः ('गन्धाबिरोजा' इति ख्यातोऽस्य निर्यासः), तुवरः-पत्रैस्तु केशराकारैः ¶कला-यसदृशैः फलैः। वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः इति डल्हणः। अरुष्करः-भल्लातकः २४५ ¶स्तु बकुलाकारैः पा.

७ करञ्जनिम्बतैले।

२४६-करञ्जनिंबजे तिक्ते नात्युष्णे तत्र निर्दिशेत् १०७

२४६-करञ्जनिंबतैलयोस्तु कटुत्वापवादस्तिक्तत्वम्। नात्यन्तोष्णवीर्ये चेमे २४६

८ सरलतैलम्।

२४७ कषायतिक्तकटुकं सारलं व्रणशोधनम्।

२४७-सरलकाष्ठसारजं तैलं कषायादिरसं व्रणशोधनं च। अत्र कषायतिक्तत्वं व्रणशोधनत्वं चाधिकम् २४७

९ तुवरारुष्करतैले।

२४८-[49]भृशोष्णे तीक्ष्णकटुनी तुवरारुष्करोद्भवे॥ १०८
विशेषात्क्रिमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने।

२४८-तुवरारुष्करतैलयोस्तैक्ष्ण्याद्यतिशयः। अर्शःक्रिमिकुष्ठ-नाशने चातिशयः। ऊर्ध्वाधोविरेचनं वमनविरेचनाभ्यां दोषनिर्हरणम्। तेनाधिके २४८

१० अक्षादितैलानि।

२४९-[50]अक्षातिमुक्तकाक्षोडनालिकेरमधूकजम्॥ १०९
त्रपुसैर्वारुकूष्माण्डश्लेष्मातकप्रियालजम्।
वातपित्तहरं केश्यं श्लेष्मलं गुरु शीतलम्॥ ११०

२४९-अक्षातिमुक्तकादितैलं वातपित्तहरत्वादियुक्तम्। अक्ष-बिभीतकम्। अतिमुक्तकं-माधवीफलम् २४९

टिप्पणी—अतिमुक्तकः (मधुमालती) त्रपुसम्—(कांकडी) एर्वारुकः-ग्रीष्मकर्कटिका, (वाळुक), श्लेष्मातकः-(भोंकर), प्रियालः-(चारोळी) २४९

११ श्रीपर्णीकिंशुकतैले।

२५०-पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम्।

२५०-श्रीपर्णीकिंशुकतैलं पित्तश्लेष्मशमनम्। श्रीपर्णी-काश्मरी। किंशुकः-पलाशः २५०

टिप्पणी—श्रीपर्णी-(शिवण). २५०

२५१-तिलतैलं वरं तेषु कौसुंभमवरं परम्[51]॥ १११

२५१-तेषु च तैलेषु मध्ये तिलतैलं पथ्यत्वेनातिश्रेष्ठम् तद्वि-परीतं कौसुंभम् २५१

१२ वसादीनां स्वरूपम्।

२५२-वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ।
मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव॥ ११२

२५२-स्नेहप्रसङ्गेनेदमप्युच्यते। वसा नाम तनुमेदोरूपं शुद्धमांसस्नेहः। मज्जा च धातुः। तौ वातं नाशयतः। बलपित्तकफांश्च कुरुतः। यस्य प्राणिनः संबन्धिनौ तन्मांस-सदृशस्वरूपौ च। मेदोऽपि वसामज्ज्ञोः सदृशम् २५२

२५३—*औलूकी* शौकरी पाकहंसजा कुक्कुटोद्भवा।
वसा श्रेष्ठा स्ववर्गेषु कुंभीरमहिषोद्भवा॥ ११३
काकमद्गुवसा तद्वत्कारण्डोत्था च निन्दिता।

२५३-उलुक्यादीनां चतुर्णां वसाः स्ववर्गेषु क्रमेण मत्स्यमहा-मृगाप्नुचरविष्किरेषु पथ्यत्वेन श्रेष्ठास्तद्वत्स्ववर्गेषु मध्ये कुंभी-रादिवसा अश्रेष्ठाः २५३

२५४-शाखादमेदसां छागं हास्तिनं च वरावरे[52]॥ ११४

२५४-शाखादानां मध्ये च्छागं मेदः श्रेष्ठम्। ये शाखाः प्रायो भुञ्जते ते शाखादाः। न तु भूयिष्ठं तृणादि, स्वभावेनैव। इति तैलवर्गः २५४

(५) मद्यवर्गः

१ मद्यगुणाः।

२५५-दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम्॥ ११५
सस्वादुतिक्तकटुकमम्लपाकरसं सरम्।
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु॥ ११६
नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम्।
कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ११७
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा॥

२५५-मद्यमुच्यते सर्वं मद्यं दीपनादिगुणयुक्तम्। तुष्टिर्मनः-परितोषः। पुष्टिः—शरीरपोषः नष्टनिद्रस्य चातिनि-द्रस्य चाहारविशेषाद्वैपरीत्यं करोति, प्रमावाद्वा। एवं कृशस्थूलयोरपि। युक्त्या मात्रादिकया पीतमेवं-गुणम्। अयुक्त्या विषसदृशम्। सा च युक्तिर्मदात्यय-चिकित्सिते (चि. अ. ९) वक्ष्यमाणा, आचरणं वा २५५

४७ 'जं सोष्णं त्व'-क. ख. ४८ शिंशिपासा'-कं, शिंशुपासा-ख, शिशिपाशरज'-ङ. ४९ भृशोष्णतीक्ष्णकटुनी तौवं'-क. ख., 'कटुके तुवरा'घ. ५० अक्षादिमुक्तकाक्षोटना'-ङ, ५१ 'रं परम्-ख. ग. घ. *औलूकी-क. ख. ५२ 'वरावरम्-क. घ.

**टिप्पणी**—अम्लपाकरसमिति–यद्यपि च मद्ये पीयमाने नाम्लरसता प्रतीयते व्यक्ता, तथापि दन्तहर्षमुखस्रावाद्यम्लकार्यकर्तृत्वादम्लमेव । अत एवोक्तम्—'सर्वेषां मद्यमम्लानामुपर्युपरि तिष्ठति' (च. चि. अ. २४–११६) उपर्युपरि–उपरिष्टादप्युपरि, अत्यर्थं श्रेष्ठमिति यावत् । तथा चास्य लवणवर्जं पञ्चरसत्वेऽप्यम्लस्योत्कटत्वादम्लरसमित्युक्तम् । नष्टनिद्रेत्यादि–ननु एकमेव मद्यं निद्रां करोति हन्ति चेति विरुद्धम् । इति चेन्न । प्रवृद्धवातो हि नष्टनिद्रो भवति, तस्यामवस्थायां वातघ्नत्वान्निद्रां करोति । प्रवृद्धश्लेष्मा चातिनिद्रः, तस्यामवस्थायां श्लेष्मघ्नत्वान्निद्रां हन्ति इति हेमाद्रिः । अरुणदत्तस्त्वाह–नष्टनिद्रेभ्यो नरेभ्योऽतिनिद्रेभ्यश्च हितं सर्वमेव मद्यं प्रभावादिति केचित् । अन्ये त्वेवं मन्यन्ते–यथा सुरादि यन्मद्यं श्लेष्मादिवर्धनं तन्नष्टनिद्रेभ्यो हितमिति । यच्च माध्वादि मद्यं श्लेष्मादिहन्तृ, तच्चातिनिद्रेभ्यो हितमिति । कृशेत्यादि–किंचिन्मद्यं कृशाय हितं किंचित्स्थूलाय।अथवा तैलोक्त (सू.अ. ६-२३९ पृ.३७) न्यायेन कृशस्थूलहितत्वं बोध्यम्। युक्त्येति–तथा चेयं युक्तिः—"बुद्ध्यादयो गुणा यावदुल्लसन्ति निरत्ययाः । मात्रेयं विहिता मद्यपाने, रोगाय चापरा," इति । तथा च–'शुद्धकायः पिबेत्प्रातः सोपदंशं पलद्वयम् । मध्याह्ने द्विगुणं तच्च स्निग्धाहारेण वै पिबेत् । प्रदोषेऽष्टपलं तद्वन्मात्रा मद्यरसायने । आरोग्यं धातुसाम्यं च वह्निकान्तिबलप्रदम् । अनेन विधिना सेव्यं मद्यं नित्यमतन्द्रितैः' इति । एवं युक्त्या यो मद्यं पिबेत्तस्यामृतोपमं स्यात्,अन्यथा विषवत् २५५

२ नव–जीर्ण–मद्यगुणाः ।

**२५६–गुरु त्रिदोषजननं नवं जीर्णमतोऽन्यथा ॥ ११८**

२५६–तत्र सर्वं मद्यं नवमनतीतसंवत्सरं गुरु त्रिदोषकरं च । केषां चिज्जातानां कतिपयदिवसपरिवासो नवत्वम् । क्रमेण च तन्नाशः । जीर्णं पुराणमेतद्विपरीतम् २५६

**टिप्पणी**—गुर्विति–अन्यथा–नवाद्विपरीतम्–लघु वातकफहरं चेत्यर्थः । अत्र सुश्रुत आह–नवं मद्यमभिष्यन्दि गुरुवातादिकोपनम् । अनिष्टगन्धि विरसमहृद्यं च विदाहि च । सुगन्धि दीपनं हृद्यं रोचिष्णु कृमिनाशनम् । स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम्।(सू.अ.४५–१९२)रोचिष्णु–साधु रोचते तृप्तस्यापि रुचिकरम् । पुराणत्वं जातरसप्रसादत्वेन गन्धादिसंपन्नम् अतीतसंवत्सरं जीर्णमित्यन्ये२५६

३ उष्णाद्युपचारेण मद्यपाननिषेधः ।

**२५७–पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ।**
**नातितीक्ष्णमृदुस्वच्छघनं व्यापन्नमेव वा ॥ ११९**

२५७–तच्च मद्यमुष्णोपचारेण न पेयम् । उष्णं वेश्माहारादिक उपचारो यस्येति । कृतविरेचनेन चाऽऽदोषसाम्यान्न पेयम् । अतितैक्ष्ण्यमार्दवादियुक्तं च न पेयम् । व्यापन्नं देशकालाद्युपहतम् २५७

**टिप्पणी**—मृद्विति–अत्यर्थं मृदु–मदानुत्पादकम् । अवितीक्ष्णादिभिर्गुणैर्मद्यमोजसो गुणान् क्षपयति । (नि. अ. ६, च. चि. अ. २४).

४ सुरागुणाः ।

**२५८–गुल्मोदरार्शो ग्रहणीशोषहृत् स्नेहनी गुरुः ।**
**सुराऽनिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफावहा ॥ १२०**

२५८–अनन्तरं मद्यविशेषा उच्यन्ते–**सुरा** गुल्मादिनाशिनी मेदोरक्तादिकरी च । सुरा पिष्टकृता घना श्वेता २५८

**टिप्पणी**—शालिपिष्टकृतं मद्यं सुरा, सा चानुद्धृतमण्डा, सुराया अच्छ उपरिस्थितमण्डो वारुणीत्युच्यते, **बक्कसो** जगल एकाद्रवः २५८

५ वारुणीगुणाः ।

**२५९–तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च ।**
**शूलकासवमिश्वासविबन्धाध्मानपीनसान् ॥ १२१**

२५९–**वारुणी** नाम सुरा तद्गुणा अनन्तरोक्तसुरासमगुणा । इयं तु लघ्वी तीक्ष्णा च, शूलादींश्च निहन्ति । **विबन्धः**–स्रोतस उपलेपेन दोषादीनामवहनम् २५९

६ जगलमेदकगुणाः ।

**२६०–शूलप्रवाहिकाटोपतृष्णाशोफार्शसां हितः ।**
**जगलः पाचनो ग्राही रूक्षस्तद्वच्च मेदकः ॥ १२२**

७ बक्कसगुणाः ।

**बक्कसो हृतसारत्वाद्विष्टंभी दोषकोपनः ।**

२६०–**जगलो** वारुण्याः सुराया अधोभागो घनः शूलप्रवाहिकादिहरः । **प्रवाहिका**–निस्तानिका । **आटोपो** जठरे वायुना निश्चलेन सशब्दं पूरणम् । तथा पाचनः संग्रहणो रूक्षश्च । **मेदको** नाम जगलस्याधोभागो गुणैर्जगलवद्विज्ञेयः। **बक्कसो** नाम पानीयेन मद्यकल्कपीडनेन हृतसारत्वाद्विष्टंभी त्रिदोषकोपनश्च २६०

८ बैभीतकीगुणाः ।

**२६१–नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा १२३**
**व्रणे पाण्डवामये कुष्ठे न चात्यर्थं विरुध्यते ।**

२६१–विभीतकस्य सुरा अतितीव्रं मदं न जनयति । लघ्वी पथ्या । व्रणादिषु चात्यर्थं न विरुद्धा २६१

९ यवसुरागुणाः ।

**२६२–विष्टंभिनी यवसुरा गुर्वी रूक्षा[53] त्रिदोषला १२४**

२६२–यवसुरा विष्टंभकरी गुर्वी रूक्षा त्रिदोषकरा च२६२

१० कौहलीमधूलकगुणाः ।

**२६३–कौहली बृंहणी गुर्वी, श्लेष्मलस्तु मधूलकः ।**

२६३–कौहली सुरा बृंहणी गुर्वी च । मधूलकः श्लेष्मकरः । 'सर्वे मद्यमसंजातं मधूलक इति स्मृतः' २६३

**टिप्पणी**—कौहलीति–स च यवसक्तुकृतो मद्यभेदः (?) तस्य गुणाः–'त्रिदोषो भेदवृष्यश्च कोहलो वदनप्रियः' (सु. सू. अ. ४५–१८०). परं वैद्यकशब्दसिन्धौ त्वेतत्सुश्रुतवचनं पाठान्तरेण स्वीकृतम् । तद्यथा–'त्रिदोषघ्नश्च वृष्यश्च कोहलो वदनप्रियः' (पृ. ३०४) तदेतत्सुधीभिर्विमर्शनीयम्* २६३

११ अरिष्टगुणाः ।

**२६४–यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ॥ १२५**
**ग्रहणीपाण्डुकुष्ठार्शःशोफशोषोदरज्वरान् ।**

---

५३ 'क्षतिदो'–क. * अथवा कौहलीशब्देन कूष्माण्डसुरा ग्राह्या (नि. र. पृ. १४८)

हन्ति गुल्मक्रिमिप्लीहः कषायकटुवातलः ॥ १२६

२६४-अरिष्टसन्धानमुच्यते । स हि यैर्यैर्द्रव्यैः सिद्धस्तेषां गुणाननुगच्छाति । सर्वेभ्यः दीपनत्वादिभिर्मद्यगुणैरधिकः। ग्रहण्यादिकांश्च रोगान्नाशयति । कषायकटुरसो वातकरश्च२६४

१२ मार्द्वीकगुणाः ।

२६५-मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ।
अल्पपित्तानिलं पाण्डुमेहार्शःक्रिमिनाशनम् ॥१२७

२६५-मार्द्वीकं द्राक्षारसं लेखनत्वादियुक्तम् । पित्तमनिलं चान्यमद्यापेक्षया स्वल्पं करोति । पाण्ड्वादिनाशनं च। योऽतितैक्ष्ण्याच्छ्लेष्मादिकं विलिखाति स लेखनः । २६५

१३ खार्जूरगुणाः ।

२६६-अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ।

२६६-खार्जूरमद्यं मार्द्वीकगुणैरूनम् । वातलं गुरु च २६६

१४ शार्करगुणाः ।

२६७-शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः१२८

२६७-शर्करया कृतं मद्यं सुरभित्वादियुक्तम् २६७

**टिप्पणी**—शार्कर इति-शार्करः-शर्कराप्रकृतिकः । तथा चोक्तम्-'शर्कराधातकीतोयकथितैः शार्करो मतः'इति२६७

१५ गौडगुणाः ।

२६८-सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ।

१६ शीधुगुणाः

२६९-वातपित्तकरः शीधुः स्नेहश्लेष्मविकारहा ॥ १२९
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ।

२६९-शीधुर्वातपित्तकरः । स्नेहविकारान् श्लेष्मविकारांश्च नाशयति । शीधुरपक्वेक्षुरसकृतः पक्वेक्षुरसकृतश्च । तत्र शीधुषु मध्ये पक्वरसो मेदःप्रभृतीनां नाशनः श्रेष्ठश्च २६८

१७ मध्वासव-सुरासव-मैरेय-धातक्यासव-द्राक्षासव—मार्द्वीकेक्षुरसासवगुणाः ।

२७०-छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् १३०
सुरासवस्तीक्ष्णमदः स्वादुस्तीक्ष्णोऽनिलापहः ।
मैरेयो मधुरो वृष्यः सरः संतर्पणो गुरुः ॥ १३१
धातक्यभिषुतो जीर्णो रूक्षो रोचनदीपनः ।
द्राक्षासवो मधुसमः परमं स तु दीपनः ॥ १३२
मार्द्वीकसदृशः प्रोक्तो मृद्वीकेक्षुरसासवः ।

२७०-मध्वासवो माधवको नाम मद्यविशेषः। च्छेदी तीक्ष्णो मेहादिघ्नश्च । सुरासवो नामोत्कटमदः । मधुरस्तीक्ष्णो वातघ्नश्च । मैरेयो मधुरत्वादियुक्तः । मैरेयः कोद्रवैः सह जायते । धातक्या सुतो जीर्णः पुराणः रूक्षो रुच्यो अग्निदीपनश्च न त्वेवं नवः । द्राक्षासवो मधुसमो माक्षिकसमः । अयं चात्यर्थदीपनः । मृद्वीकेक्षुरसाभ्यां कृतसन्धानासवो गुणैर्माद्वीकसमः २७०

**टिप्पणी**—मध्वासव इति—माक्षिकेण संधीयते माधवाख्यो मद्यविशेषः । आसवशब्दो मद्यमात्रवचनः । सुरासव इति-यत्र सुरयैव तोयकार्यं क्रियते स सुरासवः । मैरेय इति-मैरेयलक्षणं यथा-' आसवश्च सुरायाश्च द्वयोरेकत्र भाजने। सन्धानं तद्विजानीयान्मैरेयमुभयाश्रयम् ' इति । धातक्यभिषुतः-धातकीफलासवः २७०

१८ आसवसामान्यगुणाः ।

२७१-समासादासवो हृद्यो वातलः स्वौषधाद्गुणः॥१३३

२७१-समासात्संक्षेपतः आसवगुणा उच्यन्ते-यः कश्चिदासवः स सर्वो हृद्यो वातलः स्वौषधगुणश्च । आसवो यो द्रवेण शुष्कमासुत्य क्रियते २७१

१९ मद्ययोनयः ।

२७२-द्राक्षेक्षुमाक्षिकं शालिरुत्तमा व्रीहिपञ्चमाः ॥
मद्याकरा‡ यदेभ्योऽन्यत्तन्मद्यप्रतिरूपकम् ॥१३४
गुणैर्यथोल्बणैर्विद्यान्मद्यमाकरसंकरात् ।

२७२-द्राक्षादयः पञ्चोत्तमा मद्याकरा मद्ययोनयः । एतद्वर्जितमन्यन्मद्यप्रतिरूपकम् । आकरसंकराच्च मद्यं गुणदीपनत्वादिभिर्यथोल्बणं विद्यात् । उल्बणस्य गुणाननुवर्तेत इत्यर्थः । तेनैतदुक्तं भवति-द्विमद्याकरांमिश्रीभावजातं मद्यमुल्बणेनाधिकेनाकरद्रव्येण समानगुणम् । यो ह्याकरसंयोगेऽधिके भवति तद्गुणं मद्यमित्यर्थः २७२

**टिप्पणी**—द्राक्षेत्यादि-' द्राक्षेक्षवः सखर्जूराः शालिपिष्टं यवस्य च । पञ्च मद्याकराः श्रेष्ठा द्राक्षा तेषां विशिष्यते' इति हृदयपाठः,'धान्य-फल-मूल-सार-पुष्प-काण्ड-पत्र-त्वचो ह्यासवयोनयो भवन्ति। शर्करा नवमिका' इति चरक आह ( सू. अ. २५-४९ ) एतत्प्रपञ्चस्तु तत्र एव द्रष्टव्यः २७२

२० शुक्तगुणाः ।

२७३-रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ॥१३५
विदाहि भृशतीक्ष्णोष्णं हृद्यं रुचिकरं सरम् ।
दीपनं शिशिरस्पर्शं पाण्डुदृक्क्रिमिनाशनम् ॥ १३६

२७३-शुक्तं रक्तपित्तकफानुत्क्लेदयति । वातं चानुलोमयति । विदाहित्वादिगुणयुक्तं च २७३

**टिप्पणी**—रक्तपित्तेत्यादि-तथा चोक्तं शार्ङ्गधरेण—' कन्दमूलफलादीनि सस्नेहलवणानि च । यत्रैकत्राभिषूयन्ते तच्छुक्तमभिधीयते ' ( म. अ. १०-७ ) इति २७३

२१ गुडादिशुक्तगुणाः ।

२७४-गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ।

२७४-गुडादिशुक्तानां यथोत्तरं लघुत्वं विज्ञेयम् । गुडकृताच्छुक्तादिक्षुशुक्तं लघु । इक्षुशुक्तादन्यन्मद्यशुक्तं लघु । सर्वमद्यशुक्ताच्च मार्द्वीकशुक्त लघु । अन्ये तु ब्रुवते-गुडमद्यशुक्तादिक्षुमद्यशुक्तं लघु । इक्षुमद्यशुक्तान्मार्द्वीकमद्यशुक्तमिति । पूर्वस्तु पक्षो युक्त इति निर्णीतः । तथा धातकीगुडतोयादिकारणं मद्यशुक्तयोरित्युक्तम् २७४

२२ कन्दमूलाद्यासुतगुणाः

२७५-कन्दमूलफलाद्यं च तद्वद्विद्यात्तदासुतम्" ॥ १३७

२७५-कन्दादिकं च तदासुतं गुडशुक्ताद्यासुतं तद्वद्विद्यात् । आसवनशुक्तसमानगुणं जेनीयादित्यर्थः २७५

**टिप्पणी**— कन्देत्यादि - आद्यग्रहणात्काण्डत्वक्पत्रादिपरिग्रहः । तस्मिन्शुक्ते, आसुतं चिरकालस्थितम् । उक्तं

‡ यत्ते°-ग. ५४ सुक्तं वा°-क. ५५ °फलाद्यांश्च तद्वद्विद्यात्तदासुतान्-ग.

च 'कन्दमूलफलाद्यं च लवणोदकसंयुतम्। संधानाच्चिरकालाम्लमासुतं परिकीर्तितम्' इति २७५

२३ शाण्डाकीगुणाः।

**२७६–शाण्डाकी[56] चासुतं चान्यत्कालाम्लं रोचनं लघु।**

२७६–शाण्डाकी च शाकान्यासुत्य क्रियते या सा चान्यच्चाप्यनुक्तमासुतमासवनशुक्तगुणम्। कालेनाम्लं सद्रुच्यं लघु च कालाम्लं नाम २७६

**टिप्पणी**—मूलकसर्षपशाकानि क्वथितासुतानि कालजीरकराजिकाचूर्णभावितान्यम्लतीक्ष्णानि शाण्डाकीशब्देनोच्यन्ते २७६

२४ धान्याम्लगुणाः।

**२७७–धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलम्॥**
**श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत्।**
**शस्तमास्थापने हृद्यं लघु वातकफापहम्॥ १३९**

२५ सौवीरकाम्लतुषोदकाम्लगुणाः।

**एभिरेव गुणैर्युक्ते सौवीरकतुषोदके।**
**क्रिमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे॥ १४०**
**ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवैः कृते।**

**इति मद्यवर्गः।**

२७७–धान्याम्लं काञ्जिकं भेदित्वादियुक्तम्। उष्णवीर्यम्। स्वभावेनैव स्पर्शशीतलम्। व्यायामादिना तान्तत्वं **श्रमः**। निर्व्यायामादेरेव तान्तत्वं **क्लमः**। आस्थापनं वातनाशाय **नेत्रेण** द्रव्यस्य गुदप्रणिधानम्। सौवीरकतुषोदके धान्याम्लगुणयुक्ते। क्रिम्यादिनाशने च। सौवीरकतुषोदके क्रमेणानुपूर्व्या वितुषैः सतुषैश्च यवैर्विद्यात्। तेनैतदुक्तं भवति-**सौवीरकं** यन्निस्तुषैर्यवैः क्रियते। **तुषोदकं** यत्सतुषैः क्रियते २७७

**टिप्पणी**—धान्याम्लमिति—धान्याम्लप्रयोगो यथा—'नानाधान्यैर्यथाप्राप्तैस्तुषवर्जैर्जलान्वितैः। मृद्भाण्डं पूरितं रक्षेद्यावदम्लत्वमाप्नुयात्। तन्मध्ये भृङ्गरा मुण्डी विष्णुक्रान्ता पुनर्नवा। मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी। त्रिफला गिरिकर्णी च हंसपादी च चित्रकम्। समूलं कुट्टयित्वा तु यथालाभं विनिःक्षिपेत्। पूर्वाम्लभाण्डमध्ये तु धान्याम्लकमिदं स्मृतम्' इति। यवैर्गोधूमैर्वा कृतं काञ्जिकं सौवीरकम्, सतुषैस्तैः कृतं चेत्तत्तुषोदकं भवति २७७

२६ गवादिमूत्रगुणाः।

**२७८–मूत्रं गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम्॥ १४१**
**पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु।**
**क्रिमिशोफोदरानाहशूलपाण्डुकफानिलान्॥ १४२**
**गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु।**
**विरेकास्थापनालेपस्वेदादिषु च पूजितम्॥ १४३**
**दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमम्।**

२७८–द्रवत्वात्तीक्ष्णत्वादेश्च प्रसंगेन च मूत्राण्यप्युच्यन्ते। गवादीनां मूत्रं पित्तलत्वादिगुणयुक्तम् क्रम्यादींश्च जयेत्। लघु च। रसे कटु। लवणमनुरसं स्वल्पं यस्य तत्तथाविधम्। विरेकादिषु च शस्यते। दीपनत्वादिगुणं च। मूत्रेषु च मध्ये गोमूत्रमुत्तमं प्रधानम् (च. सू. १–९२–१०४) २७८

२७ छागगजवाजिमूत्राणि।

**२७९–श्वासकासहरं छागं पूरणात् कर्णशूलजित्।**
**दद्यात्क्षारे किलासे च गजवाजिसमुद्भवम्॥ १४४**

२७९–छागमूत्रं कासश्वासहरम्। कर्णपूरणेन च कर्णशूलजित्। दन्तितुरगमूत्रे किलासे श्वित्रे उपयोगार्थं दद्यात्। क्षारे च पच्यमाने (किलासम्–नि. अ. १५) २७९

२८ रासभमूत्रम्।

**२८०–हन्त्युन्मादमपस्मारं क्रिमीन्मेहं च रासभम्।**

२८०–रासभं मूत्रं उन्मादादीन् हन्ति २८०

३० गवादिशकृद्गुणाः।

**२८१–कषायतिक्तमेतेषां हिध्माश्वासहरं शकृत्॥ १४५**
**मार्गमोजःक्षयहरं वैष्किरं वातरोगनुत्।**
**प्रसहानामपस्मारमुन्मादं च नियच्छति॥ १४६**
**महामृगसमुद्भूतं कुष्ठहृज्जलचारिणाम्।**
**नेत्ररोगहरं पित्तं प्रवृद्धं च नियच्छति॥ १४७**

२८१–एतेषामनन्तरोक्तानां मूत्रप्राणिनां शकृत् पुरीषं रसेन कषायतिक्तम्। हिध्माश्वासहरं च। अन्यत् सुबोधम् २८१

**टिप्पणी**—मृगाणामिदं मार्गम्। विष्किराः–पक्षिणः तेषाम्। प्रसहाः–काकादयः (सू. अ. ७ मांसवर्गे) २८१

३१ गवादिपित्तरोचनयोर्गुणाः।

**२८२–पित्तं तिक्तं[57]विषहरं रोचना कफवातजित्।**
**तिक्ता[58]पाप्माहरा,**

२८२–एतेषामेव पित्तं जाठरमुपयुक्तं तिक्तरसं विषहरं च। एतेषामेव रोचना नाभिप्रदेशभवा वातश्लेष्मविनाशिनी तिक्तरसा पाप्माहरा च २८२

३२ मानुषमूत्रम्।

**२८३– –मूत्रं मानुषं तु विषापहम्॥ १४८**

२८३–मानुषं तु मूत्रं विषघ्नम्। इति मद्यवर्गः। २८३

३३ उपसंहारः

**२८४–तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात्।**
**इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः॥ १४९**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने द्रवद्रव्यविज्ञानीयो नाम षष्ठोऽध्यायः॥ ६॥**

२८४–इत्यनन्तरोक्तेन प्रकारेण तोयादिवर्गैः प्रधानानतिक्रमेण द्रवाणामेकदेश उदाहृतः २८४

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने षष्ठोऽध्यायः॥ ६॥**

**टिप्पणी**—द्रवैकदेशोयऽमिति–एकदेशग्रहणं द्रवद्रव्यव्यक्तीनामानन्त्यात्कार्त्स्न्येन वक्तुमशक्यत्वात्। यथास्थूलमिति–यावत्यः स्थूलाः प्रसिद्धा व्यक्तयः, तावत्यः सर्वा उक्ता इत्यर्थः २८४

---

५६ चाण्डा°–ग. ५७ क्रिमिहरम्–घ. ५८ °क्ता पामाहरा–घ.

# अन्नस्वरूपविज्ञानीयः सप्तमोऽध्यायः ।

१ प्रतिज्ञा ।

२८५-अथातोऽन्नस्वरूपविज्ञानीयं नामाध्यायं व्याख्यास्यामः । [1]इतिह स्माहुरात्रेयादयो महर्षयः ॥ १

२८५-द्रवस्य पानान्नसंस्काराद्युपयोग्यत्वादन्नमुच्यते-अथेति

टिप्पणी—१ अथात इति-अन्नस्य स्वरूपं स्वभावो रसवीर्यविपाकप्रभावगुणकर्मादि । तस्य विज्ञानमवगमः, तस्मै हितोऽध्यायः-अन्नस्वरूपविज्ञानीयः, तम् २८५

## ( १ ) शूकधान्यवर्गः ।

२ शालिभेदाः ।

रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः ।
[2]शारामुखो दीर्घशूको [3]लोध्रशूकः [4]सुगन्धिकः ॥ २
[5]पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदो [6]गौरशारिवौ ।
काञ्चनो महिषः [7]शूको दूषकः कुसुमाण्डकः ॥ ३
[8]लाङ्गला [9]लोहवालाख्याः कर्दमाः शीतभीरुकाः ।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥ ४

२८६-शूकधान्यानां च प्राधान्यादग्रे पाठः । रक्ताद्यास्तपनीयान्ता अन्ये च देशकालरसादिना रक्तादिसदृशाः शाल्यस्ते सर्वे मधुरविपाकरसत्वादियुक्ताः । एते च सर्वे नानादेशप्रसिद्धनामानः २८६

टिप्पणी—यतः पूर्वाध्याये द्रव आहार उक्तः इह त्वद्रवः,स चान्नशब्दवाच्यः। तत्र अन्नेषु च प्रायः शूकधान्यानां,शूकधान्येषु च शालीनां प्राधान्यात्प्रथमं शालीनां गुणानाह-रक्त इति।रक्तो लोहितशूकः(तांबडी साळ),महान्-महातण्डुलः (पटणी),कलमः-कलम्बिः (कोलंबा ), तूर्णकः-शीघ्रपाकी, शकुनाहृतः-मगधेषु बुद्धोत्पादकाले उत्तरकुरुभ्यो हंसैरानीतो भृंगारपात्रे विशाखाख्यया वापितो विस्तरं गतः इत्यरुणदत्तः, वृद्धवैद्यास्तु-‘ द्वीपान्तरात्समानीतो गरुडेन महात्मना । शकुनाहृतशालिः स्यात् गरुडापरनामकः ’ इति सुश्रुतटीकायां डल्हणः। अस्यैवावन्त्यां चक्रनाम्ना प्रसिद्धिः । सारामुखः-कृष्णमुक्ताकारतण्डुलः, दीर्घशूक आयतशूकः शुक्ताकारः । लोध्रशूकः-लोध्रपुष्पाकारशूकः । सुगन्धिको गन्धशालिः देवशालीत्यपरनामा ।पुण्ड्रः-पौण्डरीकामः । पाण्डुः-पाण्डुरूपः पाण्डुशूकश्च । पुण्डरीकः-श्वेतोत्पलाभः । प्रमोदः-प्रल्हादकः । गौरः-हरिद्राभः । सारिवः-सारिवासदृशः । काञ्चनः-सुवर्णशालिः । महिषः-महिषमस्तकः । दूषकः-मदकारी । कुसुमाण्डकः-पुष्पवत्सुरभिः सुकुमारतण्डुलश्च । लाङ्गलः-कृष्णभूमिजो हलाकारः तण्डुलः। लोहवालः-कठिणतण्डुलः। कर्दमः-पङ्किलभूमिजः। शीतभीरुकः-यो बहुशीतेन निष्पाद्यते । ‘ शीताद्बिभेतीत्येनम् ’ इति डल्हणः । पतङ्गः-कुङ्कुमकः । तपनीयः-अल्पशीतेन निष्पाद्यते । ये चान्य इति-उक्तशालिभ्योऽन्ये शालयः इत्यर्थः । ते च नानादेशरूपविलेऽभ्यो ज्ञेयाः । शालयः इति-शालिर्हैमन्तिकं धान्यम् । शुभाः-पथ्याः रक्तादिसदृशाः २८६

३ शालिसामान्यगुणाः ।

स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ।
कषायानुरसाः पथ्या लघवो मूत्रला हिमाः ॥ ५

२८७-बद्धं ग्रथितं अल्पं च वर्चः पुरीषं कुर्वन्तीति बद्धाल्पवर्चसः स्वभावेनैव शरीरे हिताः । २८७

टिप्पणी—स्वादुपाकरसा इति मधुरपाका इत्यर्थः । नन्वेवं बद्धाल्पवर्चस्त्वं मधुरपाकेऽनुपपन्नम् । यदुक्तं-‘मधुरः सृष्टविण्मूत्रो विपाकः कफशुक्रलः ’ ( च.सू. अ. २६-६१ ) इति। नैष दोषः । शालीनां मधुरपाकित्वेऽपि बद्धाल्पवर्चस्त्वं द्रव्यप्रभावात् । नन्वेवं कटुपाकत्वेऽपि स्नेहादयो द्रव्यप्रभावादेव भविष्यन्तीति चेत् । नैतदस्ति। शालीनां कटुपाकाङ्गीकारे बहुतन्त्रविरोधप्रसङ्गात् । तथा च चरकः-शीता रसे विपाके च मधुराश्चाल्पमारुताः । बद्धाल्पवर्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः (सू. अ. २७-१०) यद्यपि स्वादुविपाकस्वभावेन गुरुरुक्तः (च.सू. अ. २६-६२) तथाप्यत्र मधुरपाकत्वेऽपि शालीनां शीघ्रपाकित्वम्, प्रकृतिलघुत्वात् । अत एव मात्राशितीये चरकेणोक्तम्-‘ शालिषष्टिक-मुद्ग-लाव-कपिञ्जलैण-शश-शरभ-शम्बरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रामपेक्षन्ते ’ ( सू. अ. ५-५ ) इति दिक् । कषायानुरसा इति - द्रव्ये रसनेन्द्रियग्राह्यो व्यक्त उपलभ्यते कश्चिद्धर्मः स रसशब्देनोच्यते । यश्चाव्यक्तो रसनेन्द्रियेणोपलभ्यते सोऽनुरसः । हीनार्थोऽत्रानुशब्दः । अल्पो रस इत्यर्थः । तथा च यः मुखक्षिप्तस्य हरीतक्यादेर्द्रव्यस्य रसनेन्द्रियेण किञ्चिदन्ते व्यक्तोऽप्युपलभ्यते सोऽप्यनुरसशब्देनोच्यते । एवं च द्रव्ये कश्चिद्धर्मः सद्यो व्यक्तः, कश्चिदव्यक्तः । कश्चिदीषद्व्यक्तः, कश्चिदन्ते व्यक्तो भवति । तत्राद्यो रसः इतरे चानुरसाख्याः । अव्यक्तस्याप्यनुरसस्य प्रधानरसविजातीयकार्यकर्तृत्वात्सद्भावोऽनुमीयते । विशेषस्तु द्रव्यादिविज्ञानीये, रसभेदीये चावगन्तव्यः ( सू. अ. १७-१८ ) २८७

४ शूकजेषु वरावरत्वम् ।

२-शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ।
[10]महांस्तं चानु कलमस्तं चाप्यनु ततः परे ॥ ६

२८८-तत्र शूकजेषु मध्ये रक्तशालिः श्रेष्ठः । तृष्णानाशनस्त्रिदोषनाशनश्च । ततो रक्तादूनो महान् । ततोऽप्यूनः कलमः। अनेनैव क्रमेण परे तूर्णकादयः पूर्वस्मादुत्तरो गुणैरून इत्यर्थः २८८

टिप्पणी—शूकजेष्विति-अनुशब्दो हीनार्थः । तेन रक्तशालिमपेक्ष्यापरे शालयः किंचिद्धीनगुणा इत्यर्थः । २८८

१ अयं ग्रन्थः कपुस्तके नास्ति । २ सारामु'-क. ख. ३ रोध्रशू'-क. ख. ४ 'गन्धकः-ख.. ५ पौण्ड्रकः पुण्डरीकश्च पाण्डुकः पुण्डरीकश्च-ङ. ६ 'रसारि'-घ. 'रशालिकः-ङ. ७ सूक्ो-क. ८ जाङ्गला लो'-ङ. जाङ्गलो लोहवालाख्यो कर्दमः शीतभीरुकः इत्यपि पाठः ९ 'लाश्च ङ. १० महांस्तस्यानुकल'-क. ख. महांस्तमनु क'-घ.

५ यवकादयो यथापूर्वं निन्द्याः।

२८९–यवका हायनाः [११]पांसुवाप्यनैषधकादयः* ।
स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः ।

२६०–यवकादयो मधुरत्वादियुक्ताः यश्च यस्मात् पूर्वः स तस्मान्निन्द्यः ( च. सू. २७-१२, सु. सू. २१-२३ ) २८९

६ व्रीहिषु षष्टिकः श्रेष्ठः ।

२९०–स्निग्धो ग्राही लघुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ।

२६१–षष्टिको नाम व्रीहिः स्निग्धत्वादियुक्तः । स्थिरः शरीरे अव्यापनशीलः । स च सर्वव्रीहिषु श्रेष्ठः । तस्य षष्टिकस्य द्वैविध्यं–गौरः कृष्णगौरश्च, असितगौरतः कृष्णगौरात् गौरः श्रेष्ठः । ततः षष्टिकात् गुणैर्महाव्रीह्यादयः क्रमेणोनाः २९०

**टिप्पणी**—षष्टिक इति–यो व्रीहिः षष्टिरात्रेण पच्यते स षष्टिकः । तथा च भावप्रकाशे–'गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः ' इति २९०

७ महाव्रीह्यादीनां गुणाः।

२९१–ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः॥ ९
[१२]कुक्कुटाण्डकलावाक्षपारावतकसूकराः ।
वरकोद्दालकोज्जालचीनशारददर्दुराः ॥ १०
गन्धनाः कुरुविन्दाश्च [१३]गुणैरल्पान्तराः स्मृताः ।

**टिप्पणी**—महाव्रीहिः–महातण्डुलः, कृष्णव्रीहिः–कृष्णतुषतण्डुलः, जतूमुखः–लाक्षाभमुखः, कुक्कुटाण्डकः–कुक्कुट्या अण्डानीव वर्णेन वर्तुलतया च तण्डुला यस्य सः । लावाक्षो लावनेत्राभतण्डुलः, पारावतकः – पारावतवच्छुक्लतण्डुलः, सूकरः–सूकरवर्णपुष्पतण्डुलः । वरको वराटिकाकारतण्डुलः, उद्दालको वनकोद्रवाकारतण्डुलः । उज्जालो य ऊर्ध्वं जालैरिव शूकैश्चीयते । चीनः–चीनफलबीजाभतण्डुलः, चीनफलं कर्कटीफलम् । शारदो यः शरदि पच्यते । दर्दुरो दर्दुरवद्वृष्टिजीवी । गन्धनः सुगन्धिः, कुरुविन्दो यः प्रायः कुरुषु लभ्यते २९१

८ इतरव्रीहिगुणाः।

२९२–स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः ॥

२९२–एतेभ्यः षष्टिकयवकादिभ्योऽन्योऽनुक्तो व्रीहिर्मधुरः अम्लविपाकः पित्तकरो गुरुश्च २९२

११ पाटलव्रीहिगुणाः।

२९३–बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः[१४] ।

२९३–पाटलो नाम व्रीहिः त्रिदोषकर एव २९३

९ कङ्ग्वादितृणधान्यानां सामान्यगुणाः।

२९४–[१४]कङ्गुकोद्रवजूर्णाह्वगदीवरुणपादिकाः॥ १२
श्यामाकतोयश्यामाकहस्तिश्यामाकशिल्पिकाः[१५] ।
[१६]शिशिरोद्दालपीवारवरुक्वरकोत्कटाः।
[१७]मधूलिकान्तनिर्गण्डीवेणुपर्णीप्रशान्तिकाः ॥ १३
[१८]गवेधुकाण्डलौहित्यतोयपर्णीमुकुन्दराः ।
कफपित्तहरा रूक्षाः कषायमधुरा हिमाः ॥ १४
वातला बद्धविण्मूत्रा लघवो लेखनात्मकाः ।

२९४–कंग्वादयः कफपित्तहरत्वादियुक्ताः अत एव निर्धार्यते व्रीहयो विशिष्टाः शूकधान्याः २९४

**टिप्पणी**—कङ्ग्विति–कङ्गुः–प्रियंगुः । स च कृष्ण-रक्त-पीत-श्वेत-भेदैश्चतुर्विधः । एते कृष्णादयो यथोत्तरं प्रधानाः ( सु. सू. अ. ४६-२४ ) कोद्रवः–कोरदूषकः, श्यामाकः–त्रिबीजः, उद्दालः–वनकोद्रवः, नीवारः–मुनिधान्यम् । वरुकः–शणबीजम् । वरकः–स्थूलकंगुः मधूलिका–मर्कटहस्ततृणम्, कङ्गुकोद्रवादीनि वनचरेभ्यो ज्ञेयानि २९४

१० कङ्ग्वादीनां विशेषगुणाः ।

२९५–भग्नसन्धानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः ॥ १५
कोरदूषः परं ग्राही [१९]स्पर्शे शीतो विषापहः ।
उद्दालकस्तु वीर्योष्णो नीवारः श्लेष्मवर्धनः ॥ १६
शीतवीर्या विशेषेण स्निग्धा वृष्या मधूलिका ।

२९५–प्रियङ्गुः,कङ्गुः,भग्नस्याङ्गस्य सन्धानं करोति बृंहणी गुर्वी च । कोरदूषः–कोद्रवः अत्यर्थसंग्रहणः, स्पर्शे शीतो विषहरश्च । उद्दालकस्तु उष्णवीर्यः । नीवारः श्लेष्मवर्धनः । मधूलिका अत्यर्थं शीतवीर्या स्निग्धा वृष्या च । सर्वत्र चोत्सर्गापवादोपबृंहकवचनकल्पना च स्वयं कल्पनीया २९५

१२ यवादीनां गुणाः ।

२९६–रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः॥
वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफाञ्जयेत् ।
पीनसश्वासकासोरुस्तंभकण्ठत्वगामयान् ॥ १८
गुणैर्न्यूनतरा ज्ञेया [२०]यवादनुयवाह्वयाः ।
उष्णाः सरा वेणुयवाः कषाया वातपित्तलाः ॥ १९

२९६–यवो रूक्षत्वादिगुणयुक्तः । एतैश्च त्वगामयनाशनान्तैर्गुणैः स्वल्पैर्युक्ता अनुयवाः–अनुयवनामानो यवाः । ते च यवाकृतयो लोके प्रसिद्धाः। वेणुप्रान्तभवा यवा उष्णवीर्याः सराः कषायरसाः वातपित्तलाश्च २९६

**टिप्पणी**—विड्वातकृदिति–स्वादुरसोपेतो गुरुगुणयुक्तश्च गोधूमो मधुररसोपदिष्टं वातजित्त्वं यत्कर्म तत्करोति। समानप्रत्ययारब्धत्वात् । यवस्तु स्वादुरसोपेतो गुरुगुणयुक्तश्च मधुररसोपदिष्टं यद्वातजित्वं कर्म तन्न करोति अपि तु वातकृत्त्वमेव करोति, विचित्रप्रत्ययारब्धत्वात् । तथाहि–द्रव्याणां तावद्द्वैविध्यम् । तत्र ( १ ) कानिचिद्द्रव्याणि यैरेव महाभूतैर्यथाविधे रसादय आरब्धाः, तैरेव तथाविधैर्महाभूतैस्तदाश्रयाण्यपि द्रव्याण्यारब्धानि । तानि रसादिसमानप्रत्ययारब्धान्युच्यन्ते । यथा–क्षीरं स्वादुरसोपेतं गुरुगुणयुक्तं च मधुररसोपदिष्टं शीतवीर्यम्, समानप्रत्ययारब्धत्वात् । ( २ ) कानि चित्पुनस्तदाश्रितरसादिसमारम्भकमहाभूतान्यन्यानि तदाश्रय·

---

११ पांशुबाष्पनैष°–क. ख. १२ 'वाख्य°–क. ख., कुक्कुटाण्डकपालाख्य, 'कपालाक्ष–ङ. १३ 'गैरल्पतराः स्मृ°–क. १४ 'हगर्मुटीचूर्भपा°–क. ख. १५ 'श्यामाकशिबिरी । शिबिरोद्दार°–क, 'श्यामाकशिबिराः । शिबिरो दारुनीवारव°–ख. १६ 'रवरकूवरकोत्क°–ख. १७ मधूली शांतनुः संडिर्वेणुपर्णी प्रशान्तिका–क. ख. १८ गवेधुकाण्डलौहित्यतोदपर्णी मुकुंदकाः–क. ख. १९ स्पर्शशी°–क, ख, २० यवादेव यवाह्व–क. ख. * पांसुषु वाप्यते, आदिशब्देन चम्पकपत्रिकादयः ।

द्रव्यारम्भकाण्यन्यानि च महाभूतानि, तैरारब्धानि,तानि विचित्रप्रत्ययारब्धानि द्रव्याणि। एतदुक्तं भवति-रसादी· **विचित्रप्रत्ययारब्धानि** द्रव्यस्य चारम्भकाण्यन्यथाभूतानि महाभूतानि, नोभयत्रैकरूपाणीति। तानि च रसाद्यनुगुणं कर्म न कुर्वन्ति, भिन्नत्वाद्धेतुभावस्य। तथा हि-रसादीनामारम्भेऽन्यो हेतुरन्यश्च तदाश्रयद्रव्यारम्भ इति। यथा - स्वादुरसयुक्तो गुरुगुणयुक्तश्च सिंहो न यथारसं मधुरविपाकः। किं तर्हि ? कटुको विपाके, विचित्र· प्रत्ययारब्धत्वात्। शूकरो मधुररसयुक्तो गुरुगुणोपेतश्च यथारसं मधुरविपाक एव, समानप्रत्ययारब्धत्वात् इति दिक् २९६

१३ गोधूमगुणाः।

**२९७-वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा।**
**सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः॥ २०**
**पथ्या नन्दीमुखी शीता कषाया मधुरा लघुः**
**इति शूकधान्यवर्गः।**

२९७-गोधूमो वृष्यत्वादियुक्तः। जीवनः सौम्यधातुवृद्धिकरः सन्धानकारी भग्नस्योरुप्रभृतेः सन्धानं करोति। नन्दीमुखी शरीरहिता रसे कषायमधुरा लघ्वी च। इति शूकधान्यवर्गः २९७

**टिप्पणी**—संधानकारीति - गोधूमस्य स्वादुशीतस्निग्धादिगुणोपयोगाच्छ्लेष्मकर्तृत्वं भवत्येव। अत एव सुश्रुते 'श्लेष्मकरश्च' (सू.अ.४६-४४) इत्युक्तम्। यत्तु वसन्ते कफप्रधाने 'यवगोधूमजाङ्गलान् सेवेत '(सू. अ. ४-१३६ पृ.२३) इत्युक्तम्। तत्पुराणगोधूमाभिप्रायेण। पुराणश्च गोधूमः कफं न करोति। तथा च वक्ष्यति-'प्रायो मधुरं श्लेष्मलमन्यत्र पुराणशालियवगोधूममुद्गमधुशर्कराजाङ्गलमांसात्' (सू. अ. १८) इत्यनेन। पथ्येति-नन्दीमुखी-कृशदीर्घा गोधूमजातिः ( खपले गहूं ) इति शूकधान्यवर्गः २९७

**( २ ) शिम्बिधान्यवर्गः।**

१ शिंबिधान्यानि, तेषां गुणाश्च।

**२९८-शिंबिजा [21]मुद्गमङ्गल्यवनमुद्गमकुष्ठकाः॥ २१**
**[22]मसूरचवलाढक्यश्चणकाश्च पृथग्विधाः।**
**कषायस्वादुलघवो विबन्धाध्मानकारिणः॥ २२**
**रूक्षा बद्धमलाः शीता विपाके कटुका हिताः।**
**पित्तासृक्कफमेदःसु सूपालेपादियोजनात्॥ २३**

२९८-शिंबिधान्यमुच्यते-मुद्गाद्याः पृथग्विधाः-नानाविधाः। रसेन कषायमधुराः लघवः। दोषविबन्धमाध्मानं च कुर्वन्ति। बद्धपुरीषाः। शीतवीर्या विपाके कटुकाः। भोजनालेपपरिषेका.दियोजनाच्च रक्तपित्तश्लेष्ममेदःसु हिताः-पथ्याः २९८

**टिप्पणी**—शूकधान्यमनु तदुपकरणत्वेन शिम्बिधान्यं वाच्यम्। तत्रापि प्राधान्यान्मुद्गादीनाह-शिम्बिजा इति। शिम्बिः शमी चेत्यनर्थान्तरम्। 'शेंग' इति भाषायाम्। मुद्गः 'मूग' इति इति भाषायाम्। मुद्गा नानाविधाः हरितपीतकृष्णरक्तभेदेन। मङ्गल्यो मसूरभेदः। स च पाण्डुरः। मसूरा च कृष्णवर्णा। वनमुद्गो वने जायते। कृष्णमुद्ग इति प्रसिद्धः। मकुष्ठकः-मोठः (मटकी), चवलः-राजमाषः (चवळी), आढकी-तुवरी। चणकाः-प्रसिद्धाः (हरभरे)। आढकीचणकगुणा यथा-'आढकी कफपित्तघ्नी वातला' (च. सू. अ. २७-३३) 'अ सविम्पित्तहरो रूक्षो वातलश्चणकः स्मृतः' (अ. हृदये सू. अ. ६-१८), सूपः, आलेपः इति छेदः। सूपो व्यञ्जनम्, आमटी इति ख्यातः। सूपप्रक्रिया चेत्थम्-द्विदलधान्यसूपे कर्तव्ये तद्धान्यं कृष्णसर्षपतैलेन उद्वर्तनीयम्। अथ शुष्कीकृत्य त्वचा हीनं द्विदलं गृहीत्वा शीतोदकेन मन्दाग्नौ सूपः पाच्यः। पचनसमये च लवणार्द्रकहिङ्ग्वोऽन्तः प्रक्षेप्याः। आलेपः सर्वशोफानां सामान्यः प्रधानतमश्चोपक्रमः। स च त्रिविधः-प्रलेपः, प्रदेहः, आलेपश्च। आलेप आलेपनम्-जातमात्रशोथव्रणादौ यथोक्तौषधप्रतिलोमं लेपनम्। विशेषस्तु सुश्रुतादवगन्तव्यः (सु.सू.अ.१८) तथा च चरकः-'पित्तश्लेष्माणि शस्यन्ते सूपेष्वालेपनेषु च' (सू. अ. २७-२९) २९८

२ मुद्गगुणाः।

**२९९-[23]सूप्यानामुत्तमा मुद्गा लघीयांसोऽल्पमारुताः।**
**हरितास्तेष्वपि वराः**

२९९-सूपे साधुः सूप्यः। तेषां सूप्यानां मुद्गा उत्तमाः-प्रवराः। अतिलघवः स्वल्पवातलाश्च। तेषु मुद्गेषु मध्ये हरिताः शाड्वलवर्णा वराः-श्रेष्ठाः। कृष्णास्त्ववराः २९९

३ मकुष्ठमसूरगुणाः।

**३००- मकुष्ठाः कृमिकारिणः॥ २५**
**वर्ण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणो भृशम्।**

३००-मकुष्ठास्तु कृमिकराः। मसूराः प्रलेपादिभिर्युक्ताः परमत्यर्थेन वर्णकराः संग्रहणाश्च ३००

४ राजमाषगुणाः।

**३०१-राजमाषो गुरुर्भूरिशकृद्रूक्षोऽतिवातलः॥ २५**

३०१-राजमाषो गुरुः प्रभूतपुरीषः। रूक्षोऽतिवातलश्च ३०१

**टिप्पणी**—राजमाष इति-अत्र चरकः-'राजमाषः सरो-रुच्यः कफशुक्राम्लपित्तनुत्। तत्स्वादुर्वातलो रूक्षः कषायो विशदो गुरुः' (सू. २७-२५) तत्स्वादुः-माषवत्स्वादुः। तथा च सुश्रुतः-'कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य कर्ता। स्वादुर्विपाके मधुरोऽलसान्द्रः संतर्पणः स्तन्यरुचिप्रदश्च' इति (सु. अ. ४६-३५) अलसान्द्रो राजमाषः (चवळी इति ख्यातः) ३०१

५ कुलत्थगुणाः।

**३०२-कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः।**
**पीनसश्वासकासार्शोहिध्मानाहकफानिलान्॥ २६**
**घ्नन्ति शुक्राश्मरीं शुक्रं दृष्टिं शोकं तथोदरम्।**
**ग्राहिणो लघवस्तद्वित् विपाकेऽम्ला विदाहिनः२७**

३०२-कुलत्थाः कषायमधुरा रूक्षा उष्णवीर्याः रक्तपित्तकराः पीनसादिनाशनाश्च। शुक्राश्मरीं घ्नन्ति। शुक्रं रेतः तेनाश्मरी वक्ष्यमाणा (नि. अ. ९)। दृष्टिं-दर्शनशक्तिं च

२१ मुद्गमाङ्गल्य-घ. २२ मसूरचकुलाढ°-क,मसूरकफलाढ°-ग. २३ सूपानामु°-क.

नाशयन्ति । संग्रहणा लघवस्तीक्ष्णा अम्लविपाका विदाहिनः ३०२

**टिप्पणी**—कषायेति । एवमुद्देशक्रमेण मुद्ग-मकुष्ठ-राजमाषान् समुपवर्ण्य कुलत्थगुणानाह-कुलत्थः ( कुळीथ-हुलगे इति लोके ) शुक्ल-कृष्ण-चित्र-लोहितभेदेन चतुर्विधो भवति । तथा ग्राम्यवन्यभेदेन च द्विविधोऽपि । अत एव तन्त्रान्तरे 'वन्यः कुलत्थस्तद्वच्च विशेषान्नेत्ररोगनुत्' इति । विपाकेऽम्ला इति । ननु सुश्रुतेन 'कटुर्विपाके' (सू. अ. ४६-३७) इत्युक्तं,तथापि अनेकरसवदविरोधः। एकस्मिन्द्रव्ये हि बहवो रसा अनुभूयन्ते। अथवा भिन्नकुलत्थयोर्वा विपाकौ ग्राह्यौ । वस्तुतस्तु उभयथापि रक्तपित्तकरत्वैककार्यत्वाद्विरोधाभाव एव । तथा च वक्ष्यति रक्तपित्तनिदाने-'भृशोष्णतीक्ष्णकट्वम्ललवणातिविदाहिभिः' ( नि० अ.२ ) इत्यादिना ३०२

६ निष्पावगुणाः ।

**३०३-निष्पावस्तु सरो रूक्षः कषायमधुरो गुरुः ।**
**पाकेऽम्लो वातविष्टंभी स्तन्यमूत्रास्रपित्तकृत् ॥२८**
**उष्णो विदाही दृक्छुक्रकफशोफविषापहः ।**

३०३-निष्पावस्तु सरत्वादियुक्तः, वातकरः, उष्णवीर्यः, विदाही-दृशं-रेतः-कफं-शोफं-विषं च नाशयति । निष्पावो राजशिंबिः ३०३

७ माषगुणाः ।

**३०४-माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ॥ २९**
**गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ।**

३०४-माषः स्निग्धत्वादियुक्तः । मलं-पुरीषम् । शुक्रस्य रेतसो वृद्धिं बहुत्वं विरेकं बहिःप्रेरणं च करोति ३०४

**टिप्पणी**—शुक्रवृद्धिविरेककृदिति – वृष्यं त्रिविधम् तद्यथा-'शुक्रस्रुतिकरं किंचित्किंचिच्छुक्रविवर्धनम्। स्रुतिवृद्धिकरं किंचित्त्रिविधं वृष्यमुच्यते' तत्र स्रुतिकरं संकल्पादि,वृद्धिकरं शतावर्यादि, स्रुतिवृद्धिकरं च दुग्धमाषादि ३०४

८ काकाण्डोलात्मगुप्तयोर्गुणाः ।

**३०५-[24]फलानि गुणवद्विद्यात् काकाण्डोलात्मगुप्तयोः॥**

३०५-काकाण्डोलात्मगुप्तयोश्च फलानि माषवत् गुणैर्विद्यात्। **काकाण्डोला**-कटभिः ३०५

**टिप्पणी**—फलानीति-काकाण्डोला-कपिकच्छु सदृशः शिम्बः। अस्याश्च 'गोडी कुहिली' इति लोके। इयं निःशूका । आत्मगुप्ता-कपिकच्छुः ( खाजकुहिली ) इयं सशूका ३०५

९ कुशाम्रशिंबिगुणाः ।

**३०६-[25]कुशाम्रशिम्बी मधुरा वातपित्तहरा हिमा ।**

३०६-कुशाम्रशिंबी नाम शिम्बिधान्यम्। सा मधुरा वातपित्तहरा शीतवीर्या च ३०६

१० अनुक्तशिंबिधान्यानां सामान्यगुणाः ।

**३०७-मधुराः शीतला गुर्व्यो बलघ्न्यो रूक्षणात्मिकाः॥**
**स्नेहाढ्या बलिभिर्भोज्या विविधाः शिम्बिजातयः**

३०७-अनुक्तानां सामान्यमुच्यते । विविधाः शिम्बिजातयो मधुराः शीतवीर्या गुर्व्यो बलघ्न्यो रौक्ष्यापादनस्वभावाः । ताश्च स्नेहाढ्या घृतादिबहुलाः सत्यो बलवद्भिः पुरुषैर्भोज्याः ३०७

**टिप्पणी**—मधुरा इति-विविधाः-कृष्णपीतरक्तश्वेताः३०७

११ तिलगुणाः ।

**३०८-स्निग्धोष्णतिक्तकटुकः कषायमधुरस्तिलः ॥ ३२**
**मेध्यः केश्यो गुरुर्वर्ण्यः स्पर्शशीतोऽनिलापहः ।**
**अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ॥ ३३**
**कृष्णः प्रशस्ततमस्तमनु शुक्लस्तमनु चारुणः ।**

३०८-तिलः स्निग्धत्वादियुक्तः । रसे तिक्तादियुक्तः । विपाके कटुकः । मूत्रस्याल्पत्वकरोऽल्पमूत्रः । मेधाग्निकफ-पित्तकरश्च । मेधा-प्रज्ञा । तेषु च तिलेषु मध्ये कृष्णतिलः श्रेष्ठः । ततः शुक्ल ऊनः । शुक्लादप्यरुण ऊनतरः ३०८

१२ अतसीगुणाः ।

**३०९-स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः ३४**
**दृक्छुक्रहृत् कटुः पाके**

३०९-उमा-अतसी-स्निग्धा रसेन मधुरतिक्ता, उष्णवीर्या कफपित्तकरी गुर्वी च दृशं शुक्रं च नाशयति,कटुविपाका च ३०९

**टिप्पणी**—स्निग्धोमेति-ननु 'स्निग्धोष्णा कफवातघ्नी सतिक्ता मधुराऽतसी' इति खारणादिना श्लेष्मघ्नत्वमुक्तम्। इह तु श्लेष्मलत्वमिति विरोधः इति चेन्मैवम् । विषयभेदात् । श्लेष्मघ्नत्वं वातसंसृष्टविषयम् श्लेष्मलत्वं पित्तसंसृष्टविषयम् ३०९

१३ कुसुंभबीजगुणाः ।

**३१०-　　　　तद्वद्वीजं कुसुम्भजम् ।**

३१०-तद्वदुमावत्कुसुम्भबीजम् ३१०

**टिप्पणी**—तद्वदिति-कुसुम्भबीजं पुनः कफघ्नम् । 'कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः कुसुम्भः' इति सुश्रुतोपदेशात् ( सू. अ. ४६-४८ ) अतिदेशादुपदेशो हि बलवान् ३१०

१४ शिंबिशूकधान्ययोर्वरावरत्वम् ।

**३११-माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ॥ ३५**

३११-अत्र शिम्बिधान्यवर्गे माषः अश्रेष्ठः । शूकधान्यमध्ये यवकः अश्रेष्ठः ३११

१५ नवपुराणादिधान्यगुणाः ।

**३१२-नवं धान्यमभिष्यन्दि लेख्यं केदारजं च यत् ।**
**लघु वर्षोषितं दग्धभूमिजं स्थलसंभवम् ॥ ३६**
**शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम् ।**

३१२-नवमगतसंवत्सरं धान्यमभिष्यन्दि मालिन्येन स्रोतसां स्रावकम् । तथा सेक्ये-बहूदके केदारे जातमभिष्यन्दि । लघु वर्षोषितम् । तथा दग्धभूमिजम् । तथा स्थलसंभवं निरुदककेदारजम् । शीघ्रजन्म । अचिरकालपाकम् । तथा सूप्यं मुद्गादि तुषरहितं युक्त्या च भर्जितं सत् निस्तुषम् इति शिम्बिधान्यवर्गः ३१२

---

२४ फलानि माषवद्वि'-क. ख. २५ कोशाम्रशिम्बी म' ङ.-कोशाम्रो लाक्षावृक्षः इति केचन ।

(३) कृतान्नवर्गः।

१ मण्डपेयादीनां यथापूर्वं क्षेमकरत्वम्।

**३१३-मण्डपेयाविलेपीनामोदनस्य च लाघवम्। यथापूर्वं शिवः**

३१३-धान्यानां स्वरूपमुक्तम्। अनन्तरोक्तानि रक्तादीनि सत्स्वपि स्वरूपगुणेषु संयोगसंस्कारप्रमाणादिविशेषेण गुणान्तरयोगमपि यान्ति, तद्विज्ञानार्थं कृतान्नवर्गारंभः। मण्डादीनां यथापूर्वं लघुत्वम्। तेनैतदुक्तं भवति-ओदनमपेक्ष्य लघ्वी विलेपिका। ततोऽपि पेया द्रवा लघुतरा। ततोऽपि मण्डोऽत्यर्थद्रवो लघुः। ओदनस्य पूर्वकत्वाभावान्न लघुत्वं न गुरुत्वमुक्तम् ३१३

टिप्पणी-असिक्थो द्रवो मण्डः, ससिक्थो द्रवो यवागूः; सा द्विविधा-अल्पसिक्था पेया, बहुसिक्था विलेपी। अद्रवाणि सिक्थानि-ओदनः। मण्डादिसाधनप्रकारस्त्वित्थम्-'अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे। मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि।' यवागूशब्देनात्र पेया विवक्षिता। पातुं योग्या पेया। मंडः '-पेज', पेया-'लापशी', विलेपी-'आटवल', ओदनः-'भात' इति महाराष्ट्रभाषायां पर्यायाः ३१३

२ मण्डगुणाः।

**३१४- तत्र मण्डो वातानुलोमनः॥३७**
**तृड्ग्लानिदोषशेषघ्नः[२६] पाचनो धातुसाम्यकृत्।**
**स्रोतोमार्दवकृत् स्वेदी संधुक्षयति चानलम्॥ ३८**

३१४-एतदेव निर्धारयति। मण्डो वातस्यानुलोमनः। तृडादिघ्नश्च। दोषस्य वमनविरेचनादिना निर्हृतस्य शेषो दोषशेषः। पाचनो धातुसाम्यकरश्च। स्रोतोमार्दवं करोति। स्वेदयत्यग्निं चोद्दीपयति ३१४

३ पेयागुणाः।

**३१५-क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा।**
**मलानुलोमनी पथ्या पेया दीपनपाचनी॥ ३९**

३१५-पेया क्षुदादिहरा ३१५

४ विलेप्या गुणाः।

**३१६-विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता।**
**व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम्॥ ४०**

३१६-विलेपिका-सद्ग्राहिणी, हृद्या, तृष्णाघ्नी, दीपनी च व्रणादीनां च हिता। संशुद्धः कृतवमनविरेचनः ३१६

५ ओदनगुणाः।

**३१७-सुधौतः प्रस्नुतः[२७] स्विन्नस्त्यक्तोष्मा[२८]चौदनो लघुः**
**यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः[२९]॥ ४१**
**विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः।**

३१७-ओदनः-सुष्ठु धौतः प्रस्नुतः। स्विन्नः त्यक्तबाष्पश्च लघुः। ऊष्मा बाष्पो जलभागो गुरुत्वहेतुः। अत्युष्णातिशीतयोः प्रमाणान्तरान्निषेधः। केचित् सिध्युष्णस्य लाघवमभ्युपगच्छन्तः स्विन्नः अत्यक्तोष्मा चेति पठन्ति। यत्र चैषां पुनरुष्णप्रतिषेधः स सिद्धिशब्दाशयः। यश्चोदन आग्नेयानां मरिचादीनां क्वाथेन संसिद्धः सोऽपि लघुः। तथा भृष्टैस्तण्डुलैःसिद्ध ओदनो लघुः। यथोक्तलक्षणादोदनाद्विपरीतो गुरुः। क्षीरमांसादिभिर्मधुरैर्यश्च साधितः सोऽपि गुरुः ३१७

टिप्पणी-सुधौत इति-सुधौतः-सम्यक् प्रक्षालिततण्डुलः। प्रस्नुतः-सम्यक्प्रस्नावितमण्डः, स्विन्नः-सम्यक्पक्वः, अत्यक्तोष्मा-शीतत्वमप्राप्तः। यश्चेति-मरिचचित्रकादीनामाग्नेयौषधानां क्वाथेन साधितः। भृष्टतण्डुलः-भृष्टैः तण्डुलैः साधितः-(सोजी), विपरीतः-अधौततण्डुलादिः ३१७

६ अतिदेशेन पेयादीनां गुणाः।

**३१८-[३०]इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत्॥४२**

३१८-इत्यनया दिशा सर्वं कृतान्नं द्रव्यस्य स्वरूपेण क्रियया संयोगेन प्रमाणेन च बोद्धव्यम्। किं स्वरूपेण गुणानां स्वनिबन्धकेन उपबृंहकेन संयोगिना द्रव्येण संयुक्तमिति नानाविधविकल्पनेन कृतान्नस्वरूपं जानीयात् ३१८

७ मांसरसगुणाः।

**३१९-शुष्यतां व्याधिमुक्तानां[३१]शुद्धानां[३२]शुद्धिकांक्षिणाम्**
**कृशक्षामक्षतोरस्कक्षीणधात्विन्द्रियौजसाम्॥ ४३**
**दृष्टिश्रवणवह्नयायुर्बलवर्णस्वरार्थिनाम्।**
**[३३]भग्नविश्लिष्टसन्धीनां व्रणिनां वातरोगिणाम्॥४४**
**हृद्यः पथ्यः परं वृष्यो बृंहणः प्रीणनो रसः।**

३१९-रसो मांसरसः। शुष्यदादीनां पथ्यः। व्याधिमुक्तानां बलाधानार्थम्। शुद्धानां कृतवमनविरेचनानां पेयाद्यन्ते। शुद्धिकांक्षिणां चाचरणीयः संशोधनानां देहदोषमार्दवाय ३१९

८ मौद्गरसगुणाः।

**३२०-मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम्॥४५**

३२०-मौद्गस्तु रसो निर्मांसयूषः संशुद्धादीनां पथ्यः ३२०

९ कौलत्थरसगुणाः।

**३२१-वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित्।**

३२१-कौलत्थो रसो वातमनुलोमयति गुल्मादिनाशनं च। तूनिप्रतूनी रोगौ गुल्मनिदाने वक्ष्यमाणलक्षणौ। (नि.अ. ११) ३२१

१० माषसूपगुणाः।

**३२२-प्रभूताभ्यन्तरमलो माषसूपः[३४] परं स्मृतः॥ ४६**

३२२-माषसूपः परमत्यर्थमान्तरं मलं पुरीषं प्रभूतं करोति। माषाणां बहुमलत्वे उक्तेऽपि अन्येभ्यस्तद्विकृतिभ्यः सूपस्यातिशयख्यापनार्थं वचनम् ३२२

११ खलकाम्बलिकगुणाः।

**३२३-खलकांबलिकौ हृद्यौ च्छेदिनौ स्वौषधालुगौ।**

३२३-खलकांबलिकौ हृद्यौ छेदिनौ स्वसंस्कारकौषधगुणयुक्तौ च ३२३

टिप्पणी-खलकाम्बलिकाविति-खलकाम्बलिकौ यूषविशेषौ। तत्र खलो द्विविधः-सतक्रशमीधान्यः, सतक्रशाकश्च। तत्र सतक्रशाकस्तु-' कपित्थतक्रचाङ्गेरीमरिचा-

२६ 'दोषशोष'-क. २७ 'स्विन्नोऽत्यक्तो'-क. ख. घ. २८ 'ष्मा त्वोद'-क. २९ 'ष्टतण्डुलैः-ङ ३० इति संयोगसंस्कारैः स्थान्यन्नानि चादि'-क. ख. ३१ 'विमुक्ता'-क. ख. ३२ 'नां नराणां शु' घ. ३३ भग्नावि'-ग. ३४ 'षयूषः प'-ख.

जाजीचित्रकैः सुपक्वः खलयूषोऽयमथ काम्बलिकोऽपरः। दध्यम्ललवणस्नेहतिलमाषसमन्वितः' जेज्जटमते तु-'दधिदाडिममाषशाकस्नेहयुक्तं व्यञ्जनं खलः' इत्युच्यते। नलमते तु-'तिलं सुलुञ्चितं कृत्वा पिष्टं क्षीरे व्यहोषितम्। पटे पूतं पचेद्धीमानार्द्रकावापिते घृते। मरिचाजाजीसामुद्रैर्युक्तस्तिलखलो भवेत्' इति। काम्बलिकलक्षणमत्रैवोक्तम्-'दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः। पुनः सौवर्चलाजाजीबीजपूरकसारैः। संयोज्य मथितः स्वच्छ एष काम्बलिको भवेत्' इति डल्हणः ३२३

१२ रसयूषखलानां लक्षणानि।

**३२४-पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः॥ ४७**

३२४-रसादीनां व्यवहारार्थं लक्षणमुच्यते। पिशितेन मांसेन यः क्रियते स **रसः**। धान्यैर्मुद्गादिभिर्यः क्रियते स **यूषः**। फलैर्बदरादिभिर्यः क्रियते स **खलः** ३२४

१३ काम्बलिकलक्षणम्।

**३२५-मूलैश्च तिलकल्काम्लप्रायः कांबलिकः स्मृतः।**

३२५-मूलैस्तिलैस्तिलकल्काद्यैश्च कृतो दाडिमाद्यम्लप्रायः **काम्बलिकः** ३२५

१४ कृताकृतलक्षणम्।

**३२६-ज्ञेयाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः॥ ४८**

३२६-ते तु रसादयो यथासंख्येन स्नेहादियुतवर्जिताः कृताकृता ज्ञेयाः। तेनैतदुक्तं भवति-स्नेहादिभिर्भर्जनेन शुण्ठ्यादिना च संस्कृताः **कृत**शब्दवाच्याः। विपरीताः **अकृताः** ३२६

१५ दकलावणिकलक्षणम्।

**३२७-अल्पमांसादयः स्वच्छा दकलावणिकाः स्मृताः।**

३२७-ये स्वल्पेन मांसेन स्वल्पैश्च शुण्ठ्यादिभिः क्रियन्ते स्वच्छाश्च ते रसादयो **दकलावणिकाः** ३२७

**टिप्पणी**-टीकायां दकलावणिका इति-एवं च यूषे यत्र धान्यमल्पं, खलादौ वा मूलादीन्यल्पानि तत्रापि दकलावणिकत्वं बोध्यम् ३२७

१६ यूषरससूपशाकानां तनुसान्द्राम्लस्वादूनां च यथोत्तरं गौरवम्।

**३२८-विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम्॥ ४९**
**गौरवं तनुसान्द्राम्लस्वादुष्वेषु पृथक् तथा।**

३२८-यूषरससूपशाकानां यथोत्तरमेव गौरवं विज्ञेयं द्रव्यगुणसाम्येऽपि। तथा तनुसान्द्राम्लस्वादुषु च पृथक् यथोत्तरमेव गौरवं विज्ञेयमिति। तेनैतदुक्तं भवति-तनुभ्यो रसादिभ्यः सान्द्रा घना गुरवः। अम्लेभ्यश्च मधुरा इति ३२८

१७ तिलविकृत्यादीनां गुणाः।

**३२९-तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम्[३५]॥ ५०**
**चाण्डाकीवटकं दृघ्नं दोषलं ग्लपनं गुरु।**

३२९-तिलपिण्याकस्य विकृतिः शुष्कशाकं विरूढकं चाण्डाकीपटकं च दृष्टिनाशनं दोषलं त्रिदोषकोपनं ग्लानिकरं गुरु च। **विरूढकम्**-अङ्कुरितानि भृष्टानि सस्यानि। चाण्डाक्या सहसासुतं मुद्गादिवटकं **चाण्डाकीवटकम्** ३२९

१८ पर्पटक्षारपर्पटयोर्गुणाः।

**३३०-पर्पटा लघवो रुच्या लघीयान् क्षारपर्पटः॥ ५१**

३३०-पर्पटाभिधाना भक्ष्या लघवो रुचिकराश्च। तेभ्यश्च क्षारपर्पटोऽतिलघुः। यः स्वर्चिकादिजलेन संस्क्रियते ३३१

१९ राग-षाडवयोर्गुणाः।

**३३१-हृद्या वृष्या रुचिकरा गुरवो[३६] रागषाडवाः।**
**प्रीणना भ्रमतृट्छर्दिमदमूर्च्छाश्रमच्छिदः॥ ५२**

३३१-रागाः सितामध्वादिकृताः। षाडवा अम्लसिद्धशाकशर्करादिकृताः। हृद्या वृष्या रुचिकरा गुरवश्च। तथा प्रीणना मनःप्रीतिकराः, भ्रमादिनाशनाश्च ३३२

२० मन्थगुणाः।

**३३२-तृट्छर्दिश्रमनुन्मन्थः शीतः सद्यो बलप्रदः।**
**प्रमेहक्षयकुष्ठानि न च स्युर्मन्थपायिनः॥ ५३**

**टिप्पणी**-मन्थ इति-'सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः। नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते' सु. (सू. ४६-३८५)। स च मन्थो बहुविधः-घृतसक्तुदाडिमगुडकृतः एकः, घृतसक्तुजलकृतो द्वितीयः, द्राक्षाशर्करेक्षुरसकृतश्चेति तृतीयः। सक्तुलक्षणं तद्गुणाश्चोक्ताः (सू. अ. ४ प्रभा १३८) ३३२

२१ रसालागुणाः।

**३३३-रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा।**

३३३-**रसाला** करमथितेन मरिचशर्करादिसंयुक्तेन च दध्ना कृता। बृंहणी देहस्य बृहत्वकरी वृष्यत्वादिगुणयुक्ता च ३३३

**टिप्पणी**-रसालेति-रसाला ( श्रीखंड ) तत्साधनविधिः-वस्त्रे बद्ध्वाथ गलितं दधि द्विप्रस्थमानकम्। तस्मिन्घृतं माक्षिकं च प्रत्येकं च पलं पलम्। निक्षिप्य शर्करां तस्मिन्मानिकाद्वितयं तथा। नागकेशरमेलात्वक्पत्रं त्वामलसंज्ञकम्। अर्धकर्षं क्षिपेद्विश्वां मरिचाद्विपले तथा। सर्वमेकीकृतं तत्तु भाण्डे कर्पूरवासिते। गृहीत्वा चैव वस्त्रेण मुखं बद्ध्वाथ गालयेत्। हस्तेनालोड्य यत्नेन सा रसालाभिधा स्मृता (वै. श. सि.) ३३३

२२ पानकगुणाः।

**३३४-श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु॥ ५४**
**विष्टंभि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत्।**

३३३-सर्वं च **पानकं** श्रमादिहरं प्रीतिकरं गुरु विष्टंभि मूत्रलं हृद्यं च। तच्च पानकं यथाद्रव्यगुणं स्वसंस्कारद्रव्यगुणसंयुक्तं च ३३४

**टिप्पणी**-पानकमिति-तथा चोक्तं सुश्रुतेन-गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम्। तदेव खण्डमृद्वीकाशर्करासहितं पुनः। साम्लं सतीक्ष्णं सहिमं पानकं स्यान्निरत्ययम्। मार्द्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम्। परूषकाणां कोलानां हृद्यं विष्टम्भिपानकम्। द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्रां च सर्वतः। पानकानां यथायोगं गुरुलाघवमादिशेत्' (सू. ४६-३८८-३९१) इति ३३४

२३ लाजानां गुणाः।

**३३५-लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः[३७]॥ ५५**
**कासपित्तोपशमना दीपना लघवो हिमाः।**

[३५] °म्। शाण्डाकी°-क. ख. [३६] °वो रागखाडवाः-क, °वो रागखाण्डवाः-ख. [३७] तृडित्यादिपद्यं कपुस्तके नास्ति।

३३५-लाजास्तृडादीन् छिन्दन्ति नाशयन्ति कासं पित्तं चोपशमयन्ति । अग्निदीपिकरा लघवः शीतवीर्याश्च ३३५

**टिप्पणी**—लाजा इति-भृष्टं सुपुष्पितं धान्यं लाजेति परिकीर्तितम् ३३५

२४ पृथुकगुणाः ।

**३३६-पृथुका गुरवो बल्याः कफविष्टम्भकारिणः ॥ ५६**

३३६-पृथुका गुरुत्वादियुक्ताः । हरितधान्यानि सतुषभृष्ट-मुसलाहतानि पृथुकशब्दवाच्यानि ३३६

**टिप्पणी**—पृथुका इति-आर्द्रशालिधान्यं मृदुभृष्टं मुसलाघातचिप्पटीभूतावयवं पृथुका इत्युच्यते ३३६

२५ धानागुणाः ।

**३३७-धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः ।**

३३७धाना भृष्टधान्यानि विष्टम्भिनी रूक्षादिगुणयुक्ता च ३३७

**टिप्पणी**—धानेति-भृष्टं चापुष्पितं धान्यं धानेति परिकीर्तितम् ३३७

२६ सक्तुगुणाः तद्विकृतयश्च ।

**३३८-कण्ठनेत्रामयक्षुत्तृट्श्रमच्छर्दिव्रणापहाः ॥ ५७**
**सक्तवो लघवः पानात् सद्य एव बलप्रदाः ।**
**निचयात् कठिना गुर्वी प्रोक्ता पिण्डी मृदुर्लघुः ५८**
**सक्तूनां द्रवतायोगाल्लघीयस्यवलेहिका ।**
**शष्कुलीमोदकादीनां व्याख्यातैवं च कल्पना ॥ ५९**

३३८-सक्तवः कण्ठामयनेत्रामयादिनाशना लघवः । उदकेन पीताश्च सद्य एव बलं कुर्वन्ति । तेषां सक्तूनां **पिण्डी** निचयात् संहतत्वात् या कठिना सा गुर्वी । या तु मृदुः सा तु लघुः । ये तु सक्तवः उदकमिश्रा अवलिह्य भुज्यन्ते सा अवलेहिका द्रवत्वयोगात् लघीयसी । शष्कुलीमोदकादीनां भक्ष्याणां चैवानयैव संयोगसंस्कारकाठिन्यादिविशेषदिशा गुणकल्पना व्याख्याता ३३८

**टिप्पणी**—सक्तव इति-( सू. अ. ४ प्रभा १३८ ) ३३८

२७ सक्तुभक्षणविचारः ।

**३३९-नोदकान्तरितान् द्विर्न निशायां न केवलान् ।**
**न भुक्त्वा न द्विजैश्छित्वा सक्तूनद्यान्न वा बहून् ६०**

३३९-सक्तूंश्चैवंविधान् नाद्यात् । उदकान्तरितानुदकेन जलेनान्तरितान् व्यवहितान् । आदौ पिण्डी मध्ये जलमन्ते च पिण्डीत्युदकान्तरितात् । द्वौ वारौ द्विः निशायां रात्र्याम् । केवलानुदकादिरहितात् । भुक्त्वा चान्यदोदनादि । द्विजैश्छित्वा दन्तैः कृत्वा पिण्डौ छित्त्वेत्यर्थः । बहूंश्च सक्तून्नाद्यात् ३३९

२८ कर्कन्धुबदरादिसक्तुगुणाः ।

**३४०-कर्कन्धुबदरादीनां श्रमतृष्णाक्लमच्छिदः ।**
**सक्तवोऽम्लरसा हृद्या यथाद्रव्यगुणाश्च ते ॥ ६१**

३४०-कर्कन्धुबदरादीनां च फलादीनां सक्तवः क्लमादिच्छिदः अम्लरसा हृद्याश्च । ते सर्वे सक्तवः प्रकृतिद्रव्यगुणयुक्ताः ३४०

२९ पिण्याकगुणाः ।

**३४१-पिण्याको ग्लपनो रूक्षो विष्टंभी दृष्टिदूषणः ।**

३४१-पिण्याकोऽक्षोटतिलादीनां निष्पीडिततैलकल्कः । ग्लानिकरो विष्टंभो दृष्टिविकारकरश्च ३४१

**टिप्पणी**—पिण्याक इति-पिण्याकस्तिलकल्कः ( पेंड ) ग्लपन इति । अत्र 'रौक्ष्याद्विष्टम्भते कोष्ठे, विष्टम्भित्वाद्विदह्यते । विदाहात्कुरुते ग्लानिं पिण्याको निशि सेवितः' इति हेतुरुत्प्रेक्ष्यः ३४१

३० वेशवारगुणाः ।

**३४२-वेशवारो गुरुः स्निग्धो बलोपचयवर्धनः ॥ ६२**

३४२-वेशवारः नागरधनिकाजाज्यादिसंस्कृतं सूक्ष्मच्छिन्नं मांसम् । स गुरुः स्निग्धः बलवर्धनोऽङ्गोपचयवर्धनश्च ३४२

**टिप्पणी**—वेसवार इति-तथा चोक्तं सुश्रुतेन-'मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम् । पिप्पली शुण्ठिमरिचगुडसर्पिः समन्वितम् । ऐकध्यं पाचयेत्सम्यक् वेसवार इति स्मृतः । ' ( सू. ४६-३६५-३६६ ) टीकायां-नागरेत्यादि नागर-शुण्ठी, धनिका-कुस्तुम्बरु, अजाजी-जीरकः ३४२

३१ मुद्गादिजवेशवारगुणाः ।

**३४३-मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ।**

३४३-मुद्गादिजास्तु वेशवाराः ये सूक्ष्मच्छिन्नैर्मुद्गयवधान्यादिभिः क्रियन्ते । लोके च पूरणमिति प्रसिद्धाः, ते गुरवः प्रकृतिद्रव्यगुणाश्च । आदिग्रहणेन शिंबिधान्यानां च वरकसूकराणामुलूकादीनां च ग्रहणम् ३४३

**टिप्पणी**—मुद्गादिजा इति-येषु मांसस्थानेषु मुद्गचणकादयो गृह्यन्ते ते मुद्गादिजाः । यथाद्रव्यमनुगच्छन्तीति यथाद्रव्यगुणाः । यावन्तः प्रकृतिद्रव्यगुणास्तावन्तस्तेषां गुणा भवन्तीत्यर्थः ३४३

३२ कुकूलादिपक्वानां यथोत्तरं लघुत्वम् ।

**३४४-[३८]कुकूलकर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ॥ ६३**
**एकयोनील्लँघून्विद्यादपूपानुत्तरोत्तरम् ।**
**[३९]घारीकेंडरिकाद्याश्च गुरवश्च यथोत्तरम् ॥ ६४**

इति कृतान्नवर्गः ।

३४४-कुकूलादिसिद्धानपूपान् एकयोनीनेकशालिकारणान् सतो यथोत्तरं लघूनिति जानीयात् । तेनैतदुक्तं भवति-सजातीयात् कुकूलपक्वात् कर्परपक्वो लघुरग्निसंयोगनैकट्यात् । कर्परपक्वाच्च भ्राष्ट्रपक्वः । भ्राष्ट्रपक्वाच्च कन्दुपक्वः । कन्दुपक्वाच्च अङ्गारपक्वः । एकयोनिग्रहणं भिन्नयोनेः समलाघवशंकानिरासार्थम् । एको ह्यपूपो गुरुशालियोनिः कुकूलपक्वोऽन्येन लघुशालियोनिना कुकूलपक्वेनैव न लाघवे समः । तथा एको लघुशालियोनिः कुकूलपक्वोऽन्यो गुरुशालियोनिः कर्परपक्वश्च समावित्यर्थः । अनया च कल्पनया सर्वमूह्यम् । कुकूलो वाष्पस्वेदः । क्षारपाक इत्यन्ये । कर्परो ज्वालासन्ततः कपालः । भ्राष्ट्रं प्रसिद्धम् । कन्दुः अङ्गारतप्तभित्तिः, अङ्गारः स्वरूपेणैव । इति कृतान्नवर्गः । ३४४

**टिप्पणी**—पचनपात्रविशेषाद्गुणविशेषानाह – कुकूलेत्यादि-कुकूलं श्वभ्रम्-मृन्मयमुत्तानमपूपचनपात्रं गर्ताकारम् अथवा-गोशकृदादिचूर्णसंतापः । आहोस्विदपां वाष्पस्वेदः । श्वभ्राकारकुकूलं न्युब्जं चेत्कर्परम् । अथवा ज्वालासंतप्तः कपालः । सच्छिद्रं कर्परं भ्राष्ट्रम् । लोहमयं न्युब्जपात्रं कन्दुः ३४४

३८ 'लखर्प'-क. ख. ३९ घारीत्यादि पद्यार्धं गपुस्तके नास्ति ।



शंबरः ( सू. ३४५ )



शतपत्रः ( सू. ३४७ )



हरिणः ( सू. ३४५ )



तित्तिरः ( सू. ३४६ )



ताम्रचूडः (सू. ३४६)



करालः—कस्तूरीमृगः ( सू. ३४५ )

टिप्पणी--अङ्गारशब्देनाङ्गारपूर्णं पात्रम्-शकटिका। पिष्टकृतास्तनवोऽपूपाः। एकयोनीति-एकयोनिग्रहणं प्रकृतिद्रव्याद्यविशेषेऽपि पात्रकृतमेवोत्तरोत्तरं लाघवमिति ज्ञापनार्थम्। यथा यथाग्निसंनिकर्षस्तथा तथा लाघवमित्यर्थः ३४४

## ( ४ ) मांसवर्गः।

### १ मृगवर्गः।

३४५-हरिणैण[1]कुरङ्गर्श्यगोकर्णमृगमातृकाः।
कालपुच्छकचारुष्कवरपोतशशोरणाः॥ ६५
श्वदंष्ट्रा[2]रामशर[3]भकोहकारकशंबराः।
करालकृतमालौ च पृषतश्च मृगाः स्मृताः॥ ६६

३४५-अनन्तरं मांसमुच्यते। हरिणादयः पृषतान्ताः एकोनविंशतिमृगा विज्ञेयाः ३४५

टिप्पणी—( १ ) हरिणः ( २ ) एणः, ( ३ ) कुरङ्गः, ( ४ ) ऋश्यः, ( ५ ) गोकर्णः, ( ६ ) मृगमातृकः, ( ७ ) कालपुच्छकः, ( ८ ) चारुष्कः, ( ९ ) वरपोतः, ( १० ) शशः, ( ११ ) उरणः, ( १२ ) श्वदंष्ट्रः, ( १३ ) रामः ( १४ ) शरभः, ( १५ ) कोहकारकः, ( १६ ) शंबरः, ( १७ ) करालः, (१८) कृतमालः ( १९ ) पृतषश्चेत्येकोनविंशतिमृगाः। तत्र हरिणैणकुरङ्गाः सजातीया एव। तेषु हरिणस्ताम्रः, एणः कृष्णः, ( काळवीट ) कुरङ्गो न ताम्रो न कृष्णश्च ( सु. सू. अ. ४६-५७ ). 'स च चतुरगतिः-चतुरंग इति लोके' इति डल्हणः। ऋश्यः-नीलाण्डः रोरु इति प्रसिद्धः इति डल्हणः, गोकर्णः - गोसदृशकर्णो रासभाकारः इति हेमाद्रिः, - गोमुखहरिणविशेषः इति चक्रदत्तः (खेचर), मृगमातृकः-'स्वल्पा पृथूदरा हरिणजातिः' इति चक्रः, कुरङ्गस्त्री भेदली इति लोके इति डल्हणः। कालपुच्छकः-चलत्कृष्णपुच्छकः इति डल्हणः, चारुष्कः-चारुशरीरः स्वल्पतनुहरिणभेदः। उरणः-मेषः(मेंढा), श्वदंष्ट्रः-चतुर्दंष्ट्रोऽतिदुष्टः कर्कटक इति कांतिकपुरे प्रसिद्धः इति चक्रडल्हणौ। रामः-हिमालये महामृगः, शरभः-अष्टापद उष्ट्रप्रमाणो महाश्रृङ्गः पृष्ठगतचतुष्पादः काश्मीरे प्रसिद्धः। कोहकारकः—कोट्टकारक इति चरकपाठः। शंबरः-मृगविशेषः ( सांबर ), करालः-अधोनिष्क्रान्तदन्तो हिमवदादिषु प्रसिद्धः कस्तूरीमृग इति लोके इति डल्हणः। कृतमालः-कृतमाला बह्वः संघातचारिणो मृगविशेषाः, पृषतः-बिन्दुचित्रितः ( चित्तळ ) ३४५

### २ विष्किरवर्गः।

३४६-लावैवार्तीकवर्तीर[4]रक्तवर्त्मककुक्कुभाः[5]।
कपिञ्जलोपचक्राख्यचकोरकुरुबाहवः॥ ६७
वर्तको वर्तिका[6] चेति[7] तित्तिरिः क्रकरः शिखी।
ताम्रचूडाख्यवरकगोनर्दगिरिवर्तिकाः॥ ६८
तथा शारपदेन्द्राह्ववारटाश्चेति विष्किराः।

३४६-लावादयो वारटान्ता एकविंशतिराहारस्य विकीर्य विक्षिप्य भक्षणात् विष्किराः। वर्तिका वर्तकाज्जात्यन्तरं न तु तस्य स्त्री ३४६

टिप्पणी—लावेत्यादि-पक्षिमध्ये ये विकीर्य भक्षयन्ति ते विष्किराः। ते च लावादयो वारटान्ता एकविंशतिः। तत्र-लावः-चित्रयोधी ( लावापक्षी ) 'पक्षिणां च महाश्रेष्ठो लावको जाङ्गलात्मकः' इति प्रसिद्धः, वार्तीकः-वनचटकः, स च संघातचारी ( रानचिमणी ), वर्तीरः-कपिञ्जलादल्पः वार्तीकात्किञ्चिन्महांस्तत्सदृशश्च कपिञ्जलभेदः। रक्तवर्त्मक इति कुक्कुभविशेषणम्। कुक्कुभो-द्विविधः स्थलजो जलजश्च, तत्र रक्तवर्त्मक इति विशेषणात्स्थलजो गृह्यते। रक्ते वर्त्मनी यस्यात्यर्थं स रक्तवर्त्मकः। तथा चोक्तम्-'नीलच्छविः कृष्णगलः स्याद्ग्रामचटकाकृतिः। कुक्कुभः कुक्कुभारावः स्थलजो रक्तवर्त्मकः' (रानकोंबडा), कपिञ्जलः-गौरतित्तिरिः, उपचक्रः-चकोरभेदः। चकोरः-रक्ताक्षः स च विषसूचको जीवंजीवापरपर्यायः। कुरुबाहुः-नीलग्रीवो रक्तशिखः श्वेतपक्षः। वर्तकः-वर्तीरादल्पः। तत्सदृशा वर्तिका न तु वर्तकस्य स्त्री, किं तु जात्यन्तरमेव। तित्तिरिः-चित्रपक्षः ( कवडा ), क्रकरः-क्रकचशब्दकारी पीतकृष्णगलः कृष्णचञ्चुचरणो रक्तपृष्ठः, लावान्तकः ( करढोंकपक्षी ), शिखी-मयूरः, ताम्रचूडः-कुक्कुटः ( कोंबडा ), वकरः—वकसदृशः। गोनर्दः-गोक्ष्वेडः ( करकोचा ), गिरिवार्तिकः-पर्वतचारी वर्तिकभेदः। शारपदः इन्द्राह्वश्च कङ्कभेदौ। वारटः-हंससदृशः ३४६

### ३ प्रतुदवर्गः।

३४७-शतपत्रो भृङ्गराजः कोयष्टि[10]जीवजीवकैः[11]॥ ६९
खञ्जरीटकहारीतदुर्नामोगिरिशा[12]ग्रहाः।
लट्वा लड्डूषो वटहा गोक्ष्वेडो[13] डिण्डिमाणवः॥७०
जटी दुन्दुभिपाकारलोहपृष्ठकुलिङ्गकाः।
शारिकाशुकशार्ङ्गाख्यचिरीटीककुयष्टिकौ[14]॥ ७१
मञ्जरीयकदात्यूहगोपापुत्रप्रियात्मजाः।[15]
कलविङ्कः परभृतः कपोतोऽङ्गारचूडकः[16]॥ ७२
पारावतः पाणविक इत्युक्ताः प्रतुदा द्विजाः।

३४७-शतपत्रादयः पाणविकान्ताश्चतुस्त्रिंशदाहारस्य शाल्यादेः प्रतुद्य तुण्डेराहत्य भक्षणात् द्विजाः प्रतुदाः स्मृताः ३४७

टिप्पणी—शतपत्र इति-शतपत्रः काष्ठकुक्कुटः (सुतारपक्षी ) भृङ्गराजः-कृष्णवर्णचटकसदृशः शिखावान्। (फेंचुहार), मस्तकचुडः।, कोयष्टिः-जलकुक्कुभः (पाणकोंबडा) जीवजीवकः-विषदर्शनमृत्युः, खञ्जरीटः-सितासितवर्णो द्रुतललितगतिः चलत्पक्षः ( ताजवापक्षी ), हारीतः-हरितपीतवर्णः पक्षिविशेषः ( हिरवट पिंवळें कबूतर ), लट्वा-रक्तपुच्छाधोभागः, लड्डूषोऽपि तद्भेद एव। भरद्वाजभेद

१ °ङ्गर्क्षगो°-क. घ. च. २ श्वदंष्ट्रिराम-क., °रणाः। सुदंष्ट्रिराम-च. ३ °भकोष्टुका-घ. ४ °वार्तीक वर्तीर°-क. घ., °व वर्तीकवार्तीर°-ख. । ५ °ककुर्कभाः। क°-क., °ककक्कुभाः। क°-ख. ६ °हकाः। व°-क. ७ °का चैव ति°--क. ख. घ.। °काश्चैव ति°--च. ८ °ख्यवरकगो°-ख.। °ख्यवकरगो°--घ. ९ °पदेन्द्राभवर°-क. १० कोयष्टिर्जीव°-क. ख. घ. ११ °वजीवकाः। ख°--च. १२ °मागिरिशा°-घ. १३ गोक्ष्वेलो डि°-क. १४ °काः। मञ्जुलीयक°-क. ख. घ., काः। मुञ्जलीयक°-च. १५ °हगोपापु°-क. ख. घ. १६ कपोतो गौरचू°-क.

इत्यपि केचन। डिण्डिमोत्कटध्वनिर्डिण्डिमाणवः,कुलिङ्गकः–वनचटकाकारः पीतमस्तकः,शारिका–मेधाविनी (साळुंकी), शुकः–कीरः, दात्यूहः–कालकण्ठकः इति डल्हणः । अन्ध-काकः इति हेमाद्रिः। कलविङ्कः–ग्राम्यचटकः, परभृतः–कोकिलः, कपोतः–वनवासी, पारावतः–गृहदेवकुलालयः ( पारवा )३४७

४ विलेशयवर्गः ।

**३४८–श्वेतः श्यामश्चित्रपृष्ठ[17]ः कालकः काकुली मृगः॥७३**
**भेके[18]चिल्लटकूचीका गोधा[19] शल्यकशाण्डकाः ।**
**वृषाहिकदलीश्वाविन्नकुलाद्या बिलेशयाः ॥ ७४**

३४८–श्वेताद्या नकुलाद्यान्ता–बिले भूगर्भे निषदनात् **बिलेशयाः** ३४८

**टिप्पणी**—काकुली मृगो मालुयासर्प इति ख्यात इति चक्रः, तस्य श्वेतादयश्चत्वारो भेदाः। भेकः मण्डूकः। चिल्लटश्चियार इति चक्रः । गोधा–पंचनखग्राहिणी ( घोरपड ),शल्यकः–वज्रशकलः बृहद्गोधानुकारी (साळ), वृषः–वृषदंश इति सुश्रुतपाठः–स च ग्राममार्जारः, अन्ये वन-मार्जारमाहुः। अहिः–सर्पः। कदली–महाबिडालसमो व्याघ्रा-कारः। श्वावित्–सूचिसदृशलोमयुक्ता 'सिंहा' इति लोके-इति डल्हणः । नकुलः–भुजंगशत्रुः ( मुंगूस ), आद्य-शब्दात् मृगप्रियकाजगरमहावभ्रुलोपाकगण्डकप्रभृतयोऽपि द्रष्टव्याः। विलशायित्वाद्बिलेशयाः ३४८

५ प्रसहवर्गः ।

**३४९–[20]गोखराश्वतरोष्ट्रा[21]श्वाद्वीपिसिंहर्क्षवानराः ।**
**मा[22]र्जारमूषिकव्याघ्रवृकवभ्रुतरक्षवः ॥ ७५**
**लोपाकजम्बुकश्येनचा[23]षोलूकश्ववायसाः ।**
**शशघ्नीभासकुररगृ[24]ध्रवेश्यकुलिंगकाः ॥ ७६**
**धू[25]मिका मधुहा चेति प्रसहा मृगपक्षिणः ।**

३४९–गवादयः मधुहान्ताः केचित् पक्षिणः केचिन्मृगाः। जात्या प्रसह्याहृत्य भक्षणाच्च **प्रसहाः** स्मृताः ३४९

**टिप्पणी**—गौः प्रसिद्धा। खरः–गर्दभः, अश्वतरः–अश्वायां गर्दभेन जनितः ( खेचर ), उष्ट्रः–करभः ( उंट ), अश्वः–घोटकः ( घोडा ), द्वीपी–चित्रव्याघ्रः ( चित्ता ), सिंहः प्रसिद्धः। ऋक्षः–लोमशो मर्कटसदृशः ( अस्वल ), वानरः–मर्कटः, मार्जारः–बिडालः ( मांजर ), मूषिकः–उन्दुरः ( उंदीर ), व्याघ्रः महाव्याघ्रः, वृकः–वत्सभक्षः (लांडगा), बभ्रुः–अतिलोमशः कुक्कुरः पर्वतोपकण्ठे भवति,केचिद्बृहन्न-कुलमाहुः। तरक्षुः–मृगादनो व्याघ्रभेदः (तरस), लोपाकः–जम्बूकसदृशः स्वल्पाकारो जम्बूकः स च महालाङ्गुलः। जम्बूकः–शृगालः ( कोल्हा ), श्येनः–शशानकः गरुडाकारः ( ससाणा ), चाषः–किकिदिविः इन्द्रनीलमणिसदृशपक्षः शस्तदर्शनः कनवकायस इति प्रसिद्धः (चासपक्षी), उलूकः–काकारिः दिवाभीतः ( घुबड ), श्वा–भषकः ( कुत्रा ), वायसः–काकः (कावळा) शशघ्नी–शशारिः महाचरणनखः (बहिरीससाणा ), भासः–भस्मवर्णः श्वेतशिखावान् गृध्रस-दृशो गोष्ठचारी, कुररः–अरुणः श्वेतमस्तको हस्तमत्स्यग्राही गृध्रः–मांसाशी योजनदृष्टिः ( गिधाड ), कुलिंगकः–गृह-चटकः ( चिमणी ), धूमिका–धूम्याटः ( काकाकुवा ), मधुहा–मधुघातकः ३४९

६ महामृगाः ।

**३५०–[26]महिषन्यङ्कुरोहीतवराहरुरुवारणाः ॥ ७७**
**सृमरश्चमरः खड्गो गवयश्च महामृगाः ।**

३५०–महिषादयो गवयान्ता दश **महामृगशब्दवाच्याः** ३५०

**टिप्पणी**—महिषः–अश्वशत्रुः ( रेडा ), न्यङ्कुः–कुरङ्ग-सदृशो विकटबहुविषाणो हरिणविशेषः,रोहीतः–लोहितवर्णो मृगजातिः, वराहः–सूकरः ( डुक्कर ), रुरुः–बहुविषाणः शरदि शृंगत्यागी कूलचरो हरिणविशेषः, वारणः–हस्ती ( हत्ती ), सृमरः–सरणशीलो मत्स्याकारो महाशूकरः। चमरः–वन्यो गौः केशमृत्युः ( वनगाय ), खड्गः–गण्डकः ( गेंडा ), गवयः–गवाकारः ( गवा ), ३५०

७ जलचारिवर्गः ।

**३५१–हंससारसकादम्बबककारण्डवप्लवाः ॥ ७८**
**मृणालकण्ठचक्राह्वबलाकारक्तशीर्षकाः ।**
**उ[27]त्क्रोशपुण्डरीकाक्षशरारीम[28]णितुण्डकाः ॥ ७९**
**काकतुण्डघनारावम[29]द्गुक्रौञ्चाम्बुकु[30]क्कुटाः ।**
**न[31]न्द्यास्यमल्लिकाद्याश्च पक्षिणो जलचारिणः ॥ ८०**

३५१–हंसादयो मल्लिकाद्यान्ताश्च जल एव चरणात् **जल-चारिणः** ३५१

**टिप्पणी**—हंसेत्यादि–हंसः कलस्वरो ललितगतिः प्रसिद्धः, सारसः–लक्ष्मणो रक्तशिराः, कादम्बः–कलहंसः ( बदक ), बकः–पाण्डुरपक्षः (बगळा), कारण्डवः काकतुण्डो दीर्घपादः कृष्णवर्णः, प्लवः–महाप्रमाणः प्रसेवकगल इति डल्हणः । चक्राह्वः–चक्रवाको द्वन्द्वचरो निशावियोगी। बलाका–बकभेदः। रक्तशीर्षकः–सारसभेदः। उत्क्रोशः कुर-रसदृशो मत्स्याशी । पुण्डरीकाक्षः–नलिननयनः पाण्डुरः। शरारिः–धवलस्कंधो दीर्घचञ्चुः, काकतुण्डः – पाण्डुरः कारण्डवः । घनारावः–मेघनादो जलचरः। चातक इत्यन्ये। तत्र। तस्य वारिचरत्वाभावात्। मद्गुः–जलकाकः। क्रौञ्चः–कुङ् ( करकोचा ), अम्बुकुक्कुटः–चरकसुश्रुतौ तु अम्बुकु-क्कुटीमित्याहतुः तत्पक्षे अम्बुकुक्कुटली ( पाणकोंबडी ) सा च कृष्णवर्णा। नन्द्यास्यः–नन्दीमुखः आटीभेदः। आटी-नाम–जलवर्धनी नाम पक्षविशेष इति डल्हणः। शरारिरा-टिराडिश्चेत्यमरः। मल्लिकः–मलिनचञ्चुचरणहंसभेदे ३५१

१७ °ष्ठः कोलकः–क. १८ °कचिल्लककू°–घ. १९ °धाशल्लकशा°–ख., °धाशळकुशा°–च° । °कशण्ड°–क. २० गोखराश्वे-तरोष्ट्रा.–च २१ °श्वद्वीपसिं°–च. २२ °र्जारमुंगुसव्या.–क., 'जारमूषकव्या°–ख., °र्जारमुंगुषव्या.–च. २३ °न चा-षोलूकश्च वा.–क. °न चाषवान्तादवा.–घ. २४ °श्रवेश्मकु°–क, °गृध्रोलूककु°–घ. २५ धूलिका म°–क. २६ वराहमहिषन्यङ्कुरुरुरोहित वा°–घ. २७ उत्क्रोशः पु°–घ. २८ °मणितुण्डकाः–क. ख. २९ °व मङ्गुक्रौ°–च. ३० कुक्कुटिः । न°–क. चं. ३१ नंदश्च म°–घ.



भेकः ( सू. ३४८ )



नकुलः ( सू. ३४८ )



शल्यकः ( सू. ३४८ )



द्वीपी ( सू. ३४९ )



ऋक्षः ( सू. ३४९ )



वानरः ( सू. ३४२ )



तरक्षुः ( सू. ३४९ )



जम्बूकः ( सू. ३४९ )



मार्जारः ( सू. ३४९ )



खरः ( सू. ३४९ )



श्वा ( सू. ३४९ )



उष्ट्रः ( सू. ३४९ )



घूमिकः ( सू. ३४९ )



शशघ्नी ( सू. ३४९ )





मधुहा ( सू. ३४९ )

अश्वः ( सू. ३४९ )



चमरः ( सू. ३५० )



उलूकः ( सू. ३४९ )



चाषः ( सू. ३४९ )



गृध्रः ( सू. ३४९ )



वारणः ( सू. ३५० )



आटी ( सू. ३५१ )



खड्गः ( सू. ३५० )



वराहः ( सू. ३५० )



अम्बुकुक्कुटः ( सू. ३५१ )



कादम्बः ( सू. ३५१ )



बकः ( सू. ३५१ )



नक्रः ( सू ३५२ )



पारावतः ( सू. ३६२ )



शंखः ( सू. ३५२ )



शशः ( सू. ३५९ )



शुक्तिः ( सू. ३५२ )

८ मत्स्यवर्गः ।

**३५२–मत्स्या रोहितपाठीनकूर्मकुम्भीरकर्कटाः ।**
**शुक्तिशंखोद्रशम्बूकशफरीवर्मिचन्द्रिकाः ॥ ८१**
**चुलूकीनक्रमकरशिंशुमारतिमिंगिलाः ।**
**राजी चिलिचिमाद्याश्च**

३५२–रोहिताद्यश्चिलिचिमाद्यन्ताः जलोद्भवा मत्स्याः ३५२

**टिप्पणी**—मत्स्यानाह–मत्स्या इति । रोहितः–रक्ताङ्गः कृष्णपृष्ठो मत्स्यशैवालभोजनः । पाठीनः–रूप्योदरः कृष्णवर्णः कण्टकमञ्जरिः निद्रालुः पिशिताशनः । कूर्मः–कच्छपः, स तु नानाविधो वर्तुलदीर्घमहदादिभेदेन । कुम्भीरः–महान्नक्रसदृशः । कर्कटः–कुलीरः–स च शुक्ल–कृष्णभेदेन द्विविधः (खेकडा), शुक्तिः–मुक्ताप्रभवो जन्तुः । शङ्खः–कम्बुः । उद्रः–जलविडालाः । शम्बूकः–क्षुद्रशङ्खः । शफरी–क्षुद्रमत्स्यः । वर्मी–वर्म शकलं तदस्यास्तीति वर्मी महाशकलो रोहितभेदः । चन्द्रिका–पार्श्वेषु कण्टकवलयितो वर्तुलो मत्स्यः । चुलूकीति–अत्र 'उलूकी'–क. 'चुलकी'–ख. इति पाठान्तरे । चरकहृदयपाठस्तु ' चुलकी ' इति । तत्र हेमाद्रिस्तु–' चुलूकी–दन्त्याकारोऽन्तर्वक्त्रो बहिर्निश्वासमुक् ' इत्याह । शिशुमारभेद इत्यन्ये । नक्रः–रज्ज्वाकारः । मकरः–सिंहदंष्ट्रः । शिशुमारः–शिशुघ्नः । अत्र डल्हणः–' दृत्याकारोऽन्तर्वक्त्रो बहिर्निश्वासमुक् । सोऽपि द्विविधो वर्तुलदीर्घभेदेन । दीर्घफाणित इति लोकाः प्राहुः । स एवात्र गृह्यते पादित्वात् ' इति । तिमिङ्गिलः–तिमिः मत्स्यः तं गिलतीति तिमिङ्गिलः सामुद्रो महामत्स्यः महत्तमो वज्राभः । चिलिचिमः–शकली लोहितनयनः सर्वतो लोहितराजिः प्रायो भूमिचारी । आद्यशब्दात् गोमत्स्य–कृष्णमत्स्य–वाशुंजार–मुरल–सहस्रदंष्ट्रप्रभृतयः ( सु. सू. अ. ४६ ) ३५२

९ अष्टौ मांसानि ।

**३५३– मांसमित्याहुरष्टधा ॥ ८२**

३५३–इत्यष्टभिः प्रकारैराचार्या मांसमाहुः ३५३

**टिप्पणी**—अष्टधेति–मृगं वैष्किरं किं च प्रातुदं च विलेशयम् । प्रासहं च महामृगमप्चरं मात्स्यमष्टधा इत्यष्टभिः प्रकारैरित्यर्थः ३५३

१० व्यामिश्रविचारः ।

**३५४ योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ।**

३५४–एतासु चाष्टासु मांसयोनिषु मध्ये मिश्रयोनित्वान्मिश्रविषयत्वादजावी अनिश्चिते । ते हि जाङ्गलेऽपि देशे सम्यग्वर्तेते आनूपेऽपि । यद्यपि तित्तिरिरुभयचरस्तथापि सदैव तत्स्वभावत्वाद्गेभ्यः पृथङ्नोक्तः । अजा अवयश्च केचिद्धन्वनि केचिदानूप इति पृथगुक्ते । येषां च नामपर्यायाः नानादेशप्रसिद्धाः किरातकैवर्तादिभ्यः अपभ्रंशसंस्काराणाच ज्ञातव्याः ३५४

११ देशादिवशान्नामभेदः ।

**३५५–आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ।**
**विकीर्यादिक्रियायोगैर्भक्षणाद्विष्किरादयः ।**

३५५–एषां च वर्गाणां मध्ये आद्यास्त्रयो मृगविष्किरप्रतुदाः जांगलाः जांगलशब्दवाच्याः । अन्त्यास्त्रयः महामृगप्लवमत्स्या आनूपाः । मध्यौ द्वौ विलेशयप्रसहौ साधारणौ । विकीर्य भक्षणक्रियायोगाद्विष्किरादीनि नामान्युक्तम् ३५५

१२ जाङ्गलमांसगुणाः ३५५

**३५६–तत्र बद्धमला रूक्षा मांसानामुत्तमा हिमाः ॥ ८४**
**कषायस्वादुर्विशदा लघवो जाङ्गला हिताः ।**
**पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ ८५**

३५६–तत्र जांगला मलं पुरीषं बद्धं कुर्वन्ति । रुचिकराः मांसानां चोत्तमाः । शीतवीर्या रसे कषायमधुराः विशदा लघवः । सन्निपाते च हिताः । किंभूत इत्याह–पित्तोत्तर इत्यादि । यस्मिन् सन्निपाते पित्तमुत्तरमधिकं वातो मध्यः कफश्च स्वल्पः ३५६

१३ हरिणगुणाः ।

**३५७–ताम्रोऽत्र हरिणः**

३५७–अत्र चैणहरिणावाकृत्या सदृशौ । केवलं ताम्रवर्णो हरिणः ३५७

**टिप्पणी**—हरिण इति–अत्र सुश्रुतः (सु. अ. ४६–५६) 'मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः । शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ।' बद्धविण्मूत्र इत्यनेन हरिणः अतिसारिणां प्रमेहिणां च हित इति सूचितम् ३५७

१४ एणगुणाः ।

**३५८– कृष्णस्त्वेणो हृद्यास्त्रिदोषजित् ।**

३५८–कृष्णवर्णस्त्वेणः । असावेणो हृद्यस्त्रिदोषघ्नः, नातिलघुः षड्रसश्च ३५८

**टिप्पणी**—एण इति । हृद्य इति–अत्र सुश्रुतः–'कषायो मधुरो हृद्यः पित्तासृक्कफरोगहा । संग्राही रोचनो बल्यस्तेषामेणो ज्वरापहः' इति । एणस्य षड्रसत्वेऽपि 'कषायमधुरोत्कटत्वात्कषायमधुर इत्युक्तम् । अयं प्रमेहिणां हितः । बस्तिशोधनत्वात् । ( सु. सू. अ. ४६–५४ ) ३५८

१५ शशगुणाः ।

**३५९–लघीयान् षड्रसश्चासौ ग्राही रूक्षो हिमः शशः ८६**
**कटुपाकोऽग्निकृत् पथ्यः सन्निपातेऽनिलावरे ।**

३५९–शशस्तु संग्रहणो रूक्षः शीतवीर्यः कटुविपाकोऽग्निवृद्धिकृत्, ऊनवायौ सन्निपाते च पथ्यः ३५९

१६ लावगुणाः ।

**३६०–तद्वल्लावोऽप्यरूक्षस्तु**

३६०–लावोऽपि तद्वच्छशवत् । केवलमसावरूक्षः ३६०

१७ कपिञ्जलगुणाः ।

**३६१– किञ्चिद्रूक्षः कपिञ्जलः ८७**

३६१–कपिञ्जलः किञ्चिद्रूक्षः ।

१८ वन्यपारावतकपोतगुणाः ।

**३६२–पारावताः कपोताश्च तद्वद्वन्याः सुपूजिताः ।**

३६२–पारावतकपोतौ वनजातौ पथ्यौ । गृहभूतावपथ्यौ ।

१९ वर्तकादिगुणाः

**३६३–ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः ॥ ८८**

---

३२ 'शोद्रश'–क. ख. च. ३३ शकली व.–क. ३४ 'का । उलू'–क. च. । 'काः । चुलू'–घ. । 'काः । चुलकी न'–ख. ३५ 'रशिशुमा'–क. ख. घ. च. ३६ 'मिंगलः'–ख. ३७ लघीयांश्च शशश्चा'–च. । ३८ 'क्षो हिमस्तु सः । कटु' च. ३९ 'न्यास्तुपू'–च.

३६३–वर्तकाप्रभृति यावज्जाङ्गलपरिसमाप्ति तावत्सर्वे औष्ण्येन गुरुत्वेन स्निग्धत्वेन च ईषत्–स्वल्पं युक्ताः ३६३

२० तित्तिरिगुणाः ।

**३६४–तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।**
**ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ॥** ८९
**धन्वानूपविचारित्वात्स्निग्धोष्णगुरुबृंहणः ।**

३६४–तेष्वपि मध्ये तित्तिरिः श्रेष्ठः मेधादिकरः । संग्रहणो वर्ण्यो वाताधिकसन्निपातहरश्च । स तु तित्तिरिर्धन्वानि देशे विचरत्यानूपे च । अतः स्निग्ध उष्णो गुरुर्बृंहणश्च ३६४

२१ मयूरगुणाः ।

**३६५–नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम्** ९०

३६५–शिखी मयूरो नातिपथ्यः । श्रोत्रादीनां पथ्यः । वयसश्च पथ्यः शीघ्रपरिणाम–रक्षणः ३६५

२२ कुक्कुटगुणाः ।

**३६६–तद्वच्च कुक्कुटो वृष्यो ग्राम्यस्तु श्लेष्मलो गुरुः ।**

३६६–कुक्कुटस्तद्वन्मयूरवत् । अयं तु वृष्यः । ग्राम्यस्तु जनपदपरिवेशचरः श्लेष्मलो गुरुश्च ३६६

२३ क्रकरोपचक्रकगुणाः ।

**३६७–मेधानलकरा हृद्याः क्रकराः सोपचक्रकाः ॥** ९१

३६७–क्रकराः मेधामग्निं च कुर्वन्ति हृद्याश्च । तद्वदुपचक्रकाः ३६७

२४ काणकपोतगुणाः ।

**३६८–गुरुः सलवणः काणकपोतः सर्वदोषकृत् ।**

३६८–काणकपोतो गुरुः किञ्चिल्लवणस्त्रिदोषकरश्च ३६८

२५ विलेशयादिवर्गाणां गुणाः ।

**३६९–गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥** ९२
**मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ।**

३६९–अतोऽनन्तरा विलेशयाद्या वर्गा यथोत्तरं गुरुत्वेनोष्णत्वेन चाधिकाः । स्निग्धत्वेन मधुरत्वेन चाधिकाः । यो यस्माद्वर्गादुत्तरो वर्गः स तस्माद्गुरुत्वादिभिरधिक इत्यर्थः । तथा सर्वे मूत्रं शुक्रं च कुर्वन्ति । बल्या वातघ्नाः पित्तश्लेष्मलाश्च ३६९

२६ महामृगगुणाः ।

**३७०–शीता महामृगास्तेषु**

३७०–तेषु वर्गेषु मध्ये महामृगाः शीतवीर्याः ३७०

२७ प्रसहगुणाः ।

**३७१– क्रव्यादाः प्रसहाः पुनः ॥** ९३
**चक्षुष्याः सृष्टविण्मूत्रा मांसलाः कटुपाकिनः ।**
**जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ॥** ९४

३७१–प्रसहाः क्रव्यादाः क्रव्यं मांसं भुञ्जते ये प्रसहास्ते चक्षुष्याः । मूत्रं विशं च कुर्वन्ति । मांसवृद्धिकराः, कटुविपाकाः जीर्णार्शःप्रभृत्यार्तानां च पथ्याः ३७१

**टिप्पणी**—जीर्णेत्यादि–जीर्णैः–कालेन पक्वैः दोषैः अर्शःप्रभृतिभिश्चार्तानां हिताः । जीर्णाः चिरानुबंधिनो येऽर्शःप्रभृतयो रोगाः तैरार्तानां हिता इति वा । अस्मिन्पक्षे दोषशब्दो रोगपर्यायो ग्राह्यः ग्रहणीरोग इति यावत् ३७१

२८ गोधागुणाः ।

**३७२–गोधा नियच्छति विषं**

३७२–गोधा विषघ्नी ३७२

२९ मूषकगुणाः ।

**३७३– मूषिकः शुक्रवर्धनः ।**

३७३–मूषिकः शुक्रवर्धनः शुक्रकरः ३७३

३० गोमांसगुणाः ।

**३७४–शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ॥** ९५
**कार्श्यं केवलवातांश्च गोमांसं सन्नियच्छति ।**

३७४–गोमांसं शुष्ककासादीन्नाशयति । विषमज्वरः सततकादिः । केवलवाता नान्यदोषसंयुक्ताः ३७४

३१ चटकगुणाः ।

**३७५–चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम्**

३७५–चटकाः कफकराः स्निग्धा वातघ्नाश्च परमत्यर्थं शुक्रकराः ३७५

**टिप्पणी**—अत्र चरकः—'चटका मधुराः स्निग्धाः बलशुक्रविवर्धनाः । संनिपातप्रशमनाः शमना मारुतस्य च' (सू. २७–७५) इति । ननु–संग्रहे श्लेष्मलत्वं कथितम् चरके तु 'संनिपातप्रशमनाः' इति वदता श्लेष्मघ्नत्वं संसूचितमित्यनयोर्विरोधः' इति चेन्नैवम् । 'संनिपातस्य सम्पृक्तदोषत्रयवाचित्वाच्चटकाः संपृक्तानेव त्रीन्दोषान्घ्नन्ति, न त्वसंपृक्तान् । अत एव 'शमना मारुतस्य च' इत्यप्युक्तम् । तस्मात् श्लेष्मलत्वं न संसृष्टविषयमिति बोध्यम् ३७५

३२ महिषगुणाः ।

**३७६–गुरूष्णो महिषः स्निग्धः स्वप्नदार्ढ्यबृहत्त्वकृत्**

३७६–महिषो गुरुरुष्णवीर्यः स्निग्धो निद्रादींश्च करोति ३७६

३३ वराहगुणाः ।

**३७७–तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥** ९७

३७७–वराहः सूकरः, तद्वन्माहिषवद्गुणैर्ज्ञेय इत्यर्थः । असौ तु श्रमघ्नः, रुच्यादिप्रदश्च ३७७

**टिप्पणी**—तद्वदिति–ननु सुश्रुतेन ( सू. ४६–१०२ ) शीतत्वमुक्तम् । इह तु तद्वदिति वचनादुष्णत्वमिति विरोधः । न चातिदेशिकमुष्णत्वमौपदेशिकेन शीतत्वेन बाध्यते इति वाच्यम् । 'स्वादम्लपाकं स्निग्धोष्णं वातघ्नं बृंहणं गुरु । स्वेदनं तर्पणं हृद्यं बल्यं शौकरमामिषम्' इति खारणादिवचनादुष्णत्वस्याप्यौपदेशिकत्वात् । मैवम् । उष्णत्वस्य स्पर्शविषयत्वात् । स्पर्शोष्णं शीतवीर्यमप्युष्णोदकादि स्वेदनं दृष्टम् । न तूष्णवीर्यमपि स्पर्शशीतं काञ्जिकादिहिमं च स्वेदनम् । अतो युक्त्यैवं विषयव्यवस्था ३७७

३४ हंसगुणाः ।

**३७८–हंसः स्वरकरः पित्तरक्तजिन्मेदुरो हिमः ।**

३७८–हंसः स्वरकरः, रक्तपित्तविनाशनश्च । यस्तु मेदुरोऽतिमेदाः स हिमः शीतः । केचित्तु चरकानुरोधान्मधुरः, अहिमश्चेति पठन्ति ३७८

४० रः परः । ध°–च ४१ काणः कपो°–क. ४२ °मूत्रमां°–क. ४३ मूषकः शु°–ख. ४४ °ग्धा वातलाः शु°–च. ४५ °जिन्मधुरो हि°–क. च.



व्याघ्रः ( प्रसहजातीयः ) ( सू. ३७१ )



मयूरी ( सू. ३६५ )



मयूरः ( सू. ३६५ )



चटकः ( सू. ३७५ )



हंसः ( सू. ३७८ )



मत्स्यः ( सू. ३७९ )



कच्छपः ( सू ३८७ )



कर्कटः ( सू. ३८२ )



आविः ( सू. ३८४ )



सिंहः ( सू. ३८८ )

३५ मत्स्यसामान्यगुणाः ।

**३७९–कफपित्तकरा मत्स्याः परं पवननाशनाः ॥ ९८**

३७९–मत्स्याः पित्तश्लेष्मकरा वातनाशनाश्च परमत्यर्थम् ३७९

३६ रोहितमत्स्यगुणाः ।

**३८०–प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च ।**
**नित्यं शैवालभक्षत्वाद्दिवास्वप्नविवर्जनात् ॥ ९९**
**रोहितः प्रवरस्तेषां**

३८०–तेषां मत्स्यानां मध्ये रोहितः प्रवरः प्रतिस्रोतोविचारित्वात् । तस्य ह्ययं स्वभावः, यत् प्रतिस्रोतः स्रोतस आभिमुख्येन विचरति । यया दिशा जलमेति तां दिशं यातीत्यर्थः । तथा पानीयमध्यात् स्वभावेनैवाकाशं प्लवते । अत उभयथापि क्रियायोगात् परमत्यर्थं रोहितः प्रवरः ३८०

३७ चिलिचिमगुणाः ।

**३८१– परं चिलिचिमोऽवरः ।**
**अगोचरविचारित्वात्सर्वदोषकरो हि सः ॥ १००**

३८१–चिलिचिमः परमत्यर्थमवरः अश्रेष्ठः । स चागोचरे दुर्विषये कर्दमशैवालादौ यतो विचरत्यतस्त्रिदोषकरः ३८१

३८ कुलीरगुणाः ।

**३८२–कुलीरः परमं वृष्यो बृंहणः प्रीणनो गुरुः ।**

३८२–कुलीरः परमं वृष्यः बृंहणः प्रीतिकरः गुरुश्च । कुलीरः कर्कटकः ३८२

३९ अजगुणाः ।

**३८३–नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ॥ १०१**
**शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ।**

३८३–आजं मांसं नातिशीतवीर्यं नातिगुरु नातिस्निग्धम् अदोषलं दोषाणां साम्यं न नाशयति, पथ्यमित्यर्थः । सामर्थ्याल्लब्धपुरुषशरीरसकलशरीरधातुसादृश्यादनभिष्यन्दि मालिन्येन स्रोतसामस्रावकम् । एतदुक्तं दोषगुणविपरीतगुणत्वेनादोषलत्वाच्च शरीरधातुगुणत्वेन स्रोतसामप्रदूषकत्वाच्चानभिष्यन्दि । स्रोतःप्रदूषकरूपं शारीरे वक्ष्याति ( अ. ६ ) यथा—" आहारश्च विहारश्च यः स्याद्दोषगुणैः समः । धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः " इति ३८३

**टिप्पणी**—नातिशीतेति–अदोषलम् – दोषत्रयविरुद्धम् त्रिदोषघ्नमित्यर्थः । त्रिदोषघ्नत्वं वातोत्तरत्रिदोषविषयम् । किञ्चित्पित्तकफकरत्वात् ( सु. सू. ४६–७ ) ननु बृंहणस्य दध्यादेरभिष्यन्दित्वदर्शनात्कथं बृंहणमनभिष्यन्दि? इत्यत आह–शरीरधातुसामान्यादिति । शरीरम्–अर्थान्मनुष्यस्य, तस्य धातवो रसादयः तैः सामान्यं सदृशगुणत्वं, यद्गुणा मनुष्यस्य धातवस्तद्गुणा एवाजस्येति भावः । अतोऽत्यन्तसामान्याद्बृंहणमप्यनभिष्यन्दि । यद्धि कैश्चिद्गुणैः समं कैश्चिच्च विपरीतं तद्बृंहणमभिष्यन्दि च । यथा–स्त्यानं घृतं स्त्यानघृतप्रक्षेपाद्वर्धते नाभिष्यन्दते । तदेवोष्णघृतप्रक्षेपाद्वर्धतेऽभिष्यन्दते चेति दिक् ३८३

४० अविगुणाः ।

**३८४–विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ॥ १०२**

३८४–अत आजमांसाद्विपरीतमाविकं मांसम् । वैपरीत्ये न बृंहणत्वं तत्तु बृंहणमिति विशेषः ३८४

**टिप्पणी**—विपरीतमिति–अतः–आजमांसात् विपरीतम्–अतिशीतमगुरुस्निग्धं त्रिदोषकरमभिष्यन्दि च । विपरीतत्वात्कर्शने प्राप्ते आह–बृंहणमिति ३८४

४१ अतिमेध्यादिमांसत्यागः ।

**३८५–अतिमेद्यं त्यजेन्मांसं हतं व्याधिविषोदकैः ।**
**स्वयं मृतं धूमपूर्णमगोचरभृतं कृशम् ॥ १०३**

३८५–सर्वं च मांसमतिमेद्यं मेदुरं त्यजेत् । व्याध्यादिभिश्च नष्टस्य मांसं त्यजेत् । तथा स्वयमात्मनैव मृतं धूमपूर्णं धूमेन मृतम् । तथा अगोचरभृतं अगोचरे–अन्यस्मिन् विषये भृतम् । यथा जाङ्गलमानूपे भृतमानूपं च जाङ्गले । कृशं च त्यजेत् ३८५

**टिप्पणी**–अत्र सुश्रुतः-शुष्कपूतिव्याधितविषसर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां च मांसान्यभक्ष्याणि, यस्माद्विगतव्यापन्नापहतपरिणताल्पासंपूर्णवीर्यत्वाद्दोषकराणि भवन्ति ।...अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्तितम् । विषव्याधिहतं मृत्युं बालं छर्दिं च कोपयेत् । कासश्वासहरं वृद्धं त्रिदोषं व्याधिदूषितम् । क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपण मिति ( सू. ४६-१२६-१२८ ) ३८५

४२ शस्तं मांसम् ।

**३८६–सद्योहतं वयस्थं च शुद्धं सुरभि शस्यते ।**

३८६–सद्योहतं वयस्थं सम्पूर्णावयवं शुद्धं तृणादिभिरनुपहतं अदुर्गन्धि च शस्यते ३८६

**टिप्पणी**—सद्योहतमिति–सद्योहतम्-तत्कालव्यापादितमृगादिजम् । वयःस्थम्–यूनः प्राणिनो मांसम्–शुद्धम् । स्नाय्वस्थ्यादिरहितम् । सुरभि अदुर्गन्धि च सेव्यम् एभ्योऽन्यन्न सेव्यम् ३८६

४३ स्ववर्गेष्वेणादीनां प्राधान्यम् ।

**३८७–एणः कुरङ्गो हरिणः शशो लावः कपिञ्जलः १०४**
**तित्तिरिः क्रकरो गोधा श्वाविड्गृध्रो मृगाधिपः ।**
**तथैवं शारिका न्यङ्कुर्हंसो रोहितकच्छपौ ॥ १०५**
**वर्मी चाग्र्याः स्ववर्गेषु**

३८७–एणादयश्च स्ववर्गेषु प्रधानाः । एणकुरङ्गहरिणशशा मृगेषु मध्ये अग्र्याः वराः । लावकपिञ्जलतित्तिरिक्रकरा विष्किरेषु श्वाविङ्गोधे बिलेशयेषु । गृध्रमृगाधिपौ प्रसहेषु । शारिका प्रतुदेषु । न्यङ्कुर्महामृगेषु । हंसो जलचारिषु रोहितकच्छपौ वर्मी च जलजेषु ३८७

४४ एणादिषु प्रवराः ।

**३८८– प्रवरास्तेष्वपि स्मृताः ।**
**लावैणगोधाः सिंहश्च**

३८८–तेष्वपि प्रधानेषु मध्ये प्रवराः । एणादिष्वेणः । लावादिषु लावः । श्वाविङ्गोधयोर्गोधा । गृध्रमृगाधिपयोः सिंह इति ३८८

---

४६ नित्यमिति श्लोकार्धं ' च ' पुस्तके एव दृश्यते । ४७ शीतं गु.–क. ४८ °चरमृतं कृ°–ख. ४९ मृगालिपः–च, ५० बर्हिणः शारि°–क. ख. च. ५१ वर्मी चा°–ख. च.

४५ गवादीनां जघन्यत्वम् ।

३८९– निन्दितो गौः सदर्दुरः ॥१०६

ऋश्यः काणकपोतश्च शेषमुक्तं यथायथम्

३८९–गौः, दर्दुरः, ऋश्यः, काणकपोतश्चेति चत्वारः स्ववर्गेषु निन्द्या गर्हणीयाः। शेषं च यथायथं गुणैर्युक्तम् ३८९

४६ मांसानां गुरुत्वलघुत्वादिविचारः ।

३९०–गुरूण्यण्डानि बालानां कषायमधुरं पलम् ॥ १०७

वृद्धानां स्नायुभूयिष्ठमबल्यं गुरुदोषलम्

३९०–अण्डानि पक्षिणां गुरूणि । बालानां पक्षिणां पलं मांसं रसे कषायमधुरम् । वृद्धानां मांसं बहुस्नायु अबल्यं गुरु त्रिदोषकरं च ३९०

३९१–पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी, गर्भिणी गुरुः ।

लघुर्योषिच्चतुष्पात्सु, विहङ्गेषु पुनः पुमान् ॥ १०८

शिरस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ।

तथाऽऽमपक्वाशययोर्यथापूर्वं विनिर्दिशेत् ।

३९१–पुंसाल्लियाश्च यथासंख्येन शरीरस्य पूर्वार्धं नाभेरूर्ध्वं पश्चार्द्धमधो नाभेर्गुरु । गर्भिणी च स्त्री गुर्वी । चतुश्चरणेषु मध्ये योषित् स्त्री लघुः । विहङ्गेषु पक्षिषु मध्ये पुमान् लघुः । शिरःप्रभृतीनामङ्गानां यथापूर्वं गुरुत्वं ज्ञेयम् । सक्थिमांसात् कटीमांसं गुरु । कटीमांसात् पृष्ठमांसं गुरु । एवमामाशयपक्वाशययोश्च यथापूर्वं गुरुत्वम् । पक्वाशयादामाशयो गुरुरित्यर्थः । रक्तादीनां च धातूनां यथोत्तरं गुरुत्वम् । सप्तभिर्द्धात्वंग्निभिर्यथोत्तरमेव स्नेहस्य पाकाद्यथोत्तरमेव स्नेहस्य गुरुत्वं स्यात् । धातूनां तथाभूतेन स्नेहेन संश्लेषात् यथोत्तरमेव गुरुत्वं भवति । धातुस्नेहक्रमपरिणत्या च । उक्तं च हृदये—“ परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा ” । ( शा. अ. ३–६५ ) अनेन किमुक्तम् । रसादीनां शुक्रान्तानां परस्परोपसंस्तम्भादन्योन्यसंश्लेषाद्धातूनां स्नेहोत्कर्षक्रमपरिणीतिर्यथोत्तरमेव जायते । अत्र च मांसानां स्त्रीपुंसकृतं विशेषमेकयोनीनां भिन्नयोनीनां चोत्सर्गापवादस्थितार्थोपबृंहकवचनकल्पनं च यथायोगं स्वबुध्या परिकल्पनीयम् ३९१ इति मांसवर्गः ।

**टिप्पणी**—अवयवादिविशेषेण गौरवलाघवे आह–पुंस्त्रियोरिति । पुंसः पुंलिङ्गस्य मृगादेः शरीरस्य पूर्वार्ध–नाभ्यादिशिरोन्तं गुरु । स्त्रीणां तु पश्चार्ध–नाभेरधोभागं गुरु । गर्भिणी तु सर्वैव गुरु । चतुष्पात्सु मध्ये योषित् स्त्री लघुः । विहंगेषु–पक्षिषु मध्ये पुमान् लघुः । शिरः स्कन्धोविति–यथावयवेषु मध्ये पृष्ठस्य कट्याः सक्थ्नोरिति पृष्ठादित्रयस्य यथापूर्वं गौरवम् । सक्थिभ्यां कटी गुरुः। कट्याः पृष्ठं गुरु । सक्थिशब्देन जंघे ग्राह्ये,ऊर्वोः पृथग्ग्रहणात् ‘ शिरोवत्पादगौरवम् ’ इति खारणादिना पादयोः शिरस्तुल्यत्ववचनाच्चकारात्पादयोश्च गौरवं विद्यात् । शिरःस्कंधोरुणश्च गौरवं विद्यात्–ऊरुभ्यांस्कंधौ गुरू ताभ्यां शिरो गुरु,ऊरुस्कन्धशिरःसक्थिकटिपृष्ठानां यथोत्तरं गौरवमित्यर्थः तथा आमकाशययोः–पक्वाशयादामाशयो गुरुरित्यर्थः (चरकेः सू.अ.२७-३३१, सुश्रुते सू.अ.४६ १३८,१३०) ३९१

३९२–शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ॥ १०९

मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम्

इति मांसवर्गः ।

**टिप्पणी**—शोणितप्रभृतीनामुत्तरोत्तरं शोणितादिभिः शब्दैः शोणितसारादयो गृह्यन्ते, तेन शोणितसारस्य प्राणिनो मांसान्मांससारस्य मांसं गुरु, ततो मेदःसारस्य, ततोऽस्थिसारस्य, ततो मज्जासारस्य, ततः शुक्रसारस्य मांसात्–शिरोमांसाद्वृषणादि यथोत्तरं गरीयः, वृषणान्मेढ्रम्, मेढ्राद्वृक्कौ, वृक्काभ्यां यकृत् । यकृत्–कालखण्डम् ? ततो गुदम् इत्यर्थः ३९२–३९३

( ५ ) शाकवर्गः

१ पाठादिशाकगुणाः ।

३९४–शाकं पाठा शठी सूषा सुनिषण्णसतीनजम् ॥ ११०

त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम्

३९४–शाकमुच्यते—पाठादिकं शाकं त्रिदोषनाशनं लघु संग्रहणं च । तद्वत् राजक्षवकवास्तुके ३९४

**टिप्पणी**–व्यञ्जनेषु श्रेष्ठत्वात्प्रथमं मांसगुणानाभिधाय शाकान्याह–शाकमिति । शाकानां सामान्या गुणा यथा–‘ शाकानि प्रायशस्तानि विष्टम्भीनि गुरूणि च । रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च ’ इति । शाकभेदास्तु–पत्रं, पुष्पं, फलं, नालं, कन्दं, संस्वेदजं तथा । शाकं, षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ’ । संस्वेदजं – छत्रकादि । पाठेत्यादि पाठा–अम्बष्ठा ( आंबाडी ) शठी–कर्चूरः (कचोरा) सूषा–कासमर्द ( कासविंदा ) सदृशी । सुनिषण्णः–(कुरडू) सतीनजम्–सतीनो वर्तुलकलायः ( वाटाणा, मटार ), राजक्षवः–दुग्धिका वास्तुकः–कङ्कवास्तुकः–( चाकवत ) ३९४

२ सुनिषण्णविशेषगुणाः ।

३९५–सुनिषण्णोऽग्निकृद्वृष्यस्तेषु

३९५–तेषु मध्ये सुनिषण्डोऽग्निकरो वृष्यश्च । सुनिषण्डो जलमध्ये भवति पत्रैश्चाङ्गेरीसदृशैः काश्मीरेषु शूल्येषु चातिप्रसिद्धः ३९५

३ राजक्षवगुणाः ।

३९६– राजक्षवः परम् ।

ग्रहण्यर्शोविकारघ्नः

३९६–राजक्षवोऽत्यर्थं ग्रहण्यर्शोविकारघ्नः ३९६

४ वास्तुकगुणाः ।

३९७– वर्चोभेदी तु वास्तुकः ॥ १११

३९७–वास्तुकस्तु वर्चसः पुरीषस्य भेदनः ३९७

५ काकमाचीगुणाः ।

३९८–हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी ।

काकमाची सरा स्वर्या

३९८–काकमाची ( कांगोणी ) त्रिदोषघ्नी कुष्ठनाशनी ईषदुष्णवीर्या सरा स्वास्थ्यसंवाहकत्वेन च रसायनसादृश्याद्रसायनी ३९८

---

५२ सदुर्दुरः–च. ५३ ऋष्यः का°–च. ५४°क्तं यथागुणम्–च. ५५ °यलववर्ण प°–क. ख. °य लवणं परम्–च. ५६ °नां स्नावभू°–च. ५७ पृष्ठास्य क°–च ५८ °नां तु धा°–क. ख. १ °ठी मूर्वा सु–च. २ °षण्डोऽग्नि. –ग. ३ °स्तुकम्–क. ख. घ. च.

६ चांगेरीगुणाः ।

३९९- **चाङ्गेर्यम्लाग्निदीपनी ॥ ११२**
**ग्रहण्यार्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ।**

३९९-चाङ्गेरी अम्ला अग्निदीपनी ग्रहण्यादिषु पथ्या संग्रहणी लघ्वी च । चाङ्गेरी क्षुद्राम्लिका ३९९

**टिप्पणी**—चाङ्गेरी–अम्लपत्रिका ( चुका ) ३९९

७ पटोलादीनां गुणाः ।

४००-[4]**पटोलसप्तलारिष्टशार्ङ्गेष्टावल्गुजामृताः ॥ ११३**
**[5]वेत्राग्रबृहतीवासाकुन्तलीतिलपर्णिकाः ।**
**मण्डूकपर्णी कर्कोटकारवेल्लकपर्पटाः ॥ ११४**
**नाडीकलायगोजिह्वा वार्ताकं वनतिक्तकम् ।**
**करीरं कुलकं नन्दी [6]कुचेला [7]शकुलादनी ॥ ११५**
**[8]कठिल्लं केम्बुकं शीतं सकोशातककर्कशम् ।**
**तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ॥ ११६**

४००-पटोलादीनि कर्कशान्तानि अष्टाविंशतिः शीतवीर्याणि रसे तिक्तानि । विपाके कटुकानि । संग्रहणानि वातकृन्ति पित्तश्लेष्मनाशनानि च । सप्तला–सातला । अरिष्टो–निम्बः । शार्ङ्गेष्टा–अङ्गारवल्लिका । अवल्गुजः–सोमराजी । अमृता–गुडूची । वेत्रो–वंशसदृशः । मण्डूकपर्णी–मण्डूकी । सैवादित्यवल्ली । नाडीकलायः–ब्राह्मी । सैव शकुलाक्षकः । एते सुवर्चलाविशेषाः । ' गोधूमिका तु गोजिह्वा गोजी क्रोष्टकमूलकः ।' वनतिक्तको–नलखण्डकः । कूलकः–काकतिन्दुकः । कुचेला–पाठा । शकुलादनी–कटुका । कठिल्लः–वर्षाभूभेदः । कोशातकं–दधित्थम् ४००

**टिप्पणी**—पटोलेत्यादि–पटोलम्–राजीफलम् (पडवळ), सप्तला–सातला ( शिकेकाई ), अरिष्टः–निम्बः ( कडूनिंब ), शार्ङ्गेष्टा–अङ्गारवल्ली ( सागरगोटा ), अवल्गुजः–बाकुची ( बावची ), अमृता–गुडूची ( गुळवेल ). वेत्रः–वंशसदृशः ( थोर वेत ), बृहती–कण्टकारी, सा द्विधा–सिंही व्याघ्री च ( रिंगणी व डोरली ) वासा–आटरूषकः ( अडूळसा ), कुंतली–चक्षुसदृशी दीर्घपत्रा ( रानतीळ ), तिलपर्णिका–( तिलवण ), मण्डूकपर्णी–( ब्राह्मी ) कर्कोटम्–कर्कोटीफलम् ( करटोली ), कारवेकल्लम्–सुषवीफलम् ( कारलें ), पर्पटः-ज्वरघ्नः (पित्तपापडा), नाडीकलायः–मत्स्याक्षः, (ब्राह्मी), गोजिन्हा–गोधूमिका ( पाथरी ), वार्ताकम्–वृन्ताकम्–( वांगें ), वनतिक्तकम्–वत्सकः ( कुडा ), करीरम्–गूढपत्रम् (वंशांकुर). कुलकम्–कांकतिन्दुकः, केचित्तु पटोलभेदमाहुः । नन्दी–मेषशृङ्गी (मेढशिंगी), कुचेला–कुचेला इति पठन्ति–कृष्णपाठा । शकुलादनी–कटुका, ( कुटकी ), काठिल्लम्–रक्तपुनर्नवा, केम्बुकम्, केबुकमिति पठन्ति, (कोबी) । कोशातकम्–कृतवेधनम् ( घोसाळें ), कर्कशम्–स्वल्पकर्कोटकः ( लहान कर्टोली ) । अत्र पटोलनिम्बावल्गुजामृतावेत्राग्रकर्कोटककारवेल्लेषु विवादः । स च हेमाद्रौ सिद्धमंत्रे च द्रष्टव्यः ४००

८ पटोलविशेषगुणाः ।

४०१–**हृद्यं पटोलं क्रिमिनुत्स्वादुपाकं रुचिप्रदम् ।**

४०१–अतो निर्द्धारणम्—पटोलं हृद्यं क्रिमिनाशनं मधुरविपाकं रुचिकरं च ४०१

**टिप्पणी**—पूर्वोक्तेष्वष्टाविंशतिषु विशेषमाह–हृद्यमिति ।

९ बृहतीद्वयगुणाः ।

४०२–**पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ॥ ११७**

४०२–बृहती क्षुद्रबृहती च पित्तकरमग्निदीपनं शक्रदादीनां च भेदनं वातनाशनं च ४०२

१० वृषगुणाः ।

४०३–**वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ।**

४०३–वृषं छर्दिकासौ नाशयत्यत्यर्थं च रक्तपित्तं नाशयति ४०३

**टिप्पणी**—वासागुणानाह–वृषमिति ४०३

११ कारवेल्लगुणाः ।

४०४–**कारवेल्लं सकटुकं दीपनं [9]कफपित्तजित् ॥ ११८**

४०४–कारवेल्लं रसे किञ्चित् कटुकत्वेन युक्तम् अग्निदीप्तिकरं पित्तश्लेष्मनाशनं च ४०४

१२ वार्ताकगुणाः ।

४०५–**वार्ताकं कटु तिक्तोष्णं मधुरं कफवातजित् ।**
**सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ॥ ११९**

४०५–वार्ताकं रसे कटुतिक्तं मधुरमुष्णवीर्यं च वातश्लेष्महरं किञ्चित्क्षारत्वयुक्तं अग्निदीप्तिकरं हृद्यं रुचिकरं न च पित्तं करोति । यथा वातश्लेष्मघ्नं न तथा पित्तकरमित्यर्थः ४०५

**टिप्पणी**—वार्ताकगुणानाह–वार्ताकमिति । अपित्तलं नवीनपदर्थे, किञ्चित्पित्तकरमित्यर्थः । पक्वं वार्ताकं तु पित्तलमेव, तथा चोक्तं सुश्रुतेन– 'जीर्णं सक्षारपित्तलम्' (सू. ४६-२६९) इति ४०५

१३ करीरगुणाः ।

४०६–**करीरमाध्मानकरं कषायं स्वादुतिक्तकम् ।**

४०६–करीरमाध्मानकरं रसे कषायमधुरं तिक्तं च ४०६

१४ कोशातकावल्गुजगुणाः ।

४०७–**कोशातकावल्गुजकौ भेदिनावग्निदीपनौ ॥ १२०**

४०७–कोशातकावल्गुजकौ भेदिनौ वह्निदीपनौ च ४०७

१५ श्यामादिगुणाः ।

४०८–**[10]श्यामाशाल्मलिकाश्मर्यभञ्जीकर्णकयूथिकाः[11] ।**
**[12]वृक्षादिनीक्षीरवृक्षबिम्बीतनिकवृक्षकाः* ॥ १२१**
**लोध्रः शणः [13]कच्छुदारः [14]सशेलुर्वृषमुष्टिका ।**
**भल्लातकः कोविदारः कमलोत्पलकिंशुकम् ॥ १२२**
**पटोलादिगुणं स्वादु कषायं पित्तजित्परम् ।**

४०८–श्यामादिकिंशुकान्तपटोलादिगुणयुक्तं रसे मधुरकषायं परमत्यर्थेन पित्तिजत् श्यामा–त्रिवृत् । भञ्जी–भार्ङ्गी । वृक्षादनी–बन्दाकः । क्षीरवृक्षः–पीतकः । स एव कशेरुकः ।

---

४ °ष्टशार्ङ्गेष्टा–क. ख. च; °ष्टशार्ङ्गाष्टा–ग. ५ °साकुतलीति°–घ. ६ °न्दीकुचैलाश°–क-ख. घ. च. ७ °लाशङ्कुला°-च. ८ काटिल्लं के ° क. ख. घ. च. ९ ° नं कफजित्परम् । वार्ता °–क. ख. घ. च. १० °श्मर्यफञ्जी क°–क. ख. घ °श्मयकञ्जीक °–च. ११ ° ञ्जोर्णिगकयू °–घ. १२ °क्षादनीक्षी°– क. ख. † ° बीकनकवृ °–च. १३ ° णः कर्बुदारः स. क. ख. य. १४ सशाक्तुविषमुष्टिका-क. ख, ° लुर्वृषमूषिका-घ.

बिम्बी-रक्तफला । शेलुः-श्लेष्मातकः । विषमूषिका । किंशुकः-पलाशः । तस्य कुसुम एव शाकत्वम् ४०८

टिप्पणी—श्यामेत्यादि-श्यामा-श्याममूला त्रिवृत् (निशोत्तर ), शाल्मलिः-कण्टकमयो महातरुः प्रसिद्धः ( सांवर ) तत्पुष्पं घृतसैन्धवसाधितं प्रदरघ्नम् । काश्मरी-श्रीपर्णी (शिवण), भञ्जी-भार्ङ्गी (भारंगी),यूथिका सा द्विविधा। अतिश्वेतपुष्पा पीतपुष्पा च ( जुई ) इयं च शर्करीतिनुत् ( रा. नि. ) वृक्षादनी-वन्दाकः (वांडगूळ ), कर्णिका-कमलिनीनालः ( कमळाचा देठ),-क्षीरवृक्षाः-न्यग्रोधः, उदुम्बरः, अश्वत्थः, प्लक्षः,इत्येते क्षीरवृक्षाः। बिंबी-रक्तफला (तोंडली), भल्लातकः-अरुष्करः ( बिब्बा ), कोविदारः-पीतकुसुम कांचनारः ( कांचन ), शेलुः-श्लेष्मातकः ( भोंकर ), किंशुकः ( पळस ) ४०८

१६ भञ्जीगुणाः ।

**४०९-बद्धमूत्रा सरा [15]भञ्जी**

४०९-भञ्जी बद्धमूत्रा सरा च ४०९

१७ अभीरुजकरीरगुणाः ।

**४१०- करीरं स्यादभीरुजम् ॥ १२३**

**सतिक्तं लघु चक्षुष्यं वृष्यं दोषत्रयप्रणुत् ।**

४१०-अभीरुजं करीरं शतावर्यङ्कुरं तत् तिक्तं लघु चक्षुष्यं वृष्यं त्रिदोषनाशनं च । इदमन्यत् करीरम् ४१०

१८ तण्डुलीयगुणाः ।

**४११-तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः १२४**

**मदपित्तविषास्रघ्नः**

४११-तण्डुलीयः शीतवीर्यो रूक्षो मधुरविपाकरसो लघुः मदादिनाशनश्च ४११

टिप्पणी—तण्डुलीयः-( तांदुळजा ) ४११

१९ मुञ्जातगुणाः ।

**४१२- मुञ्जातं वातपित्तजित् ।**

**स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत्परम् ॥ १२५**

४१२-मुञ्जातं वातपित्तनाशनं स्निग्धत्वादिगुणयुक्तं अत्यर्थशुक्रकरं च । मुञ्जातः काश्मीरेषु महौषधः । ४१२

टिप्पणी—मुञ्जातः-कन्दविशेषः ( कणगी ) ४१२

२० पालक्यागुणाः ।

**४१३-*पालक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा**

४१३-पालक्या पिच्छिलत्वादिगुणपञ्चकयुक्ता ४१३

टिप्पणी—पालक्या-वास्तुकाकारपत्रशाके (पालक) ४१३

२१ उपोदिकागुणाः ।

**४१४-मदघ्न्युपोदका**

४१४-उपोदका-मदनाशिनी ' उपोदका मयाली च सुरका पोतकी स्मृता ४१४

टिप्पणी—उपोदका-पोतकी, सा च त्रिधा सामान्या, क्षुद्रपत्रा वनजा च ( राजगिरा ), उपोदिका इति पाठे तु उपादकी ( पुदिना ) इत्यर्थः ४१४

२२ चञ्चुगुणाः ।

**४१५- चुञ्चुर्ग्राही**

४१५-चुञ्चुः संग्रहणः ४१५

टिप्पणी—चुंचुर्नाडिकाकारपत्रा ४१५

**४१६- तौ पूर्ववत्तथा ॥ १२६**

४१६-तौ तूपोदकाचुञ्चू पूर्ववत्-पालक्यागुणावित्यर्थः । तथेति समुच्चये ४१६

२३ विदारीगुणाः ।

**४१७-विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ।**

**जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या [16]रसायनी १२७**

४१७-विदारी वातपित्तनाशिनी मूत्रला मधुरा शीतवीर्या च । विदारी सृगालिका ४१७

टिप्पणी—विदारी-क्षीरशुक्ला(पांढरा भुइकोहळा)४१७

२४ जीवन्तीगुणाः ।

**४१८-चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ।**

**शाकानां प्रवरा न्यूना द्वितीया किंचिदेव तु १२८**

४१८-जीवन्तीशाकं जीवनत्वादिगुणयुक्तम् । या जीवन्ती मधुरा सा शीतवीर्या एवंगुणा शाकानां च श्रेष्ठा । द्वितीया अमधुरा सा एभिरेव, गुणैः किंचिन्न्यूना भवति ४१८

टिप्पणी—जीवन्ती शर्करावन्मधुरपुष्पा व्रततिः इति वदन्ति, स्वर्णवर्णमूलनालादिका इति हेमाद्रिः । शुष्कयावनालवर्णा लता पथी पार्वतीया लताकैफलाकारसक्षीरफला इति च डल्हणः, पुनरपि स एवान्यत्राह-जीवन्ती पटोलसमानपत्रा कन्दवती पश्चिमदेशे प्रसिद्धा, लाटदशे स्थूलवल्ली इति उत्तरापथे महाकन्दा कर्कोटिकासदृशपत्रा, लाटविषये तु मूलिनी महाप्रताना इति ( डल्हणः ) जीवन्ती स्वनामख्याता सुवर्णवर्णाभा, सुवर्णनाला चेति चक्रः अस्याः पर्यायाः-जीवनीया, जीवनी, जीववर्धिनी मांगल्या, शाकश्रेष्ठा, यशस्करी । हरणवेल इति महाराष्ट्रभाषायां केचनोल्लिखन्ति ४१८

२५ भण्ड्यादित्रयगुणाः ।

**४१९-वातपित्तहरा भण्डी पर्वणी पर्वपुष्पिका ।**

४१९-भण्ड्यादित्रयं वातपित्तहरम् । भण्डी-मञ्जिष्ठा । पर्वपुष्पी-नागदन्ती ४१९

टिप्पणी—पर्वणीति-पर्वणी पर्वपुष्पी च शाकद्वयम्। तत्र पर्वणी-पर्वशाकमिति चक्रदत्तः, पर्वपुष्पी नागदन्ती-इति केचित् । ( सु. १५-२८ हेमाद्रि ) ४१९

२६ कूष्माण्डादिगुणाः ।

**४२०-कूष्माण्डतुम्बकालिङ्गकर्कार्वेर्वारुतिण्डिशम् १२९**

**तथा [17]त्रपुसचीनाकचिर्भिटं कफवातकृत् ।**

**भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥ १३०**

४२०-कूष्माण्डादिकं वातश्लेष्मकरं, भेदनं, विष्टम्भकरमभिष्यन्दि, स्रोतःस्रावकं, मधुररसविपाकं, गुरु च । उर्वारुः कर्कटिका ४२०

टिप्पणी—कूष्माण्डः-पुष्पफलम् ( कोहाळ ), तुम्बम्अलाबुः ( दूधभोपळा ), कालिङ्गम्-कलिन्दः ( कलिङ्गड ), कर्कारुः-( खरबुज ), एर्वारुः-( कांकडी ), तिण्डिशम् ( ढेंडसें ); त्रपुसम्-वालुकम् ( तवसें ), चीनाकम्-वीणकम्

[15] रा फञ्जी-क. ख. च. * पालङ्क्या पि-क. ख. च. [16] °भ्यारसायनम् । च °-च. [17] ° चिर्भिट क °-क. ख. च.

( टरकांकडी ), चिर्भटम्–गोरक्षकर्कटी ( त्रपुसविशेषः ) भेदि–मलानाम् । विष्टम्भि–वायोः । एतेषां गुरुत्वे च क्रममाह खारणादिः–'त्रपुसैर्वारुकर्कारुकूष्माण्डालाबुचिर्भटाः । मधुरा रूक्षणाः शीता गौरवं तूत्तरोत्तरम्' इति ४२०

२७ कूष्माण्डगुणाः ।

**४२१–वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित् । बस्तिशुद्धिकरं वृष्यं**

४२१–एतेषां निर्धारयति–सर्वेषां वल्लीफलानां कूष्माण्डं प्रशस्तम् । वातपित्तनाशनं बस्तिशोधनं वृष्यं च ४२१

२८ त्रपुसगुणाः ।

**४२२–　　　　त्रपुसं त्वतिमूत्रलम् ॥ १३१**

४२२–त्रपुसं पुनरतिमूत्रलम् ४२२

**टिप्पणी**—त्रपुसमिति-अतिग्रहणात्कूष्माण्डादीनामीषन्मूत्रलत्वम् ४२२

२९ तुम्बगुणाः ।

**४२३–तुम्बं रूक्षतरं ग्राहि**

४२३–तुम्बमलाबु–अत्यर्थं रूक्षं संग्रहणं च ४२३

३० कालिङ्गोर्वारुचिर्भटादीनामवस्थाभेदेन गुणाः ।

तत्र बालानां गुणाः ।

**४२४–　　　　कालिङ्गैर्वारुचिर्भिटम्[१८] । बालं पित्तहरं शीतं विद्यात्**

४२४–कालिङ्गैर्वारुचिर्भिटं च बालमपूर्णरसादि पित्तहरं शीतवीर्यं च ४२४

३१ पक्वगुणाः ।

**४२५–　　　　पक्वमतोऽन्यथा ॥ १३२**

४२५–पक्वमतो बालाद्विपरीतम् ४२५

**टिप्पणी**—अतो–बालाद्विपरीतम् । पक्वम्—ईषत्पक्वमित्यर्थः । सम्यक्पक्वस्य वक्ष्यमाणत्वात् । तच्च पित्तकरमुष्णवीर्यं वातकफापहं चेति भावः । उक्तं हि सुश्रुतेन–' तत्पाण्डु कफकृज्जीर्णमम्लं वातकफापहम् ' ( सू० ४६–२१८ ) इति ४२५

३२ शीर्णवृन्तगुणाः ।

**४२६–शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित् । रोचनं दीपनं हृद्यमष्ठीलानाहनुल्लघु ॥　　१३३**

४२६–शीर्णवृन्तं शीर्णं वृन्तं वल्लीबन्धनस्थानं शुष्कं यस्य, यत् पाकमतिक्रम्य वर्तते तदीषत्क्षारं, पित्तकरं, वातश्लेष्मनाशनं, रुचिकरं, हृद्यं, अष्ठीलां आनाहं च नाशयति, लघु च । अष्ठीला–वक्ष्यमाणलक्षणा ( नि. ११ ) ४२६

**टिप्पणी**—शीर्णवृन्तस्य कूष्माण्डादेर्गुणानाह–शीर्णवृन्तमिति–शीर्णवृन्तशब्देन सम्यक्पक्वं लक्ष्यते, यतो हि सम्यक्पक्वस्य वृन्तं ( देंठ ) शीर्यते । सक्षारम्–ईषत्क्षारम् । केचित्तु-शीर्णवृन्तं त्रपुसभेदमाहुः । ( सु. सू. ४६-२१६-२२० ) ४२६

३३ मृणालादिगुणाः ।

**४२७–मृणालबिसशालूकशृङ्गाटककशेरुकाः[१९] । नन्दीमाषककेलूटक्रौञ्चादनकलोड्यकम्[२०] ॥ १३४ [२१]सतरूढं कदम्बं च रूक्षं ग्राहि हिमं गुरु ।**

४२७–मृणालादिकं रूक्षं संग्रहणं, शीतवीर्यं, गुरु च । मृणालं बिसाङ्कुरम् । शालूकं–पद्मकन्दम् । कशेरुकं–प्रसिद्धं मध्यदेशे । क्रौञ्चादनं–काश्मीरेषु केबुकमन्यत्र कनाविकम् । अङ्कलोड्यं ह्रस्वमुत्पलम् पद्मबीजमन्ये । कदम्बः–कन्दविशेषः ४२७

**टिप्पणी**—मृणालमिति–मृणालं कमलमूलम् । तच्च द्विविधं सूक्ष्मं स्थूलं च । तत्र सूक्ष्मं मृणालसंज्ञं, स्थूलं तु बिसाभिधम् । शालूकं–पद्मकन्दः । शृङ्गाटकम्–त्रिकोणो जलकन्दविशेषः ( शिंगाडे ), कशेरुकः–कृष्णः सूक्ष्मो वर्तुलो लोमशः कन्दः । नन्दीति–अत्र नन्दी–'तुण्डेरिका ।' माषकः–'वास्तुलः' इति अरुणदत्तः । परं हेमाद्रिस्तु नन्दीमाषकः–वानीरकः इति प्राह । चरके तु नदीमाषक इति पाठः । तत्र उदीमानकः इति चक्रदत्तः प्राह । नन्दीशब्दं शुक्लापामार्गपर्यायं वदन्ति । केलूटम्–जलोदुम्बर इति हेमाद्रिः । किरमकसंज्ञकमुदुम्बरभेदमरुणदत्तः प्राह । केबुकपर्याय इत्यन्ये । क्रौञ्चादनम्–क्रौञ्चानामदनं भक्ष्यम्, जलकन्दविशेषः । ह्रस्वजलमुस्तेत्येके, कमलकन्दमिति केचित् । चिञ्चोटकं रक्तकसेरुकं वेत्यपरे । घेंचुलिका इत्यन्ये । कलोड्यम्–ह्रस्वोत्पलकन्दः । पद्मबीजमिति बहवो व्याख्यानयन्ति । अङ्कलोड्यमिति पाठः । सतरूढम्–कल्हारकन्दः । तरूटमिति चरकपाठः ४२७

३४ कलम्ब्वादिगुणाः ।

**४२८–कलम्बुनालिकामार्षकुठिञ्जरकुतुम्बकम्[२२,२३] ॥ १३५ [२४]चिल्लीलट्वाकनिष्पावकुरूटकगवेधुकाः । यातुका सालकल्याणी श्रीपर्णी पीलुपर्णिका ॥ १३६ कुमारजीवलोणीकायवशाकसुवर्चलाः । [२५]कूष्माण्डनीलिनी स्वर्षा वृकधूमकलक्ष्मणा ॥ १३७ [२६]आलूकानि च सर्वाणि तथा सूप्यानि[२७] राल्वकः । [२८]जीवन्तिकश्चञ्चुपर्णी प्रपुन्नाटकुबेरकम् ॥　　१३८ स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु । शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ॥ १३९ स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् ।**

४२८–कलम्ब्वादिकं मधुरम्, ईषल्लवणं, रूक्षं, वातश्लेष्मकरं, गुरु, शीतवीर्यं, मूत्रं पुरीषं च सृजति–बहिःक्षिपति । विष्टभ्यैकस्मिन् जठरप्रदेशे पिण्डीभूय जरां यातीति । प्रायोग्रहणमेतेषां मध्ये केचिन्नैवंस्वरूपा इति ज्ञापनार्थम् । तेषां च पर्याया निघण्टुज्ञानात् देशभाषासंस्करणाच्च किञ्चित् ज्ञायन्ते । किञ्चित् उच्यन्ते–कलम्बुः–कालिका । नालिका–कपोतचरणा । माषः–गान्धारी-काश्मीरेषु शिलः । चिल्ली–तण्डुलीयकविशेषः । लट्वाको–गुग्गुलुः । निष्पावो रजिशिम्बी । पीलुपर्णिका–मूर्वा । लोणिका–काश्मीरेषु

१८ °चिर्भटम–क. ख. १९ °ककशेरुकम् । न °-च. २० °नकलोवकम् । स°-क. २१ शतरूढं क°-च. २२ माष–ग. २३ °षंकुठिञ्ज°–क. ख. २४ चिल्लीनिष्पा° वलोद्याकक°–क. २५ कुकुण्डनलिनीमुष्ववृकधू°–क. ख. २६ आलूपानि–ग. २७ °नि लक्ष्मणा–ग. २८ जीवन्तकोलरुपर्णी प्रपुन्नाटकुठेरकम्–क.

लोनारा। यवशाकः-क्षारपत्रकम्, काश्मीरेषु-कोणीकः। आलूकानि बहुविधानि देशेषूक्तानि। तानि सर्वाणीह गृह्यन्ते। सूप्यानि-मुद्गादिसस्यपर्णानि। लक्ष्मणा-मधुयष्टी। जीवन्तिको रक्तनालो वास्तुकः। प्रपुन्नाटः-चक्रमर्दकः। कुवेरकः-कांठे-अरभेदः, कोमीरीति केचित्। एतच्च सर्वं **स्विन्नं, निष्पीडितरसं, अतिशयेन बहुस्नेहं** च नात्यपथ्यम् ४२८

**टिप्पणी**—कलम्बुः-जलशाकविशेषः । नाड्याकारः सूक्ष्मसुषिरो बहुतोयजः, प्रायेण पत्रं गृह्णन्ति। नालिका-कलम्ब्वपेक्षया अल्पा श्लक्ष्णा चेति हेमाद्रिः, दीर्घनालरूपा कलम्बुसंज्ञा । मार्षः-पत्रशाकविशेषस्तण्डुलीयकभेदः मण्टकः, स द्विविधः श्वेतरक्तभेदेन। मारिष इत्यपि पाठः। (माठाची भाजी), कटिञ्जरः-वनवास्तुकः । ताम्रमूलक-मित्यरुणदत्तः। कुतुम्बकः-द्रोणपुष्पी (तुंबा), चिल्ली-लघुपत्रगौरवास्तुकः, लट्वाकः-गुग्गुलुशाकम्। लोट्टाक इति चरकपाठः । निष्पावः-श्वेतशिम्बी (पांढरे पावटे), कुरूटकः- शितिवारकः इति हेमाद्रिः, शितिवारक इत्यरुणदत्तः, सितपाटक इति केचित्। सुनिषण्णः-(कुरडू), अम्लानसदृशपत्रकुसुमा हरितपुष्पा चेति डल्हणः, उत्तरापथज इत्येके, पीतझिण्टीत्यपरे, अत्र कुरण्टकः, कुरुण्टकः, कुरण्टिका कुरुण्टिका चेति पाठान्तराणि । गवेधुका-तृणधान्यविशेषः (कसईचें-कासाचें बीं), यातुका-शुक्लाशालिपर्णी। वातुक इत्यपि वदन्ति । सालकल्याणी-शालिंचभेदः, तालकल्याणीत्यपि पाठः। अथवा-सालः-सालपर्णी, कल्याणी-माषपर्णी, इति ज्ञेयम्। श्रीपर्णी-काश्मरी (शिवण), अत्र त्रिपर्णीति पाठः। तत्पक्षे सा हंसपादिका (काजळू), पीलुपर्णिका—(मोरवेल), कुमारजीवः-जीवशाकम्, पुत्रंजीवकवृक्षः, लोणीका-घोट्टिका (घोळ), यवशाकः-यवक्षेत्रेद्भूतो गौडवास्तुकः (चाकवत), सुवर्चला-रविभक्ता (सूर्यफूल), 'केचिन्मारिषसदृशदण्डमार्तंगल-(सहचर)सदृशपत्रं लप्सम् (पोकळा) आहुः' इति डल्हणः। कूष्माण्डेति-अत्र, 'कुकुण्डनूलिनी झुञ्झुवृकधूमकलक्ष्मणम्' इति हेमाद्र्यादृतः पाठः। कूष्माण्डं सर्पछत्रमिति चक्रः, सर्पफणाकारं छत्रकमुद्भिद्विशेषः सर्पछत्रम् (अळंबें) कचिच कुक्कुण्डम् इति पाठः। तत्रापि पललादिछत्रिका ग्राह्या नीलिनी-रञ्जनी (नीळ), वृकधूमकः-भूमिशिरीषः, लक्ष्मणा-रक्तबिन्दुच्छदा लता, लक्षणं तु 'पुत्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छितच्छदा। लक्ष्मणा पुत्रजननी बस्तगन्धाकृतिर्भवेत्' इति, तथा च-गोक्षीरसदृश पुष्पं रोमवाल्लिसमन्वितम्। रक्तबिन्दुसमं पुष्पं लक्ष्मणाकारमुच्यते। अत्र यष्टीमधुकमिति बहवः। श्वेतकण्टकारीत्यप्यपरे। आलूकानि-पिण्डालुक-मध्वालुक-हस्त्यालुकादीनि (अळूं), सूप्यानि-मुद्गमाषादीनां पर्णानि शिम्ब्यश्च। रालकः-चुञ्चुपर्णी ४२८

३५ चिल्लीगुणाः।

**४२९-लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता।१४०**

४२९-सूक्ष्मपत्रा जात्यैव या चिल्ली सा वास्तुकसमानगुणा ४२९

३६ तर्कारिवरुणयोर्गुणाः।

**४३०-तर्कारीवरणं स्वादु सतिक्तं कफवातजित्।**

४३०-तर्कारीवरणं च मधुरतिक्तं, वातश्लेष्मनाशनं च तर्कारी अग्निमन्थः ४३०

**टिप्पणी**—तर्कारी-अग्निमन्थः (टेंड), वरणः-सेतुवृक्षः (वायवर्णा) ४३०

३७ वर्षाभुकालशाकानां गुणाः।

**४३१-वर्षाभ्वौ कालशाकं च सक्षारं कटु तिक्तकम्॥**

४३१-वर्षाभ्वौ पुनर्नवे कालशाकं च ईषत्क्षारं, रसे च कटुकतिक्तं, अग्निदीपनं, भेदनं गरादींश्च नाशयति ४३१

**टिप्पणी**—वर्षाभ्वौ-ह्रस्वमहत्यौ रक्तश्वेतपुनर्नवे, कालशाकम्-श्राद्धीयः शाकविशेषः (कुळेंचें भाजी) ४३१

३८ चिरिविल्वाङ्कुरगुणाः।

**४३२-दीपनं भेदनं हन्ति गरशोफकफानिलान्।**
**दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः॥**

४३२-चिरिविल्वाङ्कुराः अग्निदीपनाः, वातश्लेष्मनाशनाः, सराश्च ४३२

**टिप्पणी**—चिरिविल्वः—करञ्जः ४३२

३९ उरुबूकलाङ्गल्योर्गुणाः।

**४३३-लघुरूष्णा सरा तिक्ता सोरुबूका च लाङ्गली।**

४३३-ऊरुबूकं लाङ्गली च लघुनी, ऊष्णवीर्ये, सरे, तिक्ते च। ऊरुबूकं-रक्तैरण्डः। लाङ्गली-इन्द्रपुष्पिका ४३३

**टिप्पणी**—लाङ्गली-गर्भपातिनी (कळलावी), इन्दुमतेन इन्द्रपुष्पी-कण्टकी, कृष्णपुष्पकरञ्जः ४३३

४० तिलवेतसयोर्गुणाः।

**४३४-वातलौ कटुतिक्ताम्लौ भेदिनौ तिलवेतसौ॥**

४३४-तिलवेतसपत्रे वातले, रसे कटुतिक्ताम्ले, भेदने च ४३४

**टिप्पणी**-तिलः-श्वेत-कृष्ण-रक्त-वन्यभेदेन तिलश्चतुर्धा। तेषु कृष्णः श्रेष्ठतमः। इह तत्पत्राणि ग्राह्याणि । (सू. अ. ७-३०८ पृ. ४५), वेतसः-नम्रकः अभ्रपुष्पश्चेति पर्यायौ (वेत), ४३४

४१ पञ्चाङ्गुलगुणाः।

**४३५-तद्वत्पञ्चाङ्गुलो**

४३५-तद्वत्तिलवेतसगुणः पञ्चाङ्गुलः शुक्लैरण्डः। तस्य पत्रे शाकत्वम् ४३५

**टिप्पणी**—पञ्चाङ्गुलः-पञ्च अङ्गुलय इव पत्राकारा यस्य (एरण्ड), तस्य कोमलानि पत्राणि ग्राह्याणि ४३५

४२ वंशकरीरगुणाः।

**४३६- वंशकरीरास्तु विदाहिनः।**
**वातपित्तकरा रूक्षाः कटुपाकाः कफापहाः॥ १४४**

४३६-वंशकरीराः-वंशाङ्कुराः, विदाहिनः, वातपित्तकराः रूक्षाः, विपाके कटुकाः कफनाशनाश्च ४३६

**टिप्पणी**—वंशकरीराः-वंशमूलाङ्कुराः (वेळूचा-कणकेचा कोंब), ४३६

४६ बिल्वादिशाकत्रयगुणाः।

**४३७-बिल्वराजाबलाशाकं वातघ्नमतिसारजित्।**

२९ तर्कारिव' – क. ख. घ. ३० 'श्चिरबि' – क. ख. ३१ 'रूबूका –क. ख.

४३७–बिल्वादिशाकत्रयं वातनाशन मतीसारनाशनं च ४३७

टिप्पणी—बिल्वः–मालूरः ( बेल ) ' तत्पत्रं कफवातामशूलघ्नं ग्राहि रोचनम् । निहन्याद्बिल्वजं पुष्पमतिसारं तृषां वमिम् ' अस्य पूतिमारुतः इत्यपि पर्यायः । तस्यार्थः– पूतिः–सुगन्धिर्मारुतो यस्येति । पूतिशब्दोऽत्र सुगन्धिवाची । परं हेमाद्रिस्तु–पूतिमारुतम्–दुर्गन्धयथोवातप्रवर्तकमित्याह । रास्ना–नाकुली ( भुंगुसवेल, खडकी रास्ना ) सा च त्रिविधा मूलं, पत्रं, तृणमिति । तत्र मूलदले श्रेष्ठे, तृणरास्ना च मध्यमा । बला–' बला भद्रौदनी वाटी समंगा खरयष्टिका, ' इत्यादयः पर्यायाः । सा चतुर्विधा–बला– महाबला–अतिबला–नागबला इतिभेदैः । ( चिकणा, तुपकडी ) ४३७

४४ वत्सादनीगुणाः ।

४३८–वायुं वत्सादनी हन्यात्

४३८–वत्सादनी वायुं नाशयति । वत्सादनी कचेयकः ४३८

टिप्पणी—वत्सादनी–गुडूचीपल्लवाः ( गुळवेलीचा पाला ), ४३८

४५ गण्डीरचित्रकयोर्गुणाः ।

४३९–　　　　कफं गण्डीरचित्रकौ ॥ १४५

४३९–गण्डीरचित्रकशाकौ कफं नाशयतः ४३९

टिप्पणी—गण्डीरः–शमठः, शालञ्चीति लोक इति गङ्गाधरः । स्नुहीवृक्षे, मञ्जिष्ठायाम्, कटुसरणे चायं शब्दः प्रसिद्धः । ' गंडीरो द्विविधः–रक्तः शुक्लश्च । स हि कटुत्वेन हरितवर्गे वर्ण्यते । यस्तु शुक्लो जलजः स शाकवर्गे पठितः इति चक्रः ( गोडा सुरण ) कण्डीरं इति पाठे लघुकारवेल्लभेदः । चित्रकः प्रसिद्धः ४३९

४६ पत्तूरगुणाः ।

४४०–पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ।

४४०–पत्तूरो दीपनादिगुणयुक्तः " मत्स्याक्षकस्तु पत्तूरः पत्रजः प्रिय इत्यपि " ४४०

टिप्पणी—पत्तूरः–मत्स्याक्षकः, लोहमार इति हेमाद्रिः, शालिंच इति चक्रः ४४०

४७ कासमर्दगुणाः ।

४४१–क्रिमिकासकफोत्क्लेदान्कासमर्दो जयेत्सरः ॥१४६

४४१–कासमर्दकः सरः, क्रिम्यादींश्च नाशयति । उत्क्लेदः स्रोतसां मालिन्येनार्द्रत्वम् ४४१

टिप्पणी—कासमर्दः–पीतपुष्पकः कासघ्नः इति पर्यायौ (कासविंदा), उत्क्लेदः–मालिन्येन स्रोतसां स्रावकत्वम् ४४१

४८ कौसुम्भगुणाः ।

४४२–रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ।

४४२–कुसुम्भशाकं रूक्षं, उष्णवर्यि गुरु, पितकरं, सरं च४४२

टिप्पणी–कौसुंभम्–कुसुंभस्य पत्रम् (करडईची भाजी) ४४२

४९ सार्षपशाकगुणाः ।

४४३–सक्षारं मधुरं विरूक्षमुष्णं गुरु च सार्षपम् ॥ १४७
शाकानामवरं बद्धविण्मूत्रं सर्वदोषकृत् ।

४४३–सार्षपं शाकं, ईषत्क्षारगुणयुक्तं, मधुरत्वादियुक्तं, शाकानां चावरमश्रेष्ठं, मूत्रं विशं च बध्नाति, त्रिदोषकरं च ४४३

टिप्पणी—सार्षपम्–सर्षपक्षुपस्य पत्रम् (मोहरीची भाजी) सर्षपस्य नामानि–'सर्षपः कटुकः स्नेहस्तुन्तुभश्च कदम्बकः । गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते' इति ४४३

५० बालमूलकगुणाः ।

४४४–यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकम् १४८
तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ।
गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ॥　　१४९
स्वराग्निसादोदावर्तपीनसांश्च

४४४–बालं सूक्ष्मं मूलकं त्रिदोषनाशम्, लघु, किंचिदुष्णवीर्यं, गुल्मादींश्च नाशयति । कीदृग्बालमित्युक्तमत आह–यद्बालमव्यक्तरसमस्फुटमाधुर्यादि, ईषत्क्षारं–क्षारं जिह्वादिवैशद्यकृत्, किञ्चिद्व्यक्ततिक्तत्वं च । एवंविधं सूक्ष्मं मूलकमेवंगुणयुक्तम् । अयं जातिविशेषः । तथा च बालमूलकस्य कन्दमूलकबीजदेशकालसंस्थानपरिणतिविशेषाद्भिन्नजातीयत्वं प्रसिद्धमेव काश्मीरेषु ४४४

टिप्पणी—मूलकगुणानाह–तत्र बालमूलकगुणानाह– यद्बालमिति । बालं–कोमलम् । तस्य तिस्रोऽवस्थाः– १ प्रथमम्व्यक्तरसम्, २ तत ईषल्लवणम्, ३ तत ईषत्तिक्तम् तदवस्थात्रयेऽपि दोषहरत्वादिगुणम् । यावद्धि चाव्यक्तरसान्वितानि नवप्ररूढानि च मूलकानि, तावल्लघुदीपनानि पित्तानिलश्लेष्महराणि चैव भवन्ति ४४४

५१ वृद्धमूलकगुणाः ।

४४५–　　　　महत् पुनः ॥
गुरूष्णाकटुकं स्वादुविपाकं सर्वदोषकृत् ॥　　१५०
गुर्वभिष्यन्दि च

४४५–महत् पुनः स्थूलं, मूलकं, गुरूष्णवीर्यं, रसे कटुकं, विपाके मधुरं, त्रिदोषकरं च ४४५

टिप्पणी—महत्–जरठम् । वृद्धस्य च मूलकस्याप्यनेका अवस्थाः संभवन्ति । तत्र चास्याद्यावस्थायां किंचित्त्रिदोषकरम् । अन्त्यावस्थायां त्वतिशयेन त्रिदोषकरत्वं वेद्यम्४४५

५२ स्निग्धसिद्धमूलकगुणाः ।

४४६–　　　　स्निग्धसिद्धं तदपि वातजित् ॥

४४६–तदेवंगुणयुक्तमपि घृतमांसादिना सिद्धं गुर्वभिष्यन्दि, वातजिच्च४४६

टिप्पणी—स्निग्धसिद्धगुणानाह–स्निग्धमिति । स्निग्धैः घृतमांसरसादिभिः साधितं स्निग्धसिद्धम् । यद्दोषलं महदपि स्निग्धसिद्धं वातघ्नम् । किं पुनर्यदोषघ्नं बालम् ? इत्यपि शब्दार्थः ४४६

५३ शुष्कमूलकगुणाः ।

४४७–वातश्लेष्महरं शुष्कं सर्वम्

४४७–शुष्कं च महदपि मूलकं वातश्लेष्महरम् । सर्वं च मूलकं बालं महच्च शुष्कम् ४४७

टिप्पणी—शुष्कमूलकगुणानाह–वातश्लेष्महरमिति । सर्वबालं, वृद्धं च मूलकं शुष्कं सत्, वातश्लेष्महरमिति भावः ।

---

३२ ' फं कण्डीरचि–क. ' फं कण्डीर चि ' ख. ३३ रूक्षोष्णं क'–ख. ३४ स्वादु विपाके स'–ख,

५४ अनग्निसिद्धमूलकगुणाः ।

४४८- आमं तु दोषलम् ॥ १५१

४४८-आर्द्रं चाममनग्निपकं सदोषकृद्देहस्यापथ्यत्वात् । दोषधात्वादीनामुत्क्लेशप्रायपरिणामकरं च । अग्निसिद्धं तु यथास्वरूपमुक्तम् ४४८

टिप्पणी—आमामिति-आमम्-अनग्निपकं पुनर्मूलकं हरितकत्वेन यद्वक्ष्यते तद्दोषलम् । अत्र सर्वमित्यनुवर्तते । तेन बालं, महत्, शुष्कं च मूलकं ग्राह्यम् ४४८

५५ पिण्डालुकगुणाः ।

४४९-कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः॥

४४९—पिण्डालू रसे कटुकः, वीर्ये उष्णः वातश्लेष्मनाशनः, पित्तवर्धनश्च ४४९

टिप्पणी—पिण्डालुः-वाराहीकन्दः ( डुकरकन्द ), केचन पिण्डालुशब्देन मधुरं पिण्डकन्द( रताळें )माहुः तच्चिन्त्यम् ४४९

५६ कुठेरादिगुणाः ।

( हरितवर्गः )

४५०-कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः । १५२
धान्यतुम्बुरुशैलेययवानीशृङ्गिवेरकाः ॥
पर्णासो गृञ्जनोऽजाजी जीरकं गजपिप्पली ।१५३
फणिर्जार्जकजम्बीरखराह्वाकालमालिकाः ॥
दीप्यकः क्षवकैद्वीपिवस्तगन्धादि बद्धविट् । १५४
रसे पाके च कटुकं दोषोत्क्लेशकरं लघु ॥
विदाहि रूक्षतीक्ष्णोष्णं दृक्शुक्रक्रिमिनाशनम्।१५५
वर्गो हरितकाख्योऽयमुपदंशेषु युज्यते ॥
वासनो व्यञ्जनानां च हृद्यो दीपनरोचनः । १५६

४५०-कुठेरादिकं वस्तगन्धान्तं हरित एवोपयोगाद्धरितवर्ग एवोच्यते । आदिग्रहणादन्येषामेवंरसादियुक्तानामेवमुपयोगवतां ग्रहणम् । अस्य चाऽग्निपकस्योपयोगे गुणविशेषप्रादुर्भावः । कुठेरादिकं हरितकं विशं पुरीषं वध्नाति ग्रथयति । विपाके च कटुकम् । दोषान्वातादीनुत्क्लेशयति, यत्किञ्चित्कोपयन् स्थानाच्चलयति तदुत्क्लेशकरम् । लघु, विदाहि, रूक्षम्, उष्णवीर्यम्, तीक्ष्णं, दृगादिनाशनं च । अयं च कुठेरादिर्यो हरितकाख्यो वर्ग उपदंशेषु युज्यते । उपदंशो येन सहान्नं भोक्तुं युज्यते । व्यञ्जनानां च नानाविधानां भोजनोपयोगिनां वासनः सौगन्ध्यादिकरः, हृद्योऽग्निदीपनो, रोचनश्च । कुठेरकः-वैकुण्ठकः । शिग्रुःसोभाञ्जनम् । सुमुखः-कटुपत्रकः । आसुरी-राजिका । फणिर्जकः-फणी । अर्जकः-जात्या सूक्ष्मपत्रः । जम्बीरः-खरपत्रः । काश्मीरेषु तुम्बुरुः । खराह्वा-हस्तिमयूरकः । कालमालः-कृष्णकुठेरकम् । दीप्यकः-अजमोजः ४५०

टिप्पणी—कुठेरः-वैकुण्ठः, ( पांढरी तुळस ), सुरसः-तुलसी ( तुळस ), सुमुखः-वनबर्बरिका ( रानतुळस ), आसुरी-राजिका, रक्तसर्षपः (तांबडी मोहरी ), भूस्तृणम् गन्धवहुलस्तृणविशेषः ध्यामकम् ( रोहिषगवत ), धान्यम्-कुस्तुम्बुरुः(कोथिंबीर), तुम्बुरुः-नेपालधान्यकम्, अयं वृक्षः तत्फलानि (चिरफळ)'कुस्तुम्बुरुसमकृत्या तुम्बरूणि वदन्ति च'। शैलेयम्-( दगडफूल ), यवानी-वातारिः शूलहन्त्री ( ओंवा ), शृङ्गवेरकम्-आर्द्रकम् ( आलें ), पर्णासः-तुलसीभेदः, गृञ्जनः-पलाण्डुभेदः । उक्तं च-' गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना । सूक्ष्मनालाग्रपत्रत्वाद्भिद्यतेऽसौ पलाण्डुना ' इति ( बादशाहसालव ), रक्तलशुन इत्यपि केचित् । अजाजी-कृष्णजीरकः (काळें जिरें), जीरकम्-जरणः ( जिरें ), गजपिप्पली-चविकायाः फलम् ( गजपिंपळी ), फणिर्जः-तीक्ष्णगन्धतुलसी । फाणिज्ज इत्यपि पठन्ति ( मरवा ), अर्जकः-क्षुद्रतुलसी ( सबजा ), कालमालः-कृष्णतुलसी ( काळी तुळस ), क्षवकः-छिक्काकरः, ( नाकछिंकणी ) द्वीपी-चित्रकः ४५०

५७ सुरसगुणाः ।

४५१-हिध्माकासविषश्वासपार्श्वरुक्पूतिगन्धहा । सुरसः

४५१-सुरसस्तु हिध्मादीन्नाशयति ४५१

५८ सुमुखगुणाः ।

४५२- सुमुखः शोफगन्धहा

४५२-सुमुखः श्वयथुदुर्गन्धौ नाशयति ४५२

५९ धानकागुणाः ।

४५३- धानका पुनः ॥ १५७
कषायतिक्तमधुरा मूत्रला न च पित्तकृत् ॥

४५३-धानका रसे कषायतिक्तमधुरा, मूत्रकरी, पित्तं च न करोति ४५४

६० खराह्वगुणाः ।

४५४-खराह्वा बस्तिशूलघ्नी

४५४-खराह्वा बस्तिशूलं नाशयति ४५४

६१ चित्रकगुणाः ।

४५५- चित्रको दीपनः परम् । १५८

४५५-चित्रकोऽत्यर्थमग्निदीपनः४५५

६२ लशुनगुणाः ।

४५६-पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः ।
तीक्ष्णोष्णो लशुनः कन्दे कटुपाकरसः सरः ॥१५९
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ।
भग्नसन्धानकृद्बल्यो रक्तपित्तप्रदूषणः ॥ १६०
किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ।
सहिध्मापीनसश्वासकासान्हन्ति रसायनम्॥ १६१

४५६-लशुनः पत्रे ईषत्क्षारो, मधुररसश्च । मध्ये पत्रात्कठिने भागे मधुररसः, पिच्छिलश्च । कन्दे मूले तीक्ष्णोष्णवीर्यो, रसे विपाके च कटुकः, सरो हृद्यः केश्यस्त्वा-

३५ ' स्तृणम्-क. घ. ३६ ' नीशृङ्गवेरिकाः क. ख. ३७ ' राशाका ' – क. ख. घ. ३८ दीपकः – क्ष ' – क. ३९ क्षको द्वीपी ब'-घ. ४० ' ध्माकासवमिश्वास ' घ. ४१ 'सुमुखः शोफगरहा – क.ख., सुमुखो नातिविदाही गरशोफहा-घ. ४२ ' राशाव ' – क. ख.



मूलकम्
( सू. ४४८ )



पलाण्डुः ( सू. ४५७ )



सूरणः ( सू. ४५८ )



दाडिमम् ( सू. ४६३ )



द्राक्षाफलानि ( सू. ४६२ )



पनसः ( सू. ४६६ )



भूकन्दः ( सू. ४५९ )

द्विगुणयुक्तः, किलासादींश्च नाशयति । किलासः श्वित्रः । रसायनमिव रसायनं देहहितम् ४५६

**टिप्पणी**—पञ्च इति–अस्यैव रसोन इत्यन्वर्थः पर्यायः । रसैनैकेनोनो रसोनः । अम्लरसवर्जितः । तथा चोक्तम्–'पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः । तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः ' इति । '**कटुकश्चापि मूलेषु, तिक्तः पत्रेषु संस्थितः । नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः । बीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः**' इति च भावमिश्रः । लशुनस्योत्पत्त्याद्युत्तरे स्थाने वक्ष्यति (उ. अ. ४९) ४५६

६३ पलाण्डुगुणाः ।

**४५७–[44]पलाण्डुस्तद्गुणैर्न्यूनो विपाके मधुरस्तु सः**
**कफं करोति नो पित्तं केवलानिलनाशनः ॥ १६२**

४५७–पलाण्डुस्तद्गुणैर्लशुनगुणैर्न्यूनः हीनः विपाके तु मधुरः कफं करोति पित्तं न करोतीति सम्बन्धः । न करोतीति पित्तं न विनाशयतीति तात्पर्यार्थः । वातं च केवलमन्यदोषासंसृष्टं नाशयति ४५७

**टिप्पणी**—पलाण्डिवति–पलाण्डुर्मूलशाकविशेषः(कांदा) स च श्वेतरक्तभेदेन द्विधा । 'पलाण्डुर्मधुरो वृष्यः कटुःस्निग्धोऽनिलापहः । बल्यः पित्ताविरोधी च कफकृद्रोचनो गुरुः' इतिद्रव्यगुणसंग्रहे । अस्याग्रे–' कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा । तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न सः ' इति हृदयपाठः ४५७

६४ सूरणगुणाः ।

**४५८–दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ।**
**विशेषादर्शसां पथ्यो**

४५८–सूरणोऽग्निदीप्तिरुचिकरः, श्लेष्मनाशनो विशदो लघुः, अर्शसामतिपथ्यश्च ४५८

६५ भूकन्दगुणाः ।

**४५९–　　　　भूकन्दस्त्वतिदोषलः ॥ १६३**

४५९–भूकन्दोऽत्यर्थं त्रिदोषकरः । स च प्रसिद्धः ।

**टिप्पणी**—भूकन्दः–भूस्फोटाख्यः प्रावृड्भवः । तथा चोक्तम्–' उक्तं संस्वेदजं शाकं भूमिछत्रं शिलीन्ध्रकम् । क्षिति–गोमय–काष्ठेषु वृक्षादिषु तदुद्भवेत् । श्वेताः शुभ्रस्थली-काष्ठवंशगोव्रजसंभवाः । नातिदोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः ' इति ४५९

६६ पत्रपुष्पादिशाकगुणाः ।

**४६०–[45]पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ।**

४६०–पत्रादीनां च शाकहरितकयोग्यक्रमाद्यथोत्तरं गुरुत्वम् । पत्रशाकं तावत्प्रथममनपेक्ष्य गुरु, ततः पुष्पशाकं ततः फलशाकं, ततो नालशाकं, ततश्च कन्दशाकम् इत्येवं हरितकेषु गुरुत्वं विज्ञेयम् । अत्राप्युत्सर्गापवादोपबृंहकवचनादिकं चिन्त्यम् । अत्र शाकानां हरितकानां च येषां नामानि नोक्तानि तेषां देशभाषादिविद्भ्योऽधिगम्यापभ्रंशसंस्कारादुपयोगविशेषाच्च ज्ञातव्यानि ४६०

**टिप्पणी**—टीकायामुत्सर्गापवादेत्यादि–मूलके तु वैपरीत्यं दृश्यते–तस्य कन्दे लघुत्वम् ४६०

६७ शाकेषु वरावरत्वे ।

**४६१–[46]वरा शाकेषु जीवन्ती सार्षपास्त्ववराः परम् १६४**
**इति शाकवर्गः ।**

४६१–अन्यत्सुबोधम् । ४६१ इति शाकवर्गः ।

**टिप्पणी**—शाकानां तारतम्यमाह–वरा शाकेष्विति । परमिति–अन्यान्यपि प्रशस्तानि, जीवन्ती तु प्रशस्ततरा ४६१

(६) फलवर्गः

१ द्राक्षागुणाः ।

**४६२–द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ।**
**स्वादुपाकरसा स्निग्धा सकाषाया हिमा गुरुः १६५**
**निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ।**
**तृष्णाकासज्वरश्वासस्वरभेदक्षतक्षयान् ॥ १६६**

४६२–फलान्युच्यन्ते–तेषां च द्राक्षा श्रेष्ठा । अतः सैवादौ गृह्यते । द्राक्षा सर्वफलानामुत्तमा, वृष्यत्वादिगुणयुक्ता, लघुः, अनिलपित्तादींश्च नाशयति । सकषाया माधुर्यात्स्वल्पं कषायत्वं तत्रास्तीत्यर्थः ४६२

**टिप्पणी**—फलानामपि केषांचिच्छाकवदुपयोगा[illegible]दानीं फलवर्गमाह । तत्र श्रेष्ठत्वादग्रे द्राक्षागुणानाह–[illegible] । फलोत्तमेति–उत्तमेति सिद्धे फलग्रहणमुत्तमेभ्योऽप्युत्तमार्थम् । तथा चोत्तमानि फलान्युक्तानि सुश्रुतेन–'**दाडिमामलकं द्राक्षा खर्जूरं सपरूपकम् । राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते** ' (सू. अ. ४६–२३४) अत्रेदमाकूतम्–दाडिमामलकमातुलुङ्गान्यम्लफलेषु श्रेष्ठानि, द्राक्षाखर्जूरराजादनानि मधुरफलेषु, परूषकं कषायेषु । यद्यप्यम्लरसः पित्तजनकस्तथापि दाडिमामलकेऽप्यम्लेऽपि न पित्तजनके (अ. सं. सू. अ. १८) द्राक्षा यदि न लभ्यते तदा काश्मरीफलं ग्राह्यम् ४६२

२ स्वादुदाडिमगुणाः ।

**४६३–उद्रिक्तपित्ताञ्जयति [1]त्रिदोषान् स्वादु दाडिमम् ।**

४६३–स्वादु मधुरं दाडिममाधिकपित्तं सन्निपातं नाशयति *

३ अम्लदाडिमगुणाः ।

**४६४–पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् १६७**

४६४–अम्लं दाडिमं न पित्ते विरुद्धं नाति चोष्णवीर्यं, वातश्लेष्मनाशनं च ४६४

**टिप्पणी**—पित्ताविरोधीति–न पित्तं कुरुते । न च पित्तं शमयति । पित्तोदासीनमिति भावः ४६४

४ सर्वविधदाडिमगुणाः ।

**४६५–सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ।**

४६५–सर्वं दाडिमम् । मधुरमम्लं मधुराम्लं च हृद्यत्वादिगुणयुक्तम् ४६५

५ मोचादिगुणाः ।

**४६६–मोचखर्जूरपनसनालिकेरपरूषकम् ॥ १६८**
**आम्रातततालकाश्मर्यराजादनमधूकजम् ।**

---

४४ पलाण्डु ' – क. ख. घ. ४५ पुष्पे पत्रे – क. ख. ४६ इदंश्लोकार्धं कपुस्तके नास्ति १ 'सश्रमश्वासस्व'–घ. २ 'ति त्रीन्दो'–क. ख. * टिप्पणी—उद्रिक्तम्–अतिरिक्तं पित्तं येषां, तान् ४६३.

सौवीरबदराङ्कोलफल्गुश्लेष्मातकोद्भवम् । १६९
वातामाभिषुकाक्षोडमुकूलकनिकोचकम्
ऊरुमाणं प्रियालं च बृंहणं गुरु शीतलम् । १७०
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ।
स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् १७१

४६६-मोचादि प्रियालान्तं बृंहणत्वादिगुणयुक्तम् । मोचं कदलीफलम् । आम्रातकं पीतनकम् । राजादनं वानरप्रियम् । सौवीरं कर्णीकवदरम् । क्षतः उरःक्षतः । क्षयो धातुक्षयः ।

टिप्पणी—मोचेत्यादि-मोचम्-कदलीफलम् ( केळें ), खर्जूरम्-खर्जूरीफलम् ( खारीक ), पनसः—कण्टकिफलम् ( फणस ), नारिकेलम्-त्र्यक्षम् ( नारळ ), परूषकम्-धन्वन( धामण ) सदृशं मृद्वल्पास्थिफलम् (फाल्सा), आम्रातः—पीतनकः ( आंबाडा ), तालः—तृणराजः ( ताडाचें फळ ), काश्मर्यम्-श्रीपर्णीफलम् ( शिवणीचें फळ ), राजादनम्-कपिप्रियम् ( खिरणी, अमदावादी मेवा ), मधूकजम्-मधूकफलं ( मोहाचें फळ ), अत्र मधूकपुष्पमपि ग्राह्यम्, गुणाभेदात् । सौवीरम्-सुवीरा-यमुनानदी, तस्या यस्मिन्देशे स्थितिः तद्देशजम् । महत्तरं बदरीफलम्, मरुदेशजम् । एतच्चामपकावस्थासु मधुरमेव । बदरम्-महत्प्रमाणबदरम्, बदरीफलं पञ्चविधम् । तथा चोक्तम्-कर्कन्धुकोलं बदरं सौवीरं सिञ्चतीफलम् । यथोत्तरं महत्स्वादु पञ्चधा बदरीफलम् इति । तत्र कोलकर्कन्धुनी स्वादुत्वाभावान्नात्र पठिते । वक्ष्यति हि 'तथाम्लं कोल-कर्कन्धुलिकुचाम्रातकारुकम्' ( अ. सं. ७ ... ),सिञ्चतफलं तिक्तकषायत्वान्नोक्तम्,वक्ष्यति च 'बृंहणं वातपित्तघ्नं स्निग्धं सिञ्चतिकाफलम्' (अ. सं. अ. ७) अङ्कोलः—अङ्कोठफलम् । अङ्कोठ अखरोटविशेषः । अत्र बदरं कोलमित्यपि पाठः । फल्गु—काकोदुम्बरिका स्वनामख्यातः खरपत्रो वृक्षविशेषः (काळा उंबर) अत्र केचन फल्गुशब्देन रामोदुम्बरीकाफलम् ( अंजीर ), इत्याहुः । श्लेष्मातकोद्भवं-श्लेष्मातकफलम् । शेलुः ( भोंकर ), वातामः-वातामस्य फलम् । तच्च स्निग्ध-मधुरमम्लं नेत्रोपमम् ( बदाम ), अभिषुकः—अभिषुक-नाम्ना ख्यातस्य वृक्षस्य फलम् । काबेलादौ प्रसिद्धः फल-विशेषः इति वै. श. सिं. आंगूर इति हारणचन्द्रः, अभिषु-रिति लोके इति डल्हणः, औत्तरापथिक इति चक्रः, स्याराटमित्यरुणदत्तः । पेस्ता इत्यपि केचन । अक्षोटः—गिरिजपीलुः मदनफलाकारः, मध्ये किञ्चिदुन्नतेरेखान्वितः ( अक्रोड ), मुकूलकम्-औत्तरापथिको मिष्टफलविशेषः (चिल्घोझे), अपरेऽक्षोटभेदमाहुः । निकोचकम्-मिष्टफल-विशेषः (पिस्ते) ,ऊरुमाणम्-औत्तरापथिकं मधुरं स्निग्धं च फलम् ।प्रियालः—चारः (चारोळी)रक्तपित्तप्रसादनमिति-रक्तपित्तयोर्निर्मलीकरणम् ४६६

६ नारिकेरगुणाः ।

४६७-नालिकेरं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ।
बलमांसकरं हृद्यं बृंहणं बस्तिशोधनम् ॥ १७२

४६७-सुबोधम् ४६७

टिप्पणी—पूर्वोक्तानां फलानां केषांचिद्गुणविशेष-माह-नारिकेलमिति । बस्तिशोधनमिति-बस्तिरम्बुवहानां स्रोतसां स्थानं तस्य विशोधनम् ४६७

७ मोचफलगुणाः ।

४६८-मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ।
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥ १७३

८ राजादनफलगुणाः ।

४६९-स्निग्धं स्वादु कषायं च राजादनफलं गुरु ।

९ तालफलगुणाः ।

४७०-फलं तु पित्तलं तालं सरं

४७०-तालं फलं पित्तलं सरं च ।

टिप्पणी—फलमिति-यत्तु-' फलं स्वादुरसं तेषां तालजं गुरु पित्तजित्', इति श्रुतेतन ( सु. अ. ४६-१७९ ), पित्त-हरत्वमुक्तम् तत्पक्वविषयम् ४७०

१० काश्मरीफलगुणाः ।

४७१- काश्मर्यजं हिमम् ॥ १७४

४७२-शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ।

४७१-काश्मर्यजं हिमादिगुणम् ४७१

११ मधूकजगुणाः ।

४७२-मधूकजमहृद्यं तु

४७२-मधूकफलमहृद्यम् १७५

१२ बदरगुणाः ।

४७३- बदरं सरणात्मकम् ॥ १७५

४७३-बदरं सरणशीलम् ।

१३ वातामादिगुणाः ।

४७४-वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ।

४७४-वातामादीनां गुणविशेषप्रदर्शनपरं निर्द्धारणम्।वाता-मादिकं पित्तश्लेष्मकरमत्यर्थमुष्णं च वातहरं स्निग्धं च ४७४

टिप्पणी—वातामादीति—आदिशब्देनाभिषुकाक्षोडमु-कूलकनिकोचकोरुमाणानां ग्रहणम् ४७४

१४ प्रियालगुणाः ।

४७५-परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ॥ १७६

४७५-प्रियालफलस्य शीतवीर्यत्वापवादोष्णत्वशङ्कायामि-दमुच्यते-अनुष्णमिति ४७५

टिप्पणी—अनुष्णमिति —नञत्र विरुद्धार्थः । उष्ण-शब्देन वीर्यं पित्तं च, तेन शीतलं पित्तघ्नं च प्रियालफल-मित्यर्थः ( सु. सू. अ. ४६-१५६ ). ४७५

१५ प्रियालमज्जागुणाः ।

४७६-प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।

४७६-प्रियालमज्जा प्रियालबीजम् । तच्च मधुरत्वादिगुण-युक्तम् ४७६

टिप्पणी—प्रियालमज्जेति-अस्थ्यन्तर्वर्ति बीजं मज्जा४७६

१६ कोलमज्जागुणाः ।

४७७-कोलमज्जा गुणैस्तद्वत्तृट्छर्दिः कासजिच्च सः १७७

४७७-बदरमज्जा गुणैस्तद्वत् प्रियालमज्जवत् । बदरस्य तु विशेषः तृडादिनाशकत्वम् ४७७

टिप्पणी—कोलमज्जेति—कोलं बदरम् ४७७

१७ तिन्दुकादिगुणाः ।

४७८-तिन्दुकाश्मन्तकासीनफलिनीर्बिम्बितोदनम् ।

३ °डमकूल°-क. ४ °कोचनम्-क. च. ५ ° द्च्छर्दितृट्कास °-ख. ६ ° विम्वतो °-क. ख.



नारिकेलवृक्षः ( सू. ४६७ )



मोचफलानि ( सू. ४६८ )



आम्रफलानि ( सू. ४८६ )

टङ्काश्वकर्णबकुलगाङ्गेरुधवधन्वनम् ॥ १७८
श्वेतपाकंकपित्थानि सिञ्चतीभव्यजाम्बवम् ।
क्षीरिवृक्षभवं बीजं पौष्करं कफपित्तजित् ॥ १७९
कषायमधुरं रूक्षं शीतलं गुरु लेखनम् ।
विबन्धाध्मानजननं स्तम्भनं वातकोपनम् ॥ १८०

४७८–तिन्दुकादि पुष्करबीजान्तं कफपित्तजित्त्वादिगुणयुक्तम् । सिञ्चती काश्मीरेषु वृक्षबदरी । सा च मधुरा। पुष्करबीजस्यानग्निपकस्योपयोगे फलगुणत्वम् । क्षीरिवृक्षाये शस्त्रादिक्षताः क्षीरं स्रवन्ति । विबन्धः स्रोतोभिर्दोषादीनामवहनम् ४७८

टिप्पणी—तिन्दुकेत्यादि–तिन्दुकः–नीलसारः (टेंभुर्णी), अश्मन्तकः—यमलपत्रकः ( आपटा ), बिम्बी–तुण्डी ( तोंडलें ), तोदनम्–राजप्रियम् ( तोरण ), टङ्कः–कपित्थम् ( कवठ ), काश्मीरे स्वनामप्रसिद्धं बहुप्रकारमिति डल्हणः । नीलकपित्थमिति वैद्यकशब्दसिन्धुः । चरके तु टङ्ककपित्थे पृथक्पृथगुल्लिखिते, तद्द्वयं किमिति द्रष्टव्यम् । कपित्थजातिनिर्देशार्थमित्यस्मत्तर्कः । अश्वकर्णः–( भेंडीचें झाड ), 'पारोसा पिंपळ' इति केचन । 'पूर्वदेशेऽश्वमुण्ड अश्वत्थसदृशः' इति डल्हणः । बकुलः–स्थिरकुसुमः ( बकुळीचें फळ ), गाङ्गेरुः–नागबला तस्याः फलम् ( चिकण्याचीं फळें ), धवः–शुक्लवृक्षविशेषः ( धावडा ), धन्वनः–रक्तकुसुमस्वादुफलपिच्छिलत्वग्विशिष्टो बदरीदलाकारदलो वृक्षविशेषः ( अ. हृ. को. ), धन्वङ्ग इति भावप्रकाशपाठः ( धामण ), श्वेतपाकम्–पाककाले पाण्डुरं फलम् । कपित्थम्–कपिप्रियम् ( कवठ ) कपित्थजातिनिर्देशार्थं पुनरस्यग्रहणम् ; सिञ्चती–बदरीफलविशेषः 'अतिमधुरो मुष्टिप्रमाण उत्तरापथजः' इति डल्हणः । भव्यम्–कर्मरङ्गम् (करंबेळ–कर्मळ इति कोकणे),जाम्बवम्–जम्बूवृक्षस्य फलम् (जाम्भूळ), क्षीरिवृक्षाः–१अश्वत्थः, २ उदुम्बरः,३न्यग्रोधः (वड),४ प्लक्षः (पिंपरी), इत्यादयः क्षीरप्रधाना वृक्षाः । तेषां बीजानि । पौष्करम्– पातालपद्मिनीति ख्यातो काश्मीरदेशप्रसिद्धः कन्दविशेषः, पुष्करमूलम् ( बाळवेखण्ड ), पुष्करमूलाभावे प्रतिनिधित्वेन कुष्ठं गृह्यते ४७८

१८ कपित्थगुणाः ।

४७९–कपित्थमामं कण्ठघ्नं कषायाम्लं त्रिदोषकृत् ।
पक्वं रुच्यं,कषायाम्लं स्वादु हिध्मावमिप्रणुत्८११
दोषघ्नं षाडवारिष्टरागयुक्तिषु पूजितम् ।
विषघ्नमुभयं ग्राहि कपित्थान्येवमादिशेत् ॥ १८२

४७९–कपित्थमाममपक्वं स्वरनाशनं, रसे कषायाम्लं, त्रिदोषकरं च । पक्वं रुचिकरं, रसे च कषायाम्लं, मधुरं, हिध्माच्छर्दिनाशनं, त्रिदोषघ्नं, षाडवादियोजनासु च पूजितम् । उभयमामं पक्वं च विषनाशनं, संग्रहणं च । एवं कपित्थान्यादिशेत् रसविशेषेण नानाविधानि कपित्थानि सम्भवन्ति । तान्यनया दिशा कल्पयेदित्यर्थः । तेन कषायाम्लं सदैवामकपित्थगुणं, माधुर्यानुविद्धं तथैव पक्वगुणमिति ४७९

टिप्पणी—कपित्थमिति । त्रिदोषकृदिति–तत्र पित्तानिलौ कफेन संसृष्टावसंसृष्टौ च करोति । कफमपि ताभ्यां संसृष्टमेव करोति 'आमं कपित्थमस्वर्यं कफघ्नं ग्राहि वातलम् ' ( सू. अ. ४६–१४७ ) इति सुश्रुतेन केवलकफघ्नत्वोक्तत्वात् । रुच्यमिति–अत्र हेतुमाह चरकः–' मधुराम्लकषायत्वात्सौगन्ध्याच्च रुचिप्रदम् ( सू. अ. २७–१३७ ) इति । षाडवेत्यादि-षाडवः-षाडवः, खाण्डवः इति पर्यायौ। अयं पानकभेदः । रागोऽपि पानकभेद एव । मधुराम्ललवणं पानकं रागः, मधुराम्ललवणकटुकषायः षाडवः इति । रागो द्राक्षादिमधुरद्रव्यकृतो लोहितप्राय इति केचित् । सितामध्वादिमधुरा रागास्तत्राच्छकान्तयः । ते साम्लाः खाण्डवा लेह्याः ( मोरंबे ), पेयाः ( पन्हें ), चांगुकगालिताः इति तन्त्रान्तरे । अपि च–' द्राक्षाक्वाथः शालिसक्तुपपन्नो मध्वांशाढ्यः सात्रिजातः सधान्यः । गौडोपेतः शर्करापांसुमिश्रो रागो ज्ञेयः षाडवो दाडिमाम्लः ' ' सितारुचकसिन्धूत्थैः सवृक्षाम्लपरुषकैः जम्बूफलरसैर्युक्तो रागो राजिकया कृतः ' इति च दृश्यते । केचित्तु–'रागषाडवाख्यमेकमेव द्रव्यमाहुः-कथितस्तु गुडोपेतं सहकारफलं नवम् । तैलनागरसंयुक्तं विज्ञेयो रागषाडवः ' इति । अरिष्टम् –कथितौषधं मद्यम् । 'पक्वौषधाम्बुसिद्धं यन्मद्यं तत्स्यादरिष्टकम् ' इत्युक्तेः । ' अरिष्टादेस्तु संधानं धातकी लिप्तभाजने । पानमानमरिष्टादेः क्वाथमानसमं जगुः ' इति च केचित् । पूजितम्– प्रशस्तम् ४७९

१९ सिञ्चितिकाफलगुणाः ।

४८०–बृंहणं वातपित्तघ्नं स्निग्धं सिञ्चितिकाफलम् ।

४८०–सिञ्चतिकाफलं बृंहणत्वादिगुणयुक्तम् । ४८०

२० भव्यगुणाः ।

४८१–भव्यं विशदमम्लं च

४८१–भव्यमम्लं सविशदं च ४८१

टिप्पणी—विशदम्–आस्यविशोधनम् ४८१

२१ जाम्बवगुणाः ।

४८२– जाम्बवं त्वतिवातलम् ॥ १८३
विष्टम्भकृदकण्ठ्यं च

४८२–जाम्बवमतिवातकरं, विष्टम्भकरं, स्वरघ्नं च ४८२

२२ क्षीरिवृक्षजगुणाः ।

४८३– साम्लं तु क्षीरिवृक्षजम् ।

४८३–क्षीरिवृक्षफलं साम्लमीषदम्लम् ४८३

२३ अक्षकीफलगुणाः ।

४८४–पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षकीफलम्॥१८४

४८४–अक्षकीफलं पित्तश्लेष्मनाशनं,अम्लरसं,वातलं च ४८४

टिप्पणी—'अक्षकीफलम्–बिभीतकफलम् ( बेहडा ),' इति वदन्ति । ' अक्षकी लता, तस्याः फलम् , तच्च पक्वं फलम् ' इति केचन व्याख्यानयन्ति ४८४

---

७ श्वेतपाकं कपित्था°–क. ख. च. ८ क्षीरिवृक्षफलं बीं°–क. ख. ग. च. ९ °घ्नं खाण्डवारि°–ख. च. १० °त्याये वमा°–क. ख. च. ११ सिञ्चितिकाफ°–च.

२४ बालाम्रगुणाः ।

**४८५-बालं कषायकट्वम्लं रूक्षं वातास्रपित्तकृत् ।**

४८५-आम्रं चूतं बालमसंपूर्णस्वरूपं रसे कषायकटुकाम्लं, रूक्षं, वातास्रपित्तकरं च ४८५

**टिप्पणी**—बालाम्रगुणानाह-बालेति । अत्र सुश्रुतः- 'पित्तानिलकरं बालं, पित्तलं बद्धकेसरम् । हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् । कषायानुरसं स्वादु वातघ्नं बृंहणं गुरु । पित्ताविरोधि संपक्वमाम्रं शुक्रविवर्धनम् ॥ इति ( सू. ४६-१५२-५३ ) ४८५

२५ आम्रगुणाः ।

**४८६-संपूर्णमाम्रमम्लं तु रक्तपित्तकफप्रदम् ॥ १८५**

**स्वादु साम्लं गुरु स्निग्धं मारुतघ्नमपित्तलम् ।**

**हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदम् ॥ १८६**

४८६-पर्यागतमतिक्रान्तपाकं स्वादु साम्लं मधुराम्लरसं,गुरु, स्निग्धं, वातं नाशयति, पित्तं च न करोति, हृद्यं, श्लेष्मादिकरं च ४८६

२६ सहकाररसगुणाः ।

**४८७-सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः ।**

**दीपनः पित्तवातघ्नः शुक्रशोणितशुद्धिकृत् ॥ १८७**

४८७-सहकाराख्यादस आम्रादेव निष्कास्यते । अतोऽत्रोच्यते । सहकाररसो हृद्यत्वादिगुणयुक्तः ४८७

**टिप्पणी**—सहकारेति ग्रन्थान्तरे-' अपुष्पफलवानाम्रः पुष्पितश्चूत उच्यते । पुष्पैः फलैश्च संयुक्तः सहकारः स उच्यते ' इति । विशेषस्तु भावप्रकाशादिभ्यश्च अवगन्तव्यः ४८७

२७ लवलीफलगुणाः ।

**४८८-कषायं रोचनं हृद्यं वातलं लवलीफलम् ।**

४८८-लवलीफलं कषायरसं रोचनत्वादिगुणयुक्तम् ४८८

**टिप्पणी**—कषायमिति- ' घनस्निग्धा हरितांशुः प्रपुन्नाटसदृक्छदा । सुगन्धिमूला लवली पाण्डुकोमलवल्कला ' इति डल्हणः । रोचनत्वे हेतुमाह चरकः-कषायविशदत्वाच्च सौगंध्याच्च रुचिप्रदम् । अवदंशक्षमं ( तोंडी लावण्यास उपयोगी ), हृद्यं वातलं लवलीफलम् ' ( सू. अ. २७-१४४ ), अवदंशक्षममिति-भोज्यद्रव्यान्तरभक्षणे रोचकत्वक्षमम् । व्यञ्जनमिति यावत् । लवली ( रायआंवळे ) ४८८

२८ बिल्वगुणाः ।

**४८९-गुर्वग्निसादकृद्बिल्वं दोषलं पूतिमारुतम् ॥ १८८**

**पक्वं बालं पुनस्तीक्ष्णं पित्तलं लघु दीपनम् ।**

**वातश्लेष्मघ्नमुष्णं च स्निग्धं ग्राह्युभयं परम् ॥१८९**

४८९-बिल्वं गुरु अग्निसादकरं, त्रिदोषकरं, पूतिमारुतं च । पूतिगुणं दुर्गन्धकरं च मारुतमुद्वारादौ करोतीत्येवंगुणं पक्वं बिल्वम् । बालं पुनरपक्वं तीक्ष्णत्वादिगुणयुक्तम् । उभयं बालं पक्वं च स्निग्धं परमत्यर्थं च संग्रहणम् ४८९

**टिप्पणी**—गुर्वग्नीति । पूतिमारुतमिति-पूतिः-सुगन्धिर्मारुतो यस्येति तत्पूतिमारुतम् । पूतिशब्दोऽयं सुगंधवाची । यथा-वनजा मधुककर्कटी पूतिपुष्पीति । तत्र सुगन्धिपुष्पेत्यर्थः एतेन पूतिमारुतं सुगन्धिगन्धं पक्वं बिल्वफलं भवतीत्यर्थः सुपक्वबिल्वसंसर्गी बाह्यपवनः सुगन्धिर्भवति इति डल्हण शिवदासौ । हेमाद्र्यरुणदत्तौ तु पूतिमारुतम्-दुर्गन्ध्यधोवातप्रवर्तकमित्याहतुः ४८९

२९ वृक्षाम्लगुणाः ।

**४९०-वृक्षाम्लं ग्राहि रूक्षोष्णं लघु दीपनरोचनम् ।**

**वातश्लेष्महरं**

४९०-वृक्षाम्लं तिन्त्रिणीकं संग्रहणत्वादिगुणयुक्तम् ४९०

**टिप्पणी** —वृक्षाम्लं-रक्तपूरकम् ( कोकम ), ४९०

३० कोशाम्रगुणाः ।

**४९१- किञ्चिदूनं कोशाम्रजं ततः ॥ १९०**

४९१-कोशाम्रजं फलं तथा वृक्षाम्लगुणैः किञ्चिदूनम् ४९१

**टिप्पणी**—कोशाम्रजम्-वनाम्रः ( रायवळ आंबा ) बहुकीटमाम्रफलमिति हारणचन्द्रः ४९१

३१ करञ्जगुणाः ।

**४९२-फलं करञ्जं विष्टम्भि पित्तश्लेष्माविरोधि च ।**

४९२-करञ्जफलं विष्टम्भि, पित्तश्लेष्मणि च न विरुद्धम् ४९२

**टिप्पणी**—करञ्जम्-नक्तमालः स्वनामख्यातो वृक्षविशेषः ४९२

३२ शमीफलगुणाः ।

**४९३-गुरूष्णमधुरं रूक्षं केशघ्नं च शमीफलम् ॥ १९१**

४९३-शमीफलं मधुरं, रूक्षं, केशघ्नं, गुरूष्णवीर्यं च ४९३

**टिप्पणी**—शमीफलम्--शंकुफलायाः फलम् ( शमीचें फल-शेंग ) ४९३

३३ पीलुगुणाः ।

**४९४-कटुपाकरसं पीलु तीक्ष्णोष्णं भेदि पित्तलम् ।**

**क्रिमिगुल्मोदरगरप्लीहार्शःकफवातजित् ॥ १९२**

**सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ।**

४९४-पीलुफलं पाके रसं च कटुकं, तीक्ष्णत्वादिगुणयुक्तं, क्रिम्यादीन्नाशयति । मधुरमपि सतिक्तं च जात्या यत् पीलु, तत् नात्युष्णवीर्यं, त्रिदोषघ्नं च ४९४

३४ नीपादिगुणाः ।

**४९५-नीपं शताङ्क्षिकं प्राचीनागरं तृणशूल्यजम् ॥१९३**

**अस्मादल्पान्तरगुणमैङ्गुदं सविकङ्कतम् ।**

४९५-नीपादिविकङ्कतान्तं फलमस्मात् सतिक्तस्वादुपीलुतोऽल्पान्तरगुणं स्तोकगुणमित्यर्थः । नीपो धूलिकदम्बः प्राचीनागरकमामलकसदृशं कृष्णलोहितम् ४९५

**टिप्पणी**—नीपम्-नीपः कदंबः तस्य फलम् । शताङ्क्षिकम्-शतपुष्पा ( बाळंतशोप ), प्राचीनागरकम्-प्राचीनामलकमिति पाठः ( पाणआंवळा ), वंगदेशे प्रसिद्धः । जग्गम इति मुंबईप्रदेशे । तृणशल्यजम्-तृणशून्यजमिति चरकपाठः तदर्थः केतकीफलम्, मल्लिकेति केचित् । ऐङ्गुदम् इङ्गुदीफलम् ( हिंगणबेट ), पुत्रं जीवक इत्येके । विकङ्कतम्-कण्टकमयः स्रुवावृक्षः, तत्फलम् ( वेहेकळ ) ४९५

१२ साम्लपि °-च. १३ श्लेष्मलं ल °-च. १४ प्राचीनामलकं तृ °-क. ख.

३५ मातुलुङ्गगुणाः ।

**४९६–त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित् ।**
**बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।**
**लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ॥ १९५**
**आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ।**
**गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत् ॥ १९६**

४९६–मातुलुङ्गफलस्य त्वक्–रसे तिक्तकटुका, स्निग्धा, वातनाशिनी च । मांसं–त्वचोऽन्तः बृंहणं, मधुरं, वातपित्तहरं, गुरु च । तस्य मातुलुङ्गस्य केसरमन्तर्मांसभवं लघु कासादींश्च नाशयति (सु.सू. ४६–१४९–१५२) ४९६

**टिप्पणी**—मातुलुङ्गम्–बीजपूरम् ( माहाळुंग ) ४९६

३६ भल्लातकगुणाः ।

**४९७–भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ।**
**तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥ १९७**

४९७–भल्लातकस्य त्वक्, मांसं च बृंहणत्वादिगुणयुक्तम् । तस्य चास्थि तैक्ष्ण्येनाग्निसमं, मेधायै हितमत्यर्थं वातश्लेष्महरम् ४९७

**टिप्पणी**—भल्लातकम्–अरुष्करम् ( बिब्बा ), अग्निसममिति–तीक्ष्णत्वादग्निवत्स्फोटादिकरम् । अथवा अग्निश्चित्रकः तस्य गुणदोषकर्तृतया तुल्यमित्यरुणदत्तः ४९७

३७ पारावतगुणाः ।

**४९८–स्वाद्वम्लं शीतमुष्णं च द्विधा पारावतं गुरु ।**
**रुच्यमत्यग्निशमनं**

४९८–पारावतं द्विधा द्विप्रकारं मधुरमम्लं च । यथासंख्येन मधुरं शीतवीर्यमम्लमुष्णवीर्यम् । उभयमपि गुरु, रुचिकरमत्यग्निशमनं च ४९८

**टिप्पणी**—पारावतम्–पालेवतमिति पाठः । एतत्फलं कामरूपे (आसाम) प्रसिद्धं पाककाले धवललोहितम् ( सफरचंद ) ४९८

३८ आरुकगुणाः ।

**४९९– रुच्यं मधुरमारुकम् । १९८**
**पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम् ।**

४९९–मधुरमारुकं रुचिकरम् । पक्वं च सत्सुजरं, किञ्चिदुष्णवीर्यं, किंचिद्गुरु, किंचिद्दोषलं च । दोषलमपथ्यम् । " आरुकं वीरसेनं च वीरा चीनारुकं तथा । विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम् " ४९९

**टिप्पणी**—आरुकम्–वीरसेनम् ( अलुबुखार ) आशु जरां याति–शीघ्रं पच्यते । नात्युष्णं गुरु दोषलम्–अम्लारुकापेक्षया । अत एव दोषशब्देन पित्तश्लेष्माणौ ग्राह्यौ ४९९

३९ अम्लद्राक्षादिगुणाः ।

**५००–द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥ १९९**
**गुरूष्णवीर्यं वातघ्नं सरं सकरमर्दकम् ।**

५००–द्राक्षापरूषकं चार्द्रमशुष्कं करमर्दकं चाम्लं सत् पित्तश्लेष्मकरं, गुरुत्वादिगुणयुक्तं च । करमर्दकं सुषेणम् ५००

**टिप्पणी**—द्राक्षादीनामम्लानां गुणानाह–द्राक्षेति ५००

४० अम्लकोलादिगुणाः ।

**५०१–तथाम्लं कोलकर्कन्धुलिकुचाम्रातकारुकम् ॥ २००**
**ऐरावतं दन्तशठं संतुदं मृगलिण्डकम् ।**
**नातिपित्तकरं पक्वं**

५०१–कोलादिकं मृगलिण्डकान्तमम्लं सकृत्तथेत्यम्लद्राक्षादिवदित्यर्थः । ऐरावतं–नागरङ्गं, दन्तशठं–जम्बीरं, कर्कन्धुर्ह्रस्वबदरी । करमर्दकं पक्वं शुष्कं च नात्यर्थं पित्तकरम् ५०१

**टिप्पणी**—कोलादीनां गुणानाह–तथेति । अम्लानुवृत्तावम्लग्रहणमार्द्रनिवृत्त्यर्थम् । अम्लं यत्कोलादिकं तदार्द्रं शुष्कं वा । तथा–तद्वत्, पित्तप्रदत्वादिगुणम् । कोलकर्कन्धू–बदरभेदौ । लकुचः –क्षुद्रपनसः ( फणस ), आम्रातकः-- पीतनकः (आंबाडा), आम्रातकं द्विविधम्–मधुरमम्लं च । तयोर्मधुरं पूर्वमुक्तम् । ऐरावतम्–नागरंगम् ( नारिंग, संत्रें ) दन्तशठम्–जंबीरम् ( ईडनिंबू ), तुदम्–तूदम् ( तुति ), मृगलिण्डिकम्–बृहत्तूतफलमित्येके । मृगविट्सदृशं कर्कराख्यमिति हेमाद्रिः । बिभीतकमिति सर्वेऽपि चरकटीकाकाराः । ओटफलमित्यपि केचन, करमर्दकम्–कराम्लः ( करवंद ) द्राक्षादेर्मृगलिण्डिकान्तस्य पक्वस्य विशेषगुणमाह–नातिपित्तकरमिति । पक्वं द्राक्षादिकमम्लमनतिपित्तकरम्, स्वादुपाकत्वात् । यत्तु पक्वमप्यम्लत्वं न जहाति तत्किञ्चित्पित्तकरमेव । अत एवोक्तं नातिपित्ताकरामिति ५०१

४१ शुष्ककरमर्दगुणाः ।

**५०२– शुष्कं च करमर्दकम् ॥ २०१**

**टिप्पणी**—शुष्कस्य करमर्दकस्य गुणमाह–शुष्कमिति । चकारेण नातितित्तकरमित्याकृष्यते ५०२

४२ अम्लिकांकोलगुणाः ।

**५०३–दीपनं भेदनं शुष्कमम्लिकाङ्कोलयोः फलम् ।**
**तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः ॥ २०२**

५०३–अम्लिकाफलं अङ्कोलफलं च शुष्कं सद्दीपनं, भेदनं, तृष्णादिनाशनं, कफवातयोश्च पथ्यम् ५०३

**टिप्पणी**—शुष्काणामम्लिकादीनां गुणानाह–दीपनमित्यादि । अम्लिका–चिञ्चा ( चिंच ) 'अम्लिकाकोलयोः' इति पाठान्तरम् । तत्पक्षे अम्लीकाफलं कोलफलं चेति संबंधः । कोलंबदरम् ५०३

४३ लिकुचगुणाः ।

**५०४–फलानामवरं तत्र लिकुचं सर्वदोषकृत् ।**

५०४–सर्वेषां च फलानामवरमप्रधानं लिकुचं त्रिदोषकरं च ५०४

**टिप्पणी**—फलानामिति–सर्वेषां फलानां मध्ये लकुचमवरमप्रधानं त्रिदोषकरं च । एतच्च त्रिदोषकरत्वमनम्लस्य, अम्लस्य वातघ्नेषु कोलादिषु पठितत्वात् इति । अत्र प्रसंगाद्धान्यादिषु प्रशस्तान्युच्यन्ते —

षष्टिका यवगोधूमा लोहिता ये च शालयः ।
मुद्गाढकीमसूराश्च धान्येषु प्रवराः स्मृताः ॥
लावतित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः ।
मयूरवर्मिकूर्माश्च श्रेष्ठा मांसगणेष्विह ॥
सतीनो वास्तुकञ्चुञ्चु (चुक्रम्) चिल्लीमूलकपोतिकाः ।
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥

---

१५ पालेवतं °गु–क. ख. घ. पालेवतं तिंदुकाकारं फलमिति हेमाद्रिः १६ सतद म °–ग.

दाडिमामलकं द्राक्षा खर्जूरं सपरुषकम् ।
राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥
( सु. सू. ४६-३३२-३३५ )५०४

४४ धान्यशाकफलानामप्राशस्त्यकारणानि गुणाः ।

**५०५–हिमानिलोष्णदुर्वातव्याललालादिदूषितम् ॥**
**जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ।**
**अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽति च ॥ २०४**
**धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ।**
**असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥ २०५**
**प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ।**
**इति फलवर्गः ॥**

५०५–इत्यन्नस्वरूपविज्ञानानिष्पत्तौ धान्यादिकमन्नं समाहृत्य हिमानिलेत्यादिनोच्यते। एवंविधं धान्यं त्यजेत् । हिमादि-दूषितमनिलेनातिवृद्धेन केदारस्थं दूषितमुष्णेन चातपादिना दुर्वातेन च पुरोवातादिना । तथा व्यालानां सर्पादीनां लालया दूषितम् । आदिग्रहणेन शवकोथादीनां ग्रहणम् । तथा जन्तुभिः क्रिम्यादिभिर्जुष्टं सेवितं,जले मग्नमाशिखम् । अभूमौ विपरीतभूमौ जातमभूमिजम् । या यस्य धान्यस्यो-चिता भूमिस्ततोऽन्या विपरीता। तथानार्तवमप्राप्तसमयम्। यस्मिन्नृतौ यस्य धान्यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन्नु-त्पादितमित्यर्थः । तल्लक्षणं च रसादीनामपरिपूर्णत्वेन विज्ञेयम् । अन्येन च विजातीयेन धान्येन संयुक्तं केदारे जातम् । अतिजीर्णतया अतिपुराणत्वेन च हीनवीर्यं नष्टशक्ति। एवंविधं धान्यं त्यजेत् । तथा शाकमपि त्यजेत्। कीदृशम् रूक्षसिद्धं रूक्षमेव सिद्धं रूक्षसिद्धं निःस्नेहसिद्ध-मित्यर्थः । अथवा रूक्षेण काञ्जिकादिना सिद्धं रूक्षसिद्धम् । अकोमलं–कठिनम् । स्वभावतः संस्कारतो वा । असंजात-रसमपरिपूर्णस्वरूपमित्यर्थः । तथा सर्वं शाकं शुष्कं त्यजेत्। मूलकं वर्जयित्वा । प्रायेण बाहुल्येन फलमप्येवंविधं त्यजेत्। द्राक्षादेश्च शुष्कस्यापि प्रयोगो दृश्यत इति ज्ञापनार्थं प्रायोग्रहणम् । तथा फलं सर्वमाममप्राप्तपाकं त्यजेत् । बिल्वं तु वर्जयित्वा । तस्यामस्यापि प्रयोगः । अत्र यथा-योगं पूर्ववद्योज्यम् । अत्रापि फलानामप्रसिद्धानां च येषां नामानि नोक्तानि तानि नानादेशकुलेभ्योऽपभ्रंशसंस्कारा-दिनाधिगन्तव्यानि ५०५

इति फलवर्गः ।

**टिप्पणी** —हिमेत्यादि–हिमम्–तुहिनम्,( दव ), अनल इति पाठ एवोचितः अग्रे दुर्वातस्योक्तत्वात्। अनलः–दावा-नलादिः, उष्णम्–आतपः, दुर्वातः–पुरोवातादिः, व्यालाः-सर्पादयः सविषाः । लालादीत्यत्रादिशब्देन कोथमूत्रपुरी-षादीनां ग्रहणम् । एतैः दूषितमुपहतम् । जले मग्न–पानीय-मग्नमशीकम् । अन्यधान्ययुतम्–यथा–रक्तशालिर्यवकेन सह विरुध्यते तथा मुद्गो माषेण । एवं शूकधान्यं विजाती-येन शूकधान्येन । तथा शिम्बीधान्यं विजातीयेन शिम्बी-धान्येन सह विरुध्यते । केचिच्च जीर्णं नवेन मिश्रितमन्य-धान्ययुतमिति वदन्ति । अतिजीर्णतया–बहुवर्षोषितत्वेन । हीनवीर्यम्–नष्टशक्ति, यत्स्वभावतो हीनवीर्यम् । अत्र अतिजीर्णमप्यहीनवीर्यं तन्न त्याज्यम् । शाकमाह–तथेति । तथा–हिमदूषितादिकम् । अन्यधान्यमित्यत्र धान्यस्थाने शाकशब्द ऊहनीयः । रूक्षसिद्धं स्नेहं विना पक्वम् मूलादन्य-च्छुष्कं त्यजेत्, मूलकस्य शुष्कस्यैव गुणवत्त्वात् । फलमाह— प्रायेणेति । एवम्–धान्यवदेव । अत्रापि–अन्यफलयुत-मित्यूह्यम् बिल्ववर्जितमामं फलं त्यजेत् । बिल्वस्यामस्यैव गुणवत्त्वात्। अपिशब्दः प्रायेणेत्यस्य धान्यशाकाभ्यामपि सम्बन्धार्थः। जन्तुजुष्टस्याप्युदुम्बरादेः फलस्य, जलमग्नस्यापि पद्मनालादेः शाकस्य, अन्यधान्ययुतस्यापि कुसुम्भगोधूमा-देर्धान्यस्य च सेव्यत्व दर्शनाच्च प्रायेणेत्युक्तम् ५०५

( ७ ) मात्रादिवर्गः ।

१ अध्यायोपसंहारः ।

**५०६–शूकशिम्बिजपक्वान्नमांसशाकफलाश्रयैः । २०६**
**वर्गैरन्नैकदेशोऽयं भूयिष्ठमुपयोगवान् ।**
**निर्दिष्टो रसवीर्याद्यैर्यथास्वं कर्मसाधने ॥ २०७**

५०६–शूकधान्यादीनामाश्रयैः षड्भिर्वर्गैरयमन्नस्याहारस्यै-कदेशः स्तोकमात्रं निर्दिष्ट इति सम्बन्धः । किंभूतोऽन्नैक-देशः ? भूयिष्ठं प्राचुर्येणोपयोगो यस्यास्ति । कथं निर्दिष्टः ? रसवीर्यविपाकप्रभावसंस्कारादिभिः । यथास्वं कर्मसाधने यथात्मीयकार्यकर्तृत्वे ५०६

**टिप्पणी**—शूकेत्यादि–एवं षष्ठसप्तमाभ्यामध्यायाभ्यामन्न-पानविधिर्विस्तरेण वाग्भटेनोक्तः । अयं विषयः चरकेणैके-नैवाध्यायेनोक्तः सचाध्यायः सूत्रस्थानीय सप्तविंशः । तत्र हि वर्णनक्रम इत्थम्–शूकधान्यवर्गः, शमीधान्यवर्गः, मांसवर्गः, शाकवर्गः, फलवर्गः, हरितवर्गः, मद्यवर्गः, जलवर्गः, दुग्धवर्गः, इक्षुवर्गः, कृतान्नवर्गः, आहारयोनिवर्गः, मात्रादि-प्रकरणं चेति । अत्रांतिमस्य मात्राप्रकरणस्य कियानप्यंशः सूत्रस्थाने चरके पंचविंशाध्याये समाम्नातः । परं सुश्रुते तु अन्नपानविधिरध्यायद्वयेनाम्नातो दृश्यते-सूत्रस्थाने द्रवद्रव्य-विध्याध्यायः ४५, अन्नपानविध्याध्यायः ४६ इति । श्रीमता वाग्भटेनेदं सर्वं समालोच्य स एव विषयो भङ्ग्यन्तरेण षष्ठसप्तमयोर्विवृतः इति विदांकुर्वन्तु सुधियः । वर्गै-रिति–अयं भूयिष्ठमुपयोगवान् बाहुल्येनोपयोगवान् । यथाह चरकः–‘ प्राणाः प्राणभृतामन्नमन्नं लोकोऽ-भिधावति । वर्णप्रसादः सौस्वर्यं जीवितं प्रतिभा सुखम् । तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम् । लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम् । कर्मापवर्गे यच्चोक्तं तच्चा-प्यन्ने प्रतिष्ठितम् ’ इति । ( च. सू. २७, ३३९-३५?. ) अन्नस्य उपलक्षणात्पानस्यापि एकदेशः रसवीर्यविपाका-दिभिः निर्दिष्टः–उक्तः ५०६

२ मात्रादिप्रकरणोपक्रमः ।

**५०७–न शक्यं विस्तरेणापि वक्तुं सर्वं तु सर्वथा ।**
**हिताहितत्वेऽप्येकान्तनियमोऽस्मादनिश्चितः ।**
**मात्रायोगक्रियादेशकालावस्थादिभेदतः ।**
**ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा ॥ २०९**

१७ °यापि च–ख

५०७-एकदेशः किमर्थमुक्त इत्यत आह-न शक्यमित्यादि। सर्वं वस्तुजातं सर्वथा सर्वेण प्रकारेणापि वक्तुं न शक्यम्। महतापि ग्रन्थसंभारेण न शक्यं, किमुत संग्रहेणेत्यपिशब्दस्यार्थः। सर्वभावानां च शरीर इदं हितमिदमहितमिति नियमोऽनिश्चितः। कस्मादनिश्चितः? यतो यस्मात्ते नानाविधा भावास्ततस्ततो मात्रासंयोगक्रियादेशकालस्वभावविषयावस्थाक्रमादीनां भेदात्तथा तथा तेन तेन प्रकारेण नानाविधैर्विशेषैर्दृष्टाः। अतोऽनिश्चितः। तेनैतदुक्तं भवति-पथ्यमपि मात्रादिविशेषादपथ्यतां याति, अपथ्यं च पथ्यतामिति ५०७

टिप्पणी—हिताहितत्व इति—हिताहितयोर्लक्षणं यथा-यत् आहारजातं स्वप्रमाणस्थितान्शरीरधातून्प्रकृतौ स्थापयति-साम्येऽनुवर्तयति। स्वस्थस्य स्वास्थ्यानुवृत्तिकृदित्यर्थः। तथा विषमान्स्वप्रमाणच्युतान् अर्थात्-क्षीणान्वृद्धांश्च शरीरधातून् असमान् समान् करोति-क्रमाद्बृंहणक्षपणाभ्यां साम्यमापादयति, आतुरस्य रोगच्छेदकरमिति यावत्। ईदृशमाहारजातं हितम्। एतद्विपरीतमहितम् (च. सू. अ. २५-३३) मात्रेत्यादि—मात्रा-अनपायि परिमाणम्। योगः-व्याधिशरीराद्यपेक्षया सम्यग्योजना। क्रिया-संस्कारः, गुणान्तराधानं चेत्यनर्थान्तरम्। देशः-भूमिः, द्रव्याणामुपयोक्तुश्च उत्पत्त्यवस्थानदेशः। कालः-नित्यगः आवस्थिकश्च। अवस्था-बाल्यादयः पुरुषस्य, माध्यादयश्च रोगस्य। आदिशब्देन देहः, दोषः, वयः, अनलः इत्यादीनां ग्रहणम्, तेभ्यः। ततस्तत इति-लोहितशाल्यादयः श्रेष्ठत्वेनोक्तास्ते ते भावाः मात्रादिभेदं प्राप्य तथा तथा भवन्ति-प्रकृत्या हिताः अहिताश्च भवन्ति तथा अहिता हिताश्च भवन्ति। द्रव्याणां हिताहितत्वयोगाश्रयो मात्रायोगादय इति भावः ५०७

३ मात्राविशेषोदाहरणानि।

५०८-मात्रया सेवितं मद्यं हन्ति रोगांस्तदुद्भवान्।
निषेव्यमाणं तिलशो विषमप्यमृतायते॥ २१०
हीनातिमात्रमशनं मरुन्निचयकोपनम्।
भजेते विषरूपत्वं तुल्यांशे मधुसर्पिषी॥ २११

५०८-मात्रया सेवितमित्यादिना चैतदेव सविस्तरमुच्यते-मद्योद्भवान्रोगांस्तदेव मद्यं विशिष्टया मात्रया पीतं नाशयति। तथा च वक्ष्यति-"हीनमिथ्यातिपीतेनेत्यादि" (चि. ९) इति मात्राकृतो विशेषः। विषं मारणात्मकमपि तिलमात्राभ्यासेन सेवितममृतत्वं यातीति मात्राकृतो विशेषः। हीनमात्रं स्वल्पं भोजनं मरुतो वायोः कोपनम्। अतिमात्रं निचयस्य सन्निपातस्य कोपनम्। स्वास्थ्यकरस्याप्याहारस्य मात्रया विशेषः। मधुसर्पिषी स्वरूपेणाविरुद्धे सममात्रे विषरूपत्वं भजेते इति मात्राकृतो विशेषः ५०८

टिप्पणी—एतदेव प्रपञ्चयन्नाह-मात्रयेति। तथा च चरकः-'अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम्' (च. चि. अ. २४-५९), 'मिथ्यातिहीनपीतेन यो व्याधिरुपजायते। समपीतेन तेनैव स मद्येनोपशाम्यति' (च. चि. अ. २४-१०९) निषेव्यमाणमिति-तथा च चरक ऐन्द्रे रसायने-'तिलं दद्याद्विषस्य तु' (चि. अ. १-पा. ३-२५). हीनातिमात्रमिति-अत्र चरकः-'हीनमात्रमाहारराशिं बलवर्णोपचयक्षयकरम्—वातविकाराणामायतनमाचक्षते' 'अतिमात्रं पुनः सर्वदोषप्रकोपणमिच्छन्ति कुशलाः, इति (च. वि. २-७) भजत इति-विषरूपत्वं भजतः।अहिताद्योपपद्येते इति भावः। तुल्यांशे तुल्यमाने (च. सू. अ. २६-८४) ५०८

४ संयोगविशेषोदाहरणम्।

५०९-क्षारोऽम्लरससंयोगा मधुरीभवति क्षणात्।
उत्तुण्डक्यास्तिन्दुकेन तिक्तता मधुरायते॥ २१२
हिङ्गुगैरिकसिन्धूत्थं गन्धवर्णरसाधिकम्।
पूगताम्बूलशङ्खेभ्यो वर्णगन्धरसोद्भवः॥ २१३
कोद्रवो हन्त्यसृक्पित्तं करोत्येव विदाहिभिः।
कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैः सह॥ २१४
गुडः कर्ताग्निसादस्य स हिनस्त्यभयादिभिः।
तृष्यत्यग्नेः समदनं सर्पिरप्युपदिश्यते॥ २१५
जीवनीयमपि क्षीरं विषलेशेन मृत्यवे।
तुल्ये अपि हतोऽन्योन्यं विषे स्थावरजङ्गमे॥ २१६
सक्तवो वातला रूक्षाः पीतास्ते तर्पयन्ति तु।

५०९-क्षारोऽम्लसंयोगेन मधुरत्वं यातीति संयोगविशेषः। तिन्दुकेन संयुक्ताया उत्तुण्डक्यास्तिक्तत्वं मधुरत्वमिव यातीति संयोगविशेषः। हिंगुगैरिकसिन्धूत्थं च मिश्रीभूतं गन्धेन, वर्णेन, रसेन चाधिकं भवति। हिंगुसंयोगे रसवर्णविशेषेणाविज्ञातमपि गन्धेन गैरिकसैन्धवे अभिभवति, गैरिकमपि वर्णेन हिंगुसैन्धवे, सैन्धवमपि रसेन हिंगुगैरिके इति संयोगविशेषः। पूगफलताम्बूलकिसलयशङ्खसंयोगे प्रत्येकासंभवविलक्षणवर्णाद्युद्भव इति संयोगविशेषः। कोद्रवो रक्तपित्तघ्नो विदाहिभिः संयुक्तो योगवाहित्वाद्रक्तपित्तं करोतीति संयोगविशेषः। लीनदोषोत्क्लेशेन कुष्ठकार्यपि तिलः भल्लातकैः संयुक्तो लीनदोषोत्क्लेशनात् कुष्ठं हन्तीति संयोगविशेषः। अग्निसादकरोऽपि गुडः हरीतकीशुण्ठीप्रभृतिभिः संयुक्तस्तं न करोतीति संयोगविशेषः। तृषि तृष्णायामत्यग्नेः दीपनमपि घृतं समधूच्छिष्टं पथ्यमिति संयोगविशेषः। दीपनस्योपशोषकत्वात्तृष्यपथ्यत्वम्। क्षीरं जीवनीयं प्राणधारकमपि विषलेशे देहस्थितेऽपि तं मारयति। विषलेशो विषभुक्तस्य शोधनादिनावशेषः। स्थावरजङ्गमे विषे तुल्ये सदृशे अपि मारणात्मकत्वेन शरीरस्थिते अपि परस्परं नाशकारणे। स्थावरं विषं दंष्ट्रादिसंभवेन विषेण संयोगे नश्यति, जङ्गमं स्थावरविषेणेति संयोगविशेषः। सक्तवो

१ भजतो वि°-ख. ग. २ °योगे म°-ग., °योगे मधुरो भ°-ङ. ३ °तुण्डुक्या°-घ. ४ °वो ह्यसृ°-क. ५ स हन्त्यभ°-क. ६ तृष्यत्यग्नौ स°-ख., °त्यग्नौ स°-च.

रूक्षा वातलाश्च सन्तो जलमिश्रिताः पीतास्तर्पणा इति संयोगविशेषः ५०९

**टिप्पणी**—क्षार इति–अत्र चरकः–'क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंहितः '( चि. अ. २४–११४ ), उत्तुण्डक्या इति–उत्तुण्डकी–करञ्जः, तिन्दुकः–स्वनामख्यातो वृक्षः ( टेंभुर्णी ) हिंग्विति–हिंगु–सूपधूपनम् ( हिंग ), गैरिकम्–गिरिमृत्तिका नाम रक्तधातुविशेषः, स्वर्णगैरिकम् ( सोनकाव ), तच्च शोधितं ग्राह्यम् । सिन्धूत्थम्–सिन्धुनद्युपलक्षिते देशे स्वनामख्यातं खनिजं लवणम् ( सेंदेलोण ), पूगम्–क्रमुकफलम् (सुपारी) तग्दुणाः–' पूगं गुरु हिमं रूक्षं कषायं कफपित्तजित् । मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् । आर्द्रं तग्दुर्वभिष्यन्दि वन्हिदृष्टिहरं स्मृतम् । **स्विन्नं** दोषत्रयच्छेदि दृढमध्यं तदुत्तमम् ' इति । ताम्बूलम्–नागवल्लीदलम् ( पानवेलीचें पान ) तस्य गुणाः–' नवं पर्णं तु मधुरं कषायानुरसं गुरु । वलासजनकं प्रायः पत्रशाकगुणं स्मृतम् । पर्णं पुराणमकटु क्षुलकं तनु पाण्डुरम् । विशेषाग्दुणवज्ज्ञेयमन्यद्धीनगुणं मतम् ' इति । शंखः–शंखचूर्णम् (–चुना ) कोद्रव इति–कोद्रवः कोरदूषः ( हरीक ) तथा चोक्तं चरकचतुराननेन चक्रपाणिना–' कोरदूषो यद्यप्यन्नपाने पित्तहर उक्तस्तथाप्यस्य निष्पावादि–( विदाहिभिः )–युक्तस्य संयोगमहिम्ना रक्तपित्तनिदानत्वं ज्ञेयम् ' इति । ( च. नि. अ. २–४ ) कुष्ठमिति–अभ्यवहारे तिलास्त्वद्दोषकराः ( अ. सं. सू. अ. ६–२३९ **प्रभा** ) अत एव चरकेणापि–'शस्ता न गुर्वम्लपयोदधीनि नानूपमत्स्या न गुडस्तिलाश्च ' ( च. चि. अ. ७–८३ ) इत्यनेन कुष्ठे तिलानामप्रशस्तत्वमप्युक्तम् । अन्यच्च–कुष्ठकारणेष्वपि तिलानाह चरकः–' माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ' ( च. चि. अ. ७–७ ) इति । मल्लातः–अरुष्करः ( बिब्बे ) तैलसिद्धमल्लातकादिभिः कुष्ठनिर्हरणं चरकोऽप्याह ( च. चि. अ.७, १११–११६) गुड इति–तथा चोक्तं प्राक्–' गुडः श्लेष्माग्निसादकृत् ' ( अ. सं. सू. अ. ६–२३० ) इति । स हिनस्तीति–तथाचोक्तं सुश्रुतेन–' **हरीतकी** भक्ष्यमाणा नागरेण **गुडेन** वा । सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ( सू. अ. ४४–६८ ) इति । समदनमिति–मदनं मधूच्छिष्टम् ( मेण ) .तेन संयुक्तं सर्पिः–धृतमत्युद्धताग्निशान्त्यै भवति । तथा चोक्तम्–अत्युद्धताग्निशान्त्यै माहिषदधिदुग्धसर्पीषि । ससेवेत यवागूं **समधूच्छिष्टां** ससर्पिष्काम् ' इति । तुल्य इति–तथा चोक्तं महाभारते–'ततोऽस्य दृश्यमानस्य तद्विषं काश्कूटकम् । हतं सर्पविषेणैव स्थावरं जंगमेन तु ' ( आदि १२८–५७)वृश्चिकविषे जंगमे स्थावरं वत्सनागलेपं चिकित्सका आहुः । सक्तव इति–अत्र चरकः–सक्तवो वातला रूक्षा बहुवर्चोनुलोमिनः । तर्पयन्ति नरं शीघ्रं पीताः सद्योबलाश्च ते ( च. सू. अ. २७–२६३ ) पीता इति-पीता इत्यनेन सक्तूनां पिण्डोपयोगे निषेधो दर्शितः । तर्पयन्तीति–चरकाभिप्रायेण सद्य एव तृप्तिं जनयन्ति,वाजीकरणवत् । परिणामे तु बलापहत्वमेव ५०९

५ स्वभावविशेषोदाहरणम् ।

**५१०विनापि चोपयोगेन मणिमन्त्रादि कार्यकृत् ।२१७**

५१०–**मणिमन्त्रादिकं** गुडूच्यादिवदनुपयुक्तमपि ज्वरादीञ्छमयतीति स्वभावविशेषः ५१०

**टिप्पणी**—विनापीति–उपयोगेन–अन्तः इति शेषः ५१४

६ संस्कारविशेषोदाहरणे ।

**५११–आर्द्रकाज्जायते शुण्ठी संस्कारेण लघीयसी ।**
**लघुभ्योऽपि हि सक्तुभ्यो गुरवः सिद्धपिण्डिकाः**

५११–आर्द्रकात् **शुण्ठ्याः** सम्भवः। तस्यास्तु लघुत्वं संस्कारविशेषः । स्वभावलघुभिः सक्तुभिः कृताः **सिद्धपिण्डिका** गुरव इति संस्कारविशेषः ५११

**टिप्पणी**—संस्कारेणेति—तथा च चरकः–' संस्कारो हि गुणान्तराधानमुच्यते । ते गुणाः तोयाग्निसंनिकर्षशौचमन्थनदेशकालवासनभावनादिभिः कालप्रकर्षभाजनादिभिश्चाधीयन्ते ' ( वि. १–२६ ) इति ५११

७ क्रियास्वभावविशेषोदाहरणम् ।

**५१२–भृष्टः क्षुण्णोऽपि पृथुको रक्तशालेर्लघोर्गुरुः ।**

५१२–स्वभावलघुनोऽपि रक्तशालेः सम्भूतो भृष्टो मुसलच्छिन्नश्च **पृथुकः** गुरुत्वं यातीति क्रियास्वभावकृतो विशेषः ५१२

८ क्रियाविशेषोदाहरणम् ।

**५१३–शालिः पिष्टो गरीयस्त्वं गोधूमादपि गच्छति ।**

५१३–लघुः **शालिः** अपि पिष्टोऽपिष्टात् स्वभावगुरुतो गोधूमादप्यधिकं गुरुत्वं यातीति क्रियाविशेषः । ५१३

९ संस्कारविशेषोदाहरणानि ।

**५१४–लघुपित्तहरा लाजा व्रीहितो गुरुपित्तलात् ।**
**संग्राहिणो लघोर्मुद्गात् कुल्माषो भेदनो गुरुः ।**
**आमं ग्राहितरं तक्रं नागरीकृतमार्द्रकम् ।**

५१४–व्रीहितः पित्तकरात् गुरोश्च सम्भूता लाजा लघवः, पित्तहराश्चेति संस्कारविशेषः ।

संग्रहणस्वभावाल्लघुनश्च मुद्गाज्जातः **कुल्माषो** भेदित्वं गुरुत्वं च यातीति संस्कारविशेषः । कुल्माषोऽल्पस्विन्नानि सस्यानि ।

**आमं तक्र**मतिसङ्ग्रहणं पक्वं कथितं किञ्चित्संग्रहणमिति संस्कारविशेषः ।

नागरीकृतं **शुण्ठित्वं** **प्रापितमार्द्रकम**तिसंग्रहणं तथास्वरूपमिति संस्कारविशेषः ५१४

१० संयोगसंस्कारविशेषोदाहरणानि ।

**५१५–गुडात्तोयाच सुतरां मूत्रलं गुरु पानकम् । २२१**

५१५–**गुडेन** मूत्रलेन **तोयेन** च मूत्रलेन कृतं पानकमतिमूत्रलमतिगुरु च कारणापेक्षयेति संयोगसंस्कारविशेषः ५१५

११ क्रियासंयोगविशेषोदाहरणम् ।

**५१६–गरीयो गुडदध्युत्था रसाला चातिशुक्रला ।**

५१६–गुडो दधि चातिगुरु, तत्कृता रसाला चातिगुरुतरा, सा त्वतिशुक्रलेति क्रियासंयोगविशेषः ५१६

---

७ °कं तत्खलक्रितमन्यथा । गु°–क. ख. ८ °गुडदध्युक्तं र°–क. ख. च.

१२ क्रियाविशेषोदाहरणम् ।

**५१७–दण्डाभिमथनाद्दध्नो गुरुणश्चातिशोफदात् । २२२**
**अनुद्धृतस्नेहमपि तक्रं शोफहरं लघु ।**

५१७–गुरुणः शोफकराच्च दध्नो दण्डमन्थनेनैव सस्नेहमपि तक्रं लघु शोफहरं चेति क्रियाविशेषः । ५१७

१३ स्वभावविशेषोदाहरणम् ।

**५१८–सर्पिः स्निग्धतरं हन्ति नार्दितं नवनीतवत् २२३**

५१८–अर्दितं वातं च तस्य चातिस्निग्धत्वेनातिविपरीत घृतं तथा विनाशनसमर्थं यथा तदूनं **नवनीत**मिति स्वभावविशेषः

१४ संस्कारविशेषोदाहरणम् ।

**५१९–चक्षुष्योऽपि हि गोधूमस्तैलपक्वस्तु दृष्टिहा ।**
**मूलकं दोषजननं सिद्धं तु तद्दोषलम् ॥ २२४**
**उष्णं विषीभवत्येव विपन्नमपि माक्षिकम् ।**

५१९–**गोधूमः** चक्षुष्योऽपि तैलपक्वो दृष्टिनाशन इति संयोगसंस्कारविशेषः ।

आममूलकं त्रिदोषकरं न तथाग्निसिद्धमिति संस्कार–विशेषः ।

विषनाशनमपि **माक्षिक**मुष्णं सत् विषीभवतीति संस्कारविशेषः ५१९

१५ पात्रविशेषोदाहरणानि ।

**५२०–दुर्भाजनस्था द्राक्षाम्ला दोषला च प्रजायते ।**

५२०–**द्राक्षा** दुर्भाजने लोहादिकृते स्थिताम्लत्वं त्रिदोषकरत्वं च यातीति पात्रविशेषः ५२०

१६ विरुद्धक्रियाप्रयोगविशेषोदाहरणानि ।

**५२१–श्लक्ष्णशुष्कघनो लेपश्चन्दनस्यापि दाहकृत् ।**
**त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरोः ।**

५२१–**चन्दन**स्यातिदाहनाशनस्य लेपः श्लक्ष्णः शुष्को घनश्च त्वगूष्मणो रोधाद्दाहनाशने न समर्थः । **अगुरो**श्चोष्णस्पर्शवीर्यस्यापि अतश्चन्दनलेपस्वरूपादन्यथा वैपरीत्येन लेपः परुषः आर्द्रः तनुश्च शीतकृदिति क्रियाप्रयोगविशेषः ( च. चि. ३०–३२४ च. चि.३–१७४–१७५ चक्रदत्तटीका) ५२१

१७ क्रियास्वभावविशेषोदाहरणम् ।

**५२२–मेध्यस्तिलः स्पर्शशीतो[९] मेध्यं तैलं खलो हिमः।**
**तस्यैव श्लेष्मकारित्वं न तैलस्य खलस्य वा । २२७**

५२२–**तिलो** मेध्यः पुष्टिकरः स्पर्शशीतलश्च । **तैलं** मेध्यम्। खलस्तैलखलः शीतवीर्ययुक्तः । त्रीण्यपि श्लेष्मसदृशानि । तिल एव श्लेष्मकरो न खलतैले इति क्रियास्वभावविशेषः५२२

१८ स्वभावविशेषोदाहरणम् ।

**५२३–दध्नि श्वयथुकारित्वं न तक्रनवनीतयोः ।**

५२३–दध्नि स्निग्धे श्वयथुकारित्वं दृष्टम् । **तक्रनवनीतयो**-स्तद्विकारयोः स्निग्धयोरपि न दृष्टमिति स्वभावविशेषः ।

१९ देशविशेषोदाहरणानि ।

**५२४–भूमिसात्म्यं दधिक्षीरकरीरं मरुवासिषु । २२८**
**क्षारः प्राच्येषु मत्स्यास्तु सैन्धवेष्वश्मकेषु तु ।**
**[१४]तैलाम्लः कन्दमूलानि मलये कोङ्कणे पुनः। २२९**
**पेया मन्थ उदच्येषु गोधूमोऽवन्तिभूमिषु ॥**
**बाल्हीका बौल्हवाश्चीनाःशूलिका यवनाःशकाः**
**मांसगोधूममार्द्वीकशस्त्रवैश्वानरोचिताः ।**

५२४–भूमिसात्म्यं देशविशेषाश्रयं प्राणिनां पथ्यम् । यथा मरुवासिषु **दध्यादिकं**, प्राच्येषु यत्किञ्चित्क्षारं **लवणादि**, सिन्धुदेशजेषु **मत्स्याः**, अश्मकेषु **तैलं**, **अम्लश्च रसः** सात्म्यं, मलयपर्वते **कन्दानि मूलानि** च, कोङ्कणे सात्म्यं **पेया**, उदीच्येषु सात्म्यं **मन्थोऽवन्तिभूमिषु** सात्म्यं **गोधूमः**, बाल्हिकादीनां **मांसादिकं** पथ्यमिति देश विशेषः ५२४

**टिप्पणी**—मरुः ( मारवाड ) प्राच्यः-शरावत्याः प्राग्दक्षिणो देशः ( काशिका–१–१–७५ ) ( आसाम बंगाल ), सैंधवः ( सिंधप्रांत ), अश्मकः ( पैठणचे आजू बाजूचा देश ), मलयः ( निलगिरी पर्वत ), कोङ्कणं ( प्रसिद्धम् ) उदीच्यः शरावत्याः पश्चिमोत्तरः देशः ( श्रावस्ती व कापिलवस्तू यांचे जवळील प्रदेश ), अवन्तिः ( उज्जयिनी ), बाल्हीकः ( पंजाबमधील बियास व सतलज या नद्यांमधील प्रदेश ), बाल्हवः (?) चीनः प्रसिद्धः । शूलिकः (?), यवनः यवनानां देशः (?), शकः (सीस्थान--अरबस्थांतील एक भाग ) इतिदिक् । ५२४

२० देहसात्म्यासात्म्योदाहरणानि ।

**५२५–देहसात्म्यं घृतं क्षीरं मद्यं मांसं[१६] च कस्यचित् ।**
**पेया यूषो रसोऽन्यस्य गोधूमोऽन्यस्य शालयः ।**
**अहितैरपि तेषां च [१८]तैरेवोपहितं हितम् । २३२**

५२५–सात्म्यमाजन्म देह उचितमभ्यस्तत्वात् स्वास्थ्यहेतुः। देहसात्म्यं यथा-कस्यचिद्घृतं, कस्यचिन्मांसं, कस्यचिन्मद्यं, कस्यचित् पेया, अन्यस्य सूपः, अन्यस्य शालिः, अन्यस्यान्यः । यस्य च यत् सात्म्यं तस्य रोगिणोऽन्नपानौषधादिकं तेनैव सात्म्येनापथ्येनाप्युपहितं मिश्रितं हितम् ।५२५

२१ स्वभावविशेषोदाहरणम् ।

**५२६–अन्नपानौषधं दोषमात्राकालाद्यपेक्षया ।**
**सात्म्यं ह्याशु बलं धत्ते नातिदोषं च बह्वपि ।२३३**

५२६–दोषादीनपेक्ष्य कस्मिंश्चिद्दोषाद्यवस्थाविशेषे सात्म्योपहितमप्यहितं हितमिति ज्ञापयतीति स्वभावविशेषः । सात्म्यमिश्रितमौषधादिकं किमर्थं क्रियत इत्याह–सात्म्यं ह्याशु शीघ्रमेव बलं करोति । बहु चोपयुक्तं नातिदोषकरम् । गतमानुषङ्गिकम् । ५२६

२२ देहविशेषोदाहरणम् ।

**५२७–[१९]स्रंसनं सत्पयो गव्यं भवति ग्राहि कस्यचित् ।**

५२७–स्वरूपेण स्रंसनं सद्द्रव्यं क्षीरं कस्यचित् संग्राहकतां यातीति देहविशेषः । तत्र कफप्रधानस्य संग्रहणं भवति । पित्तप्रधानस्य भेदनम् ( अ. स. अ. २७ सू. ) ५२७

९ °नं स्निग्धसिध्दं त्वदो°–ख. १० °तोऽमेध्यं तैलं खलोऽहिमः । तु°–ख. ११ °स्य च–च. १२ दध्नः श्व°– क. ख. १३ मत्स्याश्च सैं°–च. १४ तैलाम्लं क°–क. ख. १५ °का पल्लवाश्चीं°–ङ. १६ °सं तु क°–च. १७ °सोऽन्येषां गो°–च. १८ च तैरेवोपहितैर्हित° –च. १९ स्रंसनं च प°–ङ.

२३ प्रकृतिविशेषः ।

**५२८-मन्दोऽग्निर्भवति प्रायः कफवातोत्तरे हिमे** २३४

५२८-तथा प्रायेण सर्वो वातश्लेष्माधिको हिमे काले शीतेन वातश्लेष्माधिक्यान्मन्दाग्निर्भवतीति प्रकृतिविशेषः । ५२८

२४ देहविशेषोदाहरणानि ।

**५२९-विषघ्नेनापि पयसा देहेऽहेर्वर्धते विषम् ।**

**टिप्पणी**—विषघ्नमपि क्षीरमहीना विषं करोति देहस्वाभाव्यात् । ५२९

२५ अवस्थाविशेषोदाहरणानि ।

**५३०-स्थूलस्थविरबालादौ वमनादि निषिध्यते ।** २३५

५३०-स्थूलादीनां वमनादिकं प्रतिषिद्धमित्यवस्थाविशेषः ।

२६ स्वभावविशेषोदाहरणानि ।

**५३१-तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति[21] तु ।**
**वातहृत्त्वेऽपि मृद्वीकाखर्जूरं कोष्ठवातकृत् ।** २३६

५३१-आममपक्वं **तक्रं** कोष्ठे कफं नाशयति कण्ठे तु करोतीति स्वभावविशेषः । **द्राक्षाखर्जूरं** वातहरमपि कोष्ठे वातं करोतीति स्वभावविशेषः । ५३१

२७ विषयविशेषोदाहरणम् ।

**५३२-नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ॥**

५३२-**मयूरः** स्वास्थ्येऽपथ्यः, श्रोत्रादीनां च पथ्य इति विषयविशेषः । ५३२

२८ स्वभावविशेषोदाहरणम् ।

**५३३-दृष्टेः स्पर्शहिमं द्रव्यं श्रोत्रस्योष्णं तु पूजितम् ।**

५३३दृष्टेस्तेजोभवत्वेन विपरीतमपि शीतं द्रव्यं स्पर्शे इष्यते । तथा श्रोत्रस्य वायव्यस्याप्युष्णमिति स्वभावः । ५३३

२९ अवस्थाविशेषोदाहरणानि ।

**५३४-पयः स्वादु[22] सरं शीतं विपरीतं ततो दधि ।**
**कालेन जायते तस्मात्क्षीरवच्च पुनर्घृतम् ॥** २३८
**पयो दधि च वातघ्नमजातं वातलं तु तत् ।**
**तक्रं ग्राहि कषायाम्लमम्लमेव तु भेदनम् ।** २३९

५३४-**क्षीरं** मधुरं सरं शीतं च तस्यैवावस्थान्तरं **दध्यविनिगूढतत्त्वमम्लं** ग्राह्युष्णं च । ततोऽप्यवस्थान्तरमुभयविलक्षणमपि क्षीरात् कालेन बह्वीष्ववस्थासु गतासु घृतं जायते । तच्च गुणैः क्षीरसदृशम् । **क्षीरं** वातघ्नं दधि च वातघ्नम् । तयोश्चान्तरे अजातं दधि वातकरमित्यवस्थाविशेषः । **तक्रं** रसे कषायाम्लं संग्रहणं, केवलाम्लं भेदनमित्यवस्थाविशेषः ( च. सू. २६-५० ) ५३४

३० संस्कारकालविशेषोदाहरणानि ।

**५३५-धातकीगुडतोयानि कारणं मद्यशुक्तयोः ।**
**शीते न तु तदाद्यन्ते स्निग्धाम्ललवणा हिताः ।**

५३५-**धातकी गुडस्तोयं** च मद्यस्य कारणतां याति । शुक्तस्य च तान्येवेति संस्कारकालविशेषः । न **शुक्तं** मद्यस्यावस्था । अपि तु तज्जात्यन्तरमेव । शीते काले स्निग्धादयो हिताः । न तु तत्प्रारम्भपरिसमाप्त्योरिति कालविशेषः५३५

३१ कालविशेषोदाहरणम् ।

**५३६-उदमन्थदिवास्वप्नौ ग्रीष्मादन्यत्र गर्हितौ ॥**

५३६-उदमन्थो बहुद्रवाः **सक्तवः, दिवास्वप्नश्च** ग्रीष्मादन्यस्मिन्नृतौ गर्हिताविति कालविशेषः । ५३६

३२ कालस्वभावविशेषोदाहरणम् ।

**५३७-समयोगेऽपि घर्माद्या वातादिचयहेतवः ।** २४१

५३७-**घर्माद्याः** ग्रीष्माद्या ऋतवः समयोगेऽपि वातादिसञ्चयहेतुतां यान्तीति कालस्वभावविशेषः । ५३७

३३ रौक्ष्यादीनां क्रमः ।

**५३८-ऋतुष्वन्यो रसेष्वन्यो[23] रौक्ष्ये स्नेहे बले क्रमः ॥**

५३८-ऋतुषु हेमन्तादिषु रौक्ष्ये, स्नेहे, बले चान्यः क्रमः । रसेषु च ऋतुस्वभावविलक्षण एव रौक्ष्यादिक्रमः । तथा च शिशिरे किंचिद्रौक्ष्यं, ततोऽधिकं वसन्ते, ततोऽप्यधिकं ग्रीष्मे, तत ऊनं वर्षासु, तत ऊनं शरदि, ततोऽप्यूनं हेमन्त इति **रौक्ष्यक्रमः** । ऋतुषु **स्नेहक्रमस्तु**-वर्षाः किंचित् स्निग्धाः, ततोऽप्यधिका शरत्, ततोऽप्यधिको हेमन्तः तत ऊनः शिशिरः, तत ऊनो वसन्तः, ततोऽप्यूनो ग्रीष्म इति **स्नेहक्रमः । बलक्रमस्तु**-शिशिरेऽधिकं बलं, वसन्ते मध्यं, ग्रीष्मे ऊनं, वर्षासु चोनमेव, शरदि मध्यं, हेमन्ते त्वधिकमिति । **रसेषु रौक्ष्यक्रमो** यथा-तिक्तकटुककषाया यथोत्तरं रूक्षाः । स्नेहक्रमो मधुराम्ललवणा यथापूर्वं स्निग्धाः । बलक्रमो मधुरोऽतिबल्यः, तत ऊनोऽम्लः, तत ऊनो लवणः, तत ऊनस्तिक्तः, तत ऊनः कटुः, तत ऊनः कषाय इति स्वभावः । ऋतुविशेषाश्रयेण तु रसानामेतद्यथोक्तेन प्रकारेण स्वाभाविकरौक्ष्यादि व्यभिचरतीति कालस्वभावविशेषः । तथा च मधुरः स्निग्धोऽपि न तथान्यतौ हेमन्ते यथा । अम्लः स्निग्धोऽपि वर्षास्वतिस्निग्धः । लवणः स्निग्धोऽप्यतिस्निग्धः शरदि । तिक्तो रूक्षोऽप्यतिरूक्षः शिशिरे । कटुको रूक्षोऽप्यतिरूक्षो ग्रीष्मे । कषायो वसन्ते । बलतश्च व्यभिचारः । यथा मधुरोऽम्लादिभ्यो बलवानप्यतिबलो हेमन्ते । अम्लो मधुरादूनबलोऽपि वर्षास्वधिकबलः । लवणः स्वाद्वम्लाभ्यामूनबलोऽपि शरद्यधिकबलः । तिक्तो मधुराम्ललवणेभ्य ऊनबलोऽपि शिशिरेऽधिकबलः । कटुको मधुरादिभ्य ऊनबलोऽपि ग्रीष्मेऽधिकबलः । कषायो मधुरादिभ्य ऊनबलोऽपि वसन्तेऽधिकबल इति ।५३८

३४ अवस्थाविशेषोदाहरणम् ।

**५३९-रसायनं[24] काकमाची सद्यः पर्युषिता विषम् ।**

५३९-**काकमाची** सद्यः सिद्धा रसायनम् । पर्युषिता दिवसमध्युषिता विषमित्यवस्थाविशेषः । ५३९

३५ जातिविशेषोदाहरणम् ।

**५४०-मूलकं दोषजिद्बालं विपरीतं तु कन्दवत् ॥**

५४०-बालं मूलकं त्रिदोषहरम् । यत्तु कन्दवत् मूलकं तद्विपरीतं त्रिदोषकरमिति जातिविशेषः । ५४०

३६ व्याध्यवस्थाविशेषोदाहरणम् ।

**५४१-ज्वरे पेया कषायाश्च सर्पिः क्षीरं विरेचनम् ।**

---

२० मन्दाग्निर्भ°-घ. २१ °ति तत्-ङ, °ति च.-च. २२ °स्वादुरसं शी°-च. २३ °न्यो रूक्षस्नेहबलक्र°-क. ख. च.
२४ रसायनी का°-ख°

पडहं पडहं युञ्ज्याद्वीक्ष्य[25] दोषबलाबलम् ॥
५४१–ज्वरे दोषाणां बलाबलं विकल्प्य पेयादयः पडहं पडहं योजनीया इति व्याध्यवस्थाविशेषः। तेनैतदुक्तं भवति–केनचिदधिकोनबलेन पडहाधिकमूनं वापि योजनीयमिति पडहमित्युपयोगो बाहुल्येन। अथ चानेन क्रमेण पेयादीनां पडहान्तप्रयोगप्रतिषेधपरमेतत् ( च. चि. अ. ३०–३०२ )

टिप्पणी—ज्वरे प्रथमं लङ्घनम्, लङ्घनानन्तरं पेया, प्रथमे पडहे प्रथमदिनावधिसप्ताहे, ततोऽष्टमदिनावधिपडहे कषायाः, ततश्चतुर्दशदिनावधिपडहे क्षीरम्। ततो विंशदिनावधिपडहे विरेचनमिति । एवमामयस्य कालं वीक्ष्य पेयादिक्रमः ( च. ३–१४९ गंगाधरः ) अत्र च. चि. ३–१६० चक्रपाणिगंगाधरौ, अ. हृ. चि. १–२१, २४, २५, मा. नि. ज्व. नि. ६३ मधुकोषश्च इत्यादयः संदर्भा विशेषविज्ञानार्थं द्रष्टव्याः ५४१

३७ रोगावस्थाविशेषोदाहरणम्।

५४२–छर्दिहृद्रोगगुल्मार्ते वमनं च चिकित्सिते[26]।२४४
निषिद्धमपि निर्दिष्टं बस्तिरर्शसकुष्ठिनोः।

५४२–छर्द्यादिभिरार्ते प्रतिषिद्धमपि वमनं चिकित्सायां निर्दिष्टम्। ऊर्ध्वगे हि दोषे न वमनं पथ्यं, छर्द्यां तु बहुदोषस्य सततवमथोश्च वमनमेव पथ्यमिति। हृद्रोगगुल्मयोस्तु यद्यपि वाताधिक्यभयाद्वमनं निषिद्धं, तत्रापि श्लेष्मणा वातस्य मार्गरोधे पथ्यमेव । अर्शसस्य कुष्ठिनश्च प्रतिषिद्धोऽपि बस्तिर्निर्दिष्ट एव। यद्यप्यर्शसस्य वातवर्जितमलसन्तर्पको बस्तिः । तत्राप्यतिदोषोपधक्षपितत्वाद्वाताधिक्ये योज्य एव। एवं कुष्ठिनो दोषस्य क्लेदस्वभावत्वादपथ्यमप्यतिरूक्षतायां पथ्यमिति रोगावस्थाविशेषः। ५४२

३८ संप्राप्तिविशेषोदाहरणम्।

५४३–ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता ॥ २४५
रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः।

५४३–सर्वरोगेषु सदृशर्तुत्वं सदृशदोषत्वं चासाध्यत्वहेतुः। तदेव ज्वरे अतिसुखसाध्यत्वहेतुः। ज्वरस्य च सदृशर्तुदोषत्वे त्वेकमार्गक्रियारम्भेण शीघ्रमुपशमः। अन्यरोगाणां तु सदृशर्तुदोषत्वं व्याधेर्महारम्भकत्वादसाध्यत्वमिति संप्राप्तिविशेषः। एवं प्रमेहे सदृशदूष्यत्वं रक्तगुल्मे च पुराणत्वं विज्ञेयम्। एतच्च वक्ष्यामः । ५४३

३९ रोगावस्थाविशेषोदाहरणम्।

५४४–आश्च्योतनमभिष्यन्दे युञ्जीतोर्ध्वं दिनत्रयात्।

५४४–अभिष्यन्दे पथ्यमप्याश्च्योतनं प्रथमदिनत्रयमपथ्यमित्यवस्थाविशेषः। ५४४

४० अवस्थाविशेषोदाहरणम्।

५४५–अञ्जनं पक्वदोषस्य प्रतिश्याये[27] च नावनम्।
[28]नातिप्रवृद्धे तिमिरे सिरामोक्षो विधीयते। २४७

५४५–एवमेव पक्वदोषस्याञ्जनं, प्रतिश्याये च नस्यमवस्थाविशेषेण पथ्यम्। प्रथमोद्भूते तिमिरे सिरामोक्षः,अवस्थाविशेषात्। ५४५

४१ रोगस्वभावविशेषोदाहरणम्।

५४६–दुष्टास्रसंभवेऽपीष्टो नास्रपित्ते सिराव्यधः।

५४६–दुष्टरक्तसंभवेऽपि रक्तपित्ते न सिराव्यधः पथ्यः, रोगस्वभावात्। ५४६

४२ प्रदेशरामविशेषोदाहरणम्।

५४७–अपथ्यं पथ्यमप्यन्नं निशायां नेत्ररोगिणाम्।

५४७–नेत्ररोगिणां पथ्यं नेत्ररोगनाशनसमर्थमप्यन्नं निशायामपथ्यम्, प्रदेशरोगस्वभावविशेषात्। ५४७

४३ कारणविशेषोदाहरणम्।

५४८–अहिताः सक्तवः शुष्का हितास्ते तु प्रमेहिणः।

५४८–सर्वस्य शुष्काः सक्तवोऽहिताः, प्रमेहिणस्तु हिताः, कारणविशेषात्। ५४८

४४ शक्तिविशेषोदाहरणे।

५४९–गुल्मिनः[29] क्षीरदध्यादि हपुषाद्यै[30]र्युतं हितम्।२४९
वातलं वातकोपेऽपि वर्षासु मधु शस्यते।

५४९ क्षीरादिकमहितमपि गुल्मिनां हपुषादिना संयुक्तं हितमेवेति द्रव्यशक्तिविशेषः। वर्षासु वातकोपकाले वातलं मधु शस्यते इति कालस्वभावद्रव्यशक्तिविशेषः। ५४९

४५ उपयोगविशेषोदाहरणम्।

५५०–तदेव मद्यं मद्यस्य

५५०–येनैव मद्येन रोग उत्पन्नस्तदेव मद्यं केनचिद्विशेषेण हितमित्युपयोगविशेषः। ५५०

४६ वस्तुस्वभावविशेषोदाहरणम्।

५५१ विषस्य तु विषान्तरम्। २५०

५५१–विषस्य तु विजातीयं विषमेव नाशनसमर्थमिति वस्तुस्वभावः। ५५१

४७ देशकालविशेषोदाहरणम्।

५५२–घृतमानूपदेशोत्थं हेमन्ते च बलाधिकम्।

टिप्पणी—वृद्धिः समानैः सर्वेषामिति न्यायात्

४८ व्याधिस्वभावविशेषोदाहरणम्।

५५३–आलस्यगौरवे रूपं वातजेऽपि ज्वरे पुरः। २५१

टिप्पणी——आलस्यमिति——वाङ्मनःकार्यकर्मस्वनुद्यम आलस्यम् । तथा चोक्तम्–सुखस्पर्शप्रसंगित्वं दुःखद्वेषणलोलता। शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते ( सु. शा. ४–५२ ) गौरवमिति–' आर्द्रचर्मावनद्धं हि यो गात्रं मन्यते नरः। तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्दिशेत् ' ( सु. शा. ४–५५ ) ५५३

४९ वस्तुस्वभावविशेषोदाहरणम्।

५५४–स्वेदैर्याति शमं दाहः प्रायो लशुनपानजः* ॥

५५४ लशुनोपयोगजो दाहः प्रायः सदृशेनैवाग्न्यादिस्वेदेन नश्यतीति वस्तुस्वभावः। ५५४

५० कालवस्तुस्वभावविशेषोदाहरणम्।

५५५–दिवास्वप्नाज्जरां याति भुक्तमन्येद्युरद्य न। २५२

५५५ अन्येद्युर्भुक्तमन्नं जरां याति दिवास्वप्नेनाद्यैव भुक्तं दिवास्वप्नेन न जरां यातीति कालवस्तुस्वभावः। ५५५

---

२५ 'क्ष्य रोगव'–क. ख. च. २६ 'स्तितम्। नि'–क. ख. च. २७ 'येन नाव'–क. २८ नातिवृद्धेऽपि ति'–च. २९ 'ल्मिने क्षी'–च. ३० हपुषादिषु'–घ. च. * 'नपाकजः–ख.

५१ कारणविशेषोदाहरणम् ।

**५५६–कोष्ठे रुद्धोऽग्निकृद्वायुर्मेदसार्शोभिरग्निहृत् ॥**

**टिप्पणी**–मेदसेति, तथाचोक्तम्–स्रोतःसु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः। चरन्प्रज्वलयत्यग्निं क्षुत्तृषोस्ततोऽधिकम्, स्थूलं कोटरवद्वृद्धौ दहतोऽग्न्यनिलौ च तम् ( अ. सं. सू. अ. २४ ) इति।वातसखेनाग्निना वनस्येवास्य महती व्यापदुत्पद्यते। अत्र हि वायुः प्रेरकमात्रो भवति,न च तस्यातिवृद्धिः तथा सत्यग्नदीप्तिं न कुर्यात् अपि च तन्निरासक एव स्यात्। अंशोभिरिति–उक्तं हि सुश्रुतेन ' तैस्तु प्रतिहतो वायुरपानः संनिवर्तते। ततो व्यानेन संगम्य ज्योतिर्मृद्नाति देहिनाम्, ( नि. २–२५ ) ५५६

५२ प्रभावविशेषोदाहरणम् ।

**५५७–दुष्पानं दुर्जरं[31] सर्पिर्दीपनं च पयोऽन्यथा। २५३**

**टिप्पणी**—दुष्पानमिति–घृतं क्षीरस्य रसादीभिस्तुल्यमाप्याग्निं दीपयत्येव, न पयः प्रभवात् । ५५८

५३ वस्तुस्वभावविशेषोदाहरणम्

**५५८–सर्पादिशवकोथेभ्यो वृश्चिकानां समुद्भवः ।**
**ते तैरेव पुनर्दष्टाः सद्यो[32] जहति जीवितम् । २५४**

५५८ सर्पादीनां मृतशरीरक्लेदाद्वृश्चिकोत्पत्तिः। ते च सर्पादयस्तैरेव वृश्चिकैर्दष्टाः सद्यः एव जीवितं त्यजन्तीति वस्तुस्वभावः । ५५९

५४ द्रव्यस्वभावविशेषोदाहरणम् ।

**५५९–स्वैयमेव विषं तीव्रं तान्पुनर्नातिबाधते ॥**

५५९–विषं च स्वयं तीव्रमप्यन्यप्राणिवत् सर्पादीनां न तथा बाधते, किञ्चिद्बाधत इति द्रव्यस्वभावः । ५६०

५५ अवस्थाविशेषोदाहरणम् ।

**५६०–सर्वाङ्गव्यापि तेषां च शुक्रवत् संसृतं विषम्[34] ।**
**तन्मांसमुपयोगाय मांसवर्गे च पठ्यते ।**

५६० तेषां च सर्पादीनां शुक्रवत् सर्वाङ्गव्यापि विषमुक्तम् । अतोऽपि तन्मांसं देहोपयोगाय मांसवर्गे निर्दिष्टमित्यवस्थाविशेषः । अन्यथा हेयत्वादनिर्देशः प्राप्तः । ५६१

५६ विरुद्धकार्यकरणोदाहरणम् ।

**५६१–छर्दिघ्नी मक्षिकाविट् च मक्षिकैव तु वामयेत् ।**

५६१–छर्दिकारणान्मक्षिकातोऽपि जाता विट् छर्दिघ्नीति स्वभावः ( च. चि. अ. ३०–३२५ ) ५६२

५७ संप्राप्तिविशेषोदाहरणम ।

**५६२–कफे लङ्घनसाध्येऽपि कर्तरि ज्वरगुल्मयोः । २५६**
**तुल्येऽपि देशकालादौ लङ्घनं[36] न समं मतम् ॥**

५६२ यद्यपि सर्वः कफो लङ्घनसाध्यस्तात्रापि ज्वरकारणे कफे गुल्मकारणे च लङ्घनं पथ्यत्वेन न सदृशं, सम्प्राप्तिविशेषात् । तेनैतदुक्तं भवति–यथैव देशकालादिसम्पदा कफज्वर उत्पन्नः, तथैवोत्पन्ने कफगुल्मे पथ्यत्वेन लङ्घनं न सदृशम् । ज्वरे त्वधिकं पथ्यमिति । शीघ्रं व्याध्युपशमात्। अथवा यदेकत्र लङ्घनं तदन्यत्रेत्यसमं सर्वेण प्रकारेणा[3] मत्वेन पक्वत्वेन च दीपनसङ्ग्रहणत्वात् । ५६२

५८ रागसंस्कारस्वभावविशेषोदाहरणम् ।

**५६३–सर्वथा दोषजित्तक्रं ग्रहण्यां दोषकृद्व्रणे । २५७**
**पीनसश्वासकासादौ सिद्धमेव प्रशस्यते ॥**

५६३–ग्रहण्यां दोषत्रयनाशनं तक्रं व्रणे तु पूयहेतुत्वाद्दोषत्रयकरमिति रोगस्वभावः । पीनसादौ सिद्धमेव तक्रं शस्यते नासिद्धमिति संस्कारस्वभावः । ५६३

५९ मात्रादिप्रकरणोपसंहारः ।

**५६४–इत्येतेऽन्ये च बहवः सूक्ष्मा दुर्लभहेतुकाः ।२५८**
**धर्मा विचित्रा भावेषु किञ्चित्तेषां निदर्शितम्[38] ॥**
**दिशानया शेषमपि स्वयमूहेत बुद्धिमान् । २५९**
**न शास्त्रमात्रशरणो न चानालोचितागमः ॥ २६०**

**इति मात्रादिप्रकरणम् ।**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने अन्नस्वरूपविज्ञानीयो नाम सप्तमोऽध्यायः ।**

५६४–इत्येते भावेषु वस्तुषु धर्मा विचित्रा विलक्षणा दृष्टाः सूक्ष्मा दुर्लक्ष्याः । दुर्लभो हेतुर्येषां ते दुर्लभहेतुकाः । अन्ये च विस्तरभयान्नोक्ताः । दृष्टाश्च स्तोकमात्रमत्र निर्दर्शितम् । अनया च दिशा अशेषं सर्वमपि वस्तुजातं नानाविशेषैर्वाक्यार्थावबोधेन च स्पष्टबुद्धिः स्वयमूहेत । किंभूतः । न शास्त्रमात्रशरणः शास्त्रवाक्यपठितमात्रवस्तुशरणो न भवेत्, न चानालोचितागमो भवेदिति संबन्धः । तेन च **शास्त्रेण तत्पृष्ठभाविना च साधुगुरूपदेशेन सर्वं वस्तुजातं स्वरूपेणान्यविशेषेण च बुद्ध्या स्वयमूहेतेत्यर्थः ।** मात्रादिप्रकरणं समाप्तम् ५६४

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने सप्तमोऽध्यायः ॥ ७ ॥**

---

३१ °रं सर्पिर्दीपनीयं प°–च. ३२ °द्यो मुञ्चन्ति जी°–क. ख. च. ३३ स्वमेव च वि°–क. ३४ संश्रितं वि°–च. संसृतं वि°–घ. ३५ °काविष्ठा म°–च. ३६ °नं न समञ्जसम्–ख. ३७ कर्मवैचित्र्य भा°–ख. च., धर्मा विचित्रभागेषु–क. ३८ °षां निदर्शनम्–च.

# अन्नरक्षाविधिरष्टमोऽध्यायः ।

१ प्रतिज्ञा ।

**५६६–अथातोऽन्नरक्षाविधिमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १**

५६६–अन्नस्य च पानस्य च स्वरूपमुक्तम् । एवं विज्ञातस्वरूपं पथ्यमप्यन्नजातं पानं च विषाद्युपहतं रोगाय मरणाय वा संपद्यते । अतस्तद्रक्षणायाध्यायारम्भः ५६६

**टिप्पणी**—पूर्वयोरध्याययोराहार उक्तः, स चारक्षितो रोगहेतुः । अतस्तस्य रक्षा कर्तव्या । तत्कथनार्थमयमन्नरक्षाविध्यध्याय आरभ्यते–अथात इति ५६६

२ अन्नपानदूषणहेतवः ।

**५६७–ईश्वराणां वसुमतां विशेषेण तु भूभुजां प्रायेण मित्रेभ्योऽप्यमित्रा भूयांसो भवन्ति । ततस्तत्प्रयुक्ताः समासन्नवर्तिनोऽन्नपानादिषु विषं प्रयच्छन्ति । स्त्रियश्च तत्प्रणिधिप्रयुक्ताः सौभाग्यलोभेन ॥ २**

५६७–तेन चान्नपानरक्षणेनान्यस्य न तथा प्रयोजनं, यथा भूभृतः । बह्वपायत्वाद्बहूपजीव्यत्वाच्च । तस्माद्राजा कुलीनत्वादियुक्तं प्राणाचार्यं भिषजं परिगृह्णीत–स्वीकुर्यात् । कुत आह–**ईश्वराणामित्यादि** । सर्वेषामेवेश्वराणां प्रभविष्णूनां वसुमतां धनिनां च विशेषेण भूभृतां राज्ञां न तावन्ति मित्राणि भवन्ति यावन्तोऽमित्राः । **तत इति** । यतोऽमित्रा भूयांसो भवन्त्यतस्तत्प्रयोगादमित्रप्रयोगात्समासन्नवर्तिनः परिचारका अन्नपानशयनादिषु विषं प्रयच्छन्ति । स्त्रियश्चान्नपानादिषु विषं प्रयच्छन्ति राज्ञः । किंभूताः ? तत्प्रणिधिप्रयुक्ता अमित्रचारचोदिताः । कथं ददति? सौभाग्यलोभेन । प्रायेण भूभृद्योषिद्भ्यस्तच्छत्रचाराः पाषण्डादिच्छद्मनैवं ब्रुवन्ति–यथानेनौषधेन भर्त्रेऽन्नपानादिषु दत्तेन सौभाग्यं भवतीति ५६७

**टिप्पणी**—ईश्वराणामिति । अत्र ईश्वराः–नेतारः । वसुमन्तः धनिनः । भूभृतो–नृपाः इति बोध्यम् । तत्प्रणिधिप्रयुक्ताः–शत्रूणां चरैः सौभाग्यकरमिदमिति बोधिताः दुष्टाः स्त्रियः कदाचिदज्ञानाद्वा सौभाग्यलोभेन–वशीकरणेच्छया विषं प्रयच्छन्तीति पूर्वेणान्वयः । अत्र स्त्रीग्रहणमविवेकिजनोपलक्षणार्थम् ५६७

३ प्राणाचार्यलक्षणानि ।

**५६८–तस्माद्राजा कुलीनं स्निग्धमाप्तमास्तिकमार्यमार्यपरिग्रहं दक्षं दाक्षिणं निभृतं शुचिमनुद्धतमनलसमव्यसनिनमनहंकृतमकोपनमसाहसिकं वाक्यार्थावबोधकुशलं,निष्णातमष्टाङ्गे,यथाम्नायमायुर्वेदे सुविहितयोगक्षेमं सन्निहितागदादियोगं सात्म्यज्ञं च प्राणाचार्यं परिगृह्णीयात ॥ ३**

५६८–किंभूतं प्राणाचार्यमाह–कुलीनं उत्कृष्टे कुले जातम् । स्निग्धं राज्ञः । आप्तमविसंवादिवचनम् । आस्तिकमदृष्टमस्तीति मानिनम् । आर्यं साधुवृत्तम् । आर्यपरिग्रहं तद्विधदारादिकम् । दक्षं चतुरम् । दाक्षिणं राज्ञोऽन्येषां च मित्रपरम् । निभृतं राजकार्येषु निश्चलम् । अनुद्धतं नम्रम् । अनलसमुत्थानशीलम् । अव्यसनिनं अदुःखाभिभूतम् । अनहंकृतमनुत्सिक्तम् । अकोपनसाहसिकौ प्रसिद्धौ । वाक्यार्थावबोधे वाक्यतात्पर्याधिगमे च कुशलम् । तथा निष्णातं कुशलं वाक्यपाठावबोधधारणाप्रयोगैरष्टाङ्गायुर्वेदे । यथाम्नायमागमानतिक्रमेण । सुष्ठु विहितौ निष्पादितौ योगक्षेमौ येन तथा । सन्निहिता नित्यनिकटस्था अगदा विषूचिकादिप्रशमनादयो योगा यस्य । सात्म्यज्ञं सर्वस्य देशादिना सात्म्यं जानातीति ५६८

**टिप्पणी**—प्राणाचार्य–चिकित्सकश्रेष्ठम् । एतल्लक्षणविशेषाश्च सुश्रुतात् ( कल्प. अ. १–८–११ ) चरका– ( सू. अ. २९–७ ) च्चावगन्तव्याः 'शीलवान्मतिमान्युक्तो द्विजातिः शास्त्रपारगः । प्राणिभिर्गुरुवत्पूज्यः प्राणाचार्य इति स्मृतः ॥' इति च ( च. चि. अ. १ पा. ४ ) ५६८

४ राज्ञो वैद्यपरतन्त्रत्वम् ।

**५६९–तमर्थमानाभ्यां यथाकालं गुरुमिव शिष्यः, पितरमिव पुत्रः पूजयेत् । प्रतिकूलमपि तद्वचः सांप्रतं मतमिति प्रतिमन्येत । न हि भद्रोऽपि गजपतिर्निरङ्कुशः श्लाघनीयो जनस्य । तस्मात्तदायत्तमाहारविहारं प्रति चात्मानं कुर्यात् ॥ ४**

५६९–तं च प्राणाचार्यं राजा अर्थेन मानेन च सत्कारेण च पूजयेद्यथाकालम् । यथा गुरुं शिष्यः पूजयति, पितरं च यथा पुत्र इति । प्रतिकूलं द्विष्टमपि तस्य प्राणाचार्यस्य वचनं सांप्रतं युक्तमिति मन्येत । यस्मान्न हि सुशीलोऽपि गजपतिर्निरङ्कुशः अङ्कुशरहितो जनस्य श्लाघनीयो भवति । तस्माद्राजा प्राणाचार्यायत्तमाहारविहाराभ्यामात्मानं कुर्यात् । तत्प्रतिषिद्ध आहारो विहारश्च न विधेयः, तदङ्गीकृतश्च विधेय इत्यर्थः । भद्र इति जात्युत्कृष्टो हस्ती नच्छास्त्रेषु प्रसिद्धलक्षणः ५६९

**टिप्पणी**—भद्र इति । भद्र–मन्द्र–मृग–मिश्राख्याश्चत्वारो गजजातयः । तत्र भद्रजातीनां गजानां लक्षणं यथा– 'मध्वाभदन्ताः, सुविभक्तदेहा न चोपदिग्धाश्च कृशाः क्षमाश्च । गात्रैः समैश्चापसमानवंशा वराहतुल्यैर्जघनैश्च भद्राः ॥' इति ५६९

५ वैद्यपराधीनत्वे हेतुः ।

**५७०–उपात्तमपि खलु जीवितमुपायबलेन स्वयमधितिष्ठति ॥ ५**

५७०–एतेन किं प्रयोजनमित्याह–उपात्तमदृष्टादागतमपि जीवितं सापायमुपायबलेन स्वयमनायासेनैव शरीरमधितिष्ठति । एष च महानुपायो यद्वैद्यपरायत्तता ५७०

६ भिषजां राजगृहसन्निवेशनम् ।

**५७१–अपि च बहुपरिपीडा नरपतयः । सन्ति चाशुकारिणः शूलसंन्यासादयः । प्रतिक्षणं प्रत्यवेक्षणीयावस्थाश्च रोगिणो विशेषेण राजानः । ते हि प्रमादपरिगता दुःखासहिष्णवश्च स्वयमप्यपथ्य-**

१° मः । ई°–क. ख. च. २° भ्योऽमि°–क. च. ३ तत्प्रयोगात्स°–क. ४° मव्यसनम°–घ. ५° क्षीत । त°–क ख. घ च. ६° भ्यां यथाम्नायं संप्रदायानतिक्रमेण कालेऽनुकालं ( ले ) गुरु°–घ. च. ७° पि च त°–क. च. ८ °प्रत मि° ९ तिमन्येत । न हि भ°–घ. १० रं प्रति चात्मनः कु°–घ. ११ स्वसमयम°–क. ख. घ . च. १२° हिष्णवः स्व°–घ.

रुचयः सन्निहितहितप्रियवचनैनप्रायपरिचारकाश्च। तस्मात्भिषजो राजा राजगृहासन्ने निवेशनं कारयेत्। तथा हि सर्वोपकरणेषु नृपतिशरीरोपयोगिष्वपरोक्षवृत्तिर्भवति ॥ ६

५७१–अपि च न केवलमनन्तरोक्तेन प्रकारेण **प्राणाचार्यं** परिगृह्णीत राजा, यावद्राजगृहनिकटे भिषजः प्राणाचार्यस्य निवेशनं वेश्म कारयेत्। यतो नरपतयो बहुपरिग्रहाः प्रभूतपरिवाराः। शूलादयश्च व्याधय आशुकारिणः स्वमर्थं मरणमाशु शीघ्रं कुर्वन्तीत्याशुकारिणः । सर्वे च रोगिणः प्रतिक्षणं प्रत्यवेक्षणीयावस्थाः, विशेषेण राजानः। किं ते विशेषेणेत्याह–ते हि स्वातन्त्र्यात् प्रमादं कुर्वन्ति। रोगौषधादिदुःखं सोढुं न शक्नुवन्ति । तथा स्वयं स्वभावेनैवापथ्याभिलाषिणः। तेभ्यश्च प्रायेण निकटवर्तिनोऽहितं प्रियं च वदन्तीति। तस्माद्राजगृहनिकटवर्ती भिषक्सर्वेषु राजशरीरोपकरणेषु प्रत्यक्षवृत्तिर्भवति। एवं चान्नपानादिकमुपकरणं रक्षितुं शक्नोतीति। तत्रान्नं प्राधान्यात् प्रथममुच्यते ५७१

**टिप्पणी**—परिग्रहः–परिजनः, पत्नी च। राजगृहासन्न इति–राजगृहानससंनिधौ इति भावः। महानसलक्षणं यथा–'प्रशस्तदिग्देशकृतं शुचिभाण्डं महच्छुचि । सजालकं गवाक्षाढ्यमाप्तवर्गनिषेवितम् । विकक्षसृष्टसंसृष्टं सवितानं कृतार्चनम्। परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम् (सु. कल्प. १. १२–१३)। अस्यार्थः–प्रशस्ता दिगत्राग्नेयी, देशस्तु प्रशस्तगुणसंपदा युक्तः, महत्–विस्तीर्णम्। शुचि–अनुपहतम्। सजालकम्–जालकसहितम्। गवाक्षाढ्यम्–वातायनसमृद्धम्। विकक्षसृष्टसंसृष्टम्–विगततृणस्थानसंपर्कम्। एतेन रसवतीसमीपे तृणसंचयो न करणीय इत्युक्तं भवति । सवितानम्–वितानकसहितम्। कृतार्चनम्–कृताग्निपूजनम् इति ५७१

७ राजभोजने वैद्यस्येतिकर्तव्यता।

५७२–[१३] **सम्यक्संपन्नमन्नं सुपरीक्षितं विशुद्धमग्न्यादिषु प्रागुपनीतं शिखिना दृष्टमभिप्रोक्षितं प्रोक्षणैः पुरैः स्थितो राजानं हस्तबद्धौषधिरत्नं भोजयेत्॥ ७**

५७२–स च भिषक् राज्ञः पुरतः स्थितो राजानमन्नं भोजयेत् । किंभूतमन्नम् ? सम्यक् साध्वीभिः स्वणवाष्पाद्रेमनादीक्रियाभिः संपन्नम्, सुपरीक्षितं वक्ष्यमाणेन (सू. ५७४–५८९) विधिना, प्रथमं चाग्निमाक्षिकादिभ्यो दत्तं, तथा सविषं निर्विषमिति परिज्ञातं भवति, शिखिना मयूरेण दृष्टं, प्रोक्षणैः सुपर्णमन्त्रोदकादिभिः प्रोक्षितं सिक्तम्। तथा हि सविषमपि निर्विषीभवति। किंभूतं राजानं हस्ते बद्धान्यौषधानि रत्नानि च येन तम् ५७२

**टिप्पणी**—प्रोक्षणैः–प्रोक्षणमन्त्रैः।

८ राजभोजनेऽगदप्रलिप्तदुन्दुभिवादनम्।

५७३–**भुञ्जानस्य[१४] चास्य दुन्दुभीनगदप्रलिप्तान् वादयेत्**

५७३–अस्य च राज्ञो भुञ्जानस्य चागदप्रलिप्तान् दुन्दुभीन् भेरीर्वादयेत् ५७२

**टिप्पणी**—दुन्दुभीनिति–अत्र दुन्दुभिशब्द उपलक्षणार्थः। तेन मृदङ्गपटहादीनां ग्रहणम् । अगदप्रलिप्तानिति–अत्र दुन्दुभ्यादिवाद्यप्रलेपनार्थं सुश्रुतपठितक्षारागदश्वरकोक्तो महासुगन्धत्याभिधो वा ग्राह्यः (सु. कल्प. अ. ३.१५; ६–४; च. चि. अ. २३.७७–८१) ५७३

९ सविषान्नलक्षणम्।

५७४–**तत्र सविषमन्नं स्राव्यमाणमविस्राव्यं भवति, चिरेण पच्यते, पक्वं च सद्यः पर्युषितमिव निरूष्म स्तब्धं च जायते, यथास्वं वर्णगन्धरसैर्व्यापद्यते, प्रक्लिद्यते, चन्द्रकाचितं च भवति ॥ ९**

५७४–सुपरीक्षितमित्युक्तं सा च परीक्षोच्यते–**सविषमन्नमित्यादि**। सविषमन्नं स्राव्यमाणं स्रावयितुमशक्यं भवति। चिरेण च पाकं याति । पक्वमात्रमेव पर्युषितमिव गताहोरात्रमिवोष्मरहितं स्तब्धं कठिनं च संपद्यते । यथास्वं यथात्मीयैर्वर्णादिभिर्नश्यति। क्लेदं च याति । चन्द्रकैश्च नानाविधैर्मण्डलैः समन्ताच्चितं भवति ५७४

**टिप्पणी**—चन्द्रकाचितमिति–चन्द्रकैः–मयूरपिच्छतुल्यैः जलक्षिप्ततैलबिन्दुरूपैर्मण्डलैः आचितं व्याप्तं भवति ५७४

१० विषदुष्टव्यञ्जनलक्षणम्।

५७५–**व्यञ्जनानामाशु शुष्कत्वं भवति, [१५]क्वाथध्यामता, हीनातिरिक्तविकृतानां [१६]चात्र च्छायानां दर्शनमदर्शनमेव वा, फेनपटलैः[१७]सीमन्तोर्ध्वविविधराजितन्तुबुद्बुदप्रादुर्भावो विशेषेण लवणोल्बणेषु फेनमाला ॥ १०**

५७५–व्यञ्जनानां रसादीनां सविषाणां क्वाथः-पच्यमानस्योर्ध्वं प्रवृत्तः फेनो मलिनो भवति। अत्र च व्यञ्जनेषु च्छायानां मुखादिप्रतिबिम्बानां स्वप्रमाणवर्णादिना हीनानामतिरिक्तानां विकृतानां विलक्षणानामेव वा दर्शनमथवा च्छायानामदर्शनमेव । अन्ये तु छायाशब्देन कान्तिं वदन्ति। तेषु च व्यञ्जनेष्वधिकानां बाष्पादीनां संभवः। फेनपटलं फेनसमूहः। सीमन्तो विच्छेदः। ऊर्ध्वमुपरि विविधा राजयो रेखाः तन्तुबुद्बुदे प्रसिद्धे। तत्र लवणोल्बणेषूत्कटलवणद्रव्येषु व्यञ्जनेषु सविषेषु फेनमाला ५७५

**टिप्पणी**—व्यञ्जनानीति–'व्यञ्जनं सूपशाकादिमिष्टान्नं तेमनं स्मृतम्। उपदंशो विदंशः स्यात्संधानो रोचकश्च सः' इत्युक्तत्वाव्यञ्जनं तेमनम् (तोंडीलावणीं–चटणी, कढी), तानि च दधितक्रदाडिमादिसंस्कृतानि भवन्ति। तान्याद्राण्याशु–क्षिप्रं विपद्यन्ति चेच्छुष्यन्ति। क्वाथध्यामता-क्वाथस्य ध्यामता–मालिन्यम्। छाया–प्रतिबिम्बम्। तस्य दर्शनमदर्शनं वा–कदाचिद्दृश्यते नैव वा। दृश्यते चेदपि सा स्वप्रमाणान्न्यूना, अतिरिक्ता, तुल्यप्रमाणेऽप्यन्यजातीयेवभासते। राजयो-रेखाः ५७५

१३° नप्रायपरिवाराश्च। त°–क. घ. च. १४ °न्नं संनि°–घ. १५° दिभिः प्रा°–च. १६ णैः पुरतः स्थि°–च, °णैः पुरः स्थितं रा°–ङ १७ °नस्यास्य दु°–क. ख. १८ दुन्दुभीरगदप्रलिप्ता वा °–क च. १९ °क्तत्वध्यामता ही ना°–क. २० क्वाथस्य ध्या°–ख. च. २१° लसीमन्तकोर्ध्वविवि°–क. ख.

११ सविषद्रवद्रव्येषु विविधा राजयः।

**५७६–रसस्य मध्ये नीला राजिः, पयसस्ताम्रा, मद्यतोययोः काली, दध्नः श्यावा, तक्रस्य नीलपीता, मस्तुनः कपोताभा, धान्याम्लस्य कृष्णा, द्रवौषधस्य कपिला, घृतस्य सलिलाभा, क्षौद्रस्य हरिता, तैलस्यारुणा, वसागन्धश्च ॥ ११**

५७६–मांसरसे नीला राजिः। सुबोधमेतत्। ५७६

**टिप्पणी**—रसस्येति–मांसरसे नीलवर्णा राजिः, श्रृंगि ताम्रा, मद्यतोययोः कृष्णा, दधि–कपिशा ५७६

१२ विषदूषितफललक्षणम्।

**५७७–फलानामामानां पाकः, पक्वानां प्रकोथः, ॥१२**

**टिप्पणी**—फलानामिति। प्रकोथः–पूतीभावः, विशरणम्।

१३ विषदूषितद्रव्यलक्षणम्।

**५७८–द्रव्याणामार्द्राणां सहसा म्लानत्वमुत्पक्वभावः, शुष्काणां श्यावता वैवर्ण्यं वा, कठिनानां मृदुता, मृदूनां कठिनत्वम् ॥ १३**

५७८–आर्द्राणां द्रव्याणां मूलकबिसादीनां सविषाणां म्लानत्वमुत्पक्वत्वं च। उत्पक्वत्वम्–पक्वानामिव मार्दवादि। शुष्काणां शुण्ठीहरिद्रादीनां श्यावत्वं वैवर्ण्यं वा। श्यावो–नीललोहितः ५७८

**टिप्पणी**—द्रव्याणामिति। म्लानता–किंचिच्छुष्कत्वम्। वैवर्ण्यम्–विकृतवर्णत्वम् ५७८

१४ सविषमाल्यलक्षणम्।

**५७९–माल्यस्य म्लानता गन्धनाशः स्फुटिताग्रत्वम् १४**

**टिप्पणी**—माल्यस्येति। स्फुटिताग्रत्वम्–पुष्पस्याग्रभागेषु शीर्णत्वम् ५७९

१५ सविषास्तरणप्रावरणलक्षणम्।

**५८०–आस्तरणप्रावरणानां ध्याममण्डलता तन्तुरोमपक्ष्मशातनं च ॥ १५**

५८०–आस्तरणप्रावरणानां श्यामानि मलिनानि मण्डलानि तन्त्वादिशातनं च ५८०

**टिप्पणी**—आस्तरणेति। ध्यामानि मलिनानि मण्डलानि–तेषां भावो ध्याममण्डलता। तन्त्वेति–तन्तवः सूत्राणि, तेषामल्पा भागाः रोमाणि, तस्मादप्यल्पतरा अंशाः पक्ष्माणि इति रोमपक्ष्माणि वस्त्रसंबन्धीन्येव ५८०

१६ विषदुष्टानां लोहमणिमयानां भाजनादीनां लक्षणम्।

**५८१–लोहमणिमयानां पङ्कमलोपदेहः, स्नेहरागगौरवप्रभावर्णस्पर्शनाशश्च ॥ १६**

५८१–लोहानां मणिमयानां च पङ्केन मलेन चोपदेहः, स्नेहादिनाशश्च ५८१

**टिप्पणी**—लोहेत्यादि–लोहशब्दो सकलसुवर्णादिधातूनामुपलक्षणार्थो मणिरत्नानां सर्वविधानां च। पङ्कमलोपदेहः–पङ्कवन्मलिनैः कल्कैराचितत्वम्। (कलङ्कः–डाग) स्नेहेति–धात्वादानां स्नेहस्य व्यपगमः, विपर्ययो वा। एवं सर्वत्र प्रभा–वर्णप्रकाशिनी, सा च दूरादवभासते। यथा पाषाणादिपरिपूर्णानामपि पर्वतादिप्रदेशानां दूराद्विलक्षणैव कान्तिः प्रकाशते। स्पर्शनाशः—शीतानां उष्णः, उष्णानां शीतश्च स्पर्शाभावो वा। गुरूणां लघुत्वम् ५८१

१७ विषदातुर्लक्षणम्।

**५८२–विषदस्तु स्वदोषशङ्कया त्रस्तो, भीतः, स्वेदवेपथुमान्, शुष्कश्यावववक्त्रः, समन्तात्सोद्वेगं विलक्षोऽभिवीक्षते, यत्र चानेन विषं प्रयुक्तं तद्विशेषेण। तथा स्रस्तोत्तरीयः स्तम्भकुड्यादिभिरात्मानमन्तर्धत्ते। स्खलितगतिर्दीनो लज्जावानस्थानेहासी पृष्टोऽप्यसंबन्धमुत्तरं ददाति, नैव वा। विवक्षुर्मुह्यति, अङ्गुलीः स्फोटयति, ग्रीवामालभते, शिरः कण्डूयति, ओष्ठौ परिलेढि, जम्भते, भुवं विलिखति, क्रियासु त्वरते, विपरीतमाचरति, स्वभूमौ च नावतिष्ठते ॥ १७**

५८२–विषं ददातीति विषदः। स स्वमात्मीयं दोषमाशङ्क्य त्रासादिभिर्युक्तो भवति। एतान्येव विषदातृलक्षणानि। तत्रिः शीघ्रोत्पत्तिविनाशो भयवेगत्रासः, भीतः सभयः। वेपथुः कम्पः। शुष्कश्यावववक्त्रः शुष्कास्यः, श्याववमुखः। समन्तात्सर्वदिक्षु सोद्वेगं कृत्वा विलक्षोऽस्पष्टदृष्टिर्वीक्षते। यत्र यस्मिन् द्रव्ये तेन विषं प्रयुक्तं तद्विशेषेण वीक्षत इति संबन्धः। तथा स्रस्तोत्तरीयपटः स्कन्धादितः स्रंसते पतति तथा स्तंभादिभिरात्मनोऽन्तर्धानं करोति, कुड्यं भित्तिः। अस्थानेऽप्रसङ्गे हसति। पृष्टः सन्नसंबन्धमनन्वितपदार्थमुत्तरं ददाति। नैव वोत्तरं ददातीति संबन्धः। विवक्षुर्मुह्यति। यत्किञ्चिद्वक्तुमिच्छति न तद् स्मरतीत्यर्थः, ग्रीवामालभते–शिरोधरां स्पृशतीति। सर्वं च कर्तव्यं विपरीतमाचरति। स्वभूमावुचिते स्थाने नावतिष्ठते ५८२

**टिप्पणी**—विषदस्त्विति। विलक्षः–चलदृष्टिः स्वभूमाविति–विषदः शंकया आत्मनो नियतायामावासभूमौ न तिष्ठति, इतस्ततः पर्यटतीति वार्थः ५८२

१८ वन्ह्यादिपरीक्षायाः प्रयोजनम्।

**५८३–नृपाज्ञात्वरयापि केचिदपराधान्तराद्वाऽनवस्थितसत्त्वाः समाचरन्त्येवम्। तस्मादग्न्यादिष्वपि परीक्षेत ॥ १८**

५८३–एवं च सविषमन्नमग्न्यादिष्वपि परीक्षेत। यतो नैतावता विषदलक्षणेनैव निश्चयेन सविषमन्नं परिज्ञायते। यस्मादनवस्थितसत्त्वा अधीरप्रकृतयो नृपपरिचारका नृपाज्ञात्वरिता अपराधान्तराद्वाप्येवंलक्षणयुक्ता भवन्ति। विषदानापराधादन्योऽपराधोऽपराधान्तरम् ५८३

१९ सविषान्नप्रक्षेपे वन्हेः स्थितिः।

**५८४–वह्निस्तु सविषमन्नं प्राप्यैकावर्तो रूक्षमन्दार्चिरिन्द्रायुधवदनेकवर्णज्वालो भृशं चटचटायते॥१९**

५८४–वह्निस्तु सविषमन्नं प्राप्यैकावर्तो भवति–मुसलाकृ-

२२ °तस्य कपिला°–ग. २३ °श्च शेषस्य द्रवौषधस्य क्वाथादेः कपिला। फ°–ग. २४ म्लानत्वमन्यत्वमा°–क. ख. २५ °र्ण्यं च क°–क. ख. च. २६ °क्ष्मसदनं च। को°–क. ख. च. २७ °नगामी। पृ°–क. ख. २८ °वक्ष्मु°–क. ख. च. २९ °पाशया त्व°–क. ख. च. ३० °ग्न्यादिभिः प°–च.

तिर्ज्वलति । रूक्षं निःस्नेहं मन्दं मृदुवेगमर्चिर्ज्वाला भवति ५८४

**टिप्पणी**—वन्हिस्त्विति–सविषेणान्नेन चटचटायते। इति शब्देन विषज्ञानम्। इन्द्रायुधवदनेकवर्णज्वाल इत्यनेन–रूपेण विषज्ञानम्। कुणपगन्धी धूमश्चेति–गन्धेन विषज्ञानम्। इति सूचितम् ५८४

२० सविषान्नप्रक्षेपे धूमस्य वर्णनम्।

**५८५–कुणपगन्धी धूमश्चास्य मूर्च्छाप्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलतां जनयति ॥ २०**

५८५–तत्र धूमश्चास्य सविषान्नस्य प्रसेकरोमहर्षादीञ्जनयति ५८५.

**टिप्पणी**—कुणपेति–कुणपं शवम् ५८५

२१ सविषधूमविकृतौ चिकित्सा।

**५८६–तत्र नलदकुष्ठलामज्जकैः [३१]क्षौद्रद्रुतैर्नस्यमञ्जनं च कुर्यात्। धूममेव वापामार्गविडङ्गबलाद्वयाचित्रकमेषशृङ्गिपुष्पसुमनःक्षारकद्राक्षाघृतगुडकृतं [३२]पिबेत् ॥ २१**

५८६–तत्र विषान्नधूमजेषु प्रसेकादिषु नलदादिभिः समभागैर्माक्षिकद्रुतैर्नस्यं चाञ्जनं च कुर्यात्। नलदं मांसी। धूमं वा अपामार्गादिकृतं पिबेत्। सुमनःक्षारकं सुमनसां मुकुलकम्। अपामार्गादिद्राक्षान्तं समभागम्। घृतगुडौ पिण्डीकरणाथ। हेतुसादृश्यादेवकारप्रयोगः ५८६

**टिप्पणी**—तत्रेति–नलदम्–मांसी, तथा चोक्तं राजनिघण्टौ–' गन्धमांसी तिक्तशीता कफकण्ठामयापहा। रक्तपित्तहरा वर्ण्या विषभूतज्वरापहा ' इति। कुष्ठम्–वाप्यम् ( कोष्ठ ), तथा च धन्वन्तरीयनिघण्टौ–' कुष्ठं कटूष्णं तिक्तं स्यात्कफमारुतरक्तजित्। त्रिदोषविषकण्डूश्च कुष्ठरोगांश्च नाशयेत् ' इति। लामज्जकम्–वीरणमूलम्, उशीरम्, ( काळ्या वाळ्याचें मूळ ) भावप्रकाशनिघण्टौ–" उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम्। मधुरं ज्वरहृद्वांतिमदनुत्कफपित्तनुत्। तृष्णास्रविषवीसर्पदाहकृच्छ्रव्रणापहम्" इति। क्षौद्रम्–मधु। अपामार्गः–रक्तापामार्गः ( आघाडा ), तस्य फलानि। ध. नि.–'रक्तापामामार्गकः शीतः कटुकः कफवातनुत्। व्रणकण्डूविषघ्नश्च संग्राही वान्तिकृत् परः ' इति। विडङ्गः–चित्रतण्डुलः ( वावडिङ्ग ) ध. नि. ' रूक्षोष्णं कटुकं पाके, लघु वातकफापहम्। ईषत्तिक्तं विषान्हन्ति विडङ्गं कृमिनाशनम् ' इति। बलाद्वयम्–बला अतिबला च ( तुपकडी–पेटारी ) ते च शुक्लपीतपुष्पे। ' बला स्निग्धा हिमा स्वादुर्वृष्या बल्या त्रिदोषनुत्। रक्तपित्तक्षयं हन्ति बलौजो वर्धयत्यपि, तिक्ता कटुश्चातिबला वातघ्नी कृमिनाशनी। दाहतृष्णा विषच्छर्दिक्लेदोपशमनी परा ' मेषशृङ्गी–मेषस्य शृंगमिव फलं यस्याः सा, अजशृङ्गी ( मढाशगा ) ' अजशृङ्गी कटुस्तिक्ता कफार्शःशूलशोफजित्। चक्षुष्या श्वासहृद्रोगविषकासाक्षिशूलजित् ' इति रा. नि.। तस्याः पुष्पम्। सुमनःक्षारकः–जातिपुष्पकोरकम् ( जाईच्या कळ्या ) ५८६

२२ पक्ष्यादिभिरन्नपरीक्षणे हेतुः। वयोभिरन्नपरीक्षा च।

**५८७–स्नेहलवणयोगादपि चाग्निरित्थं स्यात्। अतो वयोभिः परीक्षेत। तत्र विषजुष्टाहाराभ्यवहारात्काकाः क्षामस्वरा भवन्ति। मक्षिकाः सविषान्ने[३४] न निलीयन्ते। मिलीनाश्च व्यापद्यन्ते। दृष्ट एव चास्मिन्[३६] चकोरस्याक्षिणी विरज्येते। कोकिलस्य स्वरो विकृतिमेति। हंसस्य गतिः स्खलति। कूजति भृङ्गराजः। माद्यति क्रौञ्चः। विरौति कृकवाकुः। विक्रोशति शुकः शारिका च। छर्दयति चामीकरः। अन्यतो याति कारण्डवः। म्रियते जीवञ्जीवको, ग्लायति वा। हृष्टरोमा भवति नकुलः। शकृद्विसर्जति वानरः। रोदिति पृषतः। हृष्यति मयूरः। दर्शनादेव चास्य विषं मन्दतामुपैति ॥ २२**

५८७–वयोभिः पक्षिभिरपि परीक्षेत। यतः कदाचिन्निर्विषमप्यन्नं स्नेहलवणादिकं प्राप्याग्निरित्थमेव भवति। अन्यत्सुबोधम्। मक्षिकाः सविषेऽन्ने न निलीयन्ते–नावतरन्ति। निलीना आपतिता आपन्नाश्च व्यापद्यन्ते–म्रियन्ते। कृकवाकुः कुक्कुटो विरौत्यधिकं शब्दं करोतीत्यर्थः। शुकशारिके विक्रोशतः। उच्चैर्दीर्घशब्दो विक्रोशनम्। दृष्ट एव सविषेऽन्ने जीवंजीवको मरणं ग्लानिं वा प्राप्नोति। नकुलस्य च रोमहर्षः। वानरस्य पुरीषोत्सर्गः। पृषतस्य रोदनम्। मयूरस्य हर्षः। अस्य च मयूरस्य दर्शनात्तत्कालमेव विषं मन्दशक्तितां प्राप्नोति ५८७

**टिप्पणी**—स्नेहाति–विषजुष्टेति–एतेन रसेन विषज्ञानं सूचितम् ५८७

२३ सविषान्नोष्मलक्षणम्।

**५८८–विषदूषितस्य पुनराहारस्योष्मा मयूरकण्ठाभोऽभ्युदेति। तद्बाष्पेणापि[३८] धूमवन्मूर्छादयः। तेषां तद्वदेव साधनम् २३**

५८८–अतिपीतधूमवत्सविषान्नबाष्पाद्याधयो भवन्ति। धूमविधौ चोक्तं मूर्च्छारक्तपित्तादितानीति। तद्वच्च साधनं चिकित्सितं घृतपाननस्यादिकं धूमविधावेव वक्ष्यमाणलक्षणम् ५८८

**टिप्पणी**—विषदूषितस्येति–टीकायां वक्ष्यमाणलक्षणमिति–सन्नस्थाने त्रिंशाध्याये इति यावत् ५८८

२४ विषान्नस्पर्शे विकारास्तच्चिकित्सा च।

**५८९–हस्तेन स्पृष्टमन्नं विषवद्दाहशोफस्वापनखशातान् करोति, तस्य श्यामेन्द्रगोपसोमोत्पलैर्लेपः २४**

५८९–विषान्नं स्पृष्टं विषमिव स्पृष्टं दाहादीन् करोति। स्वापः अचेतनत्वम्। तत्र विषस्पर्शजेषु दाहादिषु श्यामादिभिः समभागैर्जलपिष्टैः स्पृष्टाङ्गलेपः। श्यामा गन्धप्रियङ्गुः। इन्द्रगोपो भास्वरः क्रिमिविशेषः। सोमो मार्क्षी।

३१ °लतां जन°–ग. ३२ °द्रप्लुतैर्न°–क. ख. ३३ °तं विपि°–च. ३४ °न्ने न विली°–क. ३५ °ना वा वि पद्य°–क. ख. ३६ °व चास्मिंश्चको°–क ख. च. ३७ °ष्पेण भू°–क. ख. ३८ तत्र स्या°–क. ख. च.



आर्द्रकम् ( सू. ५११ )

---



काकः ( सू. ५८७ )



शुकः ( सू. ५८७ )



भृङ्गराजः ( सू. ५८७ )



वानरः ( सू. ५८७ )

**टिप्पणी**—हस्तेनेति । एतेन **स्पर्शेन** विषज्ञानं सूचितम् । श्यामा–प्रियङ्गुः ( गव्हला ) सोमा–गुडूचीति डल्हणः । सोमलता इत्यन्ये । उत्पलं–नीलोत्पलम् । इन्द्रगोपेत्यत्र 'इन्द्रगोपा' इति पाठं स्वीकृत्य इन्द्रा–इन्द्रवारुणी ( लघु इन्द्रावण ) गोपा–सुगन्धमूला सारिवा (उपळसरी) इति अर्थं वदन्ति । इन्दुमते तु इन्द्रगोपो नाम मृगनक्षत्रसंभूतो रक्तवर्णकोऽङ्किज्जो भास्वरलघुकीटविशेषः । इन्द्रोगोपो रक्षको वर्षाभवत्वात् ५८९

२५ सविषान्नाभ्यवहारे लक्षणानि, तच्चिकित्सा च ।

**५९०-अभ्यवहियमाणं त्वोष्टचिमिचिमान्तर्वक्त्रदाहजिह्वामूलगौरवहनुस्तम्भदन्तहर्षलालाः करोति[३९] रसापरिज्ञानं चात्र धूमोक्तं दन्तकाष्ठोक्तं च कर्म२५**

५९०–सविषमन्नमभ्यवह्रीयमाणस्य स्थितमोष्ठचिमिचिमायनादीन् करोति । लवणरसापरिज्ञानं लवणरसो जिह्वां न चेतयत इत्यर्थः । तत्र धूमोक्तं कर्म । विषान्ने धूमोक्तं नलदकुष्ठादिभिर्नस्यादिकं दन्तकाष्ठोक्तं सविषे दन्तकाष्ठे वक्ष्यमाणम् ( ५९९ ) ५९०

२६ आमाशयगतविषलक्षणम् ।

**५९१-आमाशयगतं स्वेदमदमूर्छाछर्दिवैवर्ण्याध्मानरोमहर्षदाहा[४०]क्षिहृदयोपरोधान् विन्दुभिश्चाचयमङ्गानां करोति २६**

५९१–तच्च विषान्नमामाशयप्राप्तं स्वेदादीन् करोति । दृष्टेहृदयस्य च रोधः स्तम्भः । बिन्दुभिर्नानावर्णैरङ्गानामाचयः समन्ताचयनम् ५९१

**टिप्पणी**—आमाशयगतमिति–भुक्तमात्रस्याधारो दृतिस- ( पखाल ) माकारो नाभेरूर्ध्वं वर्तमान आशयः आमाशयः ( च. वि. २–१७ ) ५९१

२७ आमाशयगतविषरोगे चिकित्सा ।

**५९२-तत्र मदनफलाला[४१]बुबिम्बीकोशातकीफलैर्दधिमधुयुक्तमाशु वमनं दद्यात्, निष्पावाम्बुभिर्वा । ततः स्निग्धशरीरं विरेचयेत् २७**

५९२–तत्र मदनफलादिभिर्दधिसंयुक्तैर्वमनं दद्यात् । **अलाबु**–कटुकालाबुफलम् । **बिम्ब्या**स्तुण्डिकेर्याः फलम् । **कोशातक्या** जालिन्याः फलम् । निष्पावाम्बुभिर्वा कवलैर्वमनम् । ततः कृते वमने पश्चात् स्निग्धशरीरं विरेचयेत् । **निष्पावः**–शिम्बिधान्यविशेषः । तदासुत्य संस्रुतं जलम् ५९२

**टिप्पणी**—तत्रेति–मदनः–छर्दनः ( गेळफळ ) बिम्बी–तुण्डी सा च तिक्ता ग्राह्या ( कडू तोंडलें) कोशातकी घोषकः ( कडू घोसाळें ) ५९२

२८ जीवनो नामागदः ।

**५९३-त्रिफलात्रिकटु[४२]नागपुष्पमधुकबर्हि[४३]णपर्णीबृहतीद्वयचूर्णं सिंहव्याघ्रवृकतरक्षु[४४]द्वीपिमार्जारसृगालमृगगोधानामन्यतमपित्तरससंयुक्तं[४५] सक्षौद्रं पानमेष जीवनो नामागदः परं सर्वविषौषधम् २८**

५९३–विरेचनार्थं च त्रिफलादिचूर्णं समाक्षिकं यथाप्रकृति च सिंहादीनामन्यतमस्यान्तर्जठरसंभवेन पित्तेन मृगोर्वारोगवाक्ष्या रसेन वा पानोपयोगेन संयुक्तं पाययेत् । अयं च योगो जीवनो नामागदः परं सर्वविषाणामौषधम् ५९३

**टिप्पणी**– तत इति । त्रिफला–पथ्याधात्रीबिभीतकानि, त्रिकटु–शुण्ठी, मरिचम्, पिप्पली च । नागपुष्पम्–नागकेशरं तदभावे पद्मकेसरं ग्राह्यम् । मधुकम्–यष्टीमधु ( ज्येष्ठमध ), बर्हिणम्–नतम् ( तगर ), पर्णीद्वयम् शालपर्णी, पृश्निपर्णी च । बृहतीद्वयम्–स्थूलबृहती क्षुद्रबृहती, (डोरली–रिंगणी), सिंहेत्यादिशब्दानामर्था मांसवर्गे प्रोक्ताः ( अ. सं. सू. ४९–५४ **प्रभा** ) विषहरत्वात्पित्तग्रहणम् ' तथा चोक्तं ' पित्तं तिक्तं विषहरम् ' ( अ. सं. सू. अ. ६–२८२) रसेति–अत्र रसशब्देन क्वाथो ग्राह्यः पानोपयुक्तत्वात् । स च रसो गवाक्ष्या इन्द्रवारुण्याः ( लघु इन्द्रावण ) एतच्चेन्दुमतानुसारेणोक्तम् । वस्तुतस्तु अत्र पित्तरसशब्देन द्रवावस्थमेव पित्तं ग्राह्यम् । अथवा रसशब्देन मांसरसो वा ग्राह्यः । क–च पुस्तकयोस्तु रसशब्दो नास्त्येव ५९३

२९ जीर्णेऽगदचिकित्सा ।

**५९४-तस्मिञ्जीर्णे[४६] श्यामाऽग्योषातिविषासिद्धेन पयसा घृतेन[४७] वोपस्तम्भितां यवागूं पाययेत्[४८]॥२९**

५९४–तस्मिंश्च जीर्णे श्यामातिविषासिद्धेन क्षीरेण घृतेन वोपस्तम्भितां स्वल्पेन युक्तां यवागूं पाययेत् । **श्यामा** गन्धप्रियङ्गुः ५९४

**टिप्पणी**—तस्मिन्निति–श्यामा–प्रियङ्गुः ( गव्हला ), व्योषम्–त्रिकटु । अतिविषा–उपविषा ( अतिविष ), घृतेनेति–अत्र पुराणं घृतं ग्राह्यम् । तदभावे नवीनमपि ५९४

३० चिकित्सोत्तरकृत्यम् ।

**५९५-परिणतायां च तस्यां त्रिकटुकासिद्धेन मुद्गयूषेण किंचिल्लवणेन ससर्पिष्केण मृद्वोदनं[४९] भोजयेत् । मधुकशिरीषचन्दनैश्चैनमालिम्पेत् ॥ ३०**

५९५–अन्यत्सुबोधम् ५९५

३१ पक्वाशयगतविषलक्षणानि ।

**५९६-पक्वाशयगतं तृड्दाहमू[५०]र्च्छातीसाराटोपतन्द्रेन्द्रियविकृतिबलभ्रंशकार्श्यपाण्डुत्वोदराणि जनयति ॥ ३१**

५९६–पक्वाशयगतं तृडादीन् करोति ५९६

**टिप्पणी**—पक्वाशयेति । पक्वाशयः–पच्यमानस्यविपक्वस्य चाशयः, अन्त्राणि नाभेरधः परितश्च । क्षुद्रान्त्राणि पच्यमानाशयः, बृहदन्त्रं तु पक्वाशयो मलाशयो वेति केचित् । अभ्यवहृतान्नस्य परिणामप्रकारं चरक आह (च. चि. अ. १५, ६–१२ ) आटोपः–उदरमध्ये सवेदनो गुडगुडाशब्दः । स च वायुजन्यो भवति । तन्द्रेति—तन्द्रालक्षणं यथा–'इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः । निद्रार्तस्येव यस्यैते तस्य तन्द्रां विनिर्दिशेत्' (मा. नि. १७–२०) निद्रा-

३९ °ति लवणर°–च. ४० दाहदृ°–च ४१ °लालाम्बुबि°–क. च. ४२ °टुकना°–च. ४३ °कबर्हणप°–च. ४४ °क्षुक्षद्वी°–क. ख. च. ४५ लमृगेणान्यत°–च. ४६ °त्तयुक्तं स°–क. ख. च. ४७ र्णे व्योपाति°–क. ख. च. ४८ °न चोप°–ख ४९ °येत् । म°–च. ५० मृदुमोद°–ख. ५१ °हमदमू°–क. ख. च.

यामिन्द्रियमनो मोहः, तन्द्रायामिन्द्रियमोहः। अतो निद्रातन्द्रयोर्भेद एव। नीलिनी-नीलिका ( नीळ ) इयं विषघ्नी रेचनी च। नीलिनीफलयुक्तेन-नीलिनीचूर्णसंयुक्तेन ५९६

३२ पक्वाशयप्राप्तविषचिकित्सा।

**५९७-तत्र नीलिनीफलयुक्तेन सर्पिषा विरेचनं, समाक्षिकं च दूषीविषारिं दद्यात् पाययेत् ॥ ३२**

५९७-तत्र नीलिनीफलसंयुक्तं सर्पिर्विरेचनम्। दूषिविषचिकित्सायां वक्ष्यमाणं ( उ. अ. ४८) दूषीविषारिनामानमगदं समाक्षिकं दद्यात् पाययेत् ५९७

**टिप्पणी**—दूषीविषारिमिति-'पिप्पल्यो ध्यामकं मांसी लोध्रमेला सुवर्चिका। कुटन्नटं नतं कुष्ठं यष्टीचन्दनगैरिकम्, दूषीविषारिर्नाम्नाऽयं न चान्यत्रापि वार्यते' इति। ध्यामकं रौहिषं तृणम्। लोध्रो लाक्षाप्रसादनः। सुवर्चिका स्वर्जिकः ( सज्जीखार ), कुटन्नटम्-परिपेलवम् ( नागरमोथा), इति दूषीविषार्यगदः ५९७

३३ दन्तकाष्ठप्रयुक्तविषलक्षणानि।

**५९८-दन्तकाष्ठप्रयुक्ते तु विषे कूर्चकविशरणमौषधगन्धो रूक्षता तालुदन्तजिह्वौष्ठमांसशोफश्च ॥ ३३**

५९८-दन्तकाष्ठप्रयुक्ते विषे कूर्चकस्य सदनं दन्तविषौषधिगन्धश्च दन्तकाष्ठे रूक्षता च जिह्वादीनां च शोफः ५९८

३४ दन्तकाष्ठप्रयुक्तविषचिकित्सा।

**५९९-तत्र प्रच्छाय धातकीपुष्पजाम्बवास्थिहरीतकीचूर्णैः सक्षौद्रैः सप्तच्छदकल्केन वा प्रतिसारणं कुर्यात्, दाडिमकरमर्दभव्याम्रातककोलबदररसैः क्षौद्रयुक्तं गण्डूषम् ॥ ३४**

५९९-तत्र शस्त्रेण प्रच्छानं दन्तमांसादिषु कृत्वा धातकीपुष्पादीनां चूर्णेन समाक्षिकेण प्रतिसारणं सश्लेष्मत्यागं मुखे औषधस्य धारणं कुर्यात्। केवलेन वा सप्तच्छदकल्केन प्रतिसारणं कुर्यात्। कल्को द्रवमिश्रचूर्णः। तथा दाडिमादीनां रसेन माक्षिकयुक्तेन गण्डूषः। करमर्द कराम्लम्। आम्रातकं पीतनकम् ५९९

**टिप्पणी**—तत्रेति। प्रच्छानम्-त्वचिकृतं शस्त्रपदन्। प्रतिसारणम्-दन्तजिह्वामुखानां चूर्णकल्कावलेहैरङ्गुल्या शनैर्घर्षणम् ५९९

३५ जिह्वानिर्लेखनकवलगण्डूषलक्षणचिकित्सातिदेशः।

**६००-अनेन जिह्वानिर्लेखनकवलगण्डूषा व्याख्याताः॥**

६००-अनेनैव प्रकारेण जिह्वानिर्लेखनादयो व्याख्याताः। तेनैतदुक्तं भवति। जिह्वानिर्लेखनादिषु प्रयुक्ते विषे दन्तकाष्ठवल्लक्षणं तद्वदेव चिकित्सा। वक्त्रसंयोगात्साम्यमेतेषु विषस्य। केवलं ताम्बूलादि मुखे कार्यम् ६००

**टिप्पणी**—व्याख्याते गण्डूषकवललक्षणे ( अ. सं. सू. ३-९२ प्रभा ) ६००

३६ अञ्जनप्रयुक्तविषलक्षणानि।

**६०१-अञ्जनप्रयुक्तेऽश्रूपदेहरागवेदनादृष्टिविभ्रमा भवन्त्यान्ध्यं च ॥ ३६**

६०१-अञ्जनप्रयुक्ते विषे अश्रूपदेहादयो भवन्ति। उपदेहे दूषिका। दृष्टिविभ्रमो दर्शनभ्रान्तिरसत्यदर्शनम् ६०१

**टिप्पणी**—अञ्जनेति। उपदेहः-दूषिका, नेत्रमल इति यावत्। अञ्जनप्रयुक्ते विषे नयनयोः शोथस्रावदाहा अपि भवन्ति ( च. चि. २३-११७, सु. क. १-६९ ) ६०१

३७ अञ्जनप्रयुक्तविषचिकित्सा।

**६०२-तत्र सर्पिष्पानं योज्यम्। श्वेतेन पयसा सप्तकृत्वः पिप्पलीर्भावयेत्। ततस्तत्कल्केन सर्पिर्विपक्वं नेत्रतर्पणम्। कपित्थमेषशृङ्गीभल्लातकानां पुष्पैर्वरणनिर्यासेन वाञ्जनं बृहतीशिरीषबीजप्रपौण्डरीकनागबलाचूर्णं सप्तकृत्वो मधुना भावयेत्। तच्च स्रोतोऽञ्जनसुवर्णचूर्णयुक्तमञ्जनं देयम् ॥ ३७**

६०२-तत्र घृतपानं चिकित्सा पिप्पलीश्च पयसा क्षीरेण श्वेतेन सप्तवारान् परिशोष्य परिशोष्य भावयेत्। ततस्तासां कल्केन पक्वं सर्पिर्नेत्रे तर्पणं कार्यम्। कपित्थादीनां पुष्पैः पिष्टैर्वरणाच्च रसेन पीडितेनाञ्जनं कार्यम्। मेषशृङ्गी-अजशृङ्गी। बृहत्यादेश्चूर्णं सप्तकृत्वो माक्षिकेण भावयेत्। तेन चूर्णेन स्तोकेन सौवीरेणाञ्जनेन सुवर्णचूर्णेन च युक्तमञ्जनंदेयम

**टिप्पणी**—तत्रेति। पुष्पैरिति-कपित्थादिपुष्पाणामेकैकस्याञ्जनं कार्यम्। वरणः-सेतुवृक्षः ( वायवर्णा ), बृहती-कण्टकारिद्वयस्य कुसुमानि। प्रपौण्डरीकः-पुण्डरीकवृक्षः। अयं च शालपर्णीतुल्यपत्रो ह्रस्ववृक्षभेदः। स्वनामख्यातं यष्टीमधुद्रव्यादीपत्स्थूलं मधुररसं नेत्राश्च्योतनार्हं द्रव्यमिति केचन ६०२

३८ नस्यधूमप्रयुक्तविषलक्षणानि।

**६०३-नस्यधूमप्रयुक्ते शिरोरुक्कफास्रावः खेभ्यो रुधिरागमनमिन्द्रियवैकृतं च ॥ ३८**

६०३-नस्यधूमयोः प्रयुक्ते विषे शिरोरुगादि ६०३

३९ नस्यधूमप्रयुक्तविषचिकित्सा।

**६०४-तत्रातिविषाश्वेताकाकमाचीमदयन्तिकाकल्के क्षीरसिद्धं सर्पिर्नस्ये पाने च विदध्यात् ॥ ३९**

६०४-तत्रातिविषाकल्केन क्षीरेण च सिद्धं घृतमुभयत्रापि नस्ये पाने च देयम्। श्वेता-गिरिकर्णिका ६०४

**टिप्पणी**—तत्रेति-श्वेता-गिरिकर्णी ( पांढरी गोकर्णी ) मदयन्तिका-मल्लिका ( मोगरी, बेलमोगरा ) काकमाची-वायसी ( कावळी ) ६०४

४० अभ्यङ्गप्रयुक्तविषलक्षणानि।

**६०५-अभ्यङ्गप्रयुक्ते त्वग्दाहस्वेदपाकस्फोटावदरणानि।**

६०५-अभ्यङ्गप्रयुक्ते त्वग्दाहादयः। दरणमङ्गस्य खण्डशो गमनम् ६०५

४१ अभ्यङ्गप्रयुक्तविषचिकित्सा।

**६०६-तत्र शीताम्बुपरिषिक्तस्य चन्दनतगरोशीरकुष्ठवेणुपत्रिकामृतासोमवल्लीश्वेतापद्मकालेयकैरनुलेपनम्। एतान्येव च सकपित्थरसगोमूत्राणि पानम्। गिरिकर्णिकाश्वेतमूलप्रियङ्गुसारिवामधुकसर्षपयुगन्धामृगोर्वारुकतकमूलानिशेलुक्वाथपिष्टानिप्रलेपः।**

५२ 'ताजिह्वाद' क. ख. च. ५३ 'भव्याम्राम्रातक-ख. च. ५४ 'ररसं क्षौ'-क. च. ५५ 'क्तेऽश्रुदूषिकोपदे'-ग. ५६ 'देहदाहरा'-क. ख. ५७ 'येत्। तत्क'-च. ५८ 'चाञ्ज'-क. घ. ५९ 'ञ्जनम्। न'-क. ख. घ. ६० 'चीवेलयन्ति'-च. ६१ 'काश्वेतामूलव,-६२ 'मृगैर्वारु-क. ख., 'मृगेर्वारु'-च., 'मृगैर्वारुम्'-क. घ.

६०६–तत्र शीतोदकपरिषिक्तस्य सतश्चन्दनादिभिरनुलेपनम् । वेणुपत्रिका–हिङ्गुपत्रिका । अमृता–गुडूची । सोमवल्ली–ब्राह्मी । श्वेता–कटभी । कालेयकं–चन्दनम् । एतान्येव च चन्दनादीनि कपित्थरसेन गोमूत्रेण च संयुक्तानि पेयानि । गिरिकर्णिकादीनि मृगोर्वारुमूलान्तानि शेलुक्वाथे पिष्टानि प्रलेपार्थे योज्यानि । श्वेतमूलं–पुनर्नवा । सर्पसुगन्धा–नागदमनी । मृगोर्वारुर्गवाक्षी । शेलुः–श्लेष्मातकः ६०६

**टिप्पणी**–तत्रेति–वेणुपत्रिका–बाष्पिका (बाफळी) श्वेता-( कटभी ) गिरिकर्णी । कालेयकम्–पीतचन्दनम्, सर्पसुगन्धा–नाकुली ( मुंगुसवेल ) मृगोर्वारु–गवाक्षी ( इन्द्रवारुणी) कतकम्–वारिप्रसादनफलम् ( निवळी ) ६०६

४२ उद्वर्तनादिप्रयुक्तविषलक्षणचिकित्सातिदेशः ।

**६०७ – अनेनोद्वर्तनघर्षणपरिषेकानुलेपनभूषणयानशय्यास्तरणवस्त्रकवचपादुकोपानत्पादपीठा व्याख्याताः ॥ ४२**

६०७–अनेनाभ्यङ्गविषप्रयोगेणोद्वर्तनादिविषप्रयोगा व्याख्याताः । तेनैतदुक्तं भवति–इहाभ्यङ्गेन स्पर्शप्रयोगो विषस्यैवमुद्वर्तनादिभ्योऽपि । अतस्तदेव लक्षणं, सैव चिकित्सा । पादुके काष्ठकृते । उपानहौ चर्मकृते । यानं रथादि । एतदेव निर्धारयति—६०७

४३ आभरणप्रयुक्तविषचिकित्सा ।

**६०८–विशेषतस्त्वाभरणकृते विकारेऽश्वगन्धापामार्गकिणिहीखदिरशिरीषकल्कैर्गोपित्तयुक्तैः प्रदेहः ४३**

६०८–आभरणप्रयुक्ते विषविकारे विशेषेणाश्वगन्धादिकल्कैर्मिश्रितैर्गोपित्तसंयुक्तैर्लेपः । किणिही–गिरिकर्णिका ।६०८

**टिप्पणी**—विशेषत इति । अश्वगन्धा–अश्वस्य गन्धः एकदेशः मेढ्रमिव मूलमस्याः इति ( आस्कन्ध ). ६०८

४४ पादपीठप्रयुक्तविषचिकित्सा ।

**६०९–पादपीठकृते श्लेष्मातकसर्पसुगन्धात्रिकल्को मधुयुक्तः ॥४४**

६०९–पादपीठकृते विकारे श्लेष्मातकादिकल्को माक्षिकयुक्तः प्रलेपः । सर्पसुगन्धा–नागदमनी ६०९

४५ छत्रप्रयुक्तविषलक्षणानि ।

**६१०–छत्रप्रयुक्ते वेदनास्फोटानां क्षिप्रपाकानां पक्वजाम्बवप्रकाशानां प्रादुर्भावः । ४५**

६१०–छत्रप्रयुक्ते स्फोटोद्भवः ६१०

**टिप्पणी**—प्रकाशः सादृश्यम् ।

४६ छत्रप्रयुक्तविषचिकित्सा ।

**६११–तत्र मधुकपाटलाकशेरुकलोध्राञ्जनकुष्ठसर्पसुगन्धाखदिरशिरीषकल्कैः सर्वगात्रप्रदेहः ४६**

६११–तत्र मधुकादिभिर्मिश्रितैर्गोपित्तसंयुक्तैः प्रलेपः सर्वगात्रेषु ६११

**टिप्पणी**—तत्रेति । पाटला–रक्तपुष्पी ( पाडळ ) कसेरुकम् क्षुद्रमुस्ता ( नागरमोथे ) अञ्जनम्–रसाञ्जनम् ६११

४७ चामरव्यजनप्रयुक्तविषलक्षणचिकित्सातिदेशः ।

**६१२–अनेन चामरव्यजने व्याख्याते ॥ ४७**

६१२–अनेन छत्रविशेषेण चामरवालव्यजनविषं अपि व्याख्याते । तेनैतदुक्तं भवति–उपयोगसामान्यादेतयोश्छत्रेण सदृशलक्षणत्वम् । सैव चिकित्सा । व्यजनं–तालवृन्तम् ६१२

४८ शिरोऽभ्यङ्गप्रयुक्तविषलक्षणानि ।

**६१३–शिरोऽभ्यङ्गप्रयुक्ते शिरोवेदना ग्रन्थिजन्म केशच्यवनं च । ४८**

६१३–शिरोऽभ्यङ्गप्रयुक्ते शिरसि वेदनादिजन्म ६१३

४९ शिरोऽभ्यङ्गप्रयुक्तविषलक्षणचिकित्सा ।

**६१४–तत्र श्यामापालिन्दीतण्डुलीयकचूर्णं तैर्घृतपित्तैः सुभावितैर्या कृष्णमृदा प्रलेपः । गोमयमालतीमूषिकपर्ण्यन्यतमरसो वागारधूमो वा श्लेष्मातकत्वक्पाटलाशिरीषमधुकहरिद्राद्वयैरजाक्षीरालोडितैः परिषेकः । ४९**

६१४–तत्र श्यामादीनां चूर्णेन घृतर्क्षपित्ताभ्यां मिश्रितेन सुभावितया कृष्णमृदा प्रलेपः । श्यामा–प्रियङ्गुः । पालिन्दी–त्रिवृता । गोमयादीनामन्यतमस्यैकस्य पीडितो रसः प्रलेपः । श्लेष्मातकत्वगादीनि मिश्रितान्यजाक्षीरेणालुलितानि परिषेकः शिरसि ६१४

**टिप्पणी**—तत्रेति । ऋक्षः–नीलाण्डो रोरु इति प्रसिद्धः इति डल्हणः ( सु. क. १–५७ ) सुभावितया–सप्ताहं भावितयेति भावः । मालती जातिः (जाई ), मूषिकपर्णी–आखुकर्णी ( उंदीरकानी ) अगारधूमः–गृहधूमः ( धेरोसा ) तस्य प्रलेपः ६१४

५० शिरःस्नानोदकादिप्रयुक्तविषलक्षणचिकित्सातिदेशः ।

**६१५–अनेन शिरःस्नानोदककङ्कतैस्त्रगुष्णीषा व्याख्याताः ॥ ५०**

६१५–अनेन शिरोऽभ्यङ्गविषेण शिरःस्नानोदकादिविषाणि व्याख्यातानि । उपयोगसादृश्याल्लक्षणचिकित्सितयोरपि सादृश्यम् । कङ्कतं काष्ठादिमयं बहुदन्तं केशसंयमनम् । उष्णीषः केशबन्धपट्टकः ६१५

**टिप्पणी**—कङ्कतकम्–प्रसाधनम् ( फणी; कंगवा )

५१ कर्णपूरणयुक्तविषलक्षणानि ।

**६१६–कर्णपूरणप्रयुक्ते शोफशूलपाकाः श्रोत्रवैगुण्यं च ।**

६१६–कर्णपूरणद्रव्यप्रयुक्तेन शोफाद्युत्पत्तिः । श्रोत्रयोर्विगुणता अश्रवणमिति ६१६

५२ कर्णपूरणप्रयुक्तविषचिकित्सा ।

**६१७–तत्र बहुपत्रास्वरसो घृतक्षौद्रसंयुक्तः प्रतिपूरणं सोमवल्करसो वा सुशीतः ॥ ५२**

६१७–तत्र बहुपत्रायाः स्वरसो घृतमाक्षिकाभ्यां संयुक्तः कर्णपूरणे योज्यः । बहुपत्रा–बृहती । केवल एव वा सुशीतः सोमवल्कस्य रसः कर्णपूरणम् । सोमवल्कः कट्फलः ६१७

**टिप्पणी**—तत्रेति । सोमवल्कः–कट्फलः (कायफळ)६१७

---

६३ °च रथ पा°–क. ख. च. ६४ °त्तप्रयु°–क. ख. च. ६५ °न्धाक°–क. ख. घ. ६६ °के स्फो°–क.ख. घ. ६७ °क्तवे° –क. ख. घ. च. ६८ °तर्क्षपि°–क. ख. च. ६९ °तकृष्णमृत्प्र°–क. ख. ७० °मूषिकपर्णीकल्कोऽन्यतमर°–क. ७१ °न शिरःस्नानस्नपनो°–क. ख घ. ७२ °तकत्र–क. ख. ७३ °द्रयु°–क. घ. ७४ °ल्कलर°–क.

५३ मुखालेपप्रयुक्तविषलक्षणानि ।

६१८-मुखालेपप्रयुक्ते मुखश्यावता पद्मकण्टका भवन्त्यभ्यङ्गजाश्च विकाराः । ५३

६१८-मुखालेपद्रव्यप्रयुक्ते मुखश्यावत्वाद्युद्भवः । पद्मकण्टकाः-क्षुद्ररोगेषु (अ.सं.उ.अ.३६) वक्ष्यमाणलक्षणाः ६१८

५४ मुखलेपप्रक्तयुविषचिकित्सा ।

६१९-तत्र मधुकपयस्याबन्धुजीवभञ्जीपुनर्नवचन्दनैः सघृतैर्लेपो, मधुसर्पिषी पानम् ।५४

६१९-अभ्यङ्गजा ये अभ्यङ्गप्रयुक्तविषविकारास्त्वग्दाहस्वेदादयः ६१९

**टिप्पणी**—तत्रेति । पयस्या-अर्कपुष्पी वन्धुजीवः-माध्यान्हपुष्पकः(दुपारी) मधुसर्पिषीति-अतुल्ययोर्मधुघृतयोः पानम् । ६१९

५५ सविषपुष्पाघ्राणविषप्रयुक्तलक्षणानि ।

६२०-सविषपुष्पाघ्राणाच्छिरोव्यथा साश्रुनेत्रत्वं गन्धाज्ञानं च । ५५

६२०-तत्र मधुकादिभिर्मिश्रितैः सघृतैर्लेपः । वन्धुजीवः-पुत्रतमः । भञ्जीभार्ङ्गी । तथा घृतमाक्षिकं मिश्रितं पानार्थे प्रयोज्यम् ६२०

५६ सविषपुष्पाघ्राणप्रयुक्तविषचिकित्सा ।

६२१-तत्रानन्तरोक्तो विधिर्वाप्योदितश्चेति ॥ ५६

६२१-विषपुष्पाघ्राणाच्छिरोव्यथाद्युद्भवः । तत्रानन्तरोक्तमुखालेपविषविकारविधिः विषान्नवाष्पवचिकित्सा च ६२१

५७ सविषोपकरणद्रव्यादीनां शुद्धिः ।

६२२-भवन्ति चात्र—

फलमूलच्छदादीनां दद्यात्प्रक्षालनोदकम् ।
भाजनव्यंजनानां च तथा कुर्यादतन्द्रितः ॥
द्रव्याणि प्रापयित्वा तु स्पृश्यान् संस्पृश्य तानपि ।
प्रतीवापं ततो दत्वा प्रतीक्ष्यैवैकनाडिकाम् ॥
ततो विज्ञाय शुद्धिं च भाजनस्योदकस्य च ।
आहारमुपयुञ्जीत यथावद्वसुधाधिपः ॥

**टिप्पणी**—प्रतीवापमिति-प्रतीवापः, आवापः, प्रक्षेपः, आच्छादनमित्यनर्थान्तराणि । विषघ्नौषधिभिः संस्कृतस्य जलादेः प्रक्षेपं कुर्वेत्यर्थः । अथवा क्षिप्ते आवापे पुनरपरद्रव्यप्रक्षेपः प्रतीवापः ( सु. सू. ११-१३ डल्हनः ), आवापानन्तरं पुनः शक्त्यतिशयार्थं दीयते स प्रतीवापः इत्यपि केचित् । अस्मिन् द्वितीयार्थे प्रक्षालनोदकादयः आवापाः बोध्याः।एकनाडिकामिति-एकघटिकाकालमिति यावत् ६२२

५८ हस्ते तीक्ष्णविषसंधारणफलम् ।

६२३-मन्दं तीक्ष्णविषाभ्यासाद्विषमुत्क्षीयते भृशम् ।
तस्मात्तीक्ष्णविषं हस्ते बध्नीयात्कुशलो भिषक् ।
विषसंधारणं धन्यं रक्षोघ्नं प्रीतिवर्धनम् ।
अपि च—

६२३-भवति चात्रेत्यादि सुबोधम् । अपिचेत्यनेन सविषोपकरणद्रव्यलक्षणचिकित्सितमुक्त्वा तदुपयोग्यौषधसंभारलक्षणार्थं समुच्चिनोति ६२३

५९ भेषजागारलक्षणम्

६२४-सापिधानघटीमूटफलकस्थापितौषधम् ।
प्रागुदीच्योर्दिशोर्गुप्तं भेषजागारमिष्यते ॥

६२४-एवंविधं भेषजागारमौषधगृहमिष्यते—किंभूतम् ? सापिधाने सस्थगने घटिकादौ स्थापितमौषधं यत्र । मूटं-प्रसेवकं पोट्टकमित्येकोऽर्थः । फलकं-काष्ठमयं बहुकोष्ठम् । राजधान्यां प्राच्यामुदीच्यां वा दिशि गुप्तं भेषजगृहमिष्यते ६२४

**टिप्पणी**—टीकाकायां प्रसेवक इति-प्रसेवकः चर्मखल्हपुटः इति सुश्रुतः ( सू. ९-४ ). क्वचिच्च सापिधानघटीमूषाफलकस्थापितौषधमिति पाठान्तरं दृश्यते । तत्र मुष्णाति दोषान् इति व्युत्पत्त्या या दोषनिर्हरणसमर्था सा मूषा। तस्याः पर्यायाः वन्हि मित्रा क्रौंचिका, करहाटिका, पाचनी, चेति । सा च लोहमयी मृण्मयी वा भवति । तथापि प्रायो मृण्मयी एव शस्यते । भेषजागारामिति-तथा चोक्तं सुश्रुते-प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम् । प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते।(सू. ३६-१६). प्लोतं कर्पटम्।६२४

६० महानसलक्षणम् ।

६२५-उच्चैः प्रशस्तादिग्देशं बहुवातायनं महत् ।
महानसं सुसंमृष्टं विश्वास्यजनसेवितम् ॥
सद्द्वारस्थाधिष्ठितद्वारं कक्ष्यावत्सुवितानकम् ।
सुधौतदृढकुम्भादि परिशुद्धजलेन्धनम् ॥

६२५-तत्रैव महानसं गृहमिष्यते । किंभूतमित्याह—उच्चैरित्यादि । उच्चैरुन्नतं महानसं इन्धनागारं प्रशस्तदिग्देशत्वादियुक्तं प्रशस्तायां दिशि देशे च कृतमित्यर्थः । वातायनं-गवाक्षम् । सद्वास्थं-शोभनद्वारपालम् । कक्ष्यावत सुविभक्तयथोदितस्थानम् । वितानकं-दण्डधृतविस्तीर्णोपरिपट्टम् । सुधौतं दृढं च कुम्भादिकं यत्र जलमिन्धनं च जात्यन्वयपरस्परान्वेषणादिना परिशुद्धं यत्र ६२५

**टिप्पणी**—महानसामिति-महानसलक्षणं पूर्वं सविस्तरं व्याख्यातम ( अ. सं. ८-५७१ प्रभा ) ६२५

६१ सूदानां लक्षणम्

६२६-स्वकर्मकुशला दक्षाः सूदास्तत्राप्रमादिनः ।
क्लृप्तकेशनखाः पित्र्या राज्ञः कृत्यैरसंगताः ॥

६२६-तत्र च सूदाः अन्नसंस्कारकाः स्वकर्मकुशलत्वादियुक्ताः शस्ताः । पित्र्या राज्ञः उभयथा पितुरागताः । राज्ञश्च कृत्यैरसंगताः । कृत्याः-क्रुद्धलुब्धभीतादयः कौटिल्ये प्रसिद्धाः । तैः सङ्गतास्तु कदाचिद्रागद्वेषादिकेनान्यथा वर्तन्ते ६२६

**टिप्पणी**—कृत्यैरिति-कृत्या अराजनिष्ठाः । टीकायां कौटिल्ये प्रसिद्धाः इति-कौटिलीये अर्थशास्त्रे प्रथमाधिकरणे त्रयोदशाध्याये 'क्रुद्धलुब्धभीतावमानिनस्तु परेषां कृत्याः' इत्यादिना ग्रन्थेन सविस्तरं वर्णिताः इति भावः । अयं विषयः कामन्दकीयनीतिसारे त्रयोदशाध्याये (१०,२३,२४) सुनिरूपितो द्रष्टव्यः । मुद्राराक्षसेऽपि कृत्यानां समुल्लेखो

७५ "क्ते मुखस्य शामतापद्मकण्टकाश्च भ"-क. ७६ लेपःसर्पिषः पा"-क. ख. ७७ "फलमूलेत्याद्यारभ्य अपि चेत्यन्तो ग्रन्थः कपुस्तके नास्ति; खपुस्तके तु-भवति चात्र-फलमूल" इत्यादि ग्रन्थो दृश्यते । ७८ "नव्यंजना"-ख. ग. ७९ "टीमूढफ"-क. च, "टीमूषाफ"-ख. ङ. ८० "सं भेष"-क. ख. घ. ८१ "वत्सावे"-क. ख. घ. न. ८२ कृत्तक"-ख.

दृश्यते (२१७) परम् ) । यद्यपि कृत्याशब्दः स्त्रीलिङ्गो दृश्यते, यथा-'तया स निर्ममे तस्मै कृत्यां कालानलोपमाम्(भागवते), तथापि धनस्त्रीभूम्यादिभिर्भेदनीयो यः पराराष्ट्रगतपुरुषादिस्तत्र कृत्याशब्दो वाच्यलिंगः । नियतस्त्रीलिङ्गस्य कृत्याशब्दस्य त्वसद्दैवतविशेष इत्यर्थः । कुपितमन्त्रिणोऽभिचारजानेतोराक्षसीविशेषः कृत्या इति डल्हणः । सर्वराष्ट्रच्छेदभिचार इत्यपि केचित् (सु. सू. ६-२० डल्हणः) इति दिक् ।

६२ मृद्धाधिपलक्षणम्

६२७-तेषामधिपतिर्विप्रः कुलजः सुपरीक्षितः ।
संविभक्तश्च भक्तश्च शुचिर्वैद्यवशानुगः ॥ ६५

६२७-तेषां च सूदानामधिपतिरध्यक्षोऽपि विप्रत्वादिगुणयुक्तः ( क्षेमकुतूहले ४-५० ) ६२७

६३ सामान्यतो राजसंनिधियोग्यानां जनानां लक्षणम्

६२८-सर्वेऽपि भूभृदासन्नाः शस्तौः सततमीदृशाः ।
मिथोविग्रहसंघातरहिता भूभृते हिताः ॥ ६६

६२८-सर्वेऽपि राजपरिचारका ईदृशा एवेष्यन्ते । तथा मिथः—परस्परं, संघातेन-विग्रहेण विरोधेन च रहिताः । भूभृते-राज्ञे च हिताः । परस्परं विरोधसंघाताभ्यां हितमवसादयन्ति ( सु. क. १-१४,१५ ) ६२८

६४ राजपरिचारकादिषु वैद्यस्य जागरणम् ।

६२९-तान् वैद्यो गुणवानेको मनसा प्रतिजागृयात् ।
भूभृद्देहोपकरणसंरक्षणसमुद्यतः ॥ ६७

६२९-तत्र च परिचारकान् बहूनेको गुणवान्वैद्यगुणयुक्तः प्रतिजागृयात् । किंभूतः ? भूभृतो राज्ञो देहोपकरणानां दोषरक्षणे समुद्यतः सन् ६२९

६५ जैत्रयात्रायां वैद्यस्य सांनिध्यम् ।

६३०-अथाभ्यमित्रं व्रजतो जिगीषो-
वैद्यः सुसज्जौषधशस्त्रयन्त्रः ।
तुङ्गध्वजाख्यातनिवासभूमि-
र्युद्धागतं योधजनं चिकित्सेत् ॥ ६८

६३०-अथ तस्य भूभृतो विजिगीषोरमित्राणामभिमुख्येन व्रजतो वैद्यो युद्धार्थमागतं योधजनं सैनिकं चिकित्सेत् । किंभूतो वैद्यः ? सुष्ठु सज्जानि निकटस्थितानि औषधादीनि यस्य । तथा तुङ्गेनोन्नतेन ध्वजेनाख्याता निवासभूमिर्येनेति ६३०

**टिप्पणी**—अथाभ्यमित्रमिति । वैद्य इति-अत्र वैद्यशब्देन दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ । रक्षेतां नृपातिं नित्यं यत्तौ वैद्यपुरोहितौ ।' ( सु. सू. ३४-७ ) इत्युक्तदिशा रसवीर्यविपाकविशारदो गृह्यते । रसशब्दो विषस्यापि वाचकः । मृत्युः द्विविधः आगन्तुजः कालजश्चेति । तत्र कालमृत्युलक्षणं यथा-' यथा यानसमायुक्तोऽक्षः प्रकृत्यैवाक्षगुणैरुपेतः स च सर्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानं गच्छेत् । तथायुश्शरीरोपगतं बलवत्प्रकृत्या यथावदुपचर्यमाणं स्वप्रमाणक्षयादवसानं गच्छति स मृत्युः काले । ( च० वि. ३-४३ ). अकालमृत्युलक्षणं-यथा च स एवाक्षोऽतिभाराधिष्ठितत्वाद्विषमपथादपथादक्षचक्रभङ्गाद्वाह्यवाहकदोषादणिमोक्षादनुपाङ्गात्पर्यसनाच्चान्तरावसानमापद्यते । तथायुरप्ययथाबलमारंभादयथाग्न्यभ्यवहरणादतिमैथुनादुदीर्णवेगविधारणाद्विधार्यवेगाविधारणाद्विषमशरीरन्यासादसत्संश्रयादभूतविषवाय्वग्न्युपतापादभिघातादाहारप्रतीकारविवर्जनाच्चान्तरावसानमेवापद्यते स मृत्युरकाले तथा ज्वरादीनप्ययथातङ्कानिमिथ्योपचारितानकालमृत्यून्पश्याम इति । ( च. वि. ३-४३ ). तत्र कालज एकः आगन्तुजास्तु असंख्याः, तत्कारणानि प्राधान्येन-' जलमग्निर्विषं शस्त्रं स्त्रियो राजकुलानि च । अकालमृत्युवो ह्येते तेभ्यो बिभ्यति पण्डिताः ' इत्यादिना दर्शितानि । सुसज्जौषधशस्त्रयन्त्र इति-औषधानि-मधुघृतवसापयस्तैलतर्पणकषायालेपनकल्कवर्तिक्षारादीनि,शस्त्राणि मण्डलाग्र-करपत्र-वृद्धिपत्र-नखशस्त्र-मुद्रिकोत्पलादीनि, ( सु. सू. ८-३ ) यंत्राणि-स्वतिक-संदंश-ताल-नाडी-शलाकोपयन्त्राणि (सु. सू. ७-५), तुङ्गध्वजेति-अत्र सुश्रुतः ' स्कंधावारे च महति राजगेहादनन्तरम् । भवेत् सन्निहितो नित्यं सर्वोपकरणान्वितः । तत्रस्थमेनं ध्वजवद्यशःख्यातिसमुच्छ्रितम् । उपसर्पन्त्यमोहेन विषशल्यामयार्दिताः ( सू. ३४-१२,१३ ). इति । अत्र प्रसङ्गात् स्कंधावारे (.Army) वैद्यसंबंधेन तांस्तानाङ्ग्लशब्दान् प्रदर्शयामः ) वैद्यः-Army Surgeon. निवासभूमिः-Head quarters ( War—Hospital ). सुसज्जौषधिशस्त्रयंत्रः- Well-provided with medical and Surgical appliances and instruments तुङ्गध्वज High-flown-flag ६३०

६६ अरिदूषितानां मार्गादीनां बोधनम्

६३१-पन्थानमुदकं छायां भक्तं यवसमिन्धनम् ।
दूषयन्त्यरयो यत्नात्तान् विद्याच्छोधयेत च ॥ ६९
प्रस्थानं वा निवेशं वा नाविज्ञाय प्रयोजयेत् ॥
भूवारितृणकाष्ठाश्मैर्मार्गोन्मार्गवनस्पतीन् ॥ ७०

६३१-तस्य चाभ्यमित्रं गच्छतो राज्ञोऽरयो मार्गादीन् विषेण दूषयन्ति । अतस्तान्यत्नाज्जानीयात्-विद्यात् । दुष्टांश्च ज्ञात्वा यत्नादेव शोधयेत् । महति प्रतानवति घने वृक्षाग्रे विषे दत्ते तच्छाया दूषिता भवति । यवसो वाहभोजनं दुर्वायादि । अविज्ञाय राज्ञः प्रस्थानं प्रमाणं निर्गमनं नागत्वा नाप्राप्य कटकस्य वासं न प्रयोजयेत् । तेषां च दुर्वायादीनां दुष्टिपरिज्ञानलक्षणमुच्यते । मार्गः-शत्रुनगरं प्रति स्पष्टः । उन्मार्गः-छन्नपथः ६३१

**टिप्पणी**—विषप्रयोगभेदं चिकित्सार्थं दर्शयन्नाह-पन्था-

---

८३° स्ताः संत°-क. ख. च. ८४ °स्मात्तद्विद्याच्छो°-क. ख; °यो यत्नात्तद्वि°-च. ८५ श्ममार्गान्मार्ग°-क. ख. च.

नमित्यादि । पन्थाः मार्गः स च विषेण दूषितोऽश्वादिखुर-क्षुण्णरेणुना रोमकूपनासाविवरादिषु प्रविशन् विकाराञ्जनयति। छायामिति-विषेण वृक्षादिदूषणात्तच्छायास्वपि दोषाः। द्रव्यस्वभावाद्वा छायामपि विषं दूषयति । यथा भल्लातक-तरुच्छाया शोफकारिणी । भक्तमोदनादिकम् । यवसं बुसादि। दूषयन्ति विकृतिं कुर्वन्ति । विद्यात् जानीयात् विविधैर्लिङ्गैरिति शेषः । शोधयेत्–चिकित्सेत् ( सु. सू. ३४–५ ) यवसेन्धनोदकभक्तादीनां दूषणोपायाः कौटिलियेऽर्थशास्त्रे चतुर्दशाधिकरणे षट्चत्वारिंशदुत्तरशतेऽध्याये द्रष्टव्याः । विस्तरभयान्नेह तन्यन्ते ६३१

६७ विषोपहतभूमिलक्षणम् ।

**६३२–विषेणोपहता भूमिः क्वचिद्दग्धेव लक्ष्यते ।**
**प्रम्लानतृणगुल्मादिमृतकीटसरीसृपा ॥ ७१**

६३२–विषोपहता भूमिरवयवे दग्धेव लक्ष्यते ६३२

६८ भूमिदोषविकाराः

**६३३–विशीर्यन्ते खुरनखा दाहकण्डूरुजान्विताः ।**
**छर्दिर्मूर्च्छा ज्वरो मोहः शिरोदुःखं च जायते॥ ७२**

६३३–तत्स्पर्शाच्च पादनखा विशीर्यन्ते दाहादियुक्ताः। छर्द्यादीनां च संभवः ६३३

६९ भूमिदोषविकारे चिकित्सा ।

**६३४–तत्र सौभाञ्जनान्मूलं[८६] सोमवल्लीमुशीरकम् ।**
**मातुलुङ्गरसं हिङ्गु पाययेद्दधिमात्रया ॥ ७३**
**मूत्राण्यजाविहस्तिभ्यो मांसानि रुधिराणि च ।**
**सर्वगन्धैः[८७] समं योज्यं पचेत्पक्वे च निक्षिपेत् ७४**
**सोमराजीं सुनन्दाख्यां सरलां गन्धनाकुलीम् ।**
**चारटीं त्रायमाणां च प्रोक्षयेत्तेन तां भुवम् ॥ ७५**

६३४–तत्र सौभाञ्जनादिकं भूमिदोषोदितं दधिमात्रया स्तोकेन दध्ना पाययेत् । तथाजादीनां त्रयाणामपि मूत्राणि मांसानि रुधिराणि च गृहीत्वा तानि च सर्वगन्धद्रव्यैः संयोज्य च पचेदामांसपाकात्। पक्वे च सोमराज्यादिकं चूर्णितं क्षिपेत्। तेनैव निष्पन्नेन तां विषोपहतां भुवं प्रोक्षयेत् बिन्दुभिः सिंचेत्। सुनन्दा–रास्ना । सरला–त्रिवृत्, गन्धनाकुली–सर्पाक्षी। (मुंगुसवेल) चारटी–पद्मचारिणी ( स्थलकमालिनी ) ६३४

**टिप्पणी**—तत्रेति–सोमराजी ( बावचा ) अत्र सुश्रुतो द्रष्टव्यः ( सु. क. ३–१०,११,१२ ) सर्वगन्धैरिति—अत्र एलादिपठितानि गन्धद्रव्याणि ग्राह्याणि । तथाचोक्तं सुश्रुतेन–' एलादिको वातकफौ निहन्याद्विषमेव च। वर्णप्रसादनः कण्डूपिडकाकोठनाशनः ' इति ( सु. सू. ३८–२४,२५ ) ६३४

७० सविषजललक्षणम् ।

**६३५–सविषं विरसं तोयं कवोष्णं राजिभिश्चितम् ।**
**फेनिलं गुरु विच्छिन्नं खगैरनभिनन्दितम् ॥७६**
**मृताकुलितमत्स्यं च स्पर्शात्तुक्शोफकण्डुमत् ।**

६३५–पथि च सविषमुदकमीषदुष्णत्वादिगुणयुक्तं भवति६३५

**टिप्पणी** – सविषमिति–अत्र सुश्रुतः 'दुष्टं जलं पिच्छि-लमुग्रगंधि फेनान्वितं राजिभिरावृतं च । मण्डूकमत्स्यं म्रियते विहंगा मत्ताश्च सानूपचरा भ्रमन्ति । मज्जन्ति ये चात्र नराश्वनागास्ते च्छर्दिमोहज्वरदाहशोफान् । गच्छन्ति तेषामपहृत्य दोषान्दुष्टं जलं शोधयितुं यतेत ' ( क. ३–७,८ ) तत्रैव दुष्टवारिप्रशोधनोपायमाह–' धवाश्वकर्णासनपारिभद्रान्सपाटलान्सिद्धकमोक्षकौ च । दग्ध्वा सराजद्रुमसोमवल्कांस्तद्भस्म शीतं वितरेत्सरस्सु । भस्माञ्जलिं चापि घटे निधाय विशोधयेदीप्सितमेवमम्भः–(सु. क. ३–९).६३५

७१ सविषजलसाधितौदनलक्षणम् ।

**६३६–ओदनः साधितस्तेन भुक्तमात्रोऽपि दह्यते ॥ ७७**
**विदग्धः पच्यते कृच्छ्रात्पक्वो मूर्च्छाज्वरप्रदः ।**
**दर्शयेत्सर्वतो नीलपीतकर्बुरलोहितम् ॥ ७८**

६३६–तेन चोदकेन साधितश्चोदनो भुक्तमात्र एव विदाहं याति । कृच्छ्राच्च जठरे पच्यते। पक्वश्च मूर्च्छाज्वरकरः। अन्यवर्णानपि भावान् पुरुषस्य दर्शयति । जठरे पक्वः सन् कर्बुरकपोतवर्णम् ६३६

७२ सविषौदनविकारे चिकित्सा।

**६३७–तत्र शिग्र्वादिमगदं भूमिदोषोदितं पिबेत् ।**
**अजशृङ्गीं विशालाख्यां विषघ्नीमुत्तमारणीम् ॥ ७९**
**फणिर्जकं[८८] प्रतिविषां दग्ध्वा तद्भस्म गालयेत् ।**
**बहुशो गालितं तच्च पाचयेत्तत्र च क्षिपेत् ॥ ८०**
**कल्कयित्वा प्रतीवापं सरलं[८९] रजनिद्वयम् ।**
**एलामुदीच्यं मञ्जिष्ठां सुनन्दां बाकुचीमपि ॥ ८१**
**पात्यन्ते बिन्दवस्तस्माद्यत्र तन्निर्विषीभवेत् ।**
**पाटलापारिभद्राश्वकर्णशम्याकसिध्रकान्[९०] ॥ ८२**
**कलशान्तर्गतान् दग्ध्वा प्रक्षिपेत्सविषेऽम्भसि ।**

६३७–तत्र शिग्र्वादिकं भूमिदोषोदितं ( सू. ६३४ ) दधिमात्रयेति । शिग्रुः सौभञ्जनपर्यायः। तथाजशृङ्गादीन् दग्ध्वा भस्मोदकेन संमिश्र्य गालयेत्–पटे स्त्रावयेत् । बहुशश्च गालितं पचेदाघनीभावात्। तत्र च सरलादिकं कल्कितमुदकपिष्टं प्रतीवापं क्षिपेत्। विशाला–गवाक्षी। विषघ्नी-गुडूची पद्मचारिणी वा। ''करम्भः, कर्कशो युग्मफलो देवोत्तमारणी ''। फणिज्जकं–मरुबकम् । प्रतीवापमर्धपक्वे देयम्। तस्माच्च बिन्दवो यत्र भूप्रदेशे पात्यन्ते तन्निर्विषं भवति। पाटल्यादिकं च विहितकलशान्तर्गतं दग्ध्वा सविषेऽम्भसि विषनाशनाय तद्भस्म प्रक्षिपेत् । पारिभद्रको निम्बः। सिध्रकः–सिन्दुवारः ६३७

**टिप्पणी**—तत्रेति–शिग्र्वाद्यगदः ( ६३४ ) ' तत्र सौभाञ्जनान्मूलम् ' इत्यादिना पूर्वमुक्तः । अजशृंगी ( मेढशिंगी ), विशाला ( इन्द्रावण ) उत्तमारणी–उतरण

---

८६ लं वल्लीं सोममु–च. ८७ धैः समायोज्य प–क. ख. च. ८८ णिज्जकं प्र०–क. ख.च. ८९ पं सरलां रज–क. ९० कशिग्रुकान्। क–क. ख. च.


अश्विनी


भरणी


कृत्तिका


रोहिणी





आर्द्रा


पुनर्वसु


पुष्य


आश्लेषा


मघा


पूर्वा
उत्तरा


हस्त.

नक्षत्राणि क्र. १ ( सू. ६४४ )


चित्रा


स्वाती


विशाखा.


अनुराधा


ज्येष्ठा


मूळ


पूर्वाषाढा
उत्तराषाढा


श्रवण


धनिष्ठा


शततारका


पूर्वाभाद्रपदा
उत्तराभाद्रपदा


रेवती:

नक्षत्राणि क्र. २ ( सू.६४४ )

इति महाराष्ट्रभाषायाम् । फणिर्जकम्-( मरवा ), प्रतिविषा ( अतिविष ) अश्वकर्णः-अश्वस्य कर्ण इव पत्रं यस्य सः, न्हस्वशालः । शम्याकः-आरग्वधः ( बाहवा ) ६३७

७३ विषसंयुक्तवायुलक्षणम्, तत्र चिकित्सा च ।

**६३८-शीते घर्मो हिमश्चोष्णे मारुतो विषसंयुतः ।**
**भ्रममूर्च्छादिकारी च शिग्र्वादिस्तत्र चेष्यते ॥ ८३**
**देवदारुनतानन्तामधुकार्जुनगैरिकम् । ८४**
**वज्रकन्दं लतां लोध्रं विकिरेच्छ्लक्ष्णचूर्णितम् ॥**
**वृक्षाग्रेषु पताकासु दूष्येषु सुमहत्सु च ।**
**सर्वतश्चूर्णसंपर्कान्निर्विषो जायतेऽनिलः ॥ ८५**

६३८-मार्गवृक्षशिलादिविपदानाद्विषसंयुक्तो वायुः शीतकालेऽप्युष्णो भवति,उष्णे च शीतःभ्रमादींश्च करोति। तत्र चेदमिष्यते । देवदार्वादिचूर्णं वृक्षाग्रादिषु विकिरेत् । नतं-तगरम् । अनन्ता-दूर्वा । वज्रकन्दं-सुधा । लता-प्रियङ्गुः। पताका-देवगृहादिध्वजपटः । दूष्याः-पटमयानि गृहाणि । ये हि मध्यदेशादौ वृक्षाः प्रसिद्धाः, इति सर्वतः सर्वदिग्देशं चूर्णसंपर्केणानिलस्य वायोर्निर्विषता भवति ६३८

**टिप्पणी**—शीत इति-वज्रकन्दः-सुधा, स्नुही ( निवडुंग ) अस्याः क्षीरं, मूलं, त्वक्च ग्राह्या ६३८

७४ विषदूषितपादपलक्षणम् ।
तत्र चिकित्सा च

**६३९-विकृता भवतिच्छाया पादपे विषदूषिते । ८६**
**निर्गन्धमतिगन्धं वा तत्पुष्पं हृच्छिरोरुजम् ॥**
**कुर्यात्, फलपलाशादि कण्डूपाकातिसारकृत् ।८७**
**भूमिमुद्दिश्य यत्प्रोक्तं तत्सर्वं तत्रं चेष्यते ॥**

६३९-पादपे वृक्षे विषदूषिते छाया तत्पत्रादीनां कान्ति-विकृता-स्वरूपाच्चलिता भवति । तस्य विषदूषितस्य वृक्षस्य पुष्पं निर्गन्धमतिगन्धं वा भवति । आघ्रातं हृदि शिरसि च रुजं करोति, तस्य च फलपलाशादिकं कण्ड्वादिकृत् । पलाशं-पत्रम् । तत्र च सर्वं भूमिदोषोक्तं ( सू. ६३४ ) विधानं कार्यम् ६३९

७५ अविदितकन्यास्पर्शने निषेधः ।

**६४०-न च कन्यामविदितां संस्पृशेदपरीक्षिताम् । ८८**
**विविधान्कुर्वते योगान्कुशलाः खलु मानवाः ॥**

६४०-तत्र चाभ्यमित्रव्रजेन कन्यामपरीक्षितामशातां च राजा न स्पृशेत्।किमर्थमत उच्यते।कुशला अध्यवसायच्छद्मवन्तो मानवाः मारणान् विविधान् प्रयोगान् कुर्वते ६४०

७६ विषकन्यालक्षणम् ।

**६४१-आजन्मविषैर्संयोगात् कन्या विषमयी कृता ।८९**
**स्पर्शोच्छ्वासादिभिर्हन्ति तस्यास्त्वेतत्परीक्षणम्॥**
**तैर्हस्तकेशसंस्पर्शान्म्लायते पुष्पपल्लवैः । ९०**
**शय्यायां मत्कुणैर्वस्त्रे यूकाभिः स्नानवारिणि ॥**
**जन्तुभिर्म्रियते ज्ञात्वा तामेवं दूरतस्त्यजेत् । ९१**

६४१-एवं स्थितेऽस्मिन् प्रसङ्गे किमुच्यत इत्युच्यते । आजन्म-जन्मप्रभृति स्वल्पतराभ्यासेन विषसंयोगाद्विषमयी कन्या कृता स्पर्शोच्छ्वासादिभिः पुरुषं हन्ति मारयति. तस्यास्त्वेतत् परीक्षणम् । किमित्याह-तद्धस्तेत्यादि । तया हस्तस्पृष्टैः केशस्पृष्टैश्च पुष्पैः पल्लवैश्च म्लायते । सा च यस्यां शय्यायां स्वपिति तत्र च मत्कुणैर्म्रियते इति संबन्धः । वस्त्रे यूकादिभिर्म्रियते । तत्स्नानोदके जन्तुभिर्मक्षिकादिभिर्म्रियते । एवं तां कन्यकां ज्ञात्वा दूरतस्त्यजेत् ६४१

**टिप्पणी**—आजन्मेत्यादि—अत्र सुश्रुतः- 'विषकन्योपयोगाद्वा क्षणाज्जह्यादसून्नरः' (क. १-६) 'लावण्यभूषणां कान्तां योषितं क्रमशो विषैः । युवतीं योजयेत्कामिरिपुभूपालघातने' इति च स्मर्यते । कथासरित्सागरे-'विदधे विषकन्याश्च सैन्ये पण्यविलासिनीः' (१७-८२) इति । स्पर्शोच्छ्वासादिभिरिति-तथा चोक्तम्- 'हन्ति स्पृशन्ती स्वेदेन गम्यमाना च मैथुने। पक्वं वृन्तादिव फलं प्रशातयति मेहनम्' इति ( डल्हणः ), मुद्राराक्षसे प्रथमाङ्के विषकन्योपयोगः कृतो दृश्यते ६४१

७७ आहाररक्षणे दक्षता ।

**६४२-नाप्रोक्षितं नाविदितं भिषजा नानवेक्षितम् ।**
**नाप्राशितं च सूदाद्यैः[९६] कश्चिदप्याहरेन्नृपः ॥ ९२**

६४२-तथा नृपो राजा मन्त्रागदवार्यादिभिरप्रोक्षितं तथाविज्ञातस्वरूपं भिषजा चादृष्टं सूदाद्यैश्च परिचारकैरप्राशितं न किञ्चिदप्याहारमाहरेत् । सूदादीनां प्राशननियमो मित्रबान्धवादिव्यापत्तिभयात् कदाचिन्न ददाति विषमिति । अतः परं सर्वार्थसिद्धनामानगमदं वक्ष्यते— ६४२

७८ विषापहमञ्जनम् ।

**६४३-धन्यं सर्वार्थसिद्धाख्यं पापरक्षोविषापहम् ।**
**परं चक्षुष्यमायुष्यं शत्रुघ्नं वक्ष्यतेऽञ्जनम् ॥ ९३**

७९ अञ्जनाहरणम् ।

**६४४-अथ शुक्लपक्षे पुण्येऽहनि पुष्यपुनर्वसुहस्तचित्रामृगशिरःश्रवणरेवतीशतभिषक्प्राजापत्योत्तराणामन्यतमेन नक्षत्रेण योगमुपगते भगवत्यौषधिपतौ प्रशस्ते मुहूर्ते सिन्धुस्रोतःसमुत्थं स्निग्धं सप्रभं गन्धवर्णच्छदैर्नीलोत्पलाभमञ्जनमाहरेत् ९४**

६४४-अथेति मङ्गले । शुक्लपक्षे द्वादशीनवम्यादावहनि पुष्यादीनामन्यतमेन योगं गते चन्द्रे प्रशस्ते मुहूर्ते लग्ने सिन्धुस्रोतःसमुत्थानादियुक्तं सौवीराञ्जनं गृह्णीयात् ६४४

८० अञ्जनप्रज्वालनम् ।

**६४५-तस्याष्टौ भागाः कनकरजतोदुम्बराणामेकैको भागः । तत्सर्वं मूषायां प्रक्षिप्य बलिमङ्गलपूर्वकममिमुपसमाधाय खदिरकदरधवस्यन्दनानामन्यतमदारुभिर्गोमयैर्वा प्रज्वालयेत् ९५**

---

९१° धुकाञ्जनगैरि°-क. ख. च. ९२° सु मक्षेपु सुम°-च. ९३° वै तत्र शस्यते। न°-क. ख. च. ९४° पसंमोगात्क°-क. च. ९५ तन्मस्तकस्य संस्पर्शान्म्लायेते पुष्पपल्लवौ । श°-क. ख, तद्धस्तकेश°-च. ९६ °द्यैः किंचिदाहारयेन्नृ-क. ख. चं. ९७° न्दनान्यतमदा°-क. ख. च.

६४५–तस्याष्टौ भागास्तस्य चाष्टमेन भागेन समानि प्रत्येकं कनकादीनामिति सर्वं पिष्ट्वा संमिश्रय मूषायां...मध्यां–नाड्यां प्रक्षिप्य बल्यादिनाग्निं पूजयित्वा खदिराद्यन्यतमदारुणा शुष्कगोमयपिण्डैर्वा प्रज्वालयेत्सह मूषया। तैजसानां कनकादीनामावर्तनभाण्डं मूषेत्युच्यते ६४५

८१ अञ्जननिषेचनम्।

**६४६–ततश्चार्यावलोकितेश्वरमार्यैर्तारां ब्रह्मदक्षाश्विरुद्रेन्द्रादित्यसोमवरुणवैश्वानरवायुविष्णुजनकभरद्वाजधन्वन्तरिसुश्रुतभव्यसुकन्यारकन्दच्यवनवैनतेयानन्यांश्च यथाविभ्युक्तदेवताः सुमनोऽक्षतलाजस्वस्तिकसंर्यावनिस्तुपयवसंस्कृतगुडघृतमिश्रपायसैरर्चयित्वा वृद्धवैद्यब्राह्मणांश्च शुक्लवाससो महतीभिर्दक्षिणाभिः पूजयित्वा तस्मिन्नग्नौ तदञ्जनं ध्मातं ध्मातमावृत्य पृथक्पृथङ्निषेचयेत् ९६**

६४६–ततश्चार्यावलोकितेश्वरादीन् सुमनोऽक्षतादिभिरर्चयित्वा तथा वृद्धवैद्यान् ब्राह्मणांश्च शुक्लवाससस्ततो महतीभिर्दक्षिणाभिर्हिरण्यवरवारणादिभिः पूजयित्वा तस्मिन् खदिराद्यग्नौ ध्मातमावृत्य–शलशलाकयोर्ध्वमधश्च संमिश्रय ततोऽवतारितं गोमयस्वरसादिभिर्यथाक्रमं पृथक् सिञ्चेत्६४६

८२ निषेचनद्रव्याणि।

**६४७–गोशकृद्रसमूत्रघृतदधिक्षौद्रवसामज्जतैलमधसर्वगन्धाम्बुशर्करोदकेक्षुरसेषु, तथा हरीतक्यामलकाबिभीतककाश्मर्यमृद्वीकाशृङ्गाटककशेरुकोत्पलनलिनसौगन्धिकमृणालिकाक्वाथेषु, तथा लावकपिञ्जलैणशशहरिणकुलीररसेषु, तथा मधुकचन्दनकालीनुसार्यनलदपद्मकोशीरमञ्जिष्ठानन्तागैरिककुङ्कुमोदकेषु ९७**

८३ अञ्जनस्यान्तरिक्षेऽम्भसि स्थापनम्।

**६४८–ततः शुक्ले वाससि बद्ध्वा द्वादशरात्रमान्तरीक्षेऽम्भसि वासयेत् ९८**

६४८– ततः कुङ्कुमोदकसेके दत्ते शुक्ले पटे बध्वा आन्तरिक्षे जले द्वादशरात्रमधिवासयेत ६४८

८४ नाड्यामञ्जनस्थापनम्।

**६४९–ततश्छायायां विशोष्य स्फटिकमुक्ताप्रवालकालानुसार्याप्रतीवापं पुनरपि बलिमङ्गलपूर्वकमहतवाससा कन्यया दृषदि पेषयित्वा सुवर्णरजतताम्रशङ्खशैलद्विरदरदनगवैयश्रृङ्गवैडूर्यस्फटिकमेषशृङ्गन्यसनसारान्यतमघटितायामञ्जनिकायां निधापयेत् ९९**

६४९–ततश्छायायां शोषयित्वा दत्तस्फटिकादिप्रतीवापं पुनरपि पूर्वोक्तेन बलिमङ्गलादिना कन्यया दृषदि पेष्य प्रतीवापं चूर्णम्। किंभूतया कन्यया? अहतानि शस्त्राद्यपाटितानि वासांसि यस्याः तथा तयैव कन्यया कर्तृभूतया सुवर्णाद्यन्यतमरचितायामञ्जननाड्यां वैद्यो निधापयेत् स्थापयेत्। गवलं–माहिषं शृंगम् ६४९

८५ अञ्जनाभिसंस्करणम्।

**६५०– अथ पूर्ववत्पुनरपि कृतस्वस्त्ययनं सावित्रेण कर्मणा सर्वविद्द्विजन्मा विधिवत्तदभिसंस्कुर्यात् १००**

६५०–अथाथर्ववेदविदा ब्राह्मणेन सावित्रेण सौरेण मार्गेण कृतस्वस्त्ययनं अभिसंस्करणीयम् ६५०

८६ वैद्यगृहादञ्जननयनम्।

**६५१–ततो गजस्कन्धमारोप्य पाण्डुरच्छत्रचामरबालव्यजनैरनुगतं तथा शंखदुन्दुभिस्वनैर्द्विजातिवरप्रयुक्तैश्च वेदवादमिश्रैः पुण्याहघोषैः कृतपुष्पोपहारं वैद्यगृहान्नायकगृहमनु प्रवेशयेत् १०१**

६५१– अन्यत्सुबोधम् ६५१

८७ समन्त्रकमञ्जनधारणम्।

**६५२–अनन्तरं च तेन विदेहाधिपोपदिष्टेन सर्वार्थेषु सिद्धेनाञ्जनेन यथोक्तानामेवाञ्जनभाजनद्रव्याणामन्यतमया शलाकया गोब्राह्मणपूजापूर्वकं शुचिः सनियमो भूत्वा धारिणीमिमां विद्यामधीयानः पूतः पूर्वमक्षि दक्षिणमञ्जयेत् १०२**

८८ अञ्जनधारणमन्त्रः।

**६५३–अथ मन्त्रः। नमश्चक्षुःपरिशोधनराजाय तथागतायार्हते सम्यक्सम्बुद्धाय। तद्यथा–'ॐचक्षुः प्रज्ञाचक्षुर्ज्ञानचक्षुर्विशोधय स्वाहा १०३**

८९ एतदञ्जनमाहात्म्यम्।

**६५४–ततः परं च तामेव धारिणीमनुस्मरन् सायंप्रातः प्रत्यहमेतत्परमं पवित्रमारोग्यकरमूर्जस्करं सर्वविषघ्नसञ्जनमश्विभ्यामिन्द्रस्य वृत्रवधाभ्युद्यतस्य प्राक्प्रकल्पितम्। तस्मादेतद्राज्ञां राजमहामात्राणां च महीं विजिगीषमाणानां च ब्राह्मणानां च वेदाध्ययनमन्यद्वा महच्छास्त्रमवगाहमानानां प्रसन्नमना भिषक्प्रकल्पयेदिति १०४**

६५४–धारिणी विद्या। राजमात्रा अन्ये वित्तसम्पन्नाः ६५२, ६५३, ६५४.

९० तन्त्रवाचोयुक्तिः।

**६५५–भवन्ति चात्र श्लोकाः– १०५**

६५५–भवन्ति चात्रेति समुच्चयाय तन्त्रवाचोयुक्तिः ६५५

९१ बृहस्पतिकृता योगाः।

**६५६–अथ योगाः प्रवक्ष्यन्ते बृहस्पतिकृताः शिवाः। यान् सेवमानो नृपतिः शत्रुभ्यो नैति वञ्चनाम् १०६**

६५६–अथ बृहस्पतिकृता योगा वक्ष्यन्ते। यान्योगान् से-

---

९८° ताराब्रह्म°–ख. ९९° यावपायसैर°–क. १००° कंरेक्षुर°–क. च. १०१° नुसार्यानल्द°–क. च. १०२° नुसार्याः प्र°–क, °नुसार्य प्र°–ख. च. १०३° नगवलश्रृङ्ग°–क ख. च. १०४° णीमामधी°–प्र°–क. १०५° नःपूर्व°–क. १०६° येत्। नम°–क. ख. १०७ °नचक्षुर्विज्ञानचक्षुर्विशो°–क. ख. १०८° रं सर्वविघ्नहरम्°–क. ख.च १०९° धाम्युदित°– क. ख. ११०° जमात्राणां चम°–क. १११ °ति पञ्चताम्। वि°–च.


( पिंगकपिशा )


( देहिका )


( माक्षिका )


( मत्कुणः )


( दंशः )

कीटाः ( सू. ६६४ )


सरीसृपः ( सू. ६६४ )


उन्दुरः ( सू. ६६४ )

वर्धमानो राजा शत्रुभ्यः वञ्चनां लाघवं त्र नैति—न प्राप्नोति।

९२ विषघ्नानि प्रोक्षणानि।

**६५७--बिल्वाढकीयवक्षारपाटलीबाल्हिकोषणैः।**
**श्रीपर्णीसल्लकीयुक्तो निष्क्वाथः प्रोक्षणः परम् १०७**
**सविषं' प्रोक्षितं तेन सद्यो भवति निर्विषम्।**
**यवसेन्धनपानीयशौखशय्यासनोदकम् ॥ १०८**
**कवचाभरणच्छत्रवालव्यजनवेश्म च।**

६५७—बिल्वादीनां क्वाथेन सविषं यवसादिकं प्रोक्षितं सद्य एव निर्विषतां याति।आढकी—तुवरी। बाल्हिकं—कुङ्कुमम्। श्रीपर्णी—काश्मर्यम्। सल्लकी—अश्वमूत्री ६५७

**६५८--शेलुपाटल्यतिविषाशिग्रुगोपीपुनर्नवम्। १०९**
**समङ्गावृषमूलत्वक्कपित्थवृषशोणितम्।**
**सहदन्तशठं तद्वत्प्रोक्षणं विषनाशनम् ॥ ११०**

६५८- तथा शेल्वादिप्रोक्षणं विषनाशनम्। गोपी—शारिवा। समङ्गा—माञ्जिष्ठा। दन्तशठं—कशेलम्। तच्च जंबीरम्। तद्वच्च निष्क्वाथेनेत्यर्थः ६५८

९३ विषनाशनो मणिः।

**६५९--लाक्षाप्रियङ्गुमञ्जिष्ठासमङ्गालहरेणुकाः।**
**यष्ट्याह्वमधुसंयुक्ता बभ्रुपित्तेन कल्किताः ॥ १११**
**निखनेद्गोविषाणस्थाः सप्तरात्रं महीतले।**
**ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत् ११२**
**संस्पृष्टं सविषं तेन सद्यो भवति निर्विषम्।**

६५९--लाक्षादयो माक्षिकसंयुक्ता नकुलपित्तेन च कल्किताः पिष्टा गोशृङ्गान्तस्थाः सप्तरात्रं भूमौ निखनेत्। ततः सप्तरात्रादुद्धृत्य मणिं गुलिकां कृत्वा हेम्ना सुवर्णेन वेष्टयेत्। तं च मणिं हस्तेन धारयेत्। तेन हस्तस्थितेन मणिना स्पृष्टं सर्वमेव सविषं निर्विषतां याति ६५९

९४ सौम्याख्यो गदः।

**६६०--मनोह्वालशमीपुष्पत्वङ्निशाश्वेतसर्षपाः ॥ ११३**
**कपित्थकुष्ठमाञ्जिष्ठाः पित्तेन श्लक्ष्णकल्किताः।**
**शुनो गोः कपिलायाश्च सौम्याख्योऽयं वरोऽगदः॥**
**विषजित्परमं कार्यो मणिरत्र च पूर्ववत्।**

६६०—मनोह्वादीनि च शुनः पित्तेन गोर्वा कपिलायाः पित्तेन श्लक्ष्णपिष्टानि सौम्यनामागदः पूर्वयोगादत्यर्थं विषनाशनः ६६०

९५ विषापहं हस्तबंधनम्।

**६६१--मूषिकाजरुहा वापि हस्तबद्धा विषापहाः ११५**

६६१—मूषिकानामौषधिः। द्रवन्तीति केचित्। अजरुहा—प्लक्षरुहा। विषभुक्तस्य हस्तबन्धाद्विषनाशिनी ६६१

**टिप्पणी**—इदानीं प्रभावकृतं चिकित्सितं प्राह—मूषिकेत्यादि। अजरुहालक्षणमुशनसा प्रोक्तम्—' कन्दः श्वेतः सपिडके भेदे चाञ्जनसंनिभः। गन्धलेपनपानैस्तु विषं जरयते नृणाम्। दष्टानां विषपीतानां ये चान्ये विषमोहिताः। विषं जरयते तेषां तस्मादजरुहा स्मृता। मूषिका लोमशा कृष्णा भवेत्सापि च तद्गुणा' इति डल्हणः (सु. क. अ. १—७८) अत्र 'मूषिकाजरुहावापि हस्ते बद्धा तु भूपतेः। करोति निर्विषं सर्वमन्नं विषसमायुतम्' इति सुश्रुतपाठः ६६१

९६ विषहारकोऽपरो मणिः।

**६६२--हरेणुमांसी मञ्जिष्ठा रजनी मधुकं मधु**
**अक्षत्वक्सुरसं लाक्षा श्वपित्तं पूर्ववन्मणिः ॥ ११६**

९७ वादित्रादिलेपनम्।

**वादित्राणि पताकाश्च पिष्टैरेभिश्च लेखिताः।**
**श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषम् ११७**

६६२—हरेण्वादयश्च श्वपित्तपिष्टैः मणिः पूर्ववत्। एभिश्चानन्तरोक्तैरगदैर्वादित्राणि पताका वैजयन्त्यश्च प्रलिप्तं तच्छब्देन तद्गन्धेन तत्स्पर्शेन च विषभुक्तो निर्विषतां याति ६६२

९८ विषघ्नो योगः।

**६६३--त्र्यूषणं पञ्चलवणं मञ्जिष्ठां रजनीद्वयम्।**
**सूक्ष्मैलां त्रिवृतां पत्रं विडङ्गानीन्द्रवारुणीम् ११८**
**मधुकं चेति सक्षौद्रं गोविषाणे निधापयेत्।**
**तस्मादुष्णाम्बुना मात्रां प्राग्भक्तं विनियोजयेत्**
**विषं भुक्तं जरां याति निर्विषेऽपि न दोषकृत्**

६६३—त्र्यूषणादिकं पिष्टं माक्षिकयुक्तं गोशृङ्गे स्थापयेत् ततो मात्रां—स्तोकं भोजनादौ योजयेत्। तत्संस्कृते कोष्ठे विषं भुक्तं जरां याति। इन्द्रवारुणी—गवाक्षी। ननु स्वस्थस्य भोजनपूर्वं दत्तं तदनु च विषं न भुक्तमिति कदाचिद्दोषकोपाय भवतीत्याह—निर्विषेऽपि न दोषकृत् ६६३

**टिप्पणी**—त्र्यूषणमिति—रजनीद्वयम्—हरिद्रा, दारुहरिद्रा च। इन्द्रवारुणी—गवाक्षी (लघु इन्द्रावण), मधुकम्—यष्टीमधु (ज्येष्ठमध) ६६३

९९ विषघ्नौ धूपौ।

**६६४--जतुसर्जरसोशीरसर्षपपत्रवालकैः ॥ १२०**
**'सवेल्लारुष्करपुरैः कुसुमैरर्जुनस्य च।**
**धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् ॥ १२१**
**न तत्र कीटाः सविषा नोन्दुरा न सरीसृपाः।**
**न कृत्याकार्मणाद्याश्च धूपोऽयं यत्र दह्यते ॥ १२२**

६६४—जत्वादिभिर्मिश्रितैर्वासगृहे धूपः सर्वविषनाशनः, कीटादीनां कृत्यादीनां चोपनिपातनो नाशनः ६६४

**टिप्पणी**—जतुसर्जरसेत्यादि—जतु—लाक्षा (लाख), सर्जरसः—शालनिर्यासः (राळ) उशीरम्—स्वनामप्रसिद्धं सुगन्धतृणमूलम् (वाळा), सर्षपः—(मोहरी), पत्रम्—तमालपत्रम्, वालकम्—ह्रीबेरम् (काळा वाळा), वेल्लम्—विडङ्गम् (वावडिङ्ग), अरुष्करो भल्लातकः (बिब्बा), पुरः—गुग्गुलुः, अत्र

---

११२° कोषणात्। शाल्मलीयुक्तश्रीपर्णी नि°–क. ११३ षं प्रोक्षयेत्तेन स°–क. ११४° यवलश°–क. च. ११५° नादनम्। क°–क. च. ११६° णुकाः। सयष्ट्याह्वा मधुयुता ब°–क° ११७° लक्सरलं ला°–च. ११८° ति निर्विषः। त्र्यू°–क. ख. च. ११९° क्तं योजयेत्तथा। वि°–च १२० सविल्लारुष्करयवैः कुसु°–ख. १२१° त्याकर्षणा°–ग.

चरकः–' जतुसेव्यपत्रगुग्गुलुभल्लातककुकुभपुष्पसर्जरसाः । श्वेता च धूम उरगाखुकीटवृश्चिकक्रिमितुदग्न्यः ' अन्यच्च– ' घृतयुक्तं नतकुष्ठे भुजगपतिशिरः शिरीषपुष्पं च । धूमागदः स्मृतोऽयं सर्वविषघ्नः श्वयथुहृच्च ' च. चि. २३–१००,९९ ) अत्र प्रसंगात् सुश्रुतप्रोक्तो वृश्चिकविषनाशनो धूपः प्रदर्श्यते– 'शिखिकुक्कुटबर्हाणि सैन्धवं तैलसर्पिषी । धूमो हन्ति प्रयुक्तस्तु शीघ्रं वृश्चिकजं विषम् ' इत्यादि ( सु. क. ८–७२ ) कार्मणाद्या इति–कार्मणाः कार्मणमन्त्राः–परद्रोहोपायकुमन्त्राः । (च. चि. २३–८८ ) ६६४

**६६५–शिखिपिञ्छं बलाकास्थि सर्षपाश्चन्दनं घृतम् ।**
**धूपो विषघ्नः शयनवसनासनगेहगः ॥ १२३**

६६५–शिखिपिञ्छादिकेन सघृतेन शयनादिकेषु धूपो विषनाशनः ६६५

**टिप्पणी**—शिखिपिच्छेति – बलाका श्वेतवर्णविशिष्टो बकभेदः । तथा चोक्तं चरके ( चि. २३–९८ ) ' शिखिबर्हिबलाकास्थीनि सर्षपाश्चन्दनं च घृतंयुक्तम् । धूमो गृहशयनासनवस्त्रादिषु शस्यते विषनुत् । शिखिपुच्छादिचतुष्कं कुट्टयित्वा गृहादिषु घृतयुक्तं धूपयेत् ६६५

१०० स्नानीयेऽम्भसि योज्यं चूर्णं ।

**६६६–विशालाव्योषमञ्जिष्ठायष्टीलवणपञ्चकम् ॥ १२४**
**द्विनिशापत्रवेल्लैलात्रिवृच्चूर्णं समाक्षिकैर्म् ॥**
**गोश्रृङ्गे निहितं योज्यं स्नानीयेऽम्भसि भूपतेः ।**
**६६७–पूर्वोक्तत्र्यूषणादिं च स्नानीयेऽम्भसि योजयेत् ॥**

६६६–तथा स्नानीयेऽम्भसि विषनाशनाय पूर्वोक्तं त्र्यूषणादिकं योजयेत् ६६६

**टिप्पणी**–विशालेति – विशाला – महेन्द्रवारुणी नाम तिक्तलताभेदः ( घोडेइन्द्रावण ), व्योषम्–त्रिकटु, लवणपञ्चकम्–'सैन्धवं रोमकं ( सांबरलोण ) चैव सामुद्रलवणं तथा। विडं, सौवर्चलाख्यं ( पादेलोण ) च युक्तं ( संयुक्तसमभागम् ) लवणपञ्चकम्' इति ६६६

**टिप्पणी**—पूर्वोक्तेति—त्र्यूषणं पञ्चलवणमित्यादिनोक्तमिति भावः ( सू. ६६३ ) ६६७

१०१ स्नानादिजले योज्यौ क्वाथकल्कौ ।

**६६८–[१२३]क्वाथो धवार्ककुसुमश्वेतापामार्गसर्षपैः ।**
**सदध्याज्यः कृतो युक्तैः [१२४]कतकानाकुलीद्वयैः १२६**
**कल्को वा चन्दनक्षीरिपलाशद्रुमवल्कलैः ।**
**मूर्वैलावालुसुरसनाकुलीतण्डुलीयकैः ॥ १२७**
**६६९–क्वाथः सर्वोदकार्येषु काकमाचीयुतैर्हितः ।**

६६८–अथवा धवादिभिः कतकादियुक्तैः कृतः क्वाथो दधिघृतमिश्रः स्नानीयेऽम्भसि योज्यः चन्दनद्रुमवल्कलादीनां वा कल्कः स्नानादिजले योज्यः । द्रुमशब्दस्य चन्दनक्षीरिपलाशैः संबन्धः ६६८

६६९–एतेषां वल्कलैस्त्वग्भिरथवा सर्वेषूदकार्थेषु स्नानादिकेष्वेषां चन्दनादीनां काकमाचीसंयुक्तानां क्वाथो विषनाशनः । नाकुली–सर्पाक्षी । एलावालुकं–वालुकम् ६६९

१०२ विषहरास्तिलकाः ।

**६७०–रोचनापत्रनैपालीकुङ्कुमैस्तिलकान् बहून् १२८**
**विषैर्न बाध्यते स्याच्च नारीनरनृपप्रियः ।**

६७०–रोचनादिभिर्ललाटादिषु तिलकान् धारयेत् । विषैर्न बाध्यते । नार्यादीनां च प्रियो भवति । नैपालीशब्देन मनश्शिलोच्यते ६७०

१०३ विषहरचूर्णम् ।

**६७१–चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकिणनिम्बजैः ॥ १२९**
**दिग्धं निर्विषतामेति गात्रमित्याह गौतमः ।**

६७१–सविषं गात्रं हरिद्रादीनां चूर्णेन दिग्धं निर्विषतामेतीत्याह गौतमः ६७१

१०४ विषभुक्तचिकित्सा ।

**६७२–नस्य[१२५]पानाञ्जनालेपैर्युञ्ज्यात् संजीवनात्मकान् ॥**
**अ[१२६]गदान् विषभुक्तस्य तीक्ष्णानि वमनानि च ।**
**पिप्पलीमधुकक्षौद्रशर्करेक्षुरसैः सह ॥ १३१**
**६७३–द्विनिशापत्रवेल्लैलात्रिवृच्चूर्णं समाक्षिकम् ।**
**विरेचनं सिरामोक्षं प्राप्तं विस्रावणं यदि ॥ १३२**

६७२–सञ्जीवनादींश्चागदान् विषप्रतिषेधे वक्ष्यमाणान्नस्यादिषु योजयेत् । विषभुक्तस्य तीक्ष्णानि वमनानि च योजयेत्

६७३–विषप्रतिषेधोक्तप्रकारेण च यदि रक्तविस्रावणावसरः ततः सिरामोक्षो विधेयः ६७३

**टिप्पणी**–नस्येत्यादि ।टीकायां वक्ष्यमाणानीति–उत्तरे स्थाने ४० अध्याये चन्दनं कुंकुमं कुष्ठमित्यादिना वक्ष्यमाणानिति भावः । चरके चायं चिकित्सास्थाने २३ अध्याये ५४–६० इति श्लोकेषु द्रष्टव्यः । तीक्ष्णानि वमनानि चेत्यादि–तथा च वक्ष्यति ' स्थावरेण विषेणार्तं नरं यत्नेन वामयेत् । वमनेन समं नास्ति यतस्तस्य चिकित्सितम् ' इति । अन्यच्च– ' हृदयावरणेनास्य श्लेष्मा हृद्युपचीयते । प्रवृत्तगौरवोत्क्लेशहृल्लासं वामयेत्ततः ' इत्यादि ( अ. सं. उ. अ. ४२ ) ६७२

**टिप्पणी**—पिप्पलीत्यादि–अत्र सुश्रुतः–पिप्पलीमधुकक्षौद्रशर्करेक्षुरसाम्बुभिः । छर्दयेद्गुप्तहृदयो भक्षितं यदि वै विषम् ( क. १–८५ ) शर्करेक्षुरसांबूनि त्रीणि द्रवाणि, पिप्पली मधुकं कल्कम् । क्षौद्रमिति प्रक्षेपः । गुप्तहृदयो विषघ्नैः प्रच्छादितहृदयः ६७३

१०५ अजेयामृते घृते ।

**६७४–हृदयावरणं कार्यं प्रागेवामित्र[१२७]मध्यतः ।**
**पिबेद्घृतमजेयाख्यममृतं[१२८] वाप्यभुक्तवान् ॥ १३३**
**सर्पिः क्षौद्रं दधि क्षीरमन्ततः शीतलं जलम् ।**

६७४–शत्रुमध्यस्थिताय च भूभृते पूर्वमेव हृदयरक्षणं कार्यम् । तच्च विषप्रतिषेधे वक्ष्यते । तथा च शत्रुमध्ये

---

१२२° क्षिकम् । पूर्वोक्तं त्र्यू°–क. ख. १२३° थोऽथवार्क°–क. ख. च. १२४° क्तैः समाचीना–°क. ख., क्तैः समाचीनाकुलीयकैः । क°–च. १२५° त सञ्जीवनादिकान् । अ°–क. ख. च. १२६° दान्विषजग्धस्य ती°–क. ख. च. १२७° मित्रमध्यगः । पि°–क. ° गेव हितमिच्छता । पि°–ख. १२८° तं चाप्यं°–क. ख.

विषप्रतिषेधे वक्ष्यमाणमजेयं नाम घृतं भोजनपूर्वं पेयम्। विषप्रतिषेधे अमृतं नाम घृतं भोजनपूर्वं देयं भिषजा। अन्ततः शीतलं जलं सर्पिराद्यभावे शीतमापि जलं पेयमित्यर्थः। ६७४

**टिप्पणी—** शरीरे विषव्याप्तिप्रतिषेधर्माभिधायेदानीं चित्ते विषव्याप्तिप्रतिषेधमाह—हृदयावरणमिति। टीकायां वक्ष्यमाणमिति—उत्तरस्थाने विषप्रतिषेधाध्याये (अ. ४०) वक्षमाणमिति भावः। अमृताख्यं घृतमिति तत्रैव। तच्च यथा—'मधुकं तगरं कुष्ठं भद्रदारु हरेणवः। मञ्जिष्ठैलैलवालूनि नागपुष्पोत्पलं प्लवम्। विडङ्गं चन्दनं पत्रं प्रियंगुर्ध्यामकं बला। अंशुमत्यौ हरिद्रे द्वे बृहत्यौ शारिवाद्वयम्। एषां कल्कैर्घृतं सिद्धमजेयं नाम विश्रुतम्। विषाणि हन्ति सर्वाणि शीघ्रमेव प्रयोजितम्। (अ. सं. उ. स्था.) प्लवं—परिपेलवम् (नागरमोथे), पत्रं गन्धपत्रम् (तमालपत्र), ध्यामकम्—कत्तृणम् (रोहिष), अंशुमत्यौ—सालपर्णी पृश्निपर्णी च (सालवण पिठवण) इत्यजेयाख्यं घृतम्। अमृतं घृतं यथा—'श्वेते कपोते बजानि प्रत्यक्पुष्पीशिरीषयोः। गोमूत्रपिष्टैस्तैः सर्पिः सिद्धं विषहरं परम्। अमृतं नाम विख्यातमपि सञ्जीवयेन्मृतम्' इति। श्वेतादिभिर्गोमूत्रपिष्टैः सर्पिः सिद्धं नाम्नामृतं परं विषहरम्। मृतं संजीवयेदिति सम्भाव्यते। श्वेते द्वे—वचा, श्वेतगुंजापत्राणि च, प्रत्यक्पुष्पीशिरीषयोर्बीजानि, प्रत्यक्पुष्पी—अपामार्गः। अन्तत इति—अन्ते—सर्वाभावे। अत एव पूर्वेषु पूर्वाभावे परमिति लभ्यते। 'सर्पिरादीनि प्रत्येकं, चत्वारि, पंच वा हृदयावरणानि पिबेत्' इति डल्हणः (सु. क. १–७९–८१)६७४

१०५ विषनाशनानि मांसादीनि।

**६७५—सितामधुकपालिन्दीकल्कवन्मांसमिष्यते॥ १३४**
**गोधाहरिणबभ्रूणां सकणाशुण्ठिपार्षतम्।**
**सनागरं सातिविषं शिखिनः ससितोपलम्॥ १३५**
**सुशीताः सघृताश्चैषां यथास्वं कल्पिता रसाः।**

६७५—सितादिकल्कसंयुक्तं च मांसं विषनाशनायेष्यते। कस्य मांसमाह—**गोधादीनाम्**। तथा पृषतस्य मांसं शुण्ठीपिप्पलीयुक्तम्। तथा शिखिनो—मयूरस्य मांसं नागरेण वातिविषया वा शर्करया वा युक्तम्। एषां च गोधादीनां मांसेन यथास्वं योग्यसंयोग्यौषधकल्पिताश्च रसाः ६७५

**टिप्पणी—**सितेत्यादि—अत्र सुश्रुतः—'गोधानकुलमांसेषु हरिणस्य च बुद्धिमान्। दद्यात्सुपिष्टां पालिन्दीं मधुकं शर्करां तथा। शर्करातिविषे देये मायूरे समहौषधे। पार्षते चापि देयाः स्युः पिप्पल्यः समहौषधाः। सक्षौद्रः सघृतश्चैव शिवीयूषो हितः सदा। विषघ्नानि च सेवेत भक्ष्यभोज्यानि बुद्धिमान्' (क. १–८२–८४) ६७५

१०६ हृद्विशोधनो योगः।

**६७६—विषपीताय दद्याच्च शुद्धायोर्ध्वमधस्तथा॥ १३६**
**सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम्।**

६७६—येन च विषं भुक्तं तस्य तस्य कृतवमनविरेचनस्य काले तदवस्थायोग्यं सूक्ष्मं सुपिष्टं ताम्रचूर्णं माक्षिकसंयुक्तं हृच्छोधनाय दातव्यम् ६७६

**टिप्पणी—**कृतपूर्वोक्तोपचारस्य विशेषशङ्कानिवृत्त्यर्थमुपचारमाह—विषपीतायेति। विषपीतलक्षणं यथा—'सवातं गृहधूमाभं पुरीषं योऽतिसार्यते। आध्मातोऽत्यर्थमुष्णास्रो विवर्णः सादपीडितः। उद्वमत्यथ फेनं च विषपीतं तमादिशेत्' इति (सु. क. ३–३५, ३६). विषभुक्तायेति हृदयपाठः। शुद्धायेति—पुनरपि कृतवमनविरेचनाय। काले—औषधकाले, संसर्जन (च. सि.१-११) क्रमानन्तरमित्यर्थः। हृद्विशोधनम्—हृदयस्थितविषनिर्हरणम्। तच्च वमनादिद्वारा। सूक्ष्मम्—अतिश्लक्ष्णम्। अल्पं च ताम्रचूर्णम्—अ-मृतताम्रचूर्णं देयम्, यतः तादृशेनैव वमनं भवति। सक्षौद्रम्—समधु ६७६

१०७ हेमचूर्णसेवनम्।

**६७७—शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत्॥ १३७**
**न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम्।**
**जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः॥ १३८**

६७७—एवं शुद्धे हृदि सुवर्णचूर्णस्य च मात्रां दापयेत्। तेन किं भवतीत्याह—हेमपस्य पुरुषस्याङ्गे शरीरे विषं न सज्जते न तिष्ठति। यथा पद्मपत्रेऽम्बु न सज्जते। तस्य च विपुलमायुर्जायते। एष च मौलविषविधिर्गरेऽपि विधेयः करणीयः ६७७

**टिप्पणी—**शुद्धे हृदीति—ताम्रप्रयोगाध्हृदयशुद्धौ लिङ्गेन ज्ञातायामिति भावः। ततः—अनन्तरम्। हेमचूर्णस्य—अपक्वस्य सुवर्णस्य चूर्णस्येति भावः। अपक्वस्यैव सद्योविषहरत्वात्। शाणम्—कर्षचतुर्थांशम्। अत्र सुवर्णचूर्णसेवनविधिर्यथा—'अपक्वं हेम संघृष्टं शिलायां जलयोगतः। द्रवरूपं तु तत्पेयं मधुना गुणदायकम्। यद्वापि तवकाख्यं तु स्वर्णपत्रं विचूर्णितम्। मधुना संगृहीतं चेत्सद्यो हन्ति विषादिकम्' इति। तवको वरकः (वर्ख)। सुवर्णप्रयोगफलमाह—न सज्जत इति। हेम पिबतीति हेमपः, तस्य अङ्गे विषं न सज्जते—सङ्गं न गच्छति। विशोक्तविधिं गरेऽप्यतिदिशति—गरेप्येष इति। गरं कृत्रिमं विषम्। ६७७

१०८ गरविषादिभ्यो राज्ञो रक्षणे प्रयोजनम्।

**६७८—इत्थं गरविषादिभ्यो रक्षेद्वैद्यो नरेश्वरम्।**
**स्यादुच्छेदस्तदुच्छेदात्प्रजानां सर्वकर्मणाम्॥ १३९**
**आज्ञाधैर्यक्षमात्यागा मानुषत्वेऽप्यमानुषाः।**
**यद्राज्ञः कर्मभिस्तस्मादाराध्योऽसावतीन्द्रियैः १४०**

६७८—इत्थमनन्तरोक्तेन रक्षणप्रकारेण भिषग्वैद्यो नरेश्वरं विषगरादिभ्यो रक्षेत्। यतस्तस्य नरेश्वरस्य उच्छेदे

१२९ यद्राजा क–ख.

विनाशे प्रजासंवन्धिनां सर्वकर्मणामुच्छेदः । स च राजा भिषजातीन्द्रियैर्मानसैर्यत्नतः प्रज्ञादिभिः कर्मभिराराधनीयः, येन कुपितो दोषं न करोति । यतो राज्ञो मानुषत्वेऽपि आज्ञादयोऽमानुषा भवन्ति । अन्यपुरुषेभ्यः स एव शक्त इत्यर्थः । अयमेव तदाराधनोपाय उच्यते ६७८

१०९ राज्ञः सविधे वैद्यचर्या ।

६७९–यत्र साक्षान्नृपस्तत्र विज्ञातः प्रविशेद्भिषक्
न संमतोऽप्यनुचितं यानस्थानासनं भजेत् ॥१४१
उचिते पुरतो राज्ञस्तिष्ठेद्वाक्यं च नाक्षिपेत् ।
अहीनकालं राजार्थं स्वार्थं प्रियाहितैः सह ॥ १४२
देशे काले परार्थं च वदेद्धर्मार्थसंहितम् ।
नानुशिष्यादपृच्छन्तं महदेतद्धि साहसम् ॥ १४३
नाचरेदहितेनैनं मूलच्छेदकरं हि तत् ।
अनुकूलं हितं वाच्यमहिताद्वारयेन्मिथः ॥ १४४
उदारैः सान्त्वयन् वाक्यैर्दोषश्चेत्तदुपेक्षया ।
तूष्णीं वा प्रतिवाक्ये स्याद्वर्जयेद्द्वेष्यैः[130]संकथाम् १४५
विपश्चिदप्यचित्तज्ञो बालिशोऽपि तु भाववित् ।
अतिप्रियोऽपि द्वेष्योऽपि यात्याशु विपरीतताम् १४६
निवेद्य राज्ञे कुर्वीत कार्याणि सुलघून्यपि ।
न यायान्न चिरं तिष्ठेत्कोशस्थानावरोधयोः ॥१४७
स्वल्पेऽपि दर्शयेत्तुष्टिं लाभेऽनुद्धतमानसः ।
मिथः कथनमन्येन कौलीनं द्वन्द्ववादिताम् ॥१४८
वस्त्रादि[131] राज्ञा सदृशं राजलीलां च वर्जयेत् ।
दत्तं यत्तु नृपेणैव तद्धार्यं तुष्टिवृद्धये ॥ १४९
हसित[132]व्ये स्मितं कुर्यात्प्रभोरेवानुवृत्तितः ।
उच्यमानेऽवलम्बेत परमर्मणि मूकताम् ॥ १५०
स्वमर्मणि तु बाधिर्यधैर्यमाधुर्यसौष्ठवा[133]न् ।
अत्यायासेन नात्मानं कुर्यादतिसमुच्छ्रितम् १५१
पातो यथा हि दुःखाय नोच्छ्रायः सुखकृत्तथा ।

६७९–राजगृहे यस्मिन् प्रदेशे साक्षाद्राजा स्थितः, तत्र विज्ञातो भिषजः प्रविशेत्, आत्मानं प्रथमं ज्ञापयित्वा प्रविशेत् । तत्रैव चेत्यर्थः । प्रविष्टश्च राज्ञः संमतोऽपि पूजितोऽपि अनुचितमधिकं हीनं वाऽऽसनं न भजेत् । उचिते चासने राज्ञः पुरत एव तिष्ठेत् । वाक्यं च राज्ञोक्तं साध्वसाधु वेति नाक्षिपेत् । राजार्थं च वाक्यं येन राज्ञः प्रयोजनं तदहीनकालं कालानतिक्रमेण वदेत् । स्वार्थं तु वाक्यं राजप्रियैरात्महितैश्च राजपुरुषैः सह वदेत् । परार्थं च तदुचिते काले देशे च वदेत् । धर्मार्थसहितमपृच्छन्तं च राजानं नानुशिष्यात् न शिक्षयेत् । एतद्धि महत्साहसम् । एनं च राजानमहितेनाचारेण नोपचरेत् । तद्धि राज्ञोऽहिताचरणं मूलच्छेदकरं समूलनाशनमित्यर्थः । राज्ञश्च वाक्यमनुकुलं प्रियं हितं च । राजानं चात्महितकार्यस्थं मिथ इति रहः सान्त्वयन्नहिताद्वारयेत् । केन सान्त्वयन्नित्याह–उदारैर्महार्हैर्वाक्यैः । एवं च तदा वाच्यं यदा तदुपेक्षया दोष आशङ्क्यते । अथ वारणपरे वाक्ये उक्ते यदि राजा तद्विरोधि वाक्यं ददाति तदा तूष्णीमेव स्यान्नाङ्गीकर्तव्यं तदुक्तं नाप्यनभिमतं प्रसह्य पुनर्वक्तव्यमिति । द्वेष्यां च संकथां राज्ञो वर्जयेत् । तथा विपश्चिदपि पण्डितोऽपि राजादेरचित्तज्ञ अतिप्रियोऽपि तस्यैवाचित्तज्ञत्वेन शीघ्रमेव विपरीतत्वं द्वेष्यतां याति, तथा बालिशोऽपि मूर्खोऽपि राजादेर्भावविच्चित्तज्ञः द्वेष्योऽपि शीघ्रं विपरीतत्वमतिप्रियत्वं यातीति । तथा स्वल्पान्यपि कार्याणि राजानमज्ञापयित्वा न कार्याणि । तथा राज्ञः कोशस्थानेऽवरोधे चान्तःपुरे अकारणं न यायात् । सकारणं गतोऽपि न चिरकालं न बहुकालं तत्र तिष्ठेत् । स्वल्पेऽपि लाभेऽनुद्धतमानसः सन् राज्ञस्तुष्टिं दर्शयेत् । तथान्येन सह परस्परालापं राजवेश्मनि वर्जयेत् । तथान्येन सह कौलीनं जनवादं न कुर्यात् । तथान्येन सह द्वन्द्ववादितां विरोधवादं वर्जयेत् । राजलीला चात्मनो वर्जयेत् । तथा वस्त्राभरणवाहनादिकं राजसदृशं वर्जयेत् । नृपेण च यदात्मनैव दत्तं वस्त्रादि तत्तुष्ट्या धारयेत् । राज्ञानुज्ञातं तद्दारादिपरिच्छद दत्तं न गृह्णीयादित्येव शब्दार्थः । हसितव्ये वस्तुनि राज्ञः पुरतः स्मितं मुखविकासरूपमीषद्धसितं कार्यम् । प्रभोरेवानुवृत्तितः । तेनैतदुक्तं भवति-यदि प्रभुर्हसति तदैव कार्यम् । (स्मितं) अथ न हसति तत्र मौनमेव । यावच्च हसति तावदेवैवं करणीयमिति । राज्ञान्येन वा परमर्मण्युच्यमाने मूकतामवलम्बेत । मूको वाग्विरहितः । स्वमर्मणि तूच्यमाने बाधिर्यादीन् कुर्यात् । एतावता हि लोको नाभिभवितुं शक्नोति । अत्यायासेन चात्मानमुच्छ्रितं बहुधनं पूजादिकयुक्तं न कुर्यात् । यत एवंविध उच्छ्राये स्वल्पेनापि धिक्कारेण शीघ्रमेव पातः । एतदुच्यते अत्यायासेनोच्छ्रायात् पातो यथा दुःखकरो न तथा स उच्छ्रायः सुखकरो भवति ६७९

११० राजसेवायाः कठिनत्वम् ।

६८०–आसन्नसेवा नृपतेः क्रीडाशस्त्राहिपावकैः ॥ १५२
कौशलेनातिमहता विनीतैः सा निरु[134]ध्यते ।
प्राप्य दुष्प्रापमैश्वर्यं बहुमानं च भूपतेः ॥ १५३
यथोपभुञ्जीत चिरं तथा स्यादप्रमादवान् ।

६८०–नृपते राज्ञः सेवासन्नत्वेन नैकट्येन शस्त्रादिना च क्रीडासदृशमपायबाहुल्यात् । सा चासन्नसेवा विनीतैः पुरुषैरतिमहता सेवाकुशलत्वेन निर्वाह्यते । न तु यथासुखम् । तथा भूपते राज्ञः सकाशाद्दुष्प्रापमैश्वर्यं बहुमानं च प्राप्य न तथा प्रमादिना भवितव्यं, यथा तदैश्वर्यं बहुमानं च चिरमुपयोक्तुं शक्यते ६८०

१११ राज्ञः शय्याभिमंत्रणम् ।

६८१–विदध्यात्परितः शय्यां रक्षामन्त्राभिमन्त्रिताम्
६८१–तस्य च राज्ञो भिषग्यथोचिते काले शय्यां विदध्यात् । किंभूताम् ? परितः समन्ताद्रक्षामन्त्रैरभिमन्त्रिताम् ६८१

१३० °द्वेषसं°–ख. १३१ °दि राज्ञः सदृ°–क. ख. १३२ °सितोऽवस्मितं–क. १३३ °ष्ठवम् । अ°–ख. १३४ °रुध्यते । प्रा°–क. ख.

११२ नैशं स्वस्त्ययनकर्म।

**६८२-रात्रौ सिद्धार्थकान् भूतिमक्षतैरन्वितां शुचिम्।**
**रक्षाशक्तिं तथोच्छीर्षे सयवाङ्कुरयावकाम्॥ १५५**
**सदूर्वं पूर्णकलशं सपुष्पफलपल्लवम्।**
**उपहारं च सन्ध्यायां भुक्त्वा चान्ते निशासु च॥**
**एतत्स्वस्त्ययनं कर्म कर्तव्यं शुचिना शुचेः।**
**आयुष्यं पौष्टिकं भूतविषकार्मणपाप्मजित्॥ १५७**

६८२-रात्रौ च सिद्धार्थकान् रक्षामन्त्राभिमन्त्रितान् विदध्यात्। भूतिं च भस्म रक्षामन्त्राभिमन्त्रितां विदध्यात्। किंभूताम्? अक्षतैर्यवैरन्विताम्। शुचिं च। तथोच्छीर्षके शय्यायाः पूर्वभागे रक्षाशक्तिं रक्षार्था देवीं विशेषप्रतियातनां चित्रादिकृतां विदध्यात्। यवाङ्कुरैर्यावकेनालक्तकेन सहितं दूर्वया शाड्वलेन संयुक्तं नानाविधैः पुष्पैः फलैश्च संयुक्तमुदकपूर्णं कलशमुच्छीर्षके विदध्यात् सन्ध्यायां चोपहारमुच्छीर्षे विदध्यात्। एतच्च **स्वस्त्ययनं** कर्म शुचिना भिषजा शुचेर्भूभृतो भूपतेः कर्तव्यम्। न केवलं रात्र्यारम्भे कार्यं यावत् भुक्त्वा च कार्यम्। निशान्ते च कार्यम्। आयुषो हितं पौष्टिकमृद्धिकरं भूतादिनाशनं च, **कार्मणं**-वशीकरणाद्यर्थं मन्त्रादि ६८२

११३ विषयोपसंहारः।

**६८३-संक्षेप एष विषपालनसाधनाय**
**प्रोक्तस्तु विस्तरविधिः पुनरुत्तरे[135] तु॥**
**आलोच्य सम्यगखिलं मतिपूर्वकारी**
**युञ्जीत तं [136]परिविकल्प्य विकारचिह्नम्॥ १५८**

६८३-एषोऽस्मिन्नध्याये विषपालनाय विषरक्षणाय तथा तदुद्भवानां व्याधीनां च साधनाय चिकित्सार्थं संक्षेपः प्रोक्तः। विस्तरविधिस्तु पुनरुत्तरस्थाने वक्ष्यते। इत्येतदखिलमशेषं बुद्ध्या आलोच्य विकल्प्य सम्यङ्मातिपूर्वकारी, न तु यत्किञ्चनकारी विकारलक्षणं परिकल्प्य तं विषपालनसाधनविधिं युञ्जीत ६८३

**टिप्पणी**-उत्तरे इति-अ. सं. उ. ४०-४८

११४ अध्यायमाहात्म्यम्।

**६८४-इति विषगररक्षोरक्षणायोपदेशं**
**भजति नरपतिर्यो नित्यमेवाप्रमत्तः[137]॥**
**निजपररिपुवृन्दैरप्रधृष्यो महात्मा**
**जनै[138]याति जनतायाः क्षेमयोगौ चिराय॥१५९**

**६८५-इत्यन्नरक्षाविधिर्नामाष्टमोऽध्यायः १६०**

**इति वैद्यपतिसिंहगुप्तस्य सुनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थानेऽन्नरक्षाविधिर्नाम अष्टमोऽध्यायः ८**

६८५-इत्यनेन प्रकारेण विषरक्षणाय गररक्षणाय रक्षोरक्षणाय भूतरक्षणाय यो नरपतिरप्रमत्तः सन्नुपदेशं भजति सेवते स नरपतिर्निजैः रिपुवृन्दैः सहजैः कामादिभिः शत्रुभिः पराणां संवरणदेशादीनां रिपूणां वृन्दैरप्रधृष्यो दुरभिभवः सन् महात्मा जनतायाः प्रजायाः संबन्धिनौ योगक्षेमौ चिराय बहुकालं जनयति। जनताया योगक्षेमौ संपादयतीत्यर्थः ६८५

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने अष्टमोऽध्यायः॥ ८॥**



# विरुद्धान्नविज्ञानीयो नवमोऽध्यायः।

१ प्रतिज्ञा।

**६८६-अथातो विरुद्धान्नविज्ञानीयमध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः १**

६८६-आहारस्य प्रसक्तत्वाद्विरुद्धस्य च तस्य गरसदृशत्वात्तत्प्रसङ्गे एवेदमुच्यते—अथात इति ६८६

२ मांसानां मधुगुडादिभिः सह भक्षणे निषेधः।

**६८७-ग्राम्यानूपौदकपिशितानि, मधुगुडतिलपयोमाषमूलकबिसैर्विरूढधान्यैश्च नैकध्यमद्यात् २**

६८७-आनूपानां प्राणिनामौदकानां च जलजानां पिशितानि-मांसानि माक्षिकादिभिरैकध्यम्-सह नाद्यात्। औदकानामानूपत्वेऽपि विरोधप्राधान्यात्पृथग्ग्रहणम्। विरूढधान्यमङ्कुरितानि सस्यानि ६८७

**टिप्पणी**-ग्राम्येति-जलेशयाः, आनूपाः, ग्राम्याः, क्रव्यभुजः, एकशफाः, जाङ्गलाश्चेति षण्मांसवर्गाः। (सु. सू. ४६) तत्र अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेदःपुच्छकप्रभृतयो **ग्राम्याः**। आनूपवर्गस्तु पञ्चविधः-**कूलचराः, प्लवाः, कोशस्थाः, पादिनः, मत्स्याश्चेति**। तत्र गज-गवय-महिष-रुरु-चमर-सृमर-रोहित-वराह-खड्गी-गोकर्ण-कालपुच्छकोद्र-न्यङ्कुरण्यगवयप्रभृतयः **कूलचराः** पशवः। एतेऽत्रानूपशब्देन ग्राह्याः। प्लवादयस्त्वौदका वेदितव्याः। तत्र हंस-सारस-क्रौञ्च-चक्रवाक-कुरर-कादम्ब-कारण्डव-जीवञ्जीवक-बक-बलाका-पुण्डरीक-प्लव-शरारिमुख-नन्दीमुख-मद्गूत्क्रोश-काचाक्ष-मल्लिकाक्ष-शुक्लाक्ष-पुष्करशायिका-कोनालकाम्बुकुक्कुटिका-मेघराव-श्वेतवारलप्रभृतयः **प्लवाः** संघातचारिणः।

१३५ °त्तरे तु। आलोक्य स°-क. ख. १३६ °रिकल्प्य वि°-क. ख. १३७ °तः॥ निजपुरारि°-क. ख. च. १३८ °ति स जननां क्षे०-क. ख. १३९ °क्षानामाध्यायोऽष्टः-क. च.

१ °स्यामः। ग्राम्य°-क. ख. च. २ °ऽपयोमा°-च.

शङ्ख-शङ्खनख--शुक्ति--शम्बूक--भल्लूकप्रभृतयः **कोशस्थाः**। कूर्म-कुम्भीर--कर्कटक-कृष्णकर्कटक--शिशुमारप्रभृतयः **पादिनः**। **मत्स्यास्तु** द्विविधाः नादेयाः सामुद्राश्च। तत्र **नादेयाः**- रोहित-पाठीन-पाटला-राजीव-वर्मी-गोमत्स्य-कृष्णमत्स्य-वागुञ्जार-मुरल-सहस्रदंष्ट्रप्रभृतयः। **सामुद्राः**-तिमि-तिमिङ्गिल-कुलिश-पाकमत्स्य-निरुल-नन्दिवारलक-मकर-गर्गरक-चन्द्रक-महामीन-राजीवप्रभृतयः। अत्र चरकः-'ग्राम्यानूपौदकपिशितानि च मधुतिलगुडपयोमाषमूलकबिसैर्विरूढधान्यैर्वा नैकध्यमद्यात्। तन्मूलं हि-बाधिर्यान्ध्यवेपथुजाड्यकलमूकतामैण्मिण्यमथवा मरणमाप्नोति' इति (च. सू. २६. ८४) ६८७

३ विशेषतः पयसा सह मत्स्यभक्षणे निषेधः, तत्कारणं च।

**६८८-विशेषतः पयसा मत्स्यान्। उभयं ह्येतन्मधुररसविपाकित्वादभिष्यन्दि, शीतोष्णवीर्यत्वात् परस्परं विरुद्धम्॥ ३**

६८८-पयसा क्षीरेण सह विशेषान्मत्स्यान्नाद्यात्। एतदुभयमभिष्यन्दि वीर्यविरुद्धं च ६८८

४ पयसा सह चिलिचिमस्य भक्षणे निषेधः, तल्लक्षणं च।

**६८९-तेष्वपि विशेषेण चिलिचिमः। स पुनः शकली लोहितनयनः सर्वतो लोहितराजिर्लोहितप्रभाकरः प्रायो भूमौ चरति,सोऽत्यभिष्यन्दितमत्वात्सुतरां व्याधीनुपजनयत्यामविषं च॥ ४**

६८९-तेष्वपि मत्स्येषु मध्ये विशेषेण चिलिचिमः पयसा सह विशेषेण नाद्यात्। स पुनश्चिलिचिमः शकल्याख्यो लोहितनेत्रः सर्वतः शरीरे लोहितराजिः शरीरे च लोहितशकलसदृशः प्रायश्च जलनिकटभूमौ चरति। सोऽत्यभिष्यन्दितमत्वात् सुतरां व्याधीनुपजनयति। अभिष्यन्दि-मालिन्येन स्रोतसां स्रावकम्। आमविषं मात्राशितीये वक्ष्यते ६८९

**टिप्पणी**—चिलिचिम इति-अयं स्थलमीनसंज्ञकः इति डल्हणः (सु. सू. २०. ८), टीकायां वक्ष्यत इति-सूत्रस्थाने एकादशाध्याये इति शेषः ६८९

५ अम्लफलानि कङ्ग्वादयश्च पयसा विरुद्धाः।

**६९०-सर्वं चाम्लं द्रवमद्रवं पयसैकध्यं विरुद्धम्। तत उत्तरं वा विरुद्धं फलं च कङ्गुवरकमकुष्ठकुलत्थमाषनिष्पावाश्च॥ ५**

६९०-सर्वं चाम्लं मद्यधान्याम्लादि, पयसा सह ततः पयसो वा उत्तरं विरुद्धम्। फलं चान्यरसमपि पयसा सह ततो वा उत्तरं विरुद्धम्। कङ्ग्वादयश्च पयसा सह ततो वा उत्तरं विरुद्धाः ६९०

**टिप्पणी**—सर्वमिति-अत्र चरकः-'आम्राम्रातक-मातुलुङ्ग-लकुच-करमर्द-मोच-दन्तशठ--बदर-कोशाम्र-भव्य-जाम्बव-कपित्थ-तिन्तिडीक-पारावताक्षोड-पनस-नारिकेल-दाडिमामलकान्येवंप्रकाराणि चान्यानि द्रव्याणि सर्वं चाम्लं द्रवमद्रवं च पयसा सह विरुद्धम्। तथा कङ्गु-वरक-मकुष्ठक-कुलत्थ-माष-निष्पावाः पयसा सह विरुद्धाः' (च. सू. २६.८४)इति। अत्र 'सर्वग्रहणमम्लविपाकानां व्रीह्यादीनां ग्रहणार्थम्। पयसेति तृतीयैव सहार्थे लब्धे पुनः सह-ऐकध्यमित्यभिधानं केवलाम्लादियुक्तस्यैव विरोधितोपदर्शनार्थम्। तेन अम्लपयःसंयोगे गुडादिसंयोगे सति विरुद्धत्वम्। न दुग्धाम्रादीनाम्' इति चक्रः। तत उत्तरं वेति-सुश्रुतः-' वल्लीफल-कवक-करीराम्लफल-लवण-कुलत्थ-पिण्याक-दधि-तैल-विरोहि-पिष्ट-शुष्क-शाकाजाविक-मांस-मद्य-जाम्बव-चिलिचिम-मत्स्य-गोधा-वराहांश्च नैकध्यमश्नीयात्पयसा' (सु. २०.८) हेमाद्रिस्तु 'गोधन्वराहमाषांश्चनैकध्यमश्नीयात्पयसोऽन्ते वा' इति सुश्रुतपाठं. (सु.२०.१३) पपाठ ६९०

६ मूलकादिहरितभक्षणान्ते पयः न सेव्यम्।

**६९१-न मूलकादिहरितकं भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात्॥ ६**

६९१-मूलकुठेरादि हरितकं भक्षयित्वा न पयः सेव्यं, कुष्ठाबाधभयात् ६९१

**टिप्पणी**—न मूलकेति-अत्र चरकः-'न मूलक-लशुन-कृष्णगन्धार्जक-सुमुख-सुरसादीनि भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात्' (सू. २६. ८४) इति। एतेन लशुनदुग्धयोः सह प्रयोगो विरुद्ध इति यद्यपि सिध्यति तथापि-' साधयेच्छुद्धशुष्कस्य लशुनस्य चतुष्पलम्। क्षीरोदकेऽष्टगुणिते क्षीरशेषं च ना पिवेत्॥ वातगुल्ममुदावर्तं गृध्रसीं विषमज्वरम्। हृद्रोगं विद्रधिं शोथं साधयत्याशु तत्पयः' (च. चि. ५.९४-९५) इत्याद्युक्तो लशुनक्षीरप्रयोगो न विरुद्धः, अन्नपानादिसंपर्कादद्रव्यान्तरत्वापत्तेः, अथवा व्याधिविशेषमहिम्ना महर्षिवचनमिदं नेयम्। कुष्ठाबाधेति-आबाधो रोगः ६९१

७ क्षीरमाक्षिकाभ्यां विरुद्धानि द्रव्याणि।

**६९२-पौष्करं रौहिणिकं जातुकं वा शाकं सह मधुपयोभ्यां नाभ्यवहरेत्। ताभ्यां च सह कपोतान् सर्षपतैलभृष्टान्॥ ७**

६९२-पौष्करादिशाकं क्षीरमाक्षिकाभ्यां मिश्राभ्यां सह नाभ्यवहरेत्। तथा सार्षपतैलेन भृष्टान् कपोतांस्ताभ्यां मधुक्षीराभ्यां सह नाभ्यवहरेत् ६९२

**टिप्पणी**-पौष्करमिति-पौष्करम्-पुष्करपत्ररूपं शाकम्(पोखरमूल,) रौहिणिकम्-कटुरोहिणीशाकम् (कुटकी), जातुकम्-वंशपत्रिका।सुश्रुते तु-'न पयोमधुभ्यां रोहिणीशाकं जातुकशाकं वाऽश्नीयात्' इति पाठः। जातुकशाकशब्दस्य पौष्करशाकमित्यर्थं मेने डल्हणः। चरके तु जातुकशाकशब्दः सूत्रान्तरे वर्तते। पौष्करादिशाकस्य मधुपयोभ्यामभ्यवहारे दोषमाह चरकः-' तन्मूलं हि शोणिताभिष्यन्दधमनीप्रति-* चयापस्मारशंखकगलगंडरोहिणीनामन्यतमं प्राप्नोत्यथवा मरणम्' (सू. २६. ८४)। कपोतानिति संस्कारविरुद्धम्।

३ °पाकत्वा°-ख. ४ °स्वादत्यभि°-क. ख. ५ °चिमम्। स पु°-च. ६ °हितलोचनः स°-च. ७ °जिः सकललोहितप्रकारः प्रा°-क. च., °जिः प्रा°-ख. ८ °रः भूयो भूमौ विच°-च. ९ °ष्ठवेल्लकु°-ग.,-°ष्ठकुल°-च. १० °श्च॥ ५ आममूल°-च. ११ कुष्ठबाध°-क. १२ °ष्करं रोहिणी°-ख., ष्करं रोहिणीकन्दजा°-च. * धमनीप्रतिचयः-सिराजग्रन्थिः।

पौष्करशाकमिति तु संयोगविरुद्धम् । एवमन्यत्राप्यूह्यम् ६९२

८ सर्षपतैलभृष्टानि मत्स्यवराहमांसानि विरुद्धानि ।

**६९३–तथा सर्षपतैलभृष्टानां मत्स्यवराहाणां मांसानि।**

६९३–तथा सार्षपतैलभृष्टानां मत्स्यवराहाणां संबन्धीनि मांसानि विरुद्धानि ६९३

९ सेधावराहमांसयोर्विरोधः ।

**६९४–बदराणि श्वाविड्वराहमांसानि चैकध्यम् ॥ ९**

६९४–बदराणि श्वाविण्मांसं वराहमांसेन सह विरुद्धम् ६९४

१० पित्तामममांसयोर्विरोधः

**६९५–पित्तेनाममांसानि ॥ १०**

६९५–अपकान्यपरिपूर्णपाकानि मांसानि पित्तेन सह भुक्तानि विरुद्धानि ६९५

११ दधिकुक्कुट्योर्दधिपृषतयोश्च विरोधः ।

**६९६–दध्ना कुर्कुटं, पृषतं च ॥ ११**

६९६–दध्ना सह कुक्कुटो विरुद्धः पृषतश्च ६९६

१२ औरभ्रकुसुंभयोर्विरोधः ।

**६९७–कुसुंभशाकेनौरभ्रम् ॥ १२**

६९७–कुसुम्भशाकेन औरभ्रं मांसं विरुद्धम् उरभ्रो मेषः६९७

१३ सौवीरकतिलशष्कुल्योर्विरोधः ।

**६९८–सौवीरकेण तिलशष्कुलीः ॥ १३**

६९८–तथा सौवीरेण काञ्जिकेन सह तिलशष्कुली विरुद्धा६९८

१४ क्षीरलवणयोर्विरोधः ।

**६९९–क्षीरेण लवणम् ॥ १४**

६९९–क्षीरेण सह लवणं विरुद्धम् ६९९

**टिप्पणी**—क्षीरेणेति–मधुरलवणयो रसवीर्यविरुद्धत्वादिति शेषः ६९९

१५ मुलकमापसूपयोर्विरोधः ।

**७००–मूलकेन माषसूपम् ॥ १५**

१६ नवनीतमूलशाकयोर्विरोधः ।

**७०१–नवनीतेन मूलशाकम् ॥ १६**

१७ उपोदकाया मैरेयमार्द्वीकाभ्यां विरोधः ।

**७०२–उपोदका मैरेयमार्द्वीकाभ्याम् ॥ १७**

१८ पीलुकरीरयोर्विरोधः ।

**७०३–पीलूनि करीरैः ॥ १८**

१९ विसविरूढकयोर्विरोधः ।

**७०४–बिसैर्विरूढकानि ॥ १९**

२० लकुचफलविरोधीनि द्रव्याणि ।

**७०५–दध्ना माषसूपेन गुडेन मधुना घृतेन वा लकुचफलम्**

७०५–दध्यादीनामन्यतमेन लिकुचफलम् ७०५

**टिप्पणी**—दध्नेति–लकुचफलं पयसा, दध्ना, माषसूपेन वा प्राक्पयसा पयसोऽन्ते वा विरुद्धमिति सुश्रुतः ( सू. २०.१३ )

२१ कदलीफलविरोधीनि द्रव्याणि ।

**७०६–दध्ना तक्रेण तालफलेन वा कदलीफलम् ॥ २१**

७०६–पुनश्च दध्यादीनामन्यतमेन कदलीफलम् ७०६

२२ काकमाचीविरोधीनि द्रव्याणि ।

**७०७–पिप्पलीमरिचाभ्यां, मधुना, गुडेन वा काकमाचीम् ॥२२**

७०७–पिप्पलीमरिचाभ्यां केवलेनैव वा मधुनाऽथवा गुडेन सह काकमाचीं विरोधात्त्यजेत् ७०७

२३ केवलकाकमाच्या संस्कारादिभिर्विरोधः ।

**७०८–तामेव मत्स्यपचने शृङ्गिवेरपचने वा भाजने सिद्धामन्यत्रे वा सिद्धां रात्रिमुषिताम्॥ २३**

७०८–तथा तामेव काकमाचीं शृङ्गिवेरपचने भाजने मत्स्यपचने वा सिद्धां पक्कां केवलामपि नाभ्यवहरेत्। अन्यस्मिन् वा यथारुचि भाजने सिद्धां निशामुषितां नाभ्यवहरेत् ७०८

**टिप्पणी**—शृङ्गिवेरम् शुण्ठी। तामेवेति–रात्रिमुषितामिति कालविरुद्धत्वात् ७०८

२४ कांस्यभाजने दशरात्रस्थितं सर्पिर्विरुद्धम् ।

**७०९–कंसभाजने दशरात्रोषितं सर्पिः २४**

७०९–कांस्यभाजने दशरात्रस्थितं घृतं नाभ्यवहरेत्, यावद्दशरात्रं तावन्न विरोधः, ततो विरोध इत्यर्थः ७०९

२५ मद्यादिपूर्णं विरुद्धम् ।

**७१०–मद्यदधिमधुभल्लातकेषु चोष्णम् २५**

७१०–मद्यादिषूपयुक्तेषु उष्णं सर्वं विरुद्धम् ७१०

**टिप्पणी**—मद्येत्यादि। तथा च वक्ष्याति–'उष्णो ह्युष्णैर्विरुध्यते' ( अ. सं. सू. २५ ) इति ७१०

२६ तक्रसिद्धः कम्पिल्लको विरुद्धः ।

**७११–तक्रसिद्धकाम्पिल्लको विरुद्धः ॥ २६**

७११–तक्रेण पक्वः कम्पिल्लको * विरुद्धः ७११

२७ अङ्गारशूल्यो भासो विरुद्धः ।

**७१२–अङ्गारशूल्यो भासः ॥ २७**

७१२–अङ्गारेषु शूलेन संस्कृतो भासः पक्षी विरुद्धः ।

**टिप्पणी**—अङ्गारेति–भासः प्रसहपक्षिविशेषः । गोष्ठकुक्कुट इति चक्रः ७१२

२८ सुरादयः पायसाश्चैकध्यं विरुद्धाः ।

**७१३–सुराकृसरापायसाश्चैकध्यं विरुद्धाः ॥ २८**

७१३–सुरादीश्च परस्परं सह नाभ्यवहरेत् ॥ २८

**टिप्पणी**—सुरेत्यादि–कृसरा–तिलतन्दुलमाषकृता, पायसः क्षैरेयी ७१३

२९ तुल्यप्रमाणमध्वादेरैकध्यं विरोधः ।

**७१४–मधुसर्पिर्वसातैलोदकानि समधृतानि द्विशस्त्रिशः समस्तानि वा २९**

७१४–मध्वादीनां द्वौ द्वौ वा त्रींस्त्रीन्वा समधृतत्वेन समेन परस्परं प्रमाणेन नाभ्यवहरेत् । समस्तानि वा मध्वादीनि समप्रमाणानि नाभ्यवहरेत् ७१४

**टिप्पणी**—मानविरुद्धान्याह–मध्विति। 'द्विशस्त्रिश इत्युपलक्षणम्। तेन च तुष्पञ्चशोऽपि ज्ञेयम्। उक्तं ह्यन्यत्र–मधुसर्पि-

१३ °नि बदराणां वद°–च. १४ °कुटपृष°–क. १५ सौरभ्रकं°–क. १६ °न शाकम् । उ°–क. १७ °नवा लिङ्गुजफं°–च. १८ शृङ्गवे°–क. ख. च. १९ °त्र नाभ्यवहरेत् । ताभ्यां वा सिद्धां रात्रि°–क. ख. २० कांस्यभा°–क. ख. च. *कम्पिल्लः–वृक्षविशेषः । एतत्फले विद्यमानं चूर्णं मिष्टकाचूर्णसंकाशं चन्द्रिकावत् भेदनं च ( कपिला ), तस्य पत्रशाकमत्र ग्राह्यम् ।

र्वसातैलपानीयानां मानविरुद्धानां द्वित्रिचतुष्पञ्चधा मिलितानां षड्विंशतिविरुद्धप्रकारा भवन्ति ' इति हेमाद्रिः ( अ. हृ. ७.३९ ) अयं च केवलानां मध्वादीनां समांशानामुपयोगो विरुद्धः, न तु द्रव्यान्तरसंयुक्तानाम् । अपि तु गुणान्तरमेव । यथागस्तिलेहादि ( च. चि. १८.५७-६२; अ. सं. चि. ५ ) इति ७१४

३० मध्वाज्ययोर्दिव्योदकानुपाने विरोधः ।

**७१५-मधुघृते भिन्नांशे दिव्योदकानुपाने ॥ ३०**

७१५-तथा विषमधृते अपि मधुघृते दिव्योदकानुपाने विरुद्धे ७१५

३१ मधुपुष्करबीजादीनि मिथो विरुद्धानि ।

**७१६-मधुपुष्करबीजं पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं सर्वं विरुद्धम् । वातं चातिकोपयति ॥ ३१**

७१६-माक्षिकं पद्मबीजं सह विरुद्धम् । पद्मोत्तरिकाशाकादिनी च परस्परं विरुद्धानि, वातकोपनानि च । पद्मोत्तरिका कुसुम्भः, शार्करमैरेयौ मद्यविशेषौ । एकः शर्करया क्रियते । द्वितीयः खर्ज्जूरासवः ७१६

**टिप्पणी**—मध्विति-वातं चातिकोपयतीति वचनेन पित्तकफावल्पं कोपयतीति बोधयति । एवं ' पित्तं चातिकोपयति '(७१७) 'श्लेष्माणं चातिकोपयति'(७१८) इत्यत्रापि तदितरयोरप्यल्पः कोपो वाच्यः ७१६

३२ सर्षपतैलभृष्टो हारिद्रको विरुद्धः ।

**७१७-हारिद्रकः सर्षपतैलभृष्टो विरुद्धः । पित्तं चातिकोपयति ॥ ३२**

७१७-हारिद्रः सर्षपतैलभृष्टो विरुद्धः । हारिद्रो नाम भूप्रसवः कन्दरूपः । स चैवं पित्तकोपनः ७१७

**टिप्पणी**—हारिद्रक इति-टीकायां भूप्रसव इति-'कुप्रसवः शाकविशेषः सर्पच्छत्रानुकारी पीताभासः ' इत्यरुणदत्तः । हारिद्रको हरिताल इति ख्यातः पक्षीति चक्रः(च.सू.२६.८४)

३३ मन्थानुपानः पायसो विरुद्धः ।

**७१८-पायसो मन्थानुपानो विरुद्धः । श्लेष्माणं चातिकोपयति ॥ ३३**

७१८-पयसा संस्कृत ओदनो मन्थानुपानो विरुद्धोऽनिलश्लेष्मकोपनश्च ७१८

**टिप्पणी**—पायस इति-प्रभूतद्रवेणालोडिताः सक्तवो मन्थः, सः अनुपानं यस्य स मन्थानुपानः, पायसं भुक्त्वा यः मन्थमनुपिबति तस्य विरुद्धः पायस इत्यर्थः । पायसः क्षीरसिद्धास्तण्डुलाः ७१८

३४ तिलकल्कसाधिता उपोदका विरुद्धा ।

**७१९-उपोदका तिलकल्कसिद्धा हेतुरतीसारस्य ॥ ३४**

७१९-उपोदकां तिलकल्केन सिद्धामतीसारहेतुत्वान्नाभ्यवहरेत् ७१९

३५ बलाका वारुण्यादिना मिथो विरुद्धा ।

**७२०-बलाका वारुण्या कुल्माषैश्च विरुद्धा । सैव वराहवसया परिभृष्टा सद्यो व्यापादयति ॥ ३५**

७२०-बलाका-वारुण्या सुरया सह विरुद्धा, कुल्माषैश्च । कुल्माषो नातिखिन्नानि सस्यानि । सैव च बलाका-सूकरवसया समन्तात् बहुभृष्टा सद्य एव मारयति ७२०

**टिप्पणी**—वराहेति-बलाका-बकभेदः, कुल्माषः-उष्णोदकसिक्तमीषत्स्विन्नमपूपीकृतं यवपिष्टमिति शिवदासः। 'अर्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः । कुल्माषा इति कथ्यन्ते शब्दशास्त्रेषु पण्डितैः' इति भावप्रकाशे।'धान्यानि चैव गोधूमास्तथा च चणकादयः । हिंगुसैंधवयुक्ताश्च जले ह्यर्धविपाचिताः । कुल्माषाः' इत्यपि केचित् ७२०

३६ एरण्डदार्वग्निसिद्धा गोधादयः प्राणहराः ।

**७२१-गोधालावतित्तिरिमयूरकपिञ्जलाश्चैरण्डदार्वग्निसिद्धा एरण्डतैलसंमूर्च्छिताः ॥ ३६**

७२१-गोधादयश्चैरण्डदार्वग्निसिद्धास्तथा तेनैवैरण्डतैलेन सह मूर्छिता बहुना भृष्टा इत्यर्थः ३६

**टिप्पणी**—गोधेत्यादि--लावः-विष्किरपक्षिविशेषः । तित्तिरिः-तित्तिशब्दं राति इति तित्तिरिः-कृष्णतित्तिरिः। तित्तिरिर्द्विविधः कृष्णो गौरश्च । तत्र गौरः कपिञ्जल इति कथ्यते ७२१

३७ हारिद्रशूलकावसक्तादि हारीतमांसं विरुद्धम् ।

**७२२-हारीतमांसं हारिद्रशूलकावसक्तं हारिद्राग्निप्लुष्टं च । तदेव भस्मपांसुपरिध्वस्तं सक्षौद्रं च॥**

७२२-हारीतस्य पक्षिविशेषस्य मांसं हरिद्रादारुसीसकायां शूले आसक्तं हरिद्राग्निपक्वं च विरुद्धम् । तथा तदेव हारीतमांसं भस्मना पांसुभिश्च ध्वस्तं सत् समाक्षिकं विरुद्धम् ७२२

**टिप्पणी**—हारीतेति-हारिद्रशूलः-दारुहरिद्राकाष्ठकृतः-शूलः। हारिद्रसीसकमिति चरकपाठः। हारीतः प्रतुदपक्षिविशेषः। स च हरितपीतवर्णः कपोतः ( कबूतर ) हारिद्राग्निः-दारुहरिद्राकाष्ठाग्निः । भस्म च पांसवश्च भस्मपांसवः, तैः परिध्वस्तम्-धूसरितम् । देशो द्विविधः भूमिः शरीरं च, तत्र भूमिविरुद्धं भस्मपांस्वित्यादि देशविरुद्धमेव ७२२

३८ मत्स्यनिस्तालनस्नेहसाधिताः पिप्पल्यो विरुद्धाः ।

**७२३-तथा मत्स्यनिस्तालनस्नेहसाधिताः पिप्पल्यः ।**

७२३-मत्स्यनिस्तालनेन स्नेहेन । येन मत्स्या निस्तालितास्तेन सिद्धाः पिप्पल्यो विरुद्धाः ७२३

**टिप्पणी**--तथेति-मत्स्याः निस्ताल्यन्ते-पच्यन्ते यस्मिंस्तन्मत्स्यनिस्तालनम् । अथवा निस्तालनं वसा । तथा चोक्तं जतूकर्णे-'मत्स्यवसासिद्धाः पिपल्यः ' इति चक्रः ( च. सू. २६. ८४ ) ७२३

३९ शीतोष्ण-नवपुराणादीनि मिथो विरुद्धानि ।

**७२४-शीतोष्णं नवपुराणमामपक्वं च नैकमैकध्यमद्यात्**

७२४-सामान्येन स्पर्शेन वा वीर्येण वा शीतमुष्णं च

२१ °धुघृते वा दि°-क. च. २२ °क्तं विरु°-च. २३ °द्धं वातादिं को°-च. २४ हारि°-क. २५ °वसापरि°-क ख. च. २६ °ञ्जला एर°-च. २७ °द्रसीसकाव°-च. २८ हारि°-क., हरिद्राग्निसंप्लु°-च. २९ °निस्तालकसिद्धाः पि°-क., °निस्तलनसिद्धाः पि°-ख. च. °निस्तालितस्ने°-ग. ३० °कं च नैकध्यम°-क. ख. च.

सह नाद्यात्। तथा नवं पुराणं च शालिद्रव्यादि सह नाद्यात्। आमं पक्वं चाहारद्रव्यं सह नाद्यात्। शीतमुष्णेनैव। नवं पुराणेनैवामं पक्वेनैव। इत्येकशब्दार्थः। हरितकफलादीनां तथाविधोपयोगादेव न विरोधः ७२४

४० उष्णाभितप्तः सहसा पयःपानं सलिलावगाहं च त्यजेत्।

**७२५–सलिलावगाहः सहसोष्णाभितप्तस्य त्वग्दृष्ट्योरुपघाताय तृष्णाभिप्रवृद्धये च। तथैव च पयःपानं रक्तपित्ताय ॥ ४०**

७२५–उष्णेनातपाग्न्यादिना तप्तस्य सहसा तत्कालमेव सलिलावगाहो जलमज्जनं त्वचो दृष्टेश्च नाशनं तृष्णायाश्चातिवृद्धिं करोति। तथैवोष्णाभितप्तस्य सहसा पयःपानं रक्तपित्ताय ७२५

४१ श्रान्तस्य सहसा भोजनं विरुद्धम्।

**७२६–शरीरेणायस्तस्य सहसाभ्यवहारश्छर्दिषे गुल्माय वा। वाचा त्वायस्तस्य स्वरसादाय ४१**

७२६–शरीरेणायस्तस्य उत्पन्नश्रमस्य भोजनं छर्दिषे गुल्माय वा। वाचा तूत्पन्नश्रमस्य भोजनं स्वरसादाय। भवति ७२६

४२ अन्नपानद्रव्यविरोधिग्रन्थोपसंहारः।

**७२७–इत्यन्नपानद्रव्यविरोधैकदेशो बाहुल्येनोपयोगी कथितः। भेषजद्रव्याणां तु यथोपदेशमेव प्रयोगो न्याय्यतरः। तद्विरोधः पुनरातिप्रसङ्गभयान्नोक्तः। न च तद्विज्ञानमेकान्तभद्रकम् ॥ ४२**

७२७–इत्यनेन प्रकारेणान्नपानद्रव्याणां विरोधैकदेशः कथितः। यो बाहुल्येनोपपुज्यते। अन्यस्त्वयमूह्यम्। **भेषजद्रव्याणां गुडूच्यादीनां विद्यमानोऽपि विरोधोऽतिप्रसङ्गभयान्नोक्तः।** ननु चाज्ञातविरोधाविरोधानां कथं तेषां प्रयोग इत्याह–**यथोपदेशमेव तेषां प्रयोगो न्याय्यतरः।** तेनैतदुक्तं भवति–भेषजद्रव्याणां यत्र स्वबुद्ध्या संयोगकल्पना क्रियते तत्र शास्त्रानुगमनेन प्रयोगो न्याय्यः। कण्ठोक्तेन तु शास्त्रपाठेन प्रयोगो न्याय्यतर इति। न च तद्विज्ञानं भेषजद्रव्यविरोधविज्ञानमेकान्तभद्रकं न भद्रकमेवेत्यर्थः। यतस्तेषां विरोधे ज्ञाते संयोगकल्पनायां स्वल्पमतिर्भिषक् कदाचिन्मुह्यति यतोऽवश्यं केनचिदंशेन कश्चित् केनचिद्विरुध्यते अतः। एतच्च बुध्यमानो भिषक् शास्त्रान्वयिनमप्यूहं कर्तुं न शक्नोति। यत्र तु शास्त्रं बहु प्रविशति तथाविध ऊहः कार्य एव। **तस्माद्यथोपदेशमेव प्रयोगो न्याय्यतरः।** ऊहो यथाशक्ति शास्त्रानुगमनेन कार्यः ७२७

**७२८–अपि च—**

७२८–अपि चेति समुच्चये ७२८

४३ विरुद्धद्रव्याणां सामान्यं लक्षणम्।

**७२९–उत्क्लेश्य दोषान्न हरेद् द्रव्यं यत्तत्समासतः।**
**विरुद्धं तद्धि धातूनां प्रत्यनीकतया स्थितम्॥४३**

७२९–समासतः संक्षेपतः विरुद्धं किमित्याह–दोषानुत्क्लेश्य स्वस्थानात्सञ्चाल्य यद्द्रव्यं न हरेत् तत्रैव नाशने बहिर्वा निर्हर्तुमशक्तं तत् **विरुद्धम्।** तद्धि द्रव्यं रसादीनां धातूनां प्रत्यनीकतया प्रतिपक्षत्वेन स्थितम् ७२९

**टिप्पणी**—उत्क्लेश्येति–न हरेत्–मदनफलत्रिवृतादिवदूर्ध्वमधो वा न दोषान्हरेत्। अत्र चरकसुश्रुतौ–'यत्किञ्चिद्दोषमुत्क्लेश्य न निर्हरति कायतः। आहारजातं तत्सर्वमहितायोपपद्यते' (च. सू. २६. ८५) अस्यार्थः–'अनुक्तवैरोधिकसंग्रहार्थमाह–यत्किंचिदित्यादि। आह्रियत इत्याहारो भेषजमपि। दोषमास्राव्येति–दोषानुत्क्लिष्टरूपान् जनयित्वा न निर्हरतीति। अनेन वमन-विरेचनद्रव्याणि (मदनत्रिवृदादीनि) निराकरोति। तानि हि दोषानास्राव्य निर्हरन्ति' इति चक्रः। 'यत्किंचिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत्। रसादिष्वयथार्थं वा तद्विकाराय कल्पते' (सु. सू. २०.२०) इति। अस्यार्थः–'न केवलं विरुद्धभोजनमेव व्याधिहेतुरपि हिताहितादीन्यपीति दर्शयितुमाह–यदित्यादि। यत्किञ्चिदित्यनेनाशेषमेवाहितं संगृहीतम्। दोषं वातादिकम् उत्क्लेश्य–प्रकोप्य न निर्हरेदिति मदनफलत्रिवृदादिवदूर्ध्वमधो वा नाकर्षेत्। तद्विकाराय कल्पत इति संबंधनीयम्। कल्पते–संपद्यते। न केवलं दोषकरमेव व्याधये भवत्यपि तु रसादिधातुदुष्टिकरमपि व्याधये भवतीत्याह–रसादिष्वित्यादि। रसादिष्वयथार्थं वेति रसादिधातुष्वयथाप्रयोजनविरुद्धं रसादीनां जीवनादिप्रयोजनविरोधि। रसादिधातुदूषणकरमित्यर्थः। दोषदुष्टिकारित्वेन धातुदूषणकरत्वं न लभ्यते, विशिष्टशक्तित्वाद्द्रव्याणाम्। तथा हि-कानिचिद्दोषदुष्टिकराणि, कानिचिद्धातुदुष्टिकराणीति। ('किंचिद्दोषप्रशमनं किंचित् धातुप्रदूषणम्। स्वस्थवृत्तौ मतं किञ्चित् त्रिविधं द्रव्यमुच्यते' च. सू. १. ६७—अत्र धातुप्रदूषणमित्यनेन वातादीनां समत्वेन शरीरधारणात्मकानां, तथा रसादीनां च दूषणमित्यर्थो ग्राह्यः) तानि चात्र न कथयिष्यामो विस्तारभयात्। अन्ये तु व्याख्यानयन्ति–रसादिष्वित्यादिशब्दाद्वीर्यविपाकयोर्ग्रहणम्। तेन रस–वीर्य–विपाकेषु यद्भुक्तं सदयथार्थमनर्थकरं वा भवति तद्विकाराय कल्पते' इति डल्हणः ७२९

४४ द्रव्याणां मिथो विरोधप्रकाराः।

**७३०–बलिनां मिथोगुणानां**
**विषमतया, समतयाप्युभयथापि।**
**संस्कारादिवशेन च**
**भवति निसर्गादपि विरोधः ॥ ४४**

७३०–तथा सर्वश्च विरोध एवमेवं भवति। कथमित्याह–संयोगिद्रव्यगुणानां बलिनामुभयत्रापि बलवतां मिथः–परस्परं विषमत्वेनासदृशत्वेन विरोधः। तथान्यत्र बलिनां सदृशानामपि विरोधः। तथान्यत्रोभयथा विरोधः। केनचित् गुणेन बलिना सादृश्यात् केनचिदसादृश्याच्च संस्कारादिवशेन चान्योऽपि विरोधो भवति। आदिग्रहणेन **संयोगदेशकालादीनां** ग्रहणम्। अन्यश्च निसर्गात्स्वभावेनैव विरोधः ७३०

---

३१ °ष्णाभिवृ°–क. ख. ३२ °व च पयः पीतं र°–च. ३३ °शो बाहल्पेनोप°–क. ३४ °दिवशादपि भ°–क. ख. दिवशेन तु भ°. च.

४५ विरोधिद्रव्योदाहरणानि।

**७३१-क्षीरं कुलत्थैः, पनसेन मत्स्यै-**
**स्तप्तं दधि क्षौद्रघृते समांशे।**
**वार्यूषरे रात्रिषु सक्तवश्च**
**तोयान्तरास्ते यवकास्तथैव च॥ ४५**

७३१-एतेषामेव क्रमेणोदाहरणम्—( १-) क्षीरं बलिनां मधुरविपाकित्वेन युक्तं शीतवीर्यत्वेन च कुलत्थैरम्लविपाकैरुष्णवीर्यैश्च सह विरुद्धमित्यसदृशगुणेनोदाहरणम्। (२-)तथा क्षीरं मधुररसविपाकं शीतवीर्यं च तद्विधेनैव पनसेन विरुद्धमिति सदृशगुणेनोदाहरणम्। (३-)तथा क्षीरं मधुररसविपाकं शीतवीर्यं च मत्स्यैर्मधुररसविपाकैरुष्णवीर्यैश्च विरुद्धमित्येकदेशसादृश्येनैकदेशासादृश्येन चोदाहरणम्। (४-) तप्तं दधि विरुद्धमिति संस्कारोदाहरणम्। (५-) क्षौद्रघृते समभागे विरुद्धे इति मात्रोदाहरणम्। (६-) ऊषरे स्थितं वारि विरुद्धमिति देशोदाहरणम्। (७-) रात्रौ सक्तवो विरुद्धा इति कालोदाहरणम्। (८-) ते च सक्तवास्तोयान्तरिता इति संयोगादिदोषोदाहरणम्। (९-) यवकास्तु केवला विरुद्धा इति स्वभावोदाहरणम् ७३१

**टिप्पणी**—अत्र प्रसङ्गाद्विरुद्धान्नविज्ञाने बहूपयोगिनश्चरके पाठान्तरत्वेनोद्धृताः श्लोकाः संगृह्यन्ते—

यच्चापि देशकालाग्निमात्रासात्म्यानिलादिभिः।
संस्कारतो वीर्यतश्च कोष्ठावस्थाक्रमैरपि॥
परिहारोपचाराभ्यां पाकात्संयोगतोऽपि च।
विरुद्धं तच्च न हितं हृत्संपद्विधिभिश्च यत्॥
विरुद्धं देशतस्तावद्रूक्षतीक्ष्णादि धन्वनि।
आनूपे स्निग्धशीतादि भेषजं यन्निषेव्यते॥
कालतोऽपि विरुद्धं यच्छीतरूक्षादिसेवनम्।
शीते काले तथोष्णे च कटुकोष्णादिसेवनम्॥
विरुद्धमनले तद्वदन्नपानं चतुर्विधे।
मधुसर्पिः समधृतं मात्रया तद्विरुध्यते॥
कटुकोष्णादिसात्म्यस्य स्वादुशीतादिसेवनम्।
यत्तत्सात्म्यविरुद्धं तु विरुद्धं त्वनिलादिभिः॥
या समानगुणाभ्यासविरुद्धान्नौषधक्रिया।
संस्कारतो विरुद्धं तद्यद्भोज्यं विषवद्भवेत्॥
एरण्डसीसकासक्तं शिखिमांसं यथैव हि।
विरुद्धं वीर्यतो ज्ञेयं वीर्यतः शीतलात्मकम्॥
तत्संयोज्योष्णवीर्येण द्रव्येण सह सेव्यते।
क्रूरकोष्ठस्य चात्यल्पं मन्दवीर्यमभेदनम्॥
मृदुकोष्ठस्य गुरु च भेदनीयं तथा बहु।
एतत्कोष्ठविरुद्धं तु, विरुद्धं स्यादवस्थया॥
श्रमव्यवायव्यायामसक्तस्यानिलकोपनम्।
निद्रालसस्यालसस्य भोजनं श्लेष्मकोपनम्॥
यच्चानुत्सृज्य विण्मूत्रं भुङ्क्ते यश्चाबुभुक्षितः।
तच्च क्रमविरुद्धं स्याद्यच्चातिक्षुद्वशानुगः॥
परिहारविरुद्धं तु वराहादीन्निषेव्य यत्।
सेवेतोष्णं घृतादींश्च पीत्वा शीतं निषेवते॥
विरुद्धं पाकतश्चापि दुष्टदुर्दारुसाधितम्।
अपक्वतण्डुलात्यर्थपक्वदग्धं च यद्भवेत्॥
संयोगतो विरुद्धं तद्यथाऽम्लं पयसा सह।
अमनोरुचितं यच्च हृद्विरुद्धं तदुच्यते॥
संपद्विरुद्धं तद्विद्यादसंजातरसं तु यत्॥
अतिक्रान्तरसं वापि विपन्नरसमेव वा।
ज्ञेयं विधिविरुद्धं तु भुज्यते निभृतेन यत्।
तदेवंविधमन्नं स्याद्विरुद्धमुपयोजितम्॥
—च. सू. २६.८६-१०१ इति ७३१

४६ कुशाग्रबुद्धिभिरधिकोदाहरणानि स्वयमेवोह्यानि।

**७३२-कुशाग्रीयधियामेतदुदाहरणमात्रकम्।**
**उपनीतमलं 'विद्वान् सर्वत्र क्रमते' यतः॥ ४६**

७३२-कुशाग्रीयधियां तीक्ष्णबुद्धीनामेतदनन्तरोक्तमुदाहरणमात्रमुपनीतम्। यतो विद्वाञ्छास्त्रज्ञः तीक्ष्णबुद्धिः सर्वत्र क्रमते, स्वबुध्यैव सर्वमवगच्छतीत्यर्थः ७३२

४७ विरुद्धाशनं कुर्वाणस्य व्यापदः।

**७३३-विस्फोट-शोफ-मद-विद्रधि-गुल्म-यक्ष्म-**
**तेजोबल-स्मृतिमतीन्द्रियचित्तनाशान्॥**
**कुर्याद्विरुद्धमशनं ज्वरमस्रपित्त-**
**मष्टौ गदांश्च महतो विषवच्च मृत्युम्॥ ४७**

७३३-विरुद्धमशनं विस्फोटादीन् कुर्यात्। मतिर्बुद्धिर्विकल्पयोग्या। चित्तं चेतना। महतश्चाष्टौ गदान् कुर्यात्॥ यथायोगं ( १-) किञ्चिद्विरुद्धं शूलविषूचिकादींस्तात्कालिकान् करोति। ( २-) अन्यदभ्यासाद्यपेक्षया यक्ष्मादीन् ( ३-) करोति। अन्यच्च सद्य एव विषवन्मृत्युं करोतीति भिषजा परिकल्पनीयम्।

वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ७३३

**टिप्पणी**—विस्फोटेत्यादि—अत्र चरकः-'षाण्ढ्यान्ध्यवीसर्पदकोदराणां विस्फोटकोन्मादभगन्दराणाम्। मूर्च्छामदाध्मानगलग्रहाणां पाण्ड्वामयस्यामविषस्य चैव॥ किलासकुष्ठग्रहणीगदानां शोथाम्लपित्तज्वरपीनसानाम्। संतानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम्' ( सू. २६.१०२-१०३ ) इति ३३

४८ विरुद्धाशनजेषु रोगेषु चिकित्साप्रकारः।

**७३४-तेष्वाशु कुर्यात्संशुद्धिं शमं वा तद्विरोधिभिः।**
**द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिम्॥ ४८**

७३४-तेषु च विरुद्धाशनजेषु विस्फोटादिषु रोगेषु संशुद्धिं वमनविरेचनादिकं कुर्यात्। अथवा तस्य यथास्वं रोगकारणस्य विरुद्धाशनस्य सर्वैर्गुणैः विपरीतानि यानि द्रव्याणि तैर्विस्फोटादीनां शममेव कुर्यात्। अथवा

३५ वार्यूखरे रा॰-क. ख ३६ 'स्तथैव। कुशा॰-क. ख. ३७ 'तवलं वि॰-क. ख.

देशविपाद्यपेक्षया भविष्यद्विरुद्धाशनशङ्कायां तैरेव भविष्यद्विरुद्धाशनगुणविपरीतैर्द्रव्यैः शरीरस्याभिसंस्कारमेव प्रथमं कुर्यात् । यथा विरुद्धमप्यन्नं गुणैर्विपरीतगुणैः संस्काराद्देहे दुर्बलं सन्न रोगाय भवतीति । **एतच्चास्मद्गुरवो** यथाप्रकान्तशब्दार्थपरतन्त्रास्तैरेवेति च तद्विरुद्धानि परामृशन्तो वमनादिवत् पूर्वं देहस्याभिसंस्कृतेरपि वैद्यविधेयतामभिमन्यमानाश्चरकस्य बोद्धारो व्याख्यानमभिमन्यन्ते । **भट्टारकेण** तु 'तथाविधैर्वा द्रव्यैः पूर्वमभिसंस्कारः शरीरस्य' इत्यस्य वाक्यस्य व्याध्युत्पत्त्यनैकान्तिकप्रदर्शनपरत्वमङ्गीकृत्य तथाविधैरिति च विरुद्धसमानि परामृश्य विरुद्धैरेव पूर्वसंस्कारो व्याध्यनुत्पत्तिहेतुरिति सात्म्याहारप्रायतया द्वितीयोऽपि पक्षो य उद्भासितः सोऽस्माभिरुपेक्षित एव ७३४

**टिप्पणी**–तैर्वाश्विति–टीकायां चरकस्येति–'एषां खल्वपरेषां च वैरोधिकनिमित्तानां व्याधीनामिमे भावाः प्रतीकारा भवन्ति। तद्यथा–वमनं, विरेचनं च, तद्विरोधिनां च द्रव्याणां संशमनार्थमुपयोगः, तथाविधैश्च (र्वा), द्रव्यैः पूर्वमभिसंस्कारः शरीरस्येति' ( च. सू. २६.१०४ ) इत्यस्य चरकस्येति भावः । अभिसंस्कृतिः–सततोपयोगेन शरीरभावनम् ७३४

४९ व्यायामदीप्ताग्न्यादीनां विरुद्धमपीडाकरम् ।

**७३५–व्यायामस्निग्धदीप्ताग्निवयस्थबलशालिनाम् ।**
**विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ॥**

७३५–**व्यायामेत्यादिना** सात्म्यत्वेनैव गतत्वात् । तथा व्यायामदीप्ताग्न्यादीनां विरुद्धमपि भोजनं पीडायै न भवति। स्वल्पकालोपयुक्त व्यायामेन स्निग्धेन च दीप्ताग्नयो ये तेषाम् । अन्येषां व्यायामीति पाठः । तेषां व्यायामतः; स्निग्धस्य, दीप्ताग्नेश्च वयस्थस्य, प्रत्यग्रवयसः बलशालिनः –बलेन यः श्लाघते । अतिबलस्येत्यर्थः । तथा विरुद्धमप्यन्नं देशाभ्यासाद्यपेक्षया सात्मीभूतं शरीरे सुखकरं पीडायै न भवति । अल्पं च भोजनं विरुद्धमपि पीडायै न भवति ७३५

५० विरुद्धोपयोगे रोगनिवृत्तौ बीजम् ।

**७३६–दोषादिवैपरीत्येन हरते रोगिणां रुजम् ।**
**ऐकध्यं दधिदुग्धादियोजना न विरुध्यते ॥ ५०**
**योगादिभेदाद्यद्वद्धि पथ्यानामप्यपथ्यता ॥**
**तद्भेदान्तरतस्तद्वद्विरोधोऽपि निवर्तते ॥ ५१**

७३६–ननु च प्रायेण हि रोगे कश्चिद्विरुद्धानामपि यथेच्छोपयोगाद्रोगनिवृत्तिर्दृश्यते तत्कथमित्याह–**दोषादीनां** दोषदूष्यबलकालादीनामंशस्वरूपविपरीतत्वेन **रोगिणो रुजं हरते ऐकध्यं** सहभावेन **दधिदुग्धादीनां योजना न विरुध्यते।** तेनैतदुक्तं भवति–कदाचिद्विरुद्धस्य प्रयुज्यमानस्य समुदायगुणैर्विपरीता रोगदोषगतिरंशांशिकया भवति । तत्र रुजाहरत्वं दृष्टम् । विरुद्धमप्यविरुद्धम् । अथवा यद्वत् पथ्यानामपि भावानां संयोगादिभेदेनापथ्यता दृश्यते। तद्वत्तस्य संयोगादिना विरुद्धस्य भेदान्तरेणाधिकसंयोगादिकृतेन विरोधनाशः। तेनैतदुक्तं भवति–संयोगविशेषाद्यथा पथ्यानामप्यपथ्यता दृष्टा तद्वद्विरुद्धानामप्यन्यसंयोगाद्विरोधोऽपि **निवर्तते** न भवतीति । तथा हितमप्यपथ्यं सात्मीभूतं च देहेऽभ्यासादिवशात्तत्काल एव उचितं तदहितफलत्वात्त्यजेत् ७३६

५१ सात्म्यासात्म्ययोर्हानोपादानक्रमः ।

**७३७–पादांशेन त्यजेत्सात्म्यमहितं हितमाचरेत् ।**
**एकान्तरं ततश्चोर्ध्वं द्व्यन्तरं त्र्यन्तरं तथा ॥ ५२**

७३७–हितं चासात्मीभूतमप्याचरेत् । तच्चाहितं सहसा त्यक्तं हितं च सेवितं रोगाय संपद्यते । अत उच्यते **पादांशेनेति**– पादेन चतुर्भागेनापथ्यं त्यजेत्। तेनैव चतुर्भागेन पथ्यं भजेत् । तथांशेन त्यजेत् । अंशेनैव भजेत् । अंशो भागः । स च प्रकरणात्पादस्यैव विज्ञेयः । तेन **पादेन** वा **पादपादेन** वा त्यजेदपथ्यं तेनैव च पथ्यं भजेत् । केन क्रमेणेत्याह–**एकान्तरमित्यादि**। तेनैतदुक्तं भवति–अपथ्यादुचितादेकं पादं–चतुर्भागं रोगी, बलाद्यपेक्षया **पादपादं** वा प्रथमदिवसे त्यजेत्। स चतुर्भागः पथ्यादनुचितात्सेव्यः, ततो द्वितीयेऽह्नि सर्वमेवापथ्यम्, ततस्तृतीयेऽह्नि अपथ्यस्य त्रय एव भागाः पथ्यस्यैको भाग इत्येकदिवसान्तरितं चतुर्थादिषु दिवसेष्वेवमेव। आ उपयुज्यमानचतुर्भागसात्मीभावात् । ततश्चोर्ध्वं **द्व्यन्तरम्** । किमुक्तं भवति–चतुर्थे भागे पथ्यस्य सात्मीभूते अपथ्यादुचितात् द्वितीयो भागस्त्याज्यः । तेनार्द्धमपथ्यस्यार्द्धं पथ्यस्य तस्मिन् दिने भवति । द्वितीये दिवसे सात्मीभूतचतुर्भाग एव योज्यः । एवं तृतीये दिवसे चतुर्थे पुनरर्धमात्रमेवं **द्विदिनान्तरितम्** । एवं पञ्चमादिदिवसेष्वपि । आ अर्द्धसात्मीभावात् । तत**स्त्र्यन्तरितम्** । सात्मीभूतेऽर्द्धे तृतीयो भागोऽपथ्यात्त्याज्यः, पथ्याच्च सेव्यः । तस्मिन्दिने पथ्यस्य भागास्त्रयः, अपथ्यस्यैको भागः । द्वितीये दिवसे सात्मीभूतं पथ्यापथ्ययोरर्द्धमर्द्धम् । एवं तृतीये चतुर्थे च । पञ्चमे पुनश्चतुर्थो भागोऽपथ्यस्य भागास्त्रयः पथ्यस्येति **त्र्यन्तरितम्** । एवं षष्ठादिषु दिवसेष्वाभागत्रयसात्मीभावात् । ततः सर्वमेव पथ्यम् । एवमेकद्वित्रिदिनानि क्रमेणासात्म्यं सात्म्येनान्तरयितव्यम् ।

( १ ) **अन्ये** मन्यन्ते–प्रथमे दिवसे [एको] भागः पथ्यात्सेव्यः, शेषमपथ्यम् । द्वितीये सर्वमपथ्यम् । तृतीये पुनरेको भागः । एवं भाग **एकान्तरितः** । चतुर्थे द्वौ । पञ्चमे एकः । षष्ठे सप्तमे च पुनर्द्वौ द्वाविति **द्व्यन्तरेण**। अष्टमे त्रयः, नवमे द्वौ । दशमे तद्वदेकादशे च, द्वादशे पुनस्त्रय इति **त्र्यन्तरितः** । ततस्त्रयोदशात्प्रभृति सर्वं पथ्यमेवेति ।

( २ ) **अन्ये** पुनरन्यथा वर्णयन्ति–यथा–अनेनैवैकादिना सात्म्यमसात्म्येनान्तरयितव्यम् । तत्र विचारणादपथ्यं सात्म्यं भुञ्जानः पथ्यभोजनेच्छुरेकदिवसमपथ्यस्य भागत्रयं पथ्यस्य चैको भागः । द्वितीये सर्व-

३८ °न हरन्ति रोगिणो रु°–क. ख. च. ३९ °जम् । एक°–क. ४० °यद्वा ५०–ख. च.

मेवापथ्यमिति **एकान्तरितम्**। तृतीये द्वौ पथ्यस्य द्वावपथ्यस्य, एवं चतुर्थेऽपि। पञ्चमे पुनरपथ्यस्य भागत्रयं चतुर्थो भागः पथ्यस्य, एवं **द्व्यन्तरम्**। ततः षष्ठदिवसे त्रीन् भागान् पथ्यस्य एकमपथ्यस्य, एवं सप्तमेऽष्टमे च। नवमे पुनर्द्वौ द्वौ भागौ, दशमे चतुर्थोऽपि पथ्यस्य। तद्वदेकादशे द्वादशे त्रयोदशे। चतुर्दशे पुनस्त्रयो भागाः पथ्यस्य [एको] भागोऽपथ्यस्य। अतः पञ्चदशात्प्रभृति सर्वं पथ्यमेव भोज्यम्।

अनयोरेव च पक्षयोर्युज्यमानत्वमेव मन्यामहे। तथा च शास्त्रकृद्भिरेव **ऋतुसन्धौ** चतुर्दशदिनमाना क्रमसमाप्तिरिष्टा।

( ३ ) **अन्ये** पुनरन्यथा वर्णयन्ति—प्रथमे दिवसेऽपथ्यस्य त्रीन् भागान् पथ्यस्यैकम्। द्वितीये सर्वमेवापथ्यम्। तृतीये पथ्यस्य द्वावपथ्यस्य च द्वौ। चतुर्थे पथ्यस्यैको भागः, अपथ्यस्य भागास्त्रयः। पञ्चमेऽप्येवमेव। षष्ठे पथ्यस्य त्रीन् भागानपथ्यस्यैकम्। सप्तमे द्वौ द्वौ पथ्यापथ्ययोरेवमष्टमे नवमे च। दशमादारभ्य सर्वमेव पथ्यम् ७३७

**टिप्पणी**–अहितमप्यभ्यासात्सात्म्यतां गतमपि त्याज्यमेव। तच्च केन क्रमेणेत्याह–पादांशेनेति। पादश्चतुर्थो भागः, स एव अंशः पादांशः पादरूपोंश इत्यर्थः। अथवा पादस्य अंशः पादांशः। अत्र अंशः–चतुर्थो भागः। तेन पादपादः इत्यर्थो भवति। षोडशोंऽश इति भावः। इदमर्थद्वयमपि वाग्भटस्यात्राभिप्रेतमिति 'क्रमेण सात्म्यमपि चोदितं पादेन पादांशेन वा विवर्जयेदित्युक्तं प्राक्' (सू.अ.सं.१०) इत्युपरितनग्रन्थादवसीयते। यत्सातत्येनोपसेव्यमानमुपशेते तत्सात्म्यम् ( चरकः वि. ८. ११८, अ. सं. सू. १० ) विधिविहितमन्नपानं रक्तशाल्यादि हितम्। तद्विपरीतम् अहितं यवकादि। एकान्तरम्–एकाहमन्तरं कृत्वा। तत ऊर्ध्वम्–ततः परम्। द्व्यन्तरम्–द्व्यहमन्तरं कृत्वा। त्र्यहम्–त्र्यहमन्तरं कृत्वा। आचरेत्–सेवेतेति भावः। टीकायामुचितादिति–उचितात्–अभ्यस्तात्। अनुचितात्–अनभ्यस्तात् इति भावः। तथा चाऽऽह चरकः–उचितादहिताद्धीमान्क्रमशो विरमेन्नरः। हितं क्रमेग सेवेत क्रमश्चात्रोपदिश्यते ॥ प्रक्षेपापचये ताभ्यां क्रमः पादांशको भवेत्। एकान्तरं ततश्चोर्ध्वं द्व्यन्तरं त्र्यन्तरं तथा (सू.७.३६–३७) इति। 'उचितादप्यहितात्क्रमशो विरमेत्। हितमनुचितमप्यासेवेत क्रमशो न चैकान्तः पादहीनात्'(सुश्रु.चि. २४. ९७) टीकायामतः पंचदशाप्रभृतीति–चक्रसंमतमिदं मतं बोध्यम्। ऋतुसन्धाविति–तथा चोक्तं प्राक्–'ऋत्वोरन्तादिसप्ताहादृतुसन्धिरिति स्मृतः। तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात्' ( अ. सं. सू. ५. १४४ ) इति। इदमोकःसात्म्यमित्यभिधीयते। तथा चरकः—'उपशेते यदौचित्यादोकःसात्म्यं तदुच्यते' ( सू. ६.४९ ) इति। ओकात्–अभ्यासात् सात्म्यमोकसात्म्यम्।

## पादांशेन सात्म्यीकरणस्येन्दुमतेन कोष्टक्रम्।

### एकान्तरितम्।

– गृहीतांशः, ० त्यक्तांशः

| | | पथ्यांशानामुपादानक्रमः | | | | अपथ्यांशानां हानक्रमः | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रथमदिनम् | १/– | २/० | ३/० | ४/०=४ | १/० | २/– | ३/– | ४/–=४ |
| २ | द्वितीयदिनम् | १/० | २/० | ३/० | ४/०=४ | १/– | २/– | ३/– | ४/–=४ |
| ३ | तृतीयदिनम् | १/– | २/० | ३/० | ४/०=४ | १/० | २/– | ३/– | ४/–=४ |

**अवधेयम्**:—चतुर्थादिषु दिवसेष्वेवमेव, आ उपयुज्यमानचतुर्भागसात्मीभावात्।

### द्व्यन्तरितम्।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ४ | प्रथमदिनम् | १/– | २/– | ३/० | ०=४ | १/० | २/० | ३/– | ४/–=४ |
| ५ | द्वितीयदिनम् | १/– | २/० | ३/० | ४/०=४ | १/० | २/– | ३/– | ४/–=४ |
| ६ | तृतीयदिनम् | १/– | २/० | ३/० | ४/०=४ | १/० | २/– | ३/– | ४/–=४ |
| ७ | चतुर्थदिनम् | १/– | २/– | ३/० | ४/०=४ | १/० | २/० | ३/– | ४/–=४ |

**अवधेयम्**—एवं पञ्चमादिदिवसेष्वपि आ अर्धसात्मीभावात्।

### त्र्यन्तरितम्।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ८ | प्रथमदिनम् | १/– | २/– | ३/– | ४/०=४ | १/० | २/० | ३/० | ४/–=४ |
| ९ | द्वितीयदिनम् | १/– | २/– | ३/० | ०=४ | १/० | २/० | ३/– | ४/–=४ |
| १० | तृतीयदिनम् | १/– | २/– | ३/० | ४/०=४ | १/० | २/० | ३/– | ४/–=४ |
| ११ | चतुर्थदिनम् | १/– | २/– | ३/० | ४/०=४ | १/० | २/० | ३/– | ४/–=४ |
| १२ | पंचमदिनम् | १/– | २/– | ३/– | ४/०=४ | १/० | २/० | ३/० | ४/–=४ |

**अवधेयम्**–एवं षष्ठादिदिवसेष्वा भागत्रयसात्मीभावात्।

### पथ्यसात्म्यता।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १३ | प्रथमदिनम् | १/– | २/– | ३/– | ४/–=४ | १/० | २/० | ३/० | ४/०=४ |
| १४ | द्वितायिदिनम् | १/– | २/– | ३/– | ४/०=४ | १/० | २/० | ३/० | ४/–=४ |
| १५ | तृतीयदिनम् | १/– | २/– | ३/– | ४/–=४ | १/० | २/० | ३/० | ४/०=४ |

बलाद्यपेक्षयैवमेव पादपादांश(१/१६)सात्म्यीकरणं स्वयमेवोह्यम्।

५२ सात्म्यासात्म्यसेवनक्रमगुणाः।

**७३८–क्रमेणानेन संत्यक्ता दोषाः संवर्द्धिता गुणाः।**
**प्रभवन्ति न पीडायै प्राप्नुवन्ति स्थिरात्मताम्**[५३]

७३८–इत्यनेन क्रमेणापथ्यदोषास्त्यक्ताः पीडायै न भवन्ति। पथ्यगुणाश्च संवर्धिताःस्थिरात्मतां प्राप्नुवन्ति ७३८

४१ °त्म ताम्। अपथ्यं सात्म्यमप्यन्नं चेष्टां वा पादस्त्यजेत्। भजेच्च पादशः पथ्यमेकद्वित्रिदिनान्तरम् ॥ क्रमेणोपचिता दोषाः क्रमेणोपचिता गुणाः प्राप्नुवान्त्यपुनर्भावमप्रकम्प्या भवन्ति च। त्रिज°--क. च.

टिप्पणी—क्रमेणेति—क्रमेण-क्रमेणैव, दोषाः—दोषजनकान्यपथ्यानि । गुणाः—गुणजनकानि पथ्यानि। यद्वा—दोषाः अपथ्याभ्यासजाः । क्रमेण-पादांशेनेत्यनेन पूर्वोक्तेन क्रमेण, संत्यक्ताः-अपचिताः क्षयं नीताः संतः पीडायै न भवन्ति, तथा गुणाः-पथ्योपयोगजाः क्रमेण पूर्वोक्तेन संवर्धिताः-उपचिताः वृद्धिं नीताः सन्तः स्थिरात्मताम्-अप्रकम्प्यताम्, प्राप्नुवन्ति-गच्छन्ति ( च. सू. ७-३८ ) ७३८

५३ शरीरसंधाकाख्यः स्तभाः।

**७३९-त्रितयं चैतदुपस्तम्भनमाहारः स्वप्नोऽब्रह्मचर्यं च एभिर्युक्तियुक्तैरुपस्तब्धमुपस्तम्भैः शरीरं बलवर्णोपचयोपचितमनुवर्तते यावदायुषः संस्कारः। तत्राऽऽहार उक्तो वक्ष्यते च ॥ ५३**

७३९-एतत्प्रसङ्ग एवेदमुच्यते। त्रितयमिति। एतत्त्रयमुपस्तम्भो धारकं शरीरस्य। किमित्याह-आहारः, स्वप्नः, अब्रह्मचर्यं च। एभिरुपस्तब्धं देहं शरीरं युक्त्या अन्यूनाधिकताभिधानया युक्तैः। प्रकर्षयुक्तैर्बलादिभिः समृद्धमापूर्वकर्मसंस्कारपरिक्षयादायुरनुवर्तते। तत्राहार-पूर्वेष्वध्यायेषूक्तः। उत्तरे चाध्याये ज्वरादिषु च वक्ष्यते ७३९

टिप्पणी-त्रितयमिति—आहारश्चतुर्विधः-अशित-खादित-पीत-लीढभेदेन ( च. वि. २.१७ सु. शा. ४.१९ ) स चतुर्विधोऽप्यभ्यवहारसामान्यादेक एवेह गण्यते। स्वप्नः निद्रा। सा 'तमोभवा श्लेष्मसमुद्भवा च। मनः शरीरश्रमसंभवा च। आगन्तुकी व्याध्यनुवर्तिनी च रात्रिस्वभावप्रभवा च निद्रा' ( च. सू. २१-५८ ) इति भेदेन षड्विधापि बहिश्चैतन्याभावहेतुत्वेन स्वप्नत्वसामान्यादेकैव गण्यते। अब्रह्मचर्यम्-संभोगः। अत्र—'त्रय उपष्टम्भा इत्याहारः स्वप्नो ब्रह्मचर्यम्' इति चरकः ( सू. ११-३५ ) चरकव्याख्याकारास्तु-स्वप्नः ब्रह्मचर्यम् इति पदच्छेदं कृत्वा कायवाङ्मनोभिर्मैथुनवर्जनं ब्रह्मचर्यमिति व्याख्यानयन्ति। तच्चिन्त्यम्। अकारप्रश्लेषाभावभ्रान्तिनिवारणपरेण 'आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितैः। शरीरं धार्यते नित्यमागारमिव धारणैः' ( अ. हृ. सू. ७-५२) इति हृदयकारपद्यात्। प्रकृतेऽपीन्दुना अब्रह्मचर्यमित्युक्तत्वाच्च। उपस्तम्भैरिति-अन्येन प्रधानेन स्तभ्यमानं धार्यमाणमुप-समीपं गत्वा स्तम्भयतीति इति उपस्तम्भः। यथा-गृहधारणनियुक्तप्रधानस्तम्भसमीपवर्ती तद्बलाधायक उपस्तम्भः। अत्र वातपित्तश्लेष्माणस्त्रयः प्रधानस्तंभाः। तैः प्राधान्येन शरीरं धार्यते स्थूणाभिर्गृहमिव। तथा च सुश्रुतः—'वातपित्तश्लेष्माण एव देहसंभवहेतवः। तैरेवाव्यापन्नैरधोमध्योर्ध्वसंनिविष्टैः शरीरमिदं धार्यतेऽगारमिव स्थूणाभिस्तिसृभिः' इति ( सू. २१.३ )। उपचयः—पुष्टिः। उपचितम्—युक्तम्। यावदायुषः संस्कारः आयुः संस्कारपर्यन्तम्। आयुःकारणधर्माधर्मावसानं यावदित्यर्थः। संस्कारशब्दः कारणवचनः ७३९

( निद्राप्रकरणम् )

५४ निद्रायाः स्वरूपम्।

**७४०-लोकादिसर्गप्रभवा तमोमूला तमोमयी। बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते ॥ ५४**

७४०-क्रमप्राप्तः स्वप्न उच्यते-लोकानामादिसर्गे जगदुत्पत्तिकाले प्रभवो यस्याः सा तथाविधा। तमःकारणान्मूलं यस्याः सा तमोमूला। तमोमयी तमस एव विकारः। तेनैतदुक्तं भवति-सर्वथा तमस्तस्याः कारणमिति। अत एव सा रात्रौ प्रायेणोत्पद्यते। तमसो नाम महागुणस्य बाहुल्यात्। सा च निद्रा रात्रौ भवति दिवा वा। केवलमनया युक्त्या जन्तूनाविशति ७४०

५५ निद्रायाः संप्राप्तिः।

**७४१-श्लेष्मावृतेषु स्रोतस्सु श्रमादुपरतेषु च। इन्द्रियेषु स्वकर्मभ्यो निद्रा विशति देहिनम् ॥**

७४१-कथेत्याह—श्लेष्मावृतेष्वित्यादि। आहाररसवशाच्छ्लेष्मणा स्रोतस्स्वावृतेषु निरुद्धेष्विन्द्रियेषु च स्वस्वविषयग्रहणकारणाच्छ्रमादुपरतेषु निवृत्तेषु देहिनं निद्रा आविशति ७४१

टिप्पणी—श्लेष्मेत्यादि-तथा चाह सुश्रुतः-'निद्राश्लेष्मतमोभवा' ( शा. ४-५६ )' हृदयं चेतनास्थानमुक्तं सुश्रुत! देहिनाम्। तमोभिभूते तस्मिंस्तु निद्रा विशति देहिनम्। निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते। स्वभाव एव वा हेतुर्गरीयान्परिकीर्त्यते' ( शा. ४-३४, ३५ ) इति च। चरकेऽपि—'यदा तु मनसि क्लान्ते कर्मात्मानः ( इन्द्रियाणि ) क्लमान्विताः। विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः' ( सू. २१-३५ ) ७४१

५६ निद्रायां नानाविधरूपदर्शनकारणम्।

**७४२-सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा। विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति ॥ ५६**

७४२-आविष्टायां च निद्रायामिन्द्रियेषु च विषयेभ्यो निवृत्तेषु मनो यदा स्वकर्मणो न निवृत्तं, तदा नानारूपं स्वप्नं प्रपश्यति देही। **यदा तु कारणवशेन मनोऽपि स्वकर्मणो निवृत्तं भवति, सा सुषुप्तावस्था।** तस्यां न किञ्चिदपि पश्यति ७४२

टिप्पणी—सर्वेन्द्रियेति-तथाऽऽह चरकः-' मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः। स्रोतसां दारुणान्स्वप्नान्काले पश्यति दारुणे। नातिप्रसुप्तः पुरुषः सफलानफलांस्तथा। इन्द्रियेशेन मनसा स्वप्नान्पश्यत्यनेकधा। दृष्टं श्रुतानुभूतं च प्रार्थितं कल्पितं तथा। भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः' इत्यादि ( इन्द्रियस्था. ५.४१-४३ अ. सं. शा. १२ ) ७४२

---

४२ त्रितियं चेदमुपष्टम्भ°-ख. च., त्रितयं चेदमुपस्तम्भ°-क. ४३ °चर्यमेभिर्यु°-क. ४४ °ष्टब्धमु°-ख. ४५ °ह° नाम्। स°-क. च.

५७ निद्राया माहात्म्यम् ।

**७४३-निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।**
**वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥ ५७**

७४३-तस्याश्च निद्रायाः सुखादिकमायत्तम् । तेनैतदुक्तं भवति-सम्यक् सेविता सुखपुष्टिबलवृषत्वज्ञानजीवितैर्योजयति नरम् । असम्यक् प्रयुक्ता तु दुःखकार्श्याबलत्वक्लीबताज्ञानैर्योजयति । न च जीवितमिति संबन्धः । अजीवितेन मरणेन योजयतीत्यर्थः । वृषत्वं स्त्रीगमनशक्तिः । ज्ञानं बुद्धिः ७४३

**टिप्पणी**—निद्रायत्तमिति- ( च. सू. २१-३६ ) ७४३

५८ अयुक्तनिद्राया दोषाः ।

**७४४-अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।**
**सुखायुषी पराकुर्यात् कालरात्रिरिवापरा ॥ ५८**

७४४-एतदेवोच्यते सा निद्रा अकाले वक्ष्यमाणे तदुपयोगप्रतिषिद्धे काले अपि स्वल्पोपसेविता, तथा कालेऽप्यत्यन्तसेविता, सर्वदा वा, नैव वा सेविता आयुर्जीवितं पराकरोति नाशयति । जीवितेऽपि व्याध्यादिभिः सुखं पराकरोति । यथा परा द्वितीयेव कालरात्रिर्मरणनिशा सुखस्यायुषश्च नाशनात्सादृश्यम् ७४४

**टिप्पणी**—अकाल इति—अकाले-दिनादौ निद्रां प्रतिनिषिद्धे काले । अनेन च **मिथ्यायोगो** निद्राया उक्तः । अतिप्रसङ्गादिति-अनेन निद्रायाः **अतियोग** उक्तः । न च निषेवितेत्यनेन तस्या **अयोगः** प्रोक्तः । एषा त्रिविधापि निद्रा सुखं च आयुश्च सुखायुषी पराकुर्यात्-नाशयेत् । निराकुर्यादिति कश्चित्पाठः ७४४

५९ युक्तनिद्रायाः गुणाः ।

**७४५-सैव युक्ता पुनर्युङ्क्ते निद्रा देहं सुखायुषा ।**
**योगाभियोगिनो बुद्धिर्निर्मलाऽतमसा यथा॥ ५९**

७४५-सैव निद्रा युक्ता सम्यक् प्रयोगेण देहं सुखेनाऽऽयुषा च योजयति । यथा योगे तत्त्वज्ञानेऽभियोगिनः । पुरुषस्य निर्मला बुद्धिरतमसा शुद्धस्वभावेन सत्त्वरूपेण योजयति । अथवा तमसा कारणेन निर्मला सुखायुषा योजयतीत्यर्थः ७४५

**टिप्पणी**—निद्रायाः समयोगमाह-सैवेति । समयोगयुक्ता तु देहं सुखायुषा युङ्क्ते इति भावः ७४५

६० रात्रिजागरणदिवास्वापासनप्रचलायितानां गुणाः

**७४६-रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ।**
**अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥ ६०**

७४६-तस्याश्च निद्रायाः काले प्रयोग उक्तः, तं च कालं दर्शयति-रात्रौ जागरणं निद्राया असेवा, रूक्षं देहे रूक्षाणां भावानां वृद्धिकरमित्यर्थः, एवं दिवा प्रस्वपनं स्निग्धम् । आसीनप्रचलायितं न रूक्षं, न चाभिष्यन्दि । **आसीनप्रचलायितं**-दिवाऽप्युपविष्टस्य स्वल्पा निद्रा, अभिष्यन्दि-मालिन्येन स्रोतसां स्रावकम् ७४६

**टिप्पणी**-रात्राविति-जागरणं सर्वदैव रुक्षणस्वभावमपि दिवसे तस्य सात्म्यत्वात्, शरीरस्य रात्रिस्वप्नस्निग्धत्वाच्च न तथा विरूक्षणं भवति । एवं दिवा प्रस्वपनेऽपि बोध्यम् । आसीनस्य-उपविष्टस्य निद्रामासेवमानस्य प्रचलायितं दोलनमासीनप्रचलायितम् । यदाह भेडः—'स्वप्नकामो दिवा काममुपविष्टः शयीत वा । प्रस्तीर्णाङ्गस्य जन्तोर्हि श्लेष्मा कोष्ठे प्रवर्तते ' इति । अभिष्यन्दः—दोष-धातु-मल-स्रोतसां क्लेदीभावः । अत्र सुश्रुतो द्रष्टव्यः ( शा. ४. ३८-४८ ) ७४६

६१ ग्रीष्मे दिवास्वापो हितः ।

**७४७-ग्रीष्मे वायुचयादानरौक्ष्यराज्यल्पभावतः ।**
**दिवास्वप्नो हितः ॥ ६१**

७४७-ग्रीष्मे तु दिवास्वप्नं विहितम् । यतस्तस्मिन् काले वायोश्चयो भवति । आदानं च परिपुष्टं भवत्यतो रौक्ष्यम् । रात्रयश्च निद्रासमाप्त्ययोग्याः स्वल्पा भवन्ति । दिवास्वप्नश्च संतर्पकः ७४७

६२ ग्रीष्मेतरेषु ऋतुषु दिवानिद्रायाः प्रतिषेधः

**७४८- अन्यस्मिन् कफपित्तकरो हि सः ॥ ६२**

७४८-ग्रीष्मादन्यस्मिन् काले दिवास्वप्नः पित्तश्लेष्मकरः ।

६३ दिवास्वापोचितानां परिगणनम् ।

**७४९-भुक्त्वाऽतिभाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ।**
**क्रोधशोकभयैः क्लान्तान्श्वासहिध्मातिसारिणः**
**वृद्धबालाबलक्षीणक्षततृट्छूलपीडितान् ।**
**अजीर्णाभिहतोन्मत्तान्दिवास्वप्नोचितानपि ६४**
**धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति ।**

७४९-एषां ह्यतिभाष्यक्लान्तादीनां दिवास्वप्नेन धातूनां वातादीनां देहधारकाणां साम्यमन्यूनाधिकता भवति ॥ श्लेष्मा चाङ्गानि पुष्यति-उपचिनोतीत्यर्थः ७४९

**टिप्पणी**-अतिभाष्यम्-अतिशयितो वाग्व्यापारः, यानम्-अश्वादिना गमनम्, अध्वा-पद्भ्यां गमनम् । मद्यम्-मद्यपानम् । स्त्री-स्त्रीसंभोगः । भारः—शिरःस्कंधादिभिः गुरुवस्तुवहनम् । कर्म-कायव्यापारः, वमनादिकं च । क्षतः—क्षतकासी । अभिहतः-शस्त्रप्रहारादिपीडितः दिवास्वप्नोचितः-सात्म्यीभूतदिवास्वप्नः । तथा चोक्तं सुश्रुतेन-'निद्रासात्म्यीकृता यैस्तु रात्रौ च यदि वा दिवा। न तेषां स्वपतां दोषो जाग्रतां वाऽपि जायते' (शा. ४-४१) क्षारपाणिरपि-' यावत्कालं न सुप्तः स्याद्रात्रौ स्वप्नाद्यथोचितात् । ततोऽर्धमात्रं तत्कालं दिवास्वप्नो विधीयते ' इति । अयं च दिवास्वापोऽभुक्तवतामेव । ' भुक्त्वा स्वप्नं न सेवेत सुखोऽप्यसुखितो भवेत् ' इति हारीतात् । अत्र भाष्यादिक्लान्तानां पवनकोपात्स्वप्नोऽनुज्ञातः । श्वासहिध्मादीनां वेगविसरणार्थम् । वृद्धादीनां यथायथं संतर्पणार्थं वेगविग-

४६ °गिनां बु°-क. ख. ४७ °क्त्वा तु भा°-क. ख. च. ४८ °णक्षुत्तृट्शूलप्रपी°-ख. च. ४९ अजीर्णाभि°-क.

विसरणार्थं च। अजीर्णिनां दिवास्वप्नोचितानां च धातुवैषम्यपरिहारार्थं दिवास्वप्नोऽनुमतस्तन्त्रकृता । ननु अजीर्णानां दिवास्वप्नो न हितः। दिवास्वप्नस्य कफवृद्धिकरत्वात्। कफवृद्ध्या चाग्निमान्द्यम् । अग्निमान्द्यादजीर्णान्नस्यापाकः, इत्ययुक्तस्तेषां दिवास्वप्नः। अत्रोच्यते-दिवास्वप्नेनाजीर्णिनां धातुसाम्यं भवति, धातुसाम्ये च सति स्वस्थानस्थितैः दोषैरनुपहतो वन्हिः पचनक्षमो भवति। कफस्तु वृद्धोऽपि नैतेषामग्निमान्द्यं विधत्ते। अपि त्वंगानां पुष्टिमादधाति। अत एवानन्तरमेवोवाच शास्त्रकारः-धातुसाम्यमिति ७४९

६४ ग्रीष्मेऽपि दिवास्वापेऽयोग्याः।

**७५०-बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाऽहनि ६५**

७५०-बहुमेदःश्लेष्मशरीरा अप्यतिस्निग्धाहारादिशीलिनश्च ग्रीष्मेऽप्यहनि न स्वप्युः ७५०

**टिप्पणी**—बहुमेद इति-बहुमेदःप्रभृतयो ग्रीष्मेऽपि भाष्यक्रान्तादित्वेऽपि न दिवा स्वप्युः इति भावः। बहुमेदाः-अतिस्थूलः। तल्लक्षणं यथा-'मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः। अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते' (च.सू. २१.९) अयथा-अननुरूपो उपचयोत्साहौ यस्य। उपचयः अधिकः। उत्साहश्चाल्पः बहुशब्दः प्रत्येकं संबध्यते, तेन बहुमेदाः बहुकफः इत्यर्थो भवति। अत्र बहुकफशब्देन कफप्रकृतयः कफरोगिणश्च गृह्यन्ते ७५०

६५ सर्वदास्वापानर्हाः जनाः।

**७५१-विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ६६**

७५१-विषार्तः कण्ठरोगी च निशास्वपि न जातुचित् स्वप्यात् ७५१

**टिप्पणी**—रात्रिस्वप्नस्यापि सम्यग्योगत्वमपवदति-विषार्त इति। तथा चोक्तम्-'कफमेदोविषार्तानां रात्रौ जागरणं हितम्' इति (सु. शा. ४-४८) ७५१.

६६ विरुद्धनिद्रस्य जायमाना रोगाः।

**७५२-हलीमकशिरोजाड्यस्तैमित्यगुरुगात्रताः।**
**ज्वरभ्रममतिभ्रंशस्रोतोरोधाग्निमन्दताः॥ ६७**
**शोफारोचकहृल्लासपीनसार्द्धावभेदकाः**
**कण्डूरुक्कोठपिटकाकासतन्द्रागलामयाः॥ ६८**
**विषवेगप्रवृत्तिश्च भवेदहितनिद्रया।**

७५२-अहितनिद्राया विरुद्धनिद्रायाः सेवनेन हलीमकादीनामुद्भवः। इमे वक्ष्यमाणलक्षणाः शिरसो जाड्यं गुरुत्वमिन्द्रियापाटवं च। स्तैमित्यं गात्राणां निरुत्साहत्वम्। विषार्तस्य निद्रया विषवेगप्रवृत्तिः ७५२

**टिप्पणी**—हलीमकेत्यादि—हलीमकः—पाण्डुरोगभेदः (अ. सं. नि. १३) स्तैमित्यम्-गात्राणामार्द्रपटावगुण्ठितत्वमिव, गुरुगात्रता-गात्रगौरवम्। भ्रमः-स्थाणौ पुरुषज्ञानम्, पुरुषे च विपरीतसत्त्वज्ञानादिकम्। अन्ये-चक्रस्थितस्येव संभ्रमद्वस्तुदर्शनमिति वदन्ति। मतिभ्रंशः-बुद्धिनाशः। स्रोतोरोधः-रसादिवहानां स्रोतसामन्तःसुषिररोधः। शोफः-श्वयथुः। अरोचकः-जिह्वेन्द्रियाप्रवृत्तिः, यथा वक्त्रस्थमपि न भुङ्क्ते। हृल्लासः-हृदयात्सलवणश्लेष्मनिर्गमः। पीनसः-अपीनसापरपर्यायः पूतिगन्धी दुष्टप्रतिश्यायः (अ.सं.उ.२३), अर्धावभेदकः-अर्धशिरोव्यथारूपः (अ. सं. उ. २७) कण्डूरुक्-कण्डूरोगः। कोठः-मण्डलाकारा निर्मुखा पीटिका (अ. सं. सू. ६-२४३ प्रभा) पिटिका-अल्परुक्शोफो व्रणविशेषः। कासः-कसति-शिरःकण्ठादूर्ध्वं गच्छति वायुरिति कासः (भ्वा. प.से.) अथवा कासि गतिशातनयोरस्माद्धातोः (अ. आ. से.) निष्पन्नोऽयं शब्दः। कसनाद्यथोक्तगतिमत्त्वात्तथोरःप्रभृतिशातनाच्च कास इत्यन्वर्थसंज्ञेयम्। तन्द्रा—(अ. सं. सू. ८. ५९६-प्रभा) गलामयाः-कण्ठरोगाः-गलगण्ड-गण्डमालापचीग्रन्थ्यादयः (च. सू. २१. ४६-४९) ७५२.

६७ अतिनिद्रायाः कारणम्।

**७५३-अपच्यमानो बाहुल्यात् स्रोतांस्यावृणुते कफः६९**
**ततः स्रोतस्सु रुद्धेषु जायते गात्रगौरवम्।**
**गुरुगात्रस्य चालस्यमालस्यादतिनिद्रता ७०**

७५३-अतिनिद्रायाः कारणमुच्यते। बाहुल्यात् कफस्याग्निः कफं पक्तुं न शक्नोति। अतः सोऽपच्यमानः स्रोतांस्यावृणुते स्थगयति। ततः स्रोतोरोधात् गात्रगौरवं, गात्रगौरवादालस्यमालस्यादतिनिद्रता ७५३

**टिप्पणी**—अतिनिद्रायाः संप्राप्तिमाह-अपच्यमान इति। आलस्यम्—'शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते' (सु. शा. ४. ५२) ७५३.

६८ अतिनिद्रायाश्चिकित्सा।

**७५४-विरेकः कायशिरसोर्वमनं रक्तमोक्षणम्।**
**धूमः क्षुत्तृड्व्यथाहर्षशोकमैथुनभीक्रुधः ७१**
**चिन्तोत्कण्ठाऽसुखा शय्या सत्त्वौदार्यं तमोजयः**
**रूक्षान्नं चाहितां निद्रां वारयन्ति प्रसङ्गिनीम् ७२**

७५४-एतामतिनिद्रां प्रसङ्गिनीमनुपक्तां कायविरेकादीनि नाशयन्ति। असुखा-कष्टा। उत्कृष्टसत्त्वत्वं सत्त्वौदार्यम् ७५४

**टिप्पणी**-विरेक इति-कायस्य शिरसश्च विरेकः-विरेचनम् तत्र कायविरेकः-बस्तिविरेचनाभ्याम्। शिरोविरेकः नस्यकर्मणा। रक्तमोक्षणम्-शिराव्यधादिना। धूमः-धूमपानम् सत्त्वौदार्यम्-सत्त्वगुणभूयिष्ठता, तमोजयः—तमोगुणस्य जयः, एतद्द्वयं योगाभ्यासादिना। रूक्षान्नम्—कङ्गुकोद्रवजूर्णाह्वादीनि धान्यानि (अ. सं. सू. ७-२९४, च. सू. २१. ५५-५६, सु. शा. ४. ४७) ७५४

६९ निद्रानाशे हेतवः।

**७५५-एत एव च विज्ञेया निद्रानाशस्य हेतवः।**
**कालशीलक्षयोव्याधिर्वृद्धिश्चानिलपित्तयोः ७३**

७५५–एतान्येव च विरेकादीनि सम्यङ्निद्राया अपि नाशहेतवः। कालश्च निद्रानाशहेतुः, येन प्रभातादौ सा न भवति। शीलमभ्यासः, तेन यस्य यस्य यस्मिन् काले निद्रानिवृत्तिरभ्यस्ता तस्य तस्य तस्मिन् काले सा भवतीति। तथा क्षयो धातूनां निद्रानाशकारणम्। व्याधिश्चान्यो ज्वरादिः। वातपित्तयोश्च वृद्धिः ७५५

**टिप्पणी**—एत एव चेति—पूर्वमुक्ताः कायविरेकादयः, निद्रानाशस्य–समयोगेन सेव्याया अपि निद्राया नाशस्य। टीकायां प्रभातादाविति–अत्र आदिशब्देन वार्धक्यं ग्राह्यम्। कालस्य नित्यावस्थिकभेदेन द्विविधत्वात्। व्याधिः–शूलादिः। व्याधिशब्देनानिलपित्तवृद्धौ लब्धायामपि पुनस्तद्ग्रहणं विशेषेण निद्रापहारकत्वप्रतिपादनार्थम्। टीकायां क्षयो धातूनामिति–अत्र क्षयशब्देन केवलं धातुक्षयमेवाहेन्दुः, परं चात्र विशेषेण श्लेष्मक्षयोऽभिप्रेतः, निद्रायाः श्लेष्म एव विशेषतः कारणत्वात् ( अ. सं. सू. ९ ७४१, ७५३ ), 'एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात्' ( सू. ७-६३ ) इति हृदयपाठाच्च। अत्र चरकः–'कार्यं कालो विकारश्च प्रकृतिर्वायुरेव च' ( च. सू. २१.५७ ) कार्यम्–क्रियासक्तो न निद्रां याति। प्रकृतिः–स्वभावः। वायुः–वायुप्रकृतिरेव, समावस्थस्य वायोर्निद्रानाशकत्वाभावात्। विषमस्य वायोश्च विकारपदेनैव लाभाच्च। सुश्रुतेऽपि—'निद्रानाशोऽनिलात्पित्तान्मनस्तापात्क्षयादपि। संभवत्यभिघाताच्च प्रत्यनीकैश्च शाम्यति' ( शा. ४. ४२ ) इति ७५५.

७० निद्रानाशाज्जायमाना रोगाः।

**७५६–निद्रानाशादङ्गमर्दशिरोगौरवजृम्भिकाः।**
**जाड्यग्लानिभ्रमापक्तितन्द्रारोगाश्च वातजाः ७४**

७५६–तस्याश्च सम्यङ्निद्राया नाशादङ्गमर्दाद्युद्भवः ७५६

**टिप्पणी**—निद्रेति–निद्रानाशादङ्गमर्दादयो वातोत्थाश्च रोगाः स्युः। जाड्यम्–ज्ञानभ्रंशः, अपक्तिः–आहारस्याविपाकः। वातजा रोगाः–आक्षेपकादयः ७५६

७१ संज्ञापहायास्तंद्राया लक्षणं संप्राप्तिश्च।

**७५७–कफोऽल्पो वायुनोद्भूतो धमनीः सन्निरुध्य तु।**
**कुर्यात्संज्ञापहां तन्द्रां दारुणां मोहकारिणीम् ७५**
**उन्मीलितविनिर्भुग्ने परिवर्तिततारके।**
**भवतस्तत्र नयने स्रुते लुलितपक्ष्मणी ७६**

७५७–कफोऽल्पः इत्यादि सुबोधम् ७५७

**टिप्पणी**—कफेत्यादि–अत्र 'कफोल्बणो वायुनोद्भूतः–' इति गूढार्थदीपिकोद्धृतः पाठः ( शार्ङ्गः १.६.२५ ) क. च पुस्तकयोस्तु 'कफोल्पो वायुना...साध्या ततः परम्' इति ग्रन्थो नैवोपलभ्यते। वङ्गसेनेन त्वयं विषयो भङ्ग्यन्तरेण संनिपातज्वरे प्रोक्तः ( ज्वराधिकारे ४८४–५०४ )। इतरत्रापि संनिपाते तन्द्रां बभाषिरे शास्त्रकाराः ( अ. सं. नि. २, च. चि. ३.९६,१०५., सु. उ. ३९.३५ ) तन्द्रालक्षणं सुश्रुते यथा-इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृंभणं क्लमः। निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत्' (शा. ४.४९ ) इति। अस्यार्थः–' इन्द्रियार्थाः शब्दादयः, तेषामसंप्राप्तिः–अग्रहणम्। निद्रार्तस्येव निद्रायुक्तस्येव। परं निद्रायां प्रबोधितस्य क्लमाभावः, तन्द्रायां तु प्रबोधितोऽपि क्लाम्यति। अत एवात्र क्लमग्रहणम्' इति डल्हणः। तथा च शार्ङ्गधरसंहितायाम्–तमःकफाभ्यां निद्रा स्यान्मूर्च्छा पित्ततमो' भवा। रजःपित्तानिलैर्भ्रान्तिस्तन्द्रा श्लेष्मतमोनिलैः' ( १.६.२४ ) इति 'इन्द्रियाणां च मनसो मोहस्तन्द्रेति कथ्यते' इति च ग्रन्थान्तरे ( शार्ङ्ग १.६–२४ गूढार्थदीपिकायाम् ) भवत इति–अत्र 'भवतस्तत्र नयने लुलिते चलपक्ष्मणी' इति पाठान्तरम् ७५७

७२ तंद्रायाः साध्यासाध्यत्वम्।

**७५८–अर्धत्रिरात्रात्सा साध्या न सा साध्या ततःपरम् ७७**

**टिप्पणी**—अर्धेति–अत्र 'अर्वाक् त्रिरात्रात्साध्या सा न साध्या तु ततः परम्' इति पाठान्तरम् ७५८

७३ सात्म्यनिद्रासेवनाविधिः।

**७५९–यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ७८**

७५९–(अतः) कारणात् कालानतिक्रमेण रात्रौ निद्रां सेवेत यादृशी सात्म्या ७५९

**टिप्पणी**—असम्यग्योगं निषिध्य सम्यग्योगं विधत्ते–यथा कालमिति। निद्रां रात्रौ सेवेत, न दिवा। रात्रावपि यथाकालम्–प्रवृत्तिकालानतिक्रमेण, यस्य यस्मिन्रात्रिविभागे निद्रा प्रवर्तते स तस्मिन्नेव सेवेत्यर्थः। सात्म्यतः–यामद्वययामत्रयादिसात्म्यानुरोधेन ७५९

७४ असात्म्याज्जागरात्प्रातः स्वापविधिः।

**७६०–असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान् ७९**

७६०–असात्म्ये जागरणे प्रवृत्ते प्रातर्दिवाऽप्यर्धं जागरणस्य स्वप्यात्। तेनैतदुक्तं भवति–**यस्य रात्रौ यामद्वयं जागरणं प्रवृत्तं तेन दिवा प्रभाते याम एकः स्वप्तव्यः अभुक्तवता** ७६०

**टिप्पणी**—रात्रावनिद्रितस्य दिवा स्वप्नं विधत्ते–असात्म्यादिति। प्रातः–पूर्वाह्णे स्वप्यात्। अभुक्तवान्–अकृतभोजनः। भुक्तवतां दिवा स्वापोऽत्यन्तकफवृद्ध्याऽग्निं हन्ति, अभुक्तवतां तु संधुक्षयति। आसात्म्याज्जागरादित्युक्तम्। तेनैतदुक्तं भवति–सात्म्यश्चेद्रात्रिजागरस्तदा प्रातर्नैव स्वप्यादिति। अर्धमित्यसात्म्यजागरजनितदोषदोषनिवर्तकनिद्रापर्याप्तकालोपलक्षणम्। अत एव खारणादिः–'असुप्तानां तथा रात्रौ तन्मात्रं स्वपनं दिवा' इति। भेडोऽपि–'रात्रौ स्वप्यान्न यामांस्त्रींस्तान्स्वप्याद्द्विर्दिवा नरः प्रतदप्याहुरारोग्यं नात्र दोषोऽस्ति कश्चन' इति हेमाद्रिः ७६०

५० 'ऊजा:_। यथा का'-क. च.

७५ मन्दनिद्राप्रतीकारोपायाः

७६१–शीलयेन्मन्दनिद्रस्तु क्षीरमिक्षुरसं रसान्।[51]
आनूपौदकमांसानां भक्ष्यान् गौडिकपैष्टिकान् ८०
शालीन्मद्यानि मद्यांश्च किलाटान् माहिषं दधि
अभ्यङ्गोद्वर्तनस्नानमूर्द्धश्रवणपूरणम् ८१
चक्षुषस्तर्पणं लेपः शिरसो वदनस्य च ॥[52]
प्रवाते सुरभौ देशे सुखां शय्यां यथोचिते ८२
संवाहनं स्पर्शसुखं चित्तज्ञैरनुजीविभिः।
सर्पिः क्षीरानुपानं च जीवनीयैः शृतं पिबेत्[53] ८३
कान्ताबाहुलताश्लेषो[54] निर्वृतिः कृतकृत्यता।
मनोनुकूला विषयाः कामं निद्रासुखप्रदाः ८४

७६१–यस्तु विरेकादिकारणेन वातकोपेन मन्दनिद्रः क्षीरादीञ्छीलयेत्। तथाऽऽनूपानामौदकादीनां च मांसानां सम्बन्धिनो रसान् भक्ष्यांश्च गुडसंस्कृतान् पिष्टशालिकृतांश्च, तथा शालियोनीनि मद्यानि। किंभूतानि? मदकारणशक्तियुक्तानि। अन्येषां 'शालिमद्यानि माषांश्च' इति पाठः। मूर्ध्नः–शिरसस्तर्पणं स्नेहपूरणम्। तच्च वक्ष्यते। **शिरसो वदनस्य च** सुस्निग्धैर्लेपः। **प्रवाते** वातसंयोगे देशे। **संवाहनं** मर्दनम्। किंभूतम्? **स्पर्शसुखकरं** न पीडाकरमित्यर्थः। केन कार्यम्? **चित्तज्ञैरनुजीविभिः** तथा **जीवनीयैः** औषधैः **शृतं** पक्वं **सर्पिः पिबेत्** तदनु च क्षीरं केवलमेव। कान्ताबाहुलतेत्यादि सुबोधम् ७६१

**टिप्पणी**—मन्दनिद्र इति–मन्दा मूढा–स्वकालानभिज्ञा इत्यर्थः। क्षीरमिति–अत्र विशेषतो माहिषं क्षीरमेव ग्राह्यम्। यथाह चरकः–' महिषीणां गुरुतरं गव्याच्छीततरं पयः। स्नेहान्यूनमनिद्राय हितमत्यग्नये च तत्' ( सू. २७. २१९ ) इति। ' निद्राकरं शीततरं गव्यास्त्निग्धतरं गुरु ' इति सुश्रुतं ( सू. ४५. ५६ ) ऽपि। मद्यानीति–तदुक्तं प्राक्–' नष्टनिद्रातिनिद्रेभ्यो हितम्–' ( अ. सं. सू. ६. २५५ प्रभा ) किलाटानीति–' नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तो किलाटकः ' इति च ग्रन्थान्तरे ( अ. सं. सू. ६. २२० प्रभा ) ' गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः ' ( सु. सू. ४५. ९१ ) इति। अभ्यङ्गेत्यादि। अभ्यङ्गः–पादाभ्यङ्गः। मूर्धपूरणम्–मूर्धतैलम् (अ. सं. सू. ३१ ) कर्णपूरणम्–कर्णतर्पणम् ( अ. सं. सू. ३१ ), चक्षुपरतर्पणम्–नेत्रतर्पणम् ( अ. सं. सू.३३ ) ७६१

७६ सुखनिद्रायाः कारणानि।

७६२–ब्रह्मचर्यरतेर्ग्राम्यसुखनिःस्पृहचेतसः।
निद्रा सन्तोषतृप्तस्य[55] स्वं कालं नातिवर्तते॥ ८५

**टिप्पणी**—ब्रह्मचर्येत्यादि–ब्रह्मचर्यरतेः–ब्रह्मचर्यासक्तस्य ब्रह्मचर्यरतस्याप्यनुरागतो मैथुनाभिलाषो निद्रां नाशयेदित्याह–ग्राम्येति। ग्राम्यसुखम्–संभोगः। तत्र निःस्पृहम्, ततो निवृत्तं चेतो यस्य सः। संतोषतृप्तस्य यथालाभसंतुष्टस्य,स्वं कालं नातिवर्तते–उचिते एव काले आयातीत्यर्थः ७६२

७७ प्रसक्तनिद्रेण वर्जनीयानि।

७६३–एतान्येव च भूयिष्ठं निद्रालुः परिवर्जयेत् ८६

७६३–एतान्येव च क्षीरादीनि निद्रालुः प्रसक्तनिद्रो भूयिष्ठं बाहुल्येन परिवर्जयेत् ७६३

७८ सप्तविधा निद्रा।

७६४–कालस्वभावामयचित्तदेह-
खेदैः कफागन्तुतमोभवा च।
निद्रा बिभर्ति प्रथमा शरीरं[56]
पाप्माऽन्तगा व्याधिनिमित्तमन्याः[57] ८७

७६४–कालस्वभावादिभिः सप्तविधा निद्रा। तत्र प्रथमा या निद्रा सा **कालस्वभावप्रभवा** शरीरं धारयति। अन्तगा **तमोभवा** पाप्मा दुष्टा। **अन्याः**—शेषा या आमयखेदेन चित्तखेदेन देहखेदेन चामादिना, श्लेष्मप्रभवा, आगन्तुना शस्त्रप्रहरादिना जाता। एताः व्याधीनां निमित्तम् ७६४

**टिप्पणी**—कालस्वभावेत्यादिना निद्राविशेषानाह–(१) कालस्वभावाद्रात्र्यादिकालस्वभावाज्जाता (२) आमयात् व्याधिविशेषाज्जाता (३-४) चित्तदेहखेदान्मनःशरीरश्रमात् जाता (५) कफेन–संज्ञावहस्रोतोरोधकेन प्रवृद्धेन श्लेष्मणा प्राप्ता(६) आगन्तुकारणेन जाता (७) तमसा–तमोगुणोद्रेकेण समागता एवं सप्तविधा निद्रा उच्यते। अत्र चित्तखेदोद्भवा देहखेदोद्भवा चेति द्वयोर्भेदयाग्रहणादेव सप्तविधत्वं भवति। अन्यथा षड्विधत्वमेव। तथा चोक्तं चरकेण–' ( १ ) तमोभवा, ( २ ) श्लेष्मसमुद्भवा च, ( ३ ) मनःशरीरश्रमसंभवा च। ( ४ ) आगन्तुकी ( ५ ) व्याध्यनुवर्तिनी च, ( ६ ) रात्रिस्वभावप्रभवा च निद्रा ' ( सू. २१. ५८. ) इति। प्रथमेति–अत्र चरकः–' रात्रिस्वभावप्रभवा मता या तां भूतधात्रीं प्रवदन्ति तज्ज्ञाः' ( सू. २१, ५९ ) अन्तगेति–अन्तगा–तमोभवा। अत्र चरकः–' तमोभवामाहुरघस्य मूलम् ' ( सू. २१, ५९ ) इति। सुश्रुते तु–निद्रां तु वैष्णवीं पाप्मानमुपदिशन्ति। सा स्वभावत एव सर्वप्राणिनोऽभिस्पृशति। तत्र यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्माप्रतिपद्यते तदा तामसी नाम निद्रा भवत्यनवबोधिनी सा प्रलयकाले। तमोभूयिष्ठानामहःसु निशासु च भवति। रजोभूयिष्ठानामनिमित्तम्, सत्त्वभूयिष्ठानामर्धरात्रे,सा स्वाभाविकी क्षपितश्लेष्मणामनिलबहुलानां मनःशरीरतापवतां च नैव सा वैकारिकी भवति। ( शा. ४, ३३ ) इति। एतेन सुश्रुतवाक्येन तस्य ( १ ) तामसी ( २ ) स्वाभाविकी, ( ३ ) वैकारिकी चेति भेदैस्त्रिविधैव निद्राऽभिप्रेतेति ज्ञायते ७६४

५१ 'क्षुरसान् रसान्। आनू'–क., 'क्षुरसं रसम्। आनू'–ख. ५२ 'र्पणं लेपं शि'–क. ख. ५३ 'त्। एता'–क. च. ५४ 'षो निर्वृत्तिः कृ'–ख. ५५ 'स्य स्वकालं ना'–ख. ५६ 'रं पापात्मिका व्या'–ख. ५७ 'त्तमन्या। ग्रा'–क. ख.

## ( अब्रह्मचर्यप्रकरणम् )

७९ संभोगे निषिद्धानि ।

**७६५-ग्राम्यधर्मप्रवृत्तौ तु रजस्वलामनिष्टामनिष्टाचारामशस्तामतिस्थूलामतिकृशां गर्भिणीं सूतिकामनुर्त्तानां विकृताङ्गीं गणिकामप्रजसं दुष्टयोनिमन्ययोनिमन्यस्त्रियं विशेषाच्च वयोवर्णवृद्धां सगोत्रां गुरुमित्रबन्धुभृत्यपत्नीं वर्णिनीं तथा चैत्यचत्वरचतुष्पथोपवनश्मशानाघातसलिलौषधिद्विजगुरुसुरनृपालयेष्वहनि गोसर्गे मध्यान्दिनेऽर्धरात्रौ पर्वदिनेष्वनङ्गे पिपासुरप्रणीतसङ्कल्पो वा न गच्छेत् ८८**

७६५-स्वप्नमुक्त्वा क्रमप्राप्तमब्रह्मचर्यमुच्यते-ग्राम्यधर्मेति। अब्रह्मचर्यं स्त्रीगमनम्, ग्राम्यधर्मप्रवृत्तिरिति पर्यायाः। तस्यां तु ग्राम्यधर्मप्रवृत्तौ प्रकृतायां रजस्वलात्वादियुक्तां नारीं न गच्छेत्। चैत्यादिषु प्रदेशेषु दिवसगोसर्गादिषु च कालेषु । पिपासाद्यवस्थासु च। रजस्वला-उदक्या । अनिष्टाम् रूपादिना अप्रियाम्। अनिष्टाचारा-या प्रियापि तद्द्विष्टमाचरति। अशस्ताम् हीनाकृतिजन्मलक्षणाम्। विकृताङ्गां-कौब्जवामनत्वादिजन्मयुक्ताम्। गणिकां-वेश्याम्। अप्रजसं वंध्याम्। यस्या वा प्रजा जातापि न जीवति। दुष्टा व्याधिभिर्योनिर्यस्याः।अन्ययोनिर्वडवागर्दभादिः।अन्यस्त्री-परस्त्री, विशेषाच्च वयोवर्णवृद्धां न गच्छेत्। वर्णवृद्धा-जात्यधिका। वयोवृद्धा-प्रसिद्धा। सगोत्रामेकगोत्रां तथा-गुर्वादिपत्नीं च विशेषाद्वर्जयेत्। चैत्यः-प्रसिद्धः। ग्रामात् बहिर्महावृक्षश्च चैत्यः, चत्वरः-त्रिपथम् आघातनं-सूनादिनिग्रहस्थानम्। सलिलादीनामालयेनाश्रयवाचिना संबन्धः। सलिलालयो-नदीतटाकादिः। औषधालयः-तत्स्थानं पर्वतवेश्मादि। यत्र बहून्यौषधानि भवन्ति। गोसर्गो-रात्रिक्षयः। पर्वदिनं चतुर्थी, षष्ठी, अष्टमी, अमावास्या च। अनङ्गं योन्यभिधानादङ्गादन्यत् पाण्यूर्वादि। अप्रणीतसङ्कल्पोऽनुत्पन्नतदिच्छः ७६५

**टिप्पणी**—ग्राम्यधर्मेत्यादि-एतत्प्रकरणविशेषार्थजिज्ञासुभिः च. सू. ८. २२. सु. चि. २४. ११०-१३२. अ. सं. शा. अ. १. च. चि. २. अ. सं. उ. अ. ५०, सु. शा. अ. २, कामसूत्रम्, सु. चि. २६. इत्यादयः संदर्भा द्रष्टव्याः ७६५

८० अतिव्यायतादिस्त्रीनिषेधः ।

**७६६-विशेषेण चातिव्यायतां गर्भिणीं नवप्रसूतामनृतुमतीं संवृतयोनिं च ८९**

७६६-अतिव्यायतत्वादियुक्तां तु विशेषेण न योजयेत् अत्रानृतुमत्यसञ्जातार्तवा बाला। ऋतुमंतीमिति केचित् पठन्ति। अतिव्यायता-महाभोगशरीरा ७६६

८१ विपरीतव्यवायनिषेधः ।

**७६७-न च विपरीतव्यवाये योजयेत् ९०**

७६७-न विपरीतव्यवाये च स्त्रियं कांचन योजयेत्। विपरीतव्यवायः स्त्रियाः पुरुषकर्म ७६७

८२ मूर्धाभिघातनिषेधः ।

**७६८-मूर्धाभिघातं च परिहरेत् ९१**

७६८-मैथुने मूर्ध्नः शिरसोऽभिघातं ताडनं वर्जयेत्। तथा वक्षःप्रभृतीनां देशाद्यपेक्षया च परिग्रहः ७६८

८३ निषेकाभिमुखशुक्रधारणनिषेधः ।

**७६९-न च निषेकाभिमुखं शुक्रं धारयेत् ९२**

८४ व्यावायमात्रा।

**७७०-मनःशरीरास्थितिमात्रमेव व्यवायं सेवेत। नैव तत्परः स्यादिति ९३**

७७०-यावता व्यवायेन मनस औत्सुक्यं शरीरे च शुक्रक्षुत्यादिकं न पश्यति। तावन्तमेव व्यवायं सेवेत। नैव मैथुनपरः स्यादिति ७७०

८५ तन्त्ररीतिः ।

**७७१-भवति चात्र श्लोकः- ॥ ९४**

७७१-भवति चात्रेति शैली ७७१

८६ संभोगविधिः ।

**७७२-विस्रब्धहृष्टो रहसि तत्कामस्तरुणः पुमान्।**
**समस्थिताङ्गः सुरभिर्भुक्तमूत्रादिरव्यथः॥ ९५**
**नानाशितो नात्याशितो वृष्याणां तर्पितस्त्र्यहम्।**
**नारीं नारीगुणैर्युक्तां सहपूर्वगुणां व्रजेत्॥ ९६**

७७२-विस्रम्भादियुक्तो नारीं व्रजेत्। विस्रब्धः-स्वस्थमनाः रहस्येकान्ते। तत्कामो गम्यमानयोषित्कामः। गमनदिवसात् पूर्वं दिवसत्रयं वृष्यैराहारैः कृततृप्तिः। किंभूतां नारीं नारीगुणैर्वाजीकरणाध्यायोक्तैर्युक्ताम्। तत्र हि-'तस्माद्या यस्य हृदयम्' इत्यादिना वक्ष्यति। पूर्वोक्तैश्च गुणैर्विस्रम्भादिभिः पुरुषोक्तैः। केवलं लिङ्गवैपरीत्यम् ७७२

**टिप्पणी**—विस्रब्धेत्यादि। नारीगुणैरिति-अ. सं. उ. ५० इत्यत्र 'तस्माद्या यस्य हृदयं विशतीव वराङ्गना' इत्यादिनोपक्रम्य 'कान्तानुवृत्तिपरमा सा स्त्री वृष्यतमा मता' इत्यन्तेन ग्रन्थेन प्रोक्तैः स्त्रीगुणैर्युक्तामिति भावः। तथा च वयोरूपगुणशीलकुलानुरूप्यमपि स्त्रीणां गुणा वेदितव्याः ७७२

८७ ऋतुविशेषेण संभोगे नियमः ।

**७७३-त्र्यहाद्वसन्ते तस्यान्ते पक्षात्तद्वद्घनोदये।**
**सेवेत कामतः कामं हेमन्ते शिशिरे बली॥ ९७**

७७३-वसन्ते त्र्यहान्नारीं व्रजेत्। तस्य वसन्तस्यान्ते ग्रीष्मे पक्षात्तद्वत् घनोदये वर्षासु हेमन्ते शिशिरे च बली बलवान् कामतो यथेच्छं सेवेत्। शरदि त्वनुक्तावपि वसन्तसदृश-

---

५८ °त्तानां विकृताङ्गां-ग. ५९ °नायतनस°-क. च. ६० °षधिद्वि°-ख. ६१ °रात्रौ पर्वेष्व°-ग., °रात्रे प°-क. ख. ६२ °तिव्यवायतां ग°-क. ख. च. ६३ °तामृतुम°-क. ख. च. ६४ °रयेदिति। म°-क. ख. ६५ :°त। न च त°-क. ख. ६६ चात्र। वि°-क. ख. ६७ तस्य्यहात्। ना°-क. ख. ६८ त्र्यहाद्वसन्त शरदोः प°-क. ६९ °त सेवतः का°-ग.

बलादिमत्त्वाद्वह्नादेव नारीं व्रजेत्। तथा च श्रीवाहटग्रन्थ एव–' ह्नाद्वसन्तशरदोः ' इति ७७३

**टिप्पणी**—ह्नाद्वसन्त इति–अत्र सुश्रुतः—' त्रिभिस्त्रिभिरहोभिर्वा समीयात्प्रमदां नरः। सर्वेष्वृतुषु, घर्मेषु पक्षात्पक्षाद्व्रजेद्बुधः ' ( चि. २४. ११३ ), भेडसंहितायां च–ऋतावृतौ यथाकालं मैथुनं तु समाचरेत् । वर्षासु नवरात्रात्तु दशरात्राच्छरद्यपि । पञ्चाहाच्छीतसमये सप्ताहाच्छिशिरे तथा। पक्षाद्वसन्ते, ग्रीष्मे तु मासि मासि समाचरेत्। निदाघे पश्चिमे मासि मैथुनं न समाचरेत् ' इति ७७३

८८ ग्राम्यधर्मोत्तरं कृत्यम्।

**७७४–स्नानाङ्गरागव्यजनेन्दुपाद-**
**मांसासवक्षीररसान् रसालाम् ॥**
**भक्ष्यान् सिताढ्यान् सलिलं सुशीतं**
**सेवेत निद्रां च रतान्ततान्तः ९८**

७७४–रतान्ते च तान्तः क्लान्तः स्नानादीन् सेवेत् ७७४

**टिप्पणी**—स्नानाङ्गेत्यादि–अत्र सुश्रुतः- 'भक्ष्याः सशर्कराः क्षीरं ससितं रस एव च। स्नानं सव्यजनं स्वप्नो व्यवायान्ते हितानि तु ' ( चि. २४. १३२ ) चरके च–' गत्वा स्नात्वा पयः पीत्वा रसं वाऽनुशयीत ना। तथाऽस्याप्यायते भूयः शुक्रं च बलमेव च ' ( चि. २ पा. ४. ३८ ) ७७४.

८९ ग्राम्यधर्मोत्तरं स्नानादिसेवनस्य प्रयोजनम्

**७७५–स्त्रीसंसर्गाद्धि सद्यः स्यात् क्लीबता बलिनामपि**
**एवं चाप्याय्यते शीघ्रं तेषां शुक्रं च धाम च ॥ ९९**

७७५–किमर्थमेतत् कुर्यादत आह–स्त्रीसंसर्गादिति। बलिनामपि स्त्रीसंसर्गे तत्कालं क्लैब्यमवश्यमेव भवति। अनेन तु स्नानादिना कृतेन शीघ्रमेव शुक्रमाप्याय्यते ७७५

९० अविधिग्राम्यधर्मसेवाया दोषाः

**७७६–दृष्ट्यायुरोजःशुक्राणां क्षयं मेढ्राश्रयान् गदान्।**
**वायोः कोपमधर्मं च मूढः प्राप्नोत्यतोऽन्यथा १००**

७७६–अतो यथोक्ताद्विधानादन्येन नारीं गच्छन्मूढो दृष्ट्यादिक्षयं मेढ्ररोगान् वातकोपमधर्मं च प्राप्नोति यथासंभवम् ७७६

**७७७–उत्तानो वेगरोधी वा वृद्धिमेहाश्मशर्कराः।**
**तिमिरादिगदोत्पत्तिं मूर्द्धाघाहननाद्ध्रुवम् १०१**

७७७–तथा स्त्रियः पुरुषायिते–पुरुष उत्तानो गच्छन् वायोर्वैपरीत्येनाशु शुक्रनिर्गमनाद्वृध्यादीन् प्राप्नोति। यश्चायथापि शुक्रवेगरोधी सोऽपि । वृद्धिरान्त्रवृद्धिः । वक्षोमूर्द्धाघाहननात्तिमिरादीनूर्ध्वजत्रुरोगानुरसः शूलादींश्च प्राप्नोति । ध्रुवमावश्यके ७७७

**टिप्पणी**—उत्तान इति–अत्र सुश्रुतः–' उत्ताने च भवेच्छीघ्रं शुक्राश्मर्यास्तु संभवः ' ( चि. २४. १२९ ) ' उक्तं च रसायुर्वेदे–विपरीतरतप्राप्त्या लिङ्गे दाहः प्रजायते। कार्श्यं च सर्वगात्रेषु, तत्प्रतीकार उच्यते–प्रत्यग्बस्तिं निबध्यैव लिङ्गाच्चूषणमाचरेत् । क्षरणे तस्य संजाते स्नापयेच्छीतलाम्बुना। कोलनिर्यासमादाय पाययेत्तं सशर्करम् । शाल्मलीदूर्वयोर्मूलरसं पायसमाशयेत् ' इति हेमाद्रिः ( अ. हृ. सू. ७. ७४ ) ७७७.

**७७८–भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयः।**
**अपर्वमरणं च स्याद्विशेषेणातिमैथुनात् ॥ १०२**

७७८–अतिमैथुनाद्भ्रमाद्युत्पत्तिः । अपर्वमरणमकालमरणम्। विशेषेणोर्वोर्बलहानिः, ऊरुदौर्बल्यम् ७७८

९१ संभोगस्य वयोनुरोधेन कालः

**७७९–नचोनः षोडशाद्वर्षात् सप्ततेः परतो न च।**
**आयुष्कामो नरः स्त्रीभिः संयोगं गन्तुमर्हति १०३**

७७९–आयुर्यो नरः कामयते स षोडशाद्वर्षादधः सप्ततेरूर्ध्वं च वर्षेषु स्त्रीभिः संसर्गं गन्तुं नार्हति। यतः षोडशादूनवर्षः ७७९

**टिप्पणी**—नचो न इति–'नर्ते वै षोडशाद्वर्षात्सप्तत्याः परतो न च ' ( च. चि. २. पा. ४. ४० ) इति चरकपाठः ७७९

९२ बाल्यावस्थायां संभोगे हानिः।

**७८०–अतिबालो ह्यसंपूर्णसर्वधातुः स्त्रियं व्रजन्**
**उपतप्येत सहसा तटाकमिव काजलम् ॥ १०४**

७८०–अतिबालः असम्पूर्णधातुः सहसा स्त्रियो गच्छन्नुपतप्येत यथा तटाकं काजलं स्तोकजलं झटित्येव सूर्यसंतापादिभिरुपतप्यते शुष्यति तथा ७८०

**टिप्पणी**—अतिबाल-इति–अतिबालः–षोडशवर्षादवरः। काजलम्–कुजलम्–अल्पजलम्, तटाकम्–सरः । ' उपशुष्येत सहसा ' इति चरकः ( चि.२. पा.४.४१ ) ७८०.

९३ वार्धके स्त्रीगमने दोषः ।

**७८१–शुष्कं रूक्षं यथा काष्ठं जन्तुजग्धं विजर्जरम्।**
**स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियं व्रजन् १०५**

७८१–सप्ततेरूर्ध्वं वृद्धः स्त्रियो व्रजन् आशु विशीर्येत झटिति नश्येत्। यथा जन्तुभिः कृमिभिर्भक्षितं काष्ठं शुष्कं रूक्षं विजर्जरमतिपुराणत्वात्स्थैर्यं स्पृष्टं नश्यतीति ७८२

**टिप्पणी**—शुष्कमिति–'स्त्रियो व्रजन्' इति चरकपाठः ( चि. २. पा. ४. ४१ ) ७८१

९५ शुक्ररक्षणोपदेशः।

**७८२–कायस्य तेजः परमं हि शुक्र-**
**माहारसारादपि सारभूतम् ॥**
**जितात्मना तत् परिरक्षणीयं**
**ततो वपुः सन्ततिरप्युदारा ॥**

७८२–एवं स्थिते जितात्मना जितेन्द्रियेण सता शुक्रं परिरक्षणीयम्। यतः कायस्य शरीरस्य शुक्रं श्रेष्ठं तेजः।

---

७० °ङ्गराजव्य°–च. ७१ एवं त्वाप्याय°–ग.; एवं त्वाप्याय्यते शी°–ख. ७२ न चर्ते षो°–क. ख. ७३ °योगं कर्तुम –क. ख. च. ७४ स्त्रियो व्र°–क. ७५ सा तडागमि°–क. ख. च ७६ वृ. स्त्रियो व्र°–क.

किंभूतं तत् आहारस्य साराद्सारख्यादपि सारभूतं तस्माद्रक्षणीयम् । अतश्च रक्षणीयम्-यतस्ततः शुक्राद्रक्षिताद्वपुः शरीरं सतेजस्त्वादुदारमुत्कृष्टं भवति ७८२

९६ तदात्व सुखकरणां भावनां सेवने दाक्ष्यम् ।

**७८३-अप्रमत्तो भजेद्भावांस्तदात्वसुखसंज्ञकान्**
**सुखोदर्केषु सज्जेत देहस्यैतदलं हितम् । १०७**

७८३-इदं कर्तव्यताप्रसङ्गेनोच्यते । तदात्वसुखसंज्ञकान् भावानप्रमत्तो भजेत् । तदात्वसुखसंज्ञकान् ये तदात्वे दृष्ट एव तत्कालं सुखफला योषिदाहारदयस्ते भावाः अप्रमत्तादिना सता सेव्याः । यतो दृष्टादृष्टयोर्दुःखकर्तृत्वेन न विरुध्यन्ते ये तदात्वसुखास्तेषां वस्तुतो दुःखानामेव सुखबुद्धिर्लोकस्येति ज्ञापयति संज्ञाग्रहणेन । तथा सुखोदर्केषु सद्योदुःखदेष्वपि अदृष्टसुखफलेषु सज्जेत तात्पर्यमाश्रयेत तपोदानादिषु । एतदुभयं देहस्य हितत्वे पर्याप्तम्

**टिप्पणी**—अप्रमत्तः-सावधानः, विवेकी सन्निति भावः । तदात्वासुखसंज्ञकान्-तात्कालिकमात्रसुखसंज्ञान् आपातरमणीयानिति भावः । भावान् आहारविहारात्मकान् भजेत् सेवेत । सुखोदर्केषु परिणामसुखेष्वित्यर्थः । अत्र तदात्वसुखानिति वक्तव्ये सुखसंज्ञकान् इति,तदात्वसुखस्याप्यपथ्यस्य दुःखानुबन्धसुखकर्तृतया परमार्थत स्तदात्वेऽप्यसुखत्वमिति संसूचनार्थम् । सुखसंज्ञकमारोग्यम् ( च. सू. ९.४ ) इत्यत्र यथा । अत्र चरकः-' तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते । रज्यते न तु विज्ञाता विज्ञाने ह्यमलीकृते । न रागान्नाप्यविज्ञानादाहारानुपयोजयेत् । परीक्ष्य हितमश्नीयाद्देहो ह्याहारासंभवः' ( च. सू. २८. ४०-४१ ) इति ७८३

९७ हिताहारस्यापि रोगोद्भवे कारणानि ।

**७८४-प्रज्ञापराधोऽसात्म्यार्थसंयोगः कालवैकृतम्**
**हितेऽपि रतमाहारे योजयन्त्यामयैर्नरम् ॥ १०८**

७८४-तस्मात् प्रज्ञापराधादि नरमामयैर्व्याधिभिर्योजयति । प्रज्ञापराधो दिनचर्योक्ताचारव्यतिक्रमः, तथासात्म्यैरनुचितैः शब्दादिभिरिन्द्रियार्थैः संयोगः । कालस्य च विकृतत्वं विषमत्वं वा यथाप्राप्तत्वाद्विपरीतस्वरूपत्वम् । किंभूतं नरमित्याह हितेऽप्याहारे रतमहितस्य त्वाहारस्य रोगकृत्त्वं स्थितमेवेत्यपिशब्दस्यार्थः ७८४

**टिप्पणी**—प्रज्ञापराध इति-प्रज्ञापराधो मिथ्याज्ञानादिः । तथा च चरकः-'धीधृतिस्मृतिविभ्रष्टः कर्म यत्कुरुतेऽशुभम् । प्रज्ञापराधं तं विद्यात्सर्वदोषप्रकोपणम् । उदीरणं गतिमतामुदीर्णानां च निग्रहः । सेवनं साहसानां च नारीणां चातिसेवनम् । कर्मकालातिपातश्च मिथ्यारम्भश्च कर्मणाम् । विनयाचारलोपश्च पूज्यानां चाभिधर्षणम् । ज्ञातानां स्वयमर्थानामहितानां निषेवणम् । परमौन्मादिकानां च प्रत्ययानां निषेवणम् । अकालदेशसंचारो मैत्री संक्लिष्टकर्मभिः । इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्जनम् । ईर्ष्यामानभयक्रोधलोभमोहमदभ्रमाः । तज्जं वा कर्म यत्क्लिष्टं क्लिष्टं यद्देहकर्म च । यच्चान्यदीदृशं कर्म रजोमोहसमुत्थितम् । प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम् । बुद्ध्या विषमविज्ञानं वैषमं च प्रवर्तनम् । प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत्' ( च. शा. १. १०२-१०९ ) इति । असात्म्यार्थसंयोग इति-असात्म्याः अयोगातियोगमिथ्यायोगयुक्तत्वादनुपश्यकराः अर्थाः शब्दस्पर्शरूपरसगन्धाः, तेषां संयोगः संबंधः-असात्म्यार्थसंयोगः । शब्दस्पर्शरूपरसगन्धानां मिथ्यादिसेवनमितियावत् । तथाहि-(१) परुषेष्टविनाशादिशब्दश्रवणं मिथ्यायोगः । पटहादीनामतिशब्दश्रवणमतियोगः । शब्दस्य सर्वशोऽश्रवणमयोगः । (२) अभिघाताशुचिसंस्पर्शो मिथ्यायोगः । अतिमात्रशीतोष्णादीनां स्पृश्यानां स्नानाभ्यङ्गादीनां चातिसेवनमतियोगः । तथा तेषामेव सर्वशोऽसेवनमयोगः । (३) सूक्ष्मादिदर्शनं मिथ्यायोगः, अतितेजसां सूर्यविद्युदग्न्यादीनामतिदर्शनमतियोगः, सर्वथाऽदर्शनमयोगः, (४) अयोग्यरसानामादानं मिथ्यायोगः, रसानामत्यादानमतियोगः । रसानामनादानमयोगः । (५) पूत्याघ्राणं मिथ्यायोगः, अतितीक्ष्णादिगन्धाघ्राणमतियोगः, सर्वशोऽघ्राणमयोगः । असात्म्यार्थसंयोगपदस्थार्थशब्देन कायिकवाचिकमानसिकभेदेन त्रिविधं कर्मापि सूच्यते । तेनैतेषामपि कर्मणां यथायथं मिथ्यातियोगायोगाः वेदितव्याः । ते च यथा (१) कायिककर्मणो-व्यायामादेर्निषिद्धकालावस्थादेशेषु सेवनं मिथ्यायोगः, अतिसेवनमतियोगः, सर्वशोऽसेवनमयोगः, (२) वाचिककर्मणः परुषानृतादिवचनं मिथ्यायोगः, अतिवचनादिकश्चातियोगः, सर्वशो मौनमयोगः, (३) मानसकर्मणः शोकादिचिन्तनं मिथ्यायोगः, अतिमात्रचिन्तनादिकमतियोगः, सर्वशोऽचिन्तनमयोगः, (च. शा. १. ११८-१२६) । कालवैकृतमिति-कालवैकृतम् कालवैषम्यम् । यत्र यथर्तुलिङ्गविपरीतलिङ्गोऽतिलिङ्गो हीनलिङ्गो वा कालो भवति । तदहितं नराणां रोगहेतु । ननु चरकेण-'धीधृतिस्मृतिविभ्रंशः संप्राप्तिः कालकर्मणाम् । असात्म्यार्थागमश्चेतिज्ञातव्या दुःखहेतवः' ( शा. १. ९८ ) इत्यनेन चतुर्थं पूर्वकर्मापि स्वीकृतम् । तदिह वाग्भटेन कस्मान्नोपात्तमिति चेन्न । कर्मजव्याधीनां प्रज्ञापराधरा एवान्तर्भूतत्वात् । यदाह चरकः-' प्रज्ञापराधात्संभूते व्याधौ कर्मज आत्मनः । नाभिशंसेद्बुधो देवान्नपितॄन्नापि राक्षसान् । आत्मानमेव मन्येत कर्तारं सुखदुःखयोः' ( नि. ७. २४-२५ ) इति । तथा च वक्ष्यति-'सर्वो वा प्रज्ञापराध एवायं यद्देषामविवर्जनम्' ( अ. सं. सू. २२ ) इति । हितेपीति-अत्र चरकः-' हिताहारोपयोगिनोऽपि दृश्यन्ते व्याधिमन्तः.(च. सू.२८.७.) ७८४

९८ अहितारोपयोगिनोऽप्यारोग्यदर्शने कारणम् ।

**७८५-नापथ्यसेविनं सद्यः प्रबाधन्ते तदा मलाः**
**प्रकोपं प्रतिविघ्नन्ति भिन्नैर्दूष्यादिभिर्यदा । १०९**
**न च सर्वोपचारोऽपि सर्वदा सर्वदोषकृत् ॥**
**न हि सर्वाण्यपथ्यानि तुल्यदोषाणि नैव च ११०**
**सर्वे तुल्यबला दोषा न सर्वाणि वपूंषि च ॥**
**व्याधिक्षमत्वे शक्तानि ॥ १११**

७८५-ननु चैवं हि दृष्टं यथा अपथ्यं सेवितं न च रोग उत्पन्नः । तत् कथमित्युच्यते । अपथ्यसेविनं पुरुषं मला वातादयः सद्य एव तदा न बाधन्ते यदा भिन्नैर्विसदृशैर्दूष्य-

देशादिभिः प्रकोपे विघ्नन्ति। यथा पित्तकोपकारणे आनूपदेशे सेविते झटिति व्याधिर्नोत्पद्यते। यदि तु दूष्यादीनां सादृश्यान्मलानां कोपे विघ्नो न भवति तदावश्यं सद्य एव बाधन्ते। अतश्च सद्यो न बाधन्ते मलाः। यतो न सर्वोपचारोऽपथ्यसेवनं सर्वदैव सर्वदोषकरः। तेनैतदुक्तं भवति–कश्चिदपचारः कदाचिद्दोषविशेषहेतुः। दूष्यादिसादृश्यात्। यतो न हि सर्वाण्यपथ्यानि तुल्यदोषाणि एकदोषहेतूनि। तथा हि—येनापथ्यं श्लेष्मकारणं सेवितं तस्य तस्मिन्नन्नाहाराद्वश्यं तद्विपरीतदोषकारणमपि सम्भवति। येन स न तथा कुप्यति। यतश्च सर्वे दोषा सदृशबलाः। कश्चिद्धीनबलो बलाधिकेन रुद्धकोपो न कुप्यति न च सर्वाणि वपूंषि व्याधिक्षमत्वे शक्तानि। तेनैतदुक्तं भवति–बहुरपि दोषः कुपितो व्याधिक्षमे देहे न लक्ष्यते। पीडाकरणाशक्तत्वात् ७८५

**टिप्पणी**—नापथ्येत्यादि। व्याधिक्षमत्वे शक्तानीति–व्याधिक्षमाक्षमशरीराणां लक्षणं यथा–' शरीराणि चातिस्थूलान्यतिकृशान्यनिविष्टमांसशोणितास्थीनि दुर्बलान्यसात्म्याहारोपचितान्यल्पाहाराण्यल्पसत्त्वानि च भवन्त्यव्याधिसहानि-विपरीतानि पुनर्व्याधिसहानि ' (च. सू. २८. ७) अत्र चरकः–अहिताहारोपयोगिनां पुनः कारणविशेषतो न सद्यो दोषवान्भवत्यपचारः। न हि सर्वाण्यपथ्यानि तुल्यदोषाणि। न च सर्वे दोषास्तुल्यबलाः। न च सर्वाणि शरीराणि व्याधिक्षमत्वे समर्थानि भवन्ति ७८५

९९ अपथ्यस्यापथ्यतमत्वे कारणम्।

**७८६– यतोऽपथ्यं तदेव तु**
**गच्छत्यपथ्यतमतां तुल्यैर्दूष्यादिवर्द्धितम्।**

७८६–तथा तुल्यैर्दूष्यादिभिरुपबृंहितमपथ्यं यतोऽपथ्यतमतां गच्छति बलात्। एतदुक्तं भवति–विसदृशैर्दूष्यादिभिर्युक्तमपथ्यं कदाचिद्दोषकरं न भवति। तुल्याः सदृशदूष्यादयः। यथा श्लेष्मप्रकृतेर्मन्दाग्नेरल्पबलस्य स्वल्पसत्त्वस्य स्निग्धादिसात्म्यस्य स्निग्धगुर्वादिप्रकुपितेन कफेन वसन्ते मेदसो दूषणम्। अत्रैकद्वित्राणां दूष्यादीनां सादृश्यादसादृश्ययोः कार्यकर्तृत्वे गुरुलाघवं कल्पनीयम्॥ ७८६

**टिप्पणी**—यत इत्यादि। अत्र चरकः ' तदेव ह्यपथ्यं देश–काल–संयोग–वीर्य–प्रमाणातियोगाद्भूयस्तरमपथ्यं संपद्यते (च. सू. २८. ७.) इति ७८६

१०० बलवदपथ्येन प्रकुपितानां दोषाणां कष्टतमव्याधिजनकत्वम्।

**७८७–त एव च पुनर्दोषा हेतुभिर्बहुभिश्चिताः**
**मिथो विरुद्धा बलिनो दीर्घकालानुबन्धिनः॥**
**सर्वे समं प्रकुपिताः प्राप्याल्पमपि कारणम्**
**प्राणायतनमाश्रित्य गम्भीराः सर्वमार्गगाः।**
**देहेऽहितोचिते ते स्युश्चिरादप्याशुकारिणः॥**

७८७–त एव वातादयो दोषा ये अपथ्यहेतवस्ते चिरादपि स्वल्पमपि कारणमासाद्यापथ्योचिते देह आशुकारिणो व्याधीनां मारणात्मकेन कर्मणा भवन्ति। किंभूताः? हेतुभिः कारणैः शीतगुर्वादिभिर्बहुभिश्चिताः सञ्चिता मिथः परस्परेण विरुद्धास्तथा बलवन्तो दीर्घकालानुबन्धिनो बहुकालस्थिताः सर्वे च सममेककालं प्रकुपिताः प्राणायतनं प्राणस्थानं हृदयादिकमाश्रित्य प्रकुपिता गम्भीरा अन्तस्सराः सर्वमार्गगा अशेषस्रोतोव्यापिनः ७८७

**टिप्पणी**—त एवेति–अत्र चरकः–' स एव दोषः संसृष्टयोनिर्विरुद्धोपक्रमो गम्भीरानुगतश्चिरस्थितः प्राणायतनसमुत्थो मर्मोपघाती, कष्टतमः, क्षिप्रकारितमश्च संपद्यते' (च. वि. ३. ७.) इति ७८७

१०१ कदाचिदहिताहारादीनामपि सात्म्यत्वम्।

**७८८–अहितान्यपि चान्येषामभ्यासादुपशेरते॥**
**दोषाश्चैषां क्षयं यान्ति कर्मवातातपादिभिः**

७८८–अन्येषां चाहितान्यपि अभ्यासादुपशयवन्ति भवन्ति, उपशयः–सात्म्यं देहसुखकर्तृत्वम्। ननु च तदहितं वातादिकोपेन कथं रोगं न करोति? उच्यते–तेषामहितोचितानां दोषाः कर्मभिर्धावनलंघनादिभिर्वातातपादिभिश्च क्षयमायान्ति। प्रतिदिनं वृद्धाः प्रतिदिनमेव क्षीयन्ते ७८८

## ( जनपदविध्वंसनीयं प्रकरणम्। )

१०२ भिन्नाहारादिमतां बहूनामेकदैवैकरोगोत्पत्तौ हेतुः।

**७८९–भिन्नाहारवयःसात्म्यप्रकृतीनां समं भवेत्।**
**एको विकृतवाय्वादियुगपत्सेवनाद्गदः॥**

७८९–ननु चैवमनन्तरोक्तेन प्रकारेण भिन्नेषु भिन्नबलेषु भिन्नकालेषु च दोषदूष्यादिषु बहूनामेकरोगोत्पत्तिः समकालं दृष्टा, तत् कथमित्युच्यते–भिन्नाहारेत्यादि। भिन्ना विसदृशा आहारादयो येषां ते तथाविधास्तेषां सममेककालं य एको गदः स विकृतानां वाय्वादीनां युगपदेककालं सेवनात् ७८९

**टिप्पणी**–प्रकृत्याहारसात्म्यवयसामसमानत्वात्सर्वेषामेकदैको व्याधिः कथं संभवतीत्याह–भिन्नाहारेत्यादि। वाय्वादिरित्यादिशब्देन जलम्, देशः, कालः इत्येषां ग्रहणम्। (च. वि. ३. ५–६) ७८९

१०३ वातादीनां विकृतौ कारणानि।

**७९०–वातादीनां तु विकृतिर्विकृताद्ग्रहचारतः।**
**भौमान्तरिक्षदिव्येभ्य उत्पातेभ्यश्च जायते॥**

---

७७ °ल्पदोषादिव°–ग. ७८ °मं प्रकुप्यन्ति प्रा°–ख.

७९०–कथं तेषां वातादीनां तथाविधा विकृतिरुच्यते। विकृतात् ग्रहाणां राशिगमनात्। भौमादिभ्यश्चोत्पातेभ्यः। भूमौ जातो भौमः। एवं दिवि स्वर्गेऽन्तरीक्षे च ७९० १७४ जनपदध्वंसकराणां भावानां समुत्पत्तौ सामुदायिकस्य कर्मणः कारणत्वम्।

**७९१–सम्भवः पुनरेतेषां कर्मणः सामुदायिकात्।**

७९१–एतेषां च विकृतग्रहचारभौमोत्पातादीनां सामुदायिकात् पूर्वकृतात्संप्रति कृताच्च मिश्रीभूतात्कर्मणः सम्भवः। पूर्वं कृतेन तस्मिन् काले पुरुषस्य प्राप्तफलेनं, साम्प्रतिकेन च पूज्यपूजाव्यतिक्रमेण च ७९१

१०५ दुष्टवायोर्लक्षणम्।

**७९२–दुष्टो वायुरभिष्यन्दी स्तिमितोऽत्युष्णशीतलः**
**कुण्डली भैरवरवः परुषोऽनार्तवो बली।**
**अन्योन्यव्याहतगतिः पांसुबाष्पविषान्वितः॥**

७९२–ननु दुष्टानां वातादीनां दोषकारणत्वमुक्तम्। के च ते इति न ज्ञायन्ते। अतो लक्षणार्थमुच्यते। दुष्टो वायुरभिष्यन्दी मालिन्येन स्रोतसां स्रावकः। स्तिमितः अवेगवानत्युष्णो भवत्यतिशीतो वा कुण्डल्यावर्तवान् भैरवरवो–भीषणशब्दः। परुषस्तथाऽनार्तवः आर्तवाद्विपरीतः। बली–बलवान् अन्योन्यं परस्परं दिग्विशेषेण व्याहतगती–रुद्धमार्गः पांस्वाद्यन्वितश्चेति दुष्टवातलक्षणम् ७९२

**टिप्पणी**–दुष्ट इति–(च. वि. ३.७) ७९२

१०६ दुष्टजललक्षणम्।

**७९३–रसवर्णादिविकृतमपक्रान्तविहङ्गमम्।**
**निन्दितप्रभवं तोयमुपक्षीणजलाशयम्॥**

७९३–तोयं दुष्टं रसविकृत्यादियुक्तं निन्दितात् कुत्सितादेशादेः प्रभवो यस्य तन्निन्दितप्रभवं अथवा निन्दितानां कृम्यादीनां प्रभवो यतः स निन्दितप्रभवः ७९३

**टिप्पणी**–रसेत्यादि–आदिना गन्धस्पर्शयोर्ग्रहणम्। अपक्रान्तविहङ्गमम्–अपक्रान्ताः–अपगताः विहङ्गाः जलचरपक्षिणः यस्मात् तत्। उपक्षीणजलेशयम्–उपक्षीणाः जलेशयाः–जलचराः मत्स्यकूर्मादयः यस्य तत्(च.वि.३-८)७९३

१०७ दुष्टदेशलक्षणम्।

**७९४–मक्षिकामूषिकाव्यालबहूर्त्यार्तप्रदूषितः।**
**देशोऽपथ्यान्नबहुलो नष्टधर्ममहौषधिः॥**

७९४–देशो दुष्टो मक्षिकादिप्रदूषितो भवति। अत्र च भूयिष्ठमपथ्यान्यन्नानि भवन्ति ७९४

**टिप्पणी**–मक्षिकेत्यादि–अत्र चरकः–'देशं पुनर्विकृतवर्णगन्धरसस्पर्शं क्लेदबहुलमुपसृष्टं सरीसृप–व्याल–मशक–शलभ–मक्षिका–मूषकोलूक–श्माशानिक–शकुनि–जम्बूकादिभिस्तृणोलूपोपवनवन्तं प्रतानादिबहुलमपूर्ववदवपतितशुष्कनष्टशस्यं धूम्रपवनं च प्रध्मातपतत्रिगणमुत्क्रुष्टश्वगणमुद्भ्रान्तव्यथितविविधमृगपक्षिसंघमुत्सृष्टनष्टधर्मसत्यलज्जाचारशीलगुणजनपदं शश्वत्क्षुभितोदीर्णसलिलाशयं प्रततोल्कापातनिर्घातभूमिकम्पमतिभयारावरूपं रूक्षताम्रारुणसिताभ्रजालसंवृतार्कचन्द्रतारकमभीक्ष्णं ससंभ्रमोद्वेगमिव सत्रासरुदितमिव सतमस्कमिव गुह्यकाचरितमिवाक्रन्दितशब्दबहुलं चाहितं विद्यात्' (च. वि. ३-९) इति ७९४

१०८ दुष्टकाललक्षणम्।

**७९५–कालश्च विपरीतोऽतिहीनलिङ्गो यथायथम्॥**

७९५–कालश्च दुष्टो यथाप्राप्तर्तुस्वरूपविवक्षया विपरीतलिङ्गोऽतिलिङ्गो हीनलिङ्गश्च ७९५

**टिप्पणी**–कालवैकृतमाह–कालश्चेति। विपरीतः–ऋतवननुरूपलक्षणः। यथा–शीते उष्णम्, उष्णे शीतम्, वर्षास्ववृष्टिः। अतिलिङ्गः, हीनलिङ्गश्च (च. वि. ३-१०) ७९५

१०९ दुष्टवातादीनामुत्तरोत्तरमहिततत्वम्।

**७९६–एते दुष्परिहारत्वादाहितायोत्तरोत्तरम्॥**

७९६–एते दुष्टा वातादयः उत्तरोत्तरमहिताः। यो यस्मादुत्तरः स तस्मादहितः। कथमाह–उत्तरोत्तरमेव दुष्परिहारत्वाद्वातोऽपि दुष्परिहारः। सोऽपि कदाचित् परिहर्तुं शक्यते। वेश्मप्रवेशादिना ततोऽपि जलं दुष्परिहारम्। अन्नपानाद्युपयोगात्। ततोऽपि देशो विना देशान्तरमुपायाभावात्। ततोऽपि कालः अन्यदेशगमनाद्युपायासम्भवात् सर्वगत्वात् कालस्य ७९६

**टिप्पणी**–एत इति–अत्र चरकः 'वैगुण्यमुपपन्नानां देशकालानिलाम्भसाम्। गरीयस्त्वं विशेषेण हेतुमत्संप्रवक्ष्यते। वाताज्जलं जलाद्देशं देशात्कालं स्वभावतः। विद्यादपरिहार्यत्वाद्गरीयः परमार्थवित्। वाय्वादिषु यथोक्तानां दोषाणां तु विशेषवित्। प्रतीकारस्य सौकर्ये विद्याल्लाघवलक्षणम्। चतुर्ष्वपि तु दुष्टेषु कालान्तेषु यदा नराः। भेषजेनोपपाद्यन्तेन न भवन्त्यातुरास्तदा' (च. वि. ३.१३-१६) ७९६

११० दुष्टवातादिप्रसङ्गे चिकित्सा।

**७९७–येषामनियतं कर्म तस्मिन्काले सुदारुणे।**
**कर्म पञ्चविधं तेषां योज्यं तद्वद्रसायनम्।**
**शस्यते देहवृत्तिश्च भेषजैः पूर्वमुद्धृतैः॥**
**ब्रह्मचर्यं दया दानं सदाचाररतिः शमः**
**सद्धर्मः सत्कथा पूजा देवर्षीणां जितात्मनाम्॥**

---

७९ °मूषिकव्या°–क. च. ८० °श्मादप्र°–ग. ८१ °त्परिहारित्वा°–च. ८२ °वृत्तिश्च भे°–क. ख. च. ८३ सधर्मसंव.थापू°–क.

**-देशानामविपन्नानां साधूनां च निषेवणम्।**
**दैवव्यपाश्रयं चेष्टं कर्म जीवितरक्षणम् ॥**

७९७-अस्मिंश्चोपहतवातादिसंभवे काले सुदारुणे पञ्चविधं कर्म प्रयोज्यं प्रतिघातार्थमुच्यते। येषां पुरुषाणां तस्मिन् दुष्टे काले सुदारुणे पूर्वकृतं कर्मानियतफलदायि तेषां पञ्चविधं वमनादिकर्म योज्यम्। नियतफलदायिना तु कर्मणा केषांचिदौषधादय उपायाः कुण्ठीभवन्त्येव । पूर्वकृतस्य कर्मणो नियतानियतत्वेन द्वैविध्यमस्मिन्नेवाध्याये वक्ष्यते। तेषां तस्मिन्नेव काले रसायनं योज्यम्। भेषजानि पूर्वोद्धृतानि यान्यनुपहतकालगृहीतानि। तस्मिन् काले जीवितरक्षणाय दैवव्यपाश्रयं कर्म बल्युपहारमणिमन्त्रादिकं ब्रह्मचर्यादिकं च शस्यते। अविपन्नानामदुष्टानां देशानाम् ७९७

**टिप्पणी**-येषामित्यादि-अत्र चरकः-'येषां न मृत्युसामान्यं सामान्यं न च कर्मणाम्। कर्म पञ्चविधं तेषां भेषजं परमुच्यते । रसायनानां विधिवच्चोपयोगः प्रशस्यते' (च वि. ३-१७)। अस्यार्थः—येषां पुंसां न मृत्युसामान्यं न मृत्युजनकदैवसामान्यमस्ति। न च कर्मणां सामान्यं न मृत्युजनकर्मसामान्यं येषामस्ति तेषां पञ्चविधं कर्म वमनादिकं परं भेषजमुच्यते। रसायनानां वृष्ययोगानां च विधिवत् उपयोगः प्रशस्यते इति। शस्यत इति। पूर्वमुद्धृतैरिति-पूर्व-व्यापत्तेः पूर्वम्,उध्दृतैः, संगृहीतैः देहवृत्तिः देहस्य परिपालनं शस्यते (च. वि. ३-१८)। यथाऽऽह चरकः—'दृश्यन्ते हि खलु सौम्य ! नक्षत्रग्रहगणचन्द्रसूर्यानिलानलानां दिशां च प्रकृतिभूतानामृतुवैकारिका भावाः। अचिरादितो भूरपि न यथावद्रसवीर्यविपाकप्रभावमोषधीनां प्रतिविधास्यति। तद्वियोगाच्चातङ्कप्रायतानियता। तस्मात्प्रागुद्ध्वंसात्प्राक् च भूमेर्विरसीभावादुद्धर ! सौम्य ।भैषज्यानि यावन्नोपहतरसवीर्यविपाकप्रभवाणि भवन्ति । वयं चैषां रसवीर्यविपाकप्रभावानुपयोक्ष्यामहे ये चास्माननुकाङ्क्षन्ति। यांश्च वयमनुकाङ्क्षामः।न हि, सम्युगुद्धृतेपु सौम्य ! भैषज्येपु सम्यग्विहितेपु सम्यक् चावचारितेपु जनपदोद्ध्वंसकराणां विकाराणां किञ्चित्प्रतीकारगौरवं भवति। (वि.३.४ सु.सू. ६.२०-२१) ब्रह्मचर्यमित्यादि-(च. वि.३.१९-२२.)७९७

१११ आकालिकऋतुचर्या।

**७९८-हेमन्तादिषु कुर्वीत स्वं स्वं चाकालिकेष्वपि।**
**विधिं तच्छीलनं यस्माच्छीतादिद्वन्द्वकारितम् ॥**
**ऋतुर्चर्या हि शीतोष्णवृष्टिदोषप्रतिक्रिया।**
**अतो एवर्तुचर्यायां हेमन्तशिशिरे समे ॥**

७९८-तथाऽऽकालिकेषु विपरीततुंप्रसङ्गोद्भूतेषु हेमन्तादिषु स्वं स्वमात्मीयं विधिं कुर्यात। यतस्तस्य विधेः शीलने शीतादीनां शीतोष्णवर्षाणां द्वन्द्वः उपतापः पुरुषं कारयाति।तेनैतदुक्तं भवति-ज्येष्ठाषाढयोरन्यर्योर्वा मासयोः ग्रीष्मादस्वलक्षणप्रसङ्गे हेमन्तादिस्वलक्षणं दृश्यते। तत्र तस्यागन्तोर्हेमन्तादिकस्यचर्यां सेवेत। यतो यैषा ऋतुचर्याध्यायकथिता हेमन्तादिषु चर्या सा न यथेच्छमेव क्रियते । किं तर्हि शीतादिदोषप्रतीकारार्थम्। तेन यस्मिन्नेव मासे शीतादयस्तस्मिन्नेव सा चर्या सेव्या । एतदेवोच्यते-ऋतुचर्येत्यादिना। शीतादिदोषप्रतीकारा ऋतुचर्योक्ता न मासमात्रमाश्रित्य। एतस्मिन्नर्थे उपपत्तिरुच्यते-**अत एव चेत्यादि।** हेमन्तशिशिरयोरत एव शीतदोषसादृश्याच्चर्यापि सदृश्येवोक्ता ७९८

**टिप्पणी**-हेमन्तादिष्विति। आकालिकेष्विति-अत्र सुश्रुतः-'तेषां पुनर्व्यापदोऽदृष्टकारिताः, शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च । तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेदिति। तत्राव्यापन्नानामोषधीनामपां चोपयोगः' (सु. सू. ६. १७-१९) अस्यार्थः-'तेषां ऋतूनां व्यापदः शीतोष्णवर्षाणामेव वैपरीत्यम्। अदृष्टेन सर्वजनसामान्येनाधर्मेण, कारिताः कर्तुं प्रयोजिताः। शीतोष्णेत्यादि-विपरीतानि हीनमिथ्यातियुक्तानि । ओषधीरपश्च व्यापदयन्ति-विरुद्धतां प्रापयन्ति' इति। चरके (वि. ३. २३-३३,) इति च ७९८

(अकालमृत्यु प्रकरणम्)

११२ आयुषो दैवपुरुषकारयुक्तिसापेक्षत।

**७९९-सर्वप्राणभृतां नित्यमायुर्युक्तिमपेक्षते।**
**दैवे पुरुषकारे च स्थितं[८६] तस्य बलाबलम् ॥**

७९९-आयुषो रक्षणवस्तुनः प्रकृतत्वादिदमुच्यते। सर्वेषां प्राणभृतां शरीरिणामायुर्नित्यमुभयकर्मबलवत्वाद्बलवत्स्वरूपामपेक्षते युक्तिम् । एष च पूर्वो ग्रन्थो यथोत्तरग्रन्थेन सविस्तरमुच्यते। दैवे पुरुषकृते वा कर्मणि बलवति तदाऽऽयुषोऽपि बलवत्त्वम्। तस्याबलत्वेऽप्यायुषोऽप्यबलत्वम् ७९९

**टिप्पणी**-सर्वेति-सर्वेषां प्राणिनाम् आयुः—शरीरेन्द्रियसत्त्वात्मसंयोगलक्षणम्। युक्तिम्-दैवपुरुषकारयोः योगम् अपेक्षते। तस्मात् अस्य-आयुषः बलाबलम्-बलं च अबलं च बलाबलम्। दैवे पुरुषकारे च स्थितम्। दैवपुरुषकारयोर्बलवत्त्वे आयुषो बलवत्त्वम्, तयोश्च दुर्बलत्वे चास्य दुर्बलत्वमिति यावत् । यद्यपि पौर्वदेहिकं कर्म अस्थिरत्वेन गतं तथापि तज्जनितादृष्टस्य विद्यमानत्वात्तद्द्वारा तत्कर्म कारणं भवत्येवेह जन्मन्यपि। अत्र चरकः—'इहाग्निवेश! भूतानामायुर्युक्तिमपेक्षते। दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम्'। (वि. ३. ३४) इति ७९९

---

८४ र्व्यादिशं°-ग. ८५ °त एव च चर्या°-ग. च. ८६ °तं ह्यस्य ब°-ख.

११३ दैवपुरुषकारयोर्लक्षणम् ।

**८००–अन्यजन्मकृतं कर्म दैवं पौरुषमैहिकम्**

८००–सुबोधम् ८००

**टिप्पणी**–अन्येत्यादि-अन्यजन्मकृतम्-अन्यस्मिन् जन्मनि कृतम् । आत्मनेति भावः । दैहिकम्–इह जन्मनि यत् कर्म क्रियते तत् पौरुषं विद्यात्–सः पुरुषकार इति भावः। चरकः–' दैवमात्मकृतं विद्यात्कर्मयत्पौर्वदेहिकम् स्मृतः पुरुषकारस्तु क्रियते यदिहापरम्। बलाबलविशेषोऽस्ति तयोरपि च कर्मयोः ' ( वि. ३. ३५–३६ ) इति ८००

११४ कर्मणस्त्रैविध्यम् ।

**८०१–विद्यात्ते कर्मणी त्रेधा श्रेष्ठमध्यावरत्वतः ॥**

८०१–ते च दैवपुरुषकर्मणी आयुषो हेतुभूते प्रत्येकं श्रेष्ठमध्यावरत्वेन त्रिप्रकारे ८०१

**टिप्पणी**—विद्यादिति–ते इहामुत्र कृते दैवपुरुषकारसंज्ञे कर्मणी श्रेष्ठम्–उत्तमम्, मध्यम्–मध्यमम्, अवरम् हीनम्–अधमम् इति त्रेधा विद्यात्–जानीयात् । ( च. वि. ३–३६ ) इति ८०१

११५ आयुषस्त्रैविध्यम् ।

**८०२–तयोरुदारयोर्युक्तिर्दीर्घस्य सुसुखस्य च**
**नियतस्यायुषो हेतुर्विपरीतस्य चापरा ।**
**मध्या मध्यस्य मिश्रस्य सङ्कीर्णा**

८०२–तयोर्दैवपुरुषकर्मणोरुदारयोः श्रेष्ठयोर्या युक्तिः सा नियतकालस्य दीर्घस्य चायुषो हेतुः। तयोश्च हीनयोरपरा युक्तिरेतद्विपरीतस्यायुषो हेतुः । तयोश्च मध्या युक्तिर्मध्यस्यायुषो हेतुः । संकीर्णा युक्तिर्यत्र एकस्य कर्मणो बलवत्त्वमन्यस्य मध्यत्वमबलत्वं वा । एवं मध्यत्वाबलवत्त्वे अपि । सा संकीर्णा संकीर्णस्य लक्षणसङ्करयुक्तस्यायुषो हेतुः ८०२

**टिप्पणी**—आयुर्घटकयोः कर्मणोस्त्रैविध्यादायुषोऽपि त्रिविधत्वमाह–तयोरिति । उदारयोः–उत्तमयोः तयोः दैवपुरुषकारसंज्ञयोः कर्मणोः युक्तिः–योगः, नियतस्य नियतकालप्रमाणस्य दीर्घस्य, सुसुखस्य–सुखान्वितस्य चकारात् हितस्यापि ग्रहणम् । सुखम्, असुखम्, हितम् अहितम् इति चतुर्विधस्यायुष उक्तत्वात् । आयुषः हेतुः अपरा युक्तिः अर्थात्–हीनयोः दैवपुरुषकारयोः युक्तिः, विपरीतस्य अर्थात्–अनियतस्य–ह्रस्वस्य, दुःखान्वितस्य अहितस्य चायुषो हेतुरित्यर्थः ( च. वि. ३. ३७ ) मध्येति मध्या–मध्यमा युक्तिः–मध्यमयोः दैवपुरुषकारयोः युक्तिः, मध्यमस्य–हीनोत्तमयोरुक्तलक्षणयोर्मध्यगतस्यायुषो हेतुः एवं दैवपुरुषकारयोरुत्तममध्यमहीनत्वेन आयुषोऽप्युत्तममध्यमहीनत्वमुपपादितम् । संकीर्णेति । संकीर्णा युक्तिः अर्थात् दैवपुरुषकारयोर्मध्ये एकस्य बलवत्त्वम्, अन्यस्य मध्यत्वमबलत्वं वा, एतादृशयोर्दैवपुरुषकारयोर्युक्तिः योगः संमिश्रस्य–लक्षणसंकरयुक्तस्यायुषो हेतुः । अत्र चरकः ' मध्यमा मध्यमस्येष्टा ' ( वि. ३. ३८ ) ८०२

११६ दैवपुरुषकारयोर्बलवशात्परस्परोपमर्दकत्वम् ।

**८०३– शृणु चापरम्**
**दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते**
**तथा दैवेन बलिना पौरुषं कर्म दुर्बलम् ॥**

८०३–ननु द्वे बलवत्त्वाबलवत्त्वयुक्ते एकत्र विरोधात् कथं फलदायिनी । अत उच्यते–पुरुषकारेण दानादिना बल्वता अबलं दैवं कर्मोपहन्यते । दैवेन बलिना पौरुषमबलमुपहन्यते ८०३

**टिप्पणी**—संकरस्थले उपपत्तिमाह–शृण्विति कारणमिति शेषः । प्रबलेन पुरुषकारेण दुर्बलं दैवमुपहन्यते, तथा बलिना प्रबलेन दैवेन दुर्बलं पौरुषम्–पुरुषकारः उपहन्यते इति पूर्वेण संबंधः। विरोधिनोः संनिपाते भूयसा ह्यल्पमवजीयत इति भावः । अयं च विषयोऽस्मिंस्तन्त्रे बहुत्र स्थलेष्ववगन्तव्यः । तथा च वक्ष्यति–' यद्यद् द्रव्ये रसादीनां बलवत्त्वेन वर्तते । अभिभूयेतरांस्तत्तत्कारणत्वं प्रपद्यते। विरुद्धगुणसंयोगे भूयसाऽल्पं हि जीयते ' ( अ. सं. सू. १७ ) ( च. वि. ३. ३८–३९ )८०३

११७ केचिन्मतेनायुषो नियतप्रमाणकत्वम् ।

**८०४–दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः ।**

८०४–यद्दैवं कर्म बलवद्दृष्ट्वा एके आयुर्नियतप्रमाणं मन्यन्ते तेऽप्येवं ब्रुवन्ति । यथा प्राप्तोपाया अपि म्रियमाणा दृष्टास्तस्मान्नियतमायुः । एतच्च पौरुषस्य बलवता दैवेनोपघातात् ८०४

**टिप्पणी**–अत्रापरमुनिमतमाह–दृष्ट्वेत्यादि । यत् 'प्रबलेन दैवेन दुर्बलं पौरुषं कर्म उपहन्यते ' इति दृष्ट्वा आयुः नियतप्रमाणकमिति वदन्ति ( च. वि. ३. ३९ ) ८०४

११८ स्वमतेनायुषो नियतानियतप्रमाणकत्वम् ।

**८०५–कर्म किञ्चित्क्वचित्काले विपाकेनियतं महत् ।**
**किञ्चिच्च कालनियतं प्रत्ययैः प्रतिबोध्यते ॥**

८०५–तच्च दैवं कर्म द्विविधम् । महत्त्वान्नियतफलमल्पत्वाच्चानियतफलम् । तच्च पौरुषैः कर्मभिः प्रतिबोधकैः फलदानेन नियम्यते ८०५

**टिप्पणी**—दैवपुरुषकारयोरुभयोरपि बाध्यत्वं दर्शयन्नैकान्तेन नियतायुः पक्षं व्युदस्यति–कर्मेत्यादि । किंचित् महत् बलवत् कर्म, क्वचित्काले विपाकनियतम्–परिणामे नियतम् । इदं कर्म अस्मिन्काले विपच्यते एव इति कस्यचित् कर्मणः विपाककालनियमः अस्ति। किंचित् दुर्बलं

८७ °परीतस्तु चाप°–ग; °परीतस्य चापादि । म°–च. ८८ °ष्ट्वा तदं°–क. ख. च. ८९ °के मन्यन्तेऽनिय°–ख. ९० °पाके नि°–ख. ९१ °त्ययैः प्रतिबाध्य°–क.; °त्ययैः परिभाव्यते । ए°–च.

कर्म अकालनियतम्-कालनियतं न भवति-कस्यचित्कर्मणः विपाककालनियमो नास्ति । एवमनियतप्रमाणमायुः प्रत्ययैः प्रतीतिहेतुभिः प्रत्यक्षानुमानयुक्तिभिः-कारणैः प्रतिबोध्यते । कारणानुविधायित्वात्कार्यस्येति भावः । एवं कर्मणः विपाककालनियतानियतत्वात् आयुषोऽपि नियतानियतमानत्वम् ( च. वि. ३. ४० ) । तस्मादुभयदृष्टत्वादेकान्तग्रहणम्-नियतकालप्रमाणमेवायुः इति एकपक्षाश्रयणम्-असाधु असमीचीनम् । अयथार्थमिति यावत् ( च. वि. ३-४१ ) ८०५

११९ मृत्योः द्वैविध्यम्

**८०६-एवं च द्विविधो मृत्युः कालाकालविभेदतः ।**
**उपदिष्टस्ततश्चैव हिताहितविधिक्रमः ॥**

८०६-एवं च कर्मणो द्वैविध्यान्नियतानियतफलरूपात् कालाकालभेदेन मृत्युरपि द्विविधः । तेनैतदुक्तं भवति । अनियतफलेन कर्मणा मृत्युरकालज उपदिष्टो, नियतफलेन कालज इति । अतश्च कारणान्मृत्युद्वैविध्यादस्मिन्नायुर्वेदे हिताहितविधिरुपदिष्टा । तेनैतदुक्तं भवति । नियतफलकर्मजस्य मृत्योरायुर्वेदमकारणम् । अनियतफलस्य तूपत्तिरक्षणार्थं हिताहितज्ञानहेतुत्वेनायुर्वेद उपयुज्यते एव ८०६

**टिप्पणी**—एवमिति-अ. सं. सू. ८ ६३० प्रभायामयं विषयो द्रष्टव्यः ८०६

१२० मृत्यूनां संख्या

**८०७-एकोत्तरं मृत्युशतं ब्रुवते वेदवादिनः ।**
**तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥**

८०७-तथा च वेदवादिन एकोत्तरं मृत्युशतं ब्रुवते । तत्रैकः कालजः । शतमागन्तवः । तैश्च वेदवादिभिः आयुषो वृद्धिनाशहेतू चोक्तौ ८०७

**टिप्पणी**—एकोत्तरमिति-अत्र सुश्रुतः-' एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते । तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ' ( सू. ३४-६ ) इति । अस्यार्थः-"ननु यद्यकालमृत्युरस्ति तदा विषादिभ्यो नृपतिरक्षणं युक्तम् । विषभक्षकस्य लिङ्गचिकित्सिते च युक्ते, अथ नास्त्यकालमृत्युस्तदा किं निष्फलप्रयासेनेत्याशङ्कयाकालमृत्युप्रमाणैः साधयन्नादावागममेव प्रमाणमाह-एकोत्तरमित्यादि-एकेनाधिकं मृत्युशतमथर्वाणः अथर्ववेदविदः पुरुषाः, प्रचक्षते-कथयन्ति । तत्रैकः कालसंयुक्तः । तत्र तेषां मृत्यूनां मध्ये एकः कालसंयुक्तः । कालमृत्युरित्यर्थः । शेषाः आगन्तवः ' स्मृताः ' इति शेषः । अवशिष्टा आगन्तवोऽपमृत्यवः स्मृताः कथिता इत्यर्थः । तत्र गर्भवर्षेण सहितोत्तरशतवर्षैरेकोत्तरं मृत्यवः पूर्यन्ते । ततः शतादर्वागकालमृत्यवः । शतादनन्तरं कालमृत्युरिति केचिन्मन्यन्ते । अपरे ब्रुवते नशब्दोऽत्रासंख्यावाचकः । उत्तरशब्दस्तु प्रधानवाचकः । तेनासंख्या मृत्यवः, कारणानामसंख्येयत्वात्, एकश्च मृत्युः प्रधानं, स च कालमृत्युः कथ्यते । ननु यो यस्मिन्काले म्रियते स तस्य कालमृत्युरेव, तत्कथमकालमृत्युरित्युच्यते ? तथा चोक्तम्-' नाकाले म्रियते कश्चिन्नास्ति मृत्युरकालजः । यो यस्मिन्म्रियते काले मृत्युकालः स तस्य हि ' इति । व्यासभट्टारकेणाप्युक्तम्-' नाकाले म्रियते कश्चिद्विद्धः शरशतैरपि । कालप्राप्तस्य कौन्तेय ! वज्रायन्ते तृणान्यपि ' इति । नैतदस्ति, उपमानादिप्रमाणैर्बहुधाऽऽचार्यैरकालमृत्योः स्थापितत्वात् । तथा च-' यथा वर्षमकाले च यथा पुष्पं यथा फलम् । यथा स्याद्दीपनिर्वाणमकाले मरणं तथा ' इति व्यासवचनमप्यर्जुनप्रोत्साहकमकालमृत्युत्थापकं दृश्यते । तथा हि-' जलमग्निर्विषं शस्त्रं स्त्रियो राजकुलानि च । अकालमृत्यवो ह्येते तेभ्यो बिभ्यति पण्डिताः ' इति । अन्यैरप्युक्तम्-कालः सुरैरपि हि वञ्चयितुं न शक्यो वक्ष्ये विधानमपमृत्युविनाशनाय । मृत्युर्भविष्यति कथंचन नापमृत्युर्यथार्थस्तदा चरक-सुश्रुत-वाग्भटाद्याः ' इति । तस्मात्कालाकालयोर्मृत्युर्भवत्येवेति । अपरे, शेषा आगन्तवः स्मृताः इत्यस्याग्रतः-' विष्वग्वातादिभिर्यद्वद्दीपो वर्त्यादिसंयुतः । निर्वाप्यते क्षणाद्देही तथैवागन्तुमृत्युभिः ' इति श्लोकं पठन्ति । व्याख्यानयन्ति च-विष्वग्वातः प्रबलवातः आदिशब्देन शलभादिनिपातः कथ्यते" इति डल्हणः । तथा च कौशिकसूत्रे मन्त्राः-

अपेत एतु निर्ऋतिर्नेहास्या अपि किञ्चन ।
अपास्याः सत्वनः पाशान्मृत्यूनेकशतं नुदे ।
ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे ।
तांस्ते यज्ञस्य मायया सर्वां अपयजामसि ।
निरितो यन्तु नैर्ऋत्या मृत्यव एकशतं परः ।
सेधामैषां यत्तमः प्राणं ज्योतिश्च दध्महे ।
ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः
तेभ्यो अस्मान्वरुणः सोम इन्द्रो विश्वे मुञ्चन्तु मरुतः स्वर्काः ।

ब्रह्म भ्राजदुदगादन्तोरक्षोदतं च ब्रह्मवाधृष्टमृतेन मृत्युम् ब्राह्मोपद्रष्टा सुकृतस्य साक्षाद्ब्रह्मास्मदपहन्तु शमलं तमश्च ( १३. ९७. ८ ) ८०७

१२१ श्येनादिना शत्रोर्वधः ।

**८०८-श्येनादिना च यागेन भ्रातृव्यस्य तथा चैं तैः ।**

८०८-तथा च तैः श्येनादिना च यागेन भ्रातृव्यस्य शत्रोर्वधो विहितः ८०८

**टिप्पणी**—श्येनादीति-तथा च श्रुतिः ' श्येनेनाभिचरन्यजेत ' इति । आदिना अन्ये अभिचारका यागा ग्राह्याः । तथा हि- ' अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमावृश्चति ताजगार्ति-

---

९२ 'तत्रैव हि'-च. ९३ 'नाजिरादिया'-क. ख. ९४च तैः । दैर्ध्यश्रवससामाद्यैर्विहितः स्वारमनोवधः । आ°-क. ख. च.

माच्छेति ' ( तै. सं. २. २. २ ) । अस्यार्थः-रुद्रवते घोरस्वभाववते। रुद्रशब्देन तद्धर्मो घोरत्वं लक्ष्यते । तस्मै तादृशघोरमूर्तये एनमभिचर्यमाणमावृश्चति-आभिमुख्येन छिनत्ति। ततस्ताजक्तदानीमिवार्तिं गच्छति इति भट्टभास्करः । ' रुद्रवते घोरतनुयुक्तायाभिचरञ्शत्रुं मारयन् तस्मै रुद्रवतेऽग्नये एनं शत्रुमावृश्चति-समन्ताच्छित्त्वा प्रयच्छति । ताजक्-ताद्दक् ' इति सायणः । एवमेव 'वज्रः' 'इषुः' इत्यादयोऽभिचारयागा वेदितव्याः। ऋग्वेदे अष्टमाष्टके अभिचारकर्मवरा सवन्यु कथापि प्रथितचरा एव । एतादृशान्याभिचारिकाणि कर्माण्यथर्ववेदीये कौशिकसूत्रे पठितानि अभिचरणकामाच्छत्रोरात्मरक्षणमपि श्रुतिराह-' अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेदभिचर्यमाणोऽग्निमेव यविष्ठं स्वेन भागधेयेनोपधावति। स एवास्माद्रक्षांसि यवयति । नैनमभिचरंस्तृणुते ' ( तै. सं. २. २. ३. ) इति । अस्यार्थः-'यवयंति-वियोजयति-अभिचरन्-वैरी, एनम्-इष्टिकारिणम्। न स्तृणुते-हन्तुं न शक्नोति ' इति सायणः । इति दिक् ८०८

१२२ दीर्घश्रवससोमादीनामात्मवधः ।

**८०९-दीर्घश्रवससोमाद्यैर्विहितश्चात्मनो वधः ।**

८०९-दीर्घश्रवससोमादीना चात्मनो वधस्तैर्विहितः ८०९

१२३ मित्रविन्देष्ट्याऽऽयुःप्राप्तिः ।

**८१०-आयुष्कामस्य तत्प्राप्तिस्तथेष्ट्या मित्रविन्दया ।**

८१०-आयुष्कामस्य पुरुषस्य तत्प्राप्तिरायुष्प्राप्तिस्तैर्वेदवादिभिः मित्रविन्दाभिधया इष्टया विहिता ८१०

१२४ आत्मगोपनस्मृतिः-आत्मानं सततं रक्षेत्

**८११-सर्वस्मादेव चात्मानं गोपायेदीदृशी स्मृतिः ॥**

८११-सर्वस्मादेव चात्मानं गोपायेद्रक्षेदिति तेषां स्मृतिः। यदि चोपायापेक्षिण्यायुषः स्थितिर्न स्यात् तदैतत्सर्वं न सम्भवेत् ८११

१२५ सौगतमतेन मरणस्य चातुर्विध्यम् ।

**८१२-तथा मरणमुद्दिष्टं सौगतानां चतुर्विधम् ॥**

८१२-तथा सौगतानां बौद्धदर्शनस्थितानां तत्सिद्धान्तग्रैश्चतुर्विधं मरणमुद्दिष्टम् । तच्च तत एव ज्ञातव्यम् ८१२

**टिप्पणी**—तथेति-तथा चोक्तमनुरुद्धचार्येण स्वकीये अभिधर्मार्थसंग्रहाख्ये ग्रन्थे-'. आयुक्खयेन, कम्मक्खयेन उभयक्खयेन उपच्छेदककम्मुना चेति चतुर्धामरणुप्पत्ति नाम' ( आयुषः क्षयेण, कर्मणः क्षयेण, उभयक्षयेण, उपच्छेदककर्मणा चेति चतुर्धा मरणोत्पत्तिर्नाम )- पञ्चमपरिच्छेदे-वीथिसंग्रहविभागे. ८१२

१२६ नियतायुषां ध्रुवमपथ्यसेवया रोगित्वम् ।

**८१३-विषमापरिहारेण जायते नियतायुषाम् ॥**
**ध्रुवं रोगित्व-**

८१३-एवं स्थिते एतन्निश्चितं नियतायुषां पुंसां विषमस्याहारविहारादेरपरिहारेण ध्रुवमवश्यं रोगित्वं जायते ८१३।

१२७ अनियतायुषां ध्रुवं मृत्युः ।

**८१४- मन्येषां मृत्युरेव त्वपर्वणि ।**
**अकाण्डे शस्त्रघाताद्यैः प्रत्यक्षो मृत्यु-**

८१४-अन्येषां चानियतायुषां विषमापरिहारेणापर्वण्यकाले मृत्युर्जायते । अथवा किमनया अकालमृत्युसाधनपरिकल्पनया ।अकाण्डे अकाले शस्त्रघाताद्यैः प्रत्यक्ष एव मृत्युः इष्टः।

१२८आयुषः नियतानियतकालप्रमाणीनि। चण्डमत्तङ्गसेवादिवर्जनेस्य निदानम् ।

**८१५- रन्यथा ॥**
**उद्भ्रान्तचण्डमातङ्गतुरङ्गादिसमागमम् ।**
**अरातिदुष्टवाय्वादिसाहसाहितभोजनम् ।**
**वर्जयेदिति न ब्रूयुर्मुनयो दिव्यचक्षुषः**

**टिप्पणी**-अन्यथेति । उद्भ्रान्ताः-इतस्ततो धावन्तः, चण्डाः-कोपनाः ईदृशा ये मातङ्गाः-गजाः तुरङ्गाः-अश्वाः, आदिशब्देन गो-खरोष्ट्र-महिषादयोऽवबोद्धव्याः। अरातयः-शत्रवः, दुष्टः-अनारोग्यकरः, आदिनाऽनारोग्यकराणामुदक-देश-कालानां ग्रहणम्।साहसम् अयथाबलमारम्भः८१५

१२९ रसायनादिविधिप्राप्यायुःस्थितेः प्रयोजनम् ।

**८१६-दैवव्यपाश्रयादींश्च रसायनविधींस्तथा ।**
**न वा तेऽपि यथाकाममायुषः स्थितिमाप्नुयुः ।**

८१६-रसायनविधिना ते च मुनयो मत्तमातङ्गसमागमादिवर्जनेन दैवव्यपाश्रयादिसेवनेन च यथाकामं यथेच्छमायुषः स्थितिं नाप्नुयुः ८१६

**टिप्पणी**—दैवव्यपाश्रयादीनिति-त्रिविधं ह्यौषधं दैवव्यपाश्रयं, युक्तिव्यपाश्रयं सत्त्वावजयश्चेति । तत्र दैवम् अदृष्टं, व्यपाश्रयः-विशेषेण आश्रयो यस्य तत् दैवव्यपाश्रयम्; शुभादृष्टजननेन यद्रोगोपशमनकरं भवति तद्दैवव्यपाश्रयमिति भावः । तच्च मन्त्रौषधिमणिमङ्गलहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादियुक्तिव्यपाश्रयम् -युक्तिः योजना सा एव व्यपाश्रयो यस्य तत् । यज्जठराग्निसंयोगमात्रादियोगेन धातुसाम्यकरं भवति तद्युक्तिव्यपाश्रयमिति भावः । तच्च पुनराहारविहारौषधद्रव्याणां योजना । सत्त्वावजयः-सत्त्वस्य मनसः अवजयः अहितेभ्यः अर्थेभ्यो निग्रहः । अत्रादिशब्देन युक्तिव्यपाश्रयसत्त्वावजयौ गृह्येते ( च. सू. ११. ५४. ) रसायनम्-रसरक्तादीनां शुक्रान्तानां धातूनां प्राप्युपायः । रसानामयनमाप्यायनम्, रसशब्दोऽत्र सकलधातूनामुपलक्षणम् । तस्य विधिः-विधानम्-रसायनप्रयोगमित्यर्थः

---

९५ अकाण्डशस्त्र°-ख. च. ९६ °यनविधिं नवा । नवा ते°-क. ख.; °यनविधिं विना । नवा ते°-च.

१३० सर्पादिभितेर्बीजम्।

**८१७–अहिसिंहगजादिभ्यो विदुषां न भयं भवेत्।**

८१७–यद्यकालमरणं न स्यात् सर्पादितश्च विदुषां भयं न भवेत् ८१७

**टिप्पणी**—च. वि. ३. ४१. ८१७.

१३१ प्राकारादिनिर्माणस्य हेतुः।

**८१८–मिथ्या प्राकारदुर्गाणि मिथ्या मारणरक्षणम्।**

८१८–शत्रुभ्य आत्मनो रक्षणार्थं प्राकारदुर्गादीनि निरर्थकानि भवेयुः ८१८

**टिप्पणी**—च. वि. ३. ४१. ८१८.

१३२ परदारादिवर्जनस्य कारणम्।

**८१९–आयुष्कामस्य मिथ्यैव परदारादिवर्जनम्।**

**टिप्पणी**–आयुष्कामस्येति–एतीत्यायुः संततं यातीत्यर्थः। एवं गत्वरस्वभावमपि हिताहारविहारसेवादिभिरहितवर्जनेन च कथमेतत्स्थिरीभवेदित्येवं कामयते स आयुष्कामः, तस्य। परदारादिवर्जनम्। तथा च चरकः–परदाराभिगमनमनायुष्याणाम् ( सू. २५. ४० ) इति। परस्त्रीसंभोगाद्यनायुष्याणां कर्मणां परिहारः । आदिनाऽऽयुषः प्रतिकूलानामन्येषां कर्मणां संग्रहः ८१९

१३३–विषसुप्तप्रबुद्धस्य महाहिनाऽऽयुर्भावाभावकथनस्य हेतुः

**८२०–मन्त्रदेवतयाऽऽहूता नाचक्षीरन् महाहयः॥**
**विषसुप्तप्रबुद्धस्था भावाभावौ तदायुषः।**

८२०–तथा महाहयो वासुकिप्रभृतयो विषेण सुप्ते ततो मन्त्रेण प्रबुद्धे पुरुषे स्थिताः मन्त्रदेवतयाऽऽहूताः सन्तस्तथा तथाविधाः पुरुषायुषो भावाभावौ नाचक्षीरन् ८२१

१३४ संन्यासादिरोगग्रस्तस्योपेक्षया मरणस्य चिकित्सया जीवनस्य च प्रयोजनम्।

**८२१–संन्यासरोहिणीकादिग्रस्तस्य सहसा भवेत्॥**
**उपेक्षया न मरणं जीवितं वा चिकित्सया।**

८२१–तथा संन्यासरोहिणीकादिमहारोगग्रस्तस्य पुरुषस्य वैद्योपेक्षया सहसा झटित्येव मरणं न भवेत्। चिकित्सया जीवितं वा न भवेत् ८२१

१३५ महायुद्धे युद्ध्यतो नृसहस्रस्यायुः स्थितेः कारणम्।

**८२२–प्रत्यहं नृसहस्रस्य युद्धेऽन्योन्यमभिघ्नतः।**
**साधुवृत्तस्य चातुल्या न भवेदायुषः स्थितिः॥**

८२२–कालमरणस्य नियतत्वात् तथा प्रतिदिवसं पुरुषसहस्रस्य युद्धे अन्योन्यं परस्परेणाभिघ्नतः शस्त्रैः प्रहरतः साधुवृत्तस्य च नृसहस्रस्याकालमरणाभावे अतुल्याविसदृशी स्थितिर्न भवेत्, तुल्या भवेत्। न च तुल्या यस्माद्दृष्टं युध्यन्नृसहस्रं नश्यत् साधुवृत्तं च जीवेत् ८२२

१३६ इन्द्राद्यैः क्रियमाणस्यायुधोपक्रमस्य हेतुः, अश्विभ्यां क्रियमाणस्यौषधोपक्रमस्य प्रयोजनं च।

**८२३–नायुधैर्द्विषमिन्द्राद्या नौषधैरार्तमश्विनौ।**
**उपक्रमेरन्न भवेदकालमरणं यदि॥**

८२३–तथा यदि चाकालमरणं न भवेत् तत इन्द्राद्या देवताः शत्रुमायुधैमारोयंतु नोपक्रमरेन् नारभेरन्। आर्तं पीडितं च यथार्थदृशावश्विनौ स्वास्थ्यायौषधैर्नोपक्रमेयातां यद्यकालमरणं न स्यात् ८२२

१३७ आमपक्वघटानां पालनापालनात्पकालाचिरकालस्थितेः प्रयोजनम्।

**८२४–घटानामामपक्वानां पालनापरिपालनैः।**
**चिरोऽल्पकालवर्तित्वं चित्रस्थानां च दृश्यते॥**

८२४–तथाऽऽमानामपि घटानां पालनेन चिरकालवृत्तित्वं दृष्टम्, अपालनेन च पक्वानामप्यल्पकालवर्तित्वं दृष्टम् तद्वत् चित्रस्थानामपि भावानां चिराल्पकालवर्तित्वं दृष्टं, पालनापरिपालनैः ८२४

१३८ अकालमरणस्यात्यन्तप्रसिद्धावपि क्रियमाणायाश्चिकित्सायाः प्रयोजनम्।

**८२५–इत्यत्यन्तप्रसिद्धेऽपि सिद्धे सर्वागमैरपि।**
**दृष्टेऽप्यकालमरणे विचिकित्सेत्कथं बुधः॥**

८२५–अनेन प्रकारेणात्यन्तं प्रसिद्धेऽकालमरणे सर्वागमैश्च सिद्धे बुधः कथं विचिकित्सेत्। तेन ये आचार्या नियतमानमायुप आहुस्ते दैवस्याबलवत्त्वात् पुरुषकारबाधायां न तु सर्वथा नियतत्वम् ८२५

**टिप्पणी**—कालजाकालज मरणयोर्लक्षणम् च. वि-३. ४१, च. शा. ६. २८

१३९ कालाकालमृत्युलक्षणम्।

**८२६–गुणवद्भिषगादीनां सम्भवे सम्भवेत्तु यः।**
**मृत्युं तं कालजं प्राहुरितरं तद्विपर्यये॥**

८२६–ननु कथं कालजो मृत्युर्ज्ञायते अतस्तल्लक्षणमुच्यते। गुणवतां भिषगादीनां सम्भवे यो मृत्युः सम्भवेत् उत्पद्येत स कालजः। गुणा दक्षादयः। भिषगादीनामित्यत्रादिग्रहणं शेषपादत्रयोपलक्षणार्थम्। तस्य कालजस्य मृत्योर्लक्षणवैपरीत्यादकालजः ८२६

१४० कालाकालमरणे रथदृष्टान्तः।

**८२७–यथा रथो वाह्यमानो न्यायेन क्रमशः क्षयम्।**
**यायादात्मवतामायुस्तथाऽन्येषां विपर्ययः॥**

८२७–दृष्टान्तपूर्वंकालमृत्युकारणलक्षणार्थमाह–यथा रथ इत्यादि। रथो यथा समभूभागयोजनादिना न्यायेन वाह्यमानः क्रमेण स्वे कालेऽवश्यमेव क्षयं यायात् एवमात्मवतां हितसेवाहितपरिहारशीलिनामायुः। तथा अन्येषामनात्मवतां विपर्ययः। तेनैतदुक्तं भवति–यथा न्यायेन वाह्यमानो रथः क्रमेण क्षयं याति एवमात्मवतामपि क्रमेणायुः क्षयं याति। तथा यथा रथः अन्यायेन विषममार्गयोजनादिना युगपत् क्षयं यात्येवमनात्मवतां प्रमादिनामायुर्युगपदेवक्षीयत इत्यर्थः ८२७

१४१ कालाकालमरणे दीपदृष्टान्तः।

**८२८–शुचितैलदशो दीपः कीटवाताद्यपीडितः।**

९७ 'बुद्धस्याभावाभावौत'–ख. ९८ 'रायुकाल'–क. ख. ९९ 'यः। मृत्युस्तं का –क. ख. च.

**दीप्तिमान् वर्तते सम्यग्यथैवास्नेहसंक्षयात् ॥**
**स एवातो यथा च स्याद्विपरीतो विपर्यये ।**
**हिताहितोपचारेण तथैव पुरुषो ध्रुवम् ॥**

८२८-तथा शुचि निर्मलं तैलं दशा च यस्मिन् दीपे स कीटाद्यपीडितो यथैव स्नेहपरिक्षयो यावत्सम्यग्दीप्तिमान् वर्तते तद्वद्धितोपचारेण पुरुषः । एतद्विपर्यये अशुचितैलदशत्वे कीटादिपीडितत्वे च स एव च दीपो विपरीतो न दीप्तिमान् स्नेहे तिष्ठत्यपि स्यात् तथैव पुरुषः अहितोपचारेण ध्रुवमवश्यमेव विशेयः । तेनैतदुक्तं भवति शुचितैल्दशः कीटाद्यपीडितश्च यथा दीप्तिमान् वर्तते, स्नेहक्षयेन तु क्षयं यात्येवं पुरुषः अप्रमत्तोऽप्यायुषः क्षयात् क्षयं याति नियतायुरपि। तथा क्षीणे स्नेहेऽपि यथा दीपो वातादिपीडितत्वात् क्षयं याति । एवमहितोपचारेणापि पुरुष आयुष्यक्षीणेऽपि नियतायुरहितोपचारेण ध्रुवम् ८२८

१४२ सर्वेषु भावेषु शरीररक्षणं प्रधानम्

**८२९-सर्वमन्यत्परित्यज्य शरीरं पालयेदतः ।**
**तदभावे हि भावानां सर्वाभावः शरीरिणाम् ॥**

८२९-आवश्यमिति ज्ञात्वाऽन्यत्सर्वं परित्यज्य बुधः शरीरमेव पालयेत् । यतः शरीरिणां तस्य शरीरस्याभावे सर्वपदार्थानां दृष्टादृष्टप्रयोजनानामभावः ८२९

**टिप्पणी**—च. नि. ६. ७. ८२९

१४३ शरीरस्वास्थ्यरक्षणप्रसङ्गेन नगराधिपसारथिनोर्दृष्टान्तः

**८३०-नगरी नगरस्येव रथस्येवं रथी तथा ।**
**स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ।**

८३०-अन्यत् सुबोधम् ८३०

**टिप्पणी**—च. सू. ६. १०३. ८३०.

१४४ हिताशने समीक्षा ।

**८३१-आहारकल्पनाहेतून् स्वभावादीन् विशेषतः ।**
**समीक्ष्य हितमश्नीयाद्देहो ह्याहारसम्भवः ॥**

८३१-तथाऽऽहारस्य कल्पनायां ये हेतवः स्वभावसंस्कारमात्रादयस्तान् विशेषेण समीक्ष्य हितमश्नीयादायुष्कामः । यतो देह आहारसम्भवः ८३१

**टिप्पणी**—च. सू. २८. ४१. ८३१.

१४५ सर्वापदास्पदं वेगविधारणम्

**८३२-भीलज्जायन्त्रणालोभहर्षशोकवशं गतः ।**
**न जातु धारयेद्वेगांस्तद्धि सर्वापदांस्पदम् ॥**

८३२-तथा भीलज्जादीनां वशं गतो वेगान्मूत्रादीन् कदाचिद्धारयेत् । एतदुक्तं भवति-भीलज्जादीनां वेगधारणहेतूनां वशं गत्वा वेगान्न धारयेत् । तद्धि वेगधारणं सर्वासामापदामास्पदं स्थानम् । हिशब्दो यस्मादर्थे ८३२

**टिप्पणी**—च. सू. ७. २७. ८३२.

१४६ हिताभ्यासिनामकाले मरणाभावः ।

**८३३-हितमभ्यस्यतः पुंसो नाकाले कालदंष्ट्रया ।**
**संजायते परामर्शो बलोत्साहेन्द्रियायुषाम् ॥**

८३३-इत्यनन्तरोक्तेन प्रकारेण हितमभ्यस्यतः पुरुषस्याकाले बलादीनां कालदंष्ट्रया परामर्शो न जायते साऽकालदंष्ट्रा न बाधत इत्यर्थः ८३३

१४७ हितोपचारस्य दोषाद्याक्रान्तत्वेऽपि न दोषः ।

**८३४-अहितान्यपि संत्यज्य दोषमप्याप्नुयाद्यदि ।**
**तथाप्यानृण्यमायाति साधूनामात्मवानिति ॥**

८३४-ननु हितोपचारपरस्यापि रोगाद्यभिभवो दृष्टः स कथमित्युच्यते-अहितानि परिज्ञायमानानि त्यक्त्वा दैवाद्यादि पुरुषो दोषमाप्नुयात् तथाप्यात्मवानिति साधूनामनृणो भवति ८३४

**टिप्पणी**—च. सू. २८. ४३. ८३४.

१४८ असाध्यरोगापरिहारे शोकानवकाशः

**८३५-यच्च रोगसमुत्थानं न शक्यमिह केनचित् ।**
**परिहर्तुं न तत् प्राप्य शोचितव्यं मनीषिणा ॥**

८३५-यच्च दैवकारणं रोगाणां समुत्थानं तत्प्राप्य मनीषिणा पण्डितेन न शोचयितव्यमपरिहार्यत्वात् ८३५

**टिप्पणी**—च. सू. २८. ४४. ८३५.

१४९ हिताहारादीनां जीवितममृतवद्भवति ।

**८३६-हिताहारविहाराणां सदाचारनिषेविणाम् ।**
**लोकद्वयव्यपेक्षाणां जीवितं ह्यमृतायते ॥**

८३६-किञ्चिदिदमुच्यते-ये हितमाहारं विहारं च सेवन्ते सतां साधूनामाचारं शीलं च सेवन्ते । अयं लोकः परलोकश्चैवं भवतीति ये बुद्ध्या कल्पयन्ति तेषां जीवितमेवामृतत्वमाचरति हितत्वात् ८३६

१५० ग्राम्यसुखवश्यवत्म्

**८३७-गृध्नुर्ग्राम्यसुखे वश्यः क्लेशानां हतसत्पथः ।**
**मूढो जीवत्यनर्थाय दुर्गतिं परिबृंहयन् ॥**

८३७-यस्तु मूढो ग्राम्यसुखे ऐन्द्रियके सुखैकगृध्नुरनुरक्तः क्लेशानां च रागलोभादीनां वश्यः स दुर्गतिमेव वर्धयन्ननर्थायैव जीवति । तथा हतस्त्यक्तस्सत्पथः साधूनां पन्था येन ८३७

१५१ चिरंजीवितुमिच्छतः कर्तव्यम् ।

**८३८-'विदुषाऽन्तःशरीरस्थान्नित्यं सन्निहितानरीन् ।**
**जित्वा वर्ज्यानि वर्ज्यानि चिरं जीवितुमिच्छता '**

८३८-तस्माद्विदुषा पण्डितेनान्तश्शरीरस्थान्नित्यसन्निहितान् रागादीनरीन् जित्वा दिनचर्योक्तान्यत्रोक्तानि च वर्ज्यानि न सेव्यानि ८३८

१५२ अशुभोदयकर्मपरित्यागोपदेशः ।

**८३९-तदात्वे चानुबन्धे वा तस्मात् कर्माशुभोदयम् ।**
**स्मरन्नात्रेयवचसो न धीमान् कर्तुमर्हति ॥**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने नवमोऽध्यायः ॥**

८३९-यस्य चिरं जीवितुमिच्छा तेनेत्यनन्तरोक्तस्यात्रेयस्य वचसः स्मरन् अशुभोदयं कर्म धीमान् पण्डितः कर्तुं नार्हति । कीदृशमशुभोदयं, तदात्वे अशुभोदयं तत्कालोपभोग्याशुभफलकारणमनुबन्धे वाऽन्यस्मिन् काले वाऽशुभफलकारणमिति ८३९

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखायां-**
**सूत्रस्थाने नवमोऽध्यायः ॥**

१०० सम्यक्तथै°-क. १०१ °वस्थी सदा । स°-क. ख. च. १०२ कृत्येष्वपि हितो भ°-ख. च. १०३ °पदा पद°-ख च. १०४ तानि च सं°-क. ख. १०५ °ग्रुर्ग्राम्ये सुखे व°-क. च. १०६ वर्ज्यानि सुखं जीवितु°-च.

# अन्नपानविधिर्दशमोऽध्यायः ।

## ( उपोद्घातः )

सुरक्षितमप्यन्नपानमविधिनोपयुक्तं रोगाय मरणाय वा संपद्यते । ततस्तस्योपयोगे विधिना विशेषप्रदर्शनार्थमध्यायारम्भः ।

१ प्रतिज्ञा ।

**८४०–अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥**

८४०–अथात इत्यादि पूर्ववद्व्याख्येयम् ८४०

२ अन्नपानस्य विध्युपयोगप्रयोजनम् ।

**८४१–विधिविहितमन्नपानमिष्टेन्द्रियार्थमायतनमायुषो ब्रुवते। यदायत्तानि ह्योजस्तेजोधात्विन्द्रियबलतुष्टिपुष्टिप्रतिभारोग्यादीनि । तदिन्धना चान्तराग्नेः स्थितिः। अग्निमूलं च देहधारणमिति॥**

८४१–विधिना विहितमन्नपानमिष्टेन्द्रियार्थमभिमतरसगन्धादि सदायुषे आयतनमाश्रयमाचार्या ब्रुवते। तथाविधस्याहारस्यायत्तान्योजःप्रभृतीनि । कार्यकारणभावात् । तदिन्धना आहार इन्धनं यस्या अन्तराग्निस्थितेः सा तथाविधा देहस्य धारणेऽग्निः प्रथमं कारणम् ८४१

**टिप्पणी**—विधिना आहारविधिना विहितं विधिविहितम्। इष्टेति–इष्टाः–प्रिया हिताश्च इन्द्रियार्थाः–वर्ण–गन्ध–रस–स्पर्शाः यस्य तदिष्टेन्द्रियार्थम् । अत्र शब्दस्यावचनमन्नपाने प्रायस्तस्याविद्यमानत्वात् । यदायत्तानीति–तथा चोक्तं सुश्रुतेन–' लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुः। आहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च ' ( सू. ४६. ३ ) तदिन्धनेति–तत् विधिविहितमन्नपानमेव इन्धनं–काष्ठभूतं यस्यां सा तदिन्धना। अन्तराग्नेः–जठराग्नेः स्थितिः । अग्निमूलमिति–तथा च चरकः–' बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः । अन्नपानेन्धनैश्चाग्निर्ज्वलति व्येति चान्यथा ' ( सू. २७. ३४२ ) इति ८४१

३ अन्नपानविधिः

**८४२–अथात्मवान्स्वभाव–संयोग–संस्कार–मात्रा–देश–कालोपयोगव्यवस्थाः सप्ताहारकल्पनाविशेषाणां स्वास्थ्यास्वास्थ्यफलानां हेतुभूताः समीक्ष्य हितमेवानुरुध्येत ॥ ३ ॥**

८४२–अथानन्तरमन्नपानस्य विध्युपयोगप्रयोजनमुक्त्वा विधिरुच्यते–अथेति । आत्मवान्बुद्धिमानन्नस्य स्वभावसंयोगादीन्सप्त सम्यक्सूक्ष्मया बुद्ध्या समीक्ष्य हितमेवोपयोक्तुं यतेताहितं परित्यजेत्। किंभूतान्सप्त ? आह–स्वास्थ्यास्वास्थ्यंफलानामाहारकल्पनाविशेषाणामोदनपयोभक्ष्यव्यञ्जनादीनां कारणभूतान् । मूलपाठे तु द्वन्द्वे स्त्रीलिङ्गस्य परत्वात्सामानाधिकरण्येन हेतुभूता इति प्रयोगः ८४२

**टिप्पणी**—अथेति । स्वभावः–संस्काराद्यकृतः सर्वावस्थास्वत्याज्यः गुणयोगः। यथा–वन्हेरुष्णत्वमपां द्रवत्वमित्यादि। सप्तेति–अत्र उपयोक्तारमष्टमं प्रकारं समाचष्टे भगवाश्चरकः–' तत्र खल्विमान्यष्टावाहारविधिविशेषायतनानि भवन्ति । तद्यथा–प्रकृति–करण–संयोग–राशि–देश–कालोपयोगसंस्थोपयोक्त्रष्टमानि (भवन्ति ) ' इति ( वि. १. २४ ) हितमिति–हितम् ' यदाहारजातं समांश्च शरीरधातून्प्रकृतौ स्थापयति, विषमांश्च समीकरोति तत् (च. सू. २५. ३३) एवेनाहितव्यावृत्तिः। अहितं नानुरुध्येतेति भावः। हितविपरीतं त्वहितम् ( सु.सू.२०.३-४ ) ८४२

४ स्वभावलक्षणम् ।

**८४३–तत्र स्वभावतो दिव्योदकरक्तशालिषष्टिकमुद्गैणलावादयो लघवः, क्षीरेक्षुव्रीहिमाषानूपामिषादयो गुरव इति ॥ ४ ॥**

८४३–अन्ने च द्रव्याणि संयोगविशेषेण हि विलक्षणकार्यकराणि भवन्ति । एषां च स्वभावसंयोगादीनां लक्षणमुच्यते तत्रेति । तत्र स्वभावो द्रव्यस्वरूपम् । यथा दिव्योदकादीनां लघुत्वं क्षीरादीनां गुरुत्वमिति ८४३

**टिप्पणी**—तत्रेति–आदिना कपिञ्जल–शश–शरभ–शम्बरादीनां ग्रहणम्। अत्र पथ्यतमत्वाल्लघुवर्ग एव प्रथमं पठ्यते। क्षीरेत्यादि–आदिना क्षीरविकृतिपिष्टमौदिकामिषतिलादयो ग्राह्याः ८४३

५ संयोगादिभिः स्वभावस्याप्यन्यथात्वम् ।

**८४४–ते खल्वपि संयोगादिविशेषैरन्यथात्वं प्रतिपद्यन्ते ॥ ५ ॥**

८४४–तानि द्रव्याणि संयोगादिविशेषात्स्वभावादन्यथात्वं वैपरीत्यं भजन्ते। एतच्च मात्रादिप्रकरणे सविस्तरमुक्तम्। केवलमत्र तल्लक्षणमुच्यते–८४४

**टिप्पणी**—टीकायां सविस्तरमुक्तमिति–( अ.सं.सू. अ. ७. सू. ५०६–५६४ ) इत्यत्रेति भावः ८४४

६ संयोगलक्षणम् ।

**८४५–तत्र संयोगो नाम द्वयोर्बहूनां वा द्रव्याणां संहतीभावः । स विशेषमारभते यन्नैकैकशो द्रव्याणि ॥ ६ ॥**

८४५–संयोगोऽनेकस्य साहित्यम् । स च संयोगः संयोगिद्रव्यकार्यविशिष्टं कार्यमारभते । यत्कार्यमेकैकं द्रव्यं कर्तुमशक्तं सत्यपि कार्यकर्तृत्वे ८४५

**टिप्पणी**—द्वयोर्द्रव्ययोर्बहूनां वा द्रव्याणां संहतीभावः–योगः संयोगः । यं नैकैकश इति–यं विशेषं द्रव्याण्येकैकशो नारभन्ते, तानि पुनः संयुज्यमानानि तं विशेषं कुर्वन्ति । अत्रोदाहरणम्–मधुसर्पिषोस्तुल्यमानयोः संयोगो

---

१ °स्यामः। विधि°–क. ख. च. । २ °वते यत्तदा°–क। ३ °भते यन्नैकशो द्र°–ख।

मारकः। मधु सर्पिर्वा न पृथक्स्थितं मारणकर्म करोति। ताभ्यां संयुक्ताभ्यां तु तत्क्रियते। अतः संयोगस्यैव स गुणः। द्वितीयोदाहरणम्–मधुमत्स्यपयसां संयोगः कुष्ठादिकरः। अत्र मध्वादीनामेकैकं सेव्यमानं न कुष्ठादीञ्जनयति। किंतु तानि संयुज्यमानान्येव जनयन्ति। अतः कुष्ठादिकरत्वं संयुज्यमानानां मधुमत्स्यपयसामेव कार्यम्८४५

७ संस्कारलक्षणम्।

**८४६–संस्कारस्तु तोयाग्निसंनिकर्षशौचमन्थनदेशकालभावनाभाजनादिभिरुपजन्यते ॥ ७ ॥**

८४६–संस्कारोऽस्यैव द्रव्यस्य जलाग्निसंनिकर्षादिभिर्विशेषप्राप्तिः ८४६

**टिप्पणी**—तोयं जलम्। अग्निसंनिकर्षः। शौचं प्रक्षालनादिना शुचितापादनम्। मन्थनम्। देशः। कालः। भावना स्वरसादिकृता, भाजनं पात्रम् इत्यादिभिः गुणान्तराधानं संस्कार उच्यते इति भावः। संस्कारो हि स्वाभाविकगुणमुपहत्य गुणान्तरमुत्पादयति। यथा–'सुधौतः प्रस्रुतः स्विन्नः संतप्तश्चौदनो लघुः' (च. सू. २७.२५७) इति। अत्र ओदने लघुत्वं तोयाग्निसंनिकर्षशौचैः जन्यते। व्रीहयः प्रकृत्या गुरवः, तदुत्पन्ना लाजास्तु लघवः। तदुक्तम्–'गुरूणां लाघवं विद्यात्संस्कारात्सविपर्ययात्। व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डिकाः' (च. सू. २७.३३९) इति। अत्र अग्निसंनिकर्षः व्रीहिगतं गौरवमुपमृद्य लाजेषु लाघवमादधाति। मन्थनेन गुणान्तराधानं यथा–दध्नः तक्ररूपेण परिणामे 'शोथकृद्दधि शोथघ्नं सस्नेहमपि मन्थनात् ()' इति। देशेन गुणाधानं यथा–ब्राह्मरसायनस्य भस्मराशेरधः स्थापनम् (च. चि. १. पा. १.५८) 'पक्षाज्जातरसं पिबेत्' इत्यादि कालप्रकर्षोदाहरणम्। भावनया च स्वरसादिकृतया स्थितस्यामलकादेर्गुणस्योत्कर्षो भवति। भाजनेन यथा 'त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम्' (च.चि.१.३.४३) इत्यादौ। आदिना पेषणाभिमन्त्रणादि गृह्यते। ननु संस्कारसधर्येण गुणेन कथं स्वाभाविकगुणनाशः क्रियताम्? यतः 'स्वभावो निष्प्रतिक्रियः' इत्युक्तम्। यदि हि संस्कारेण स्वाभाविकं गुरुत्वं प्रतिक्रियते तदा 'स्वभावो निष्प्रतिक्रियः' इति कथम्? ब्रूमः–'स्वभावो निष्प्रतिक्रियः' इति स्वभावो भावानामुत्पत्तौ नान्यथा क्रियते। तेन जातिप्रतिबद्धं माषादीनां गुरुत्वं न तज्जातौ स्फोटयितुं पार्यते। संस्कारेण तु तदन्यथाकरणमनुमतमेव, दृष्टत्वात्।कश्चित्तु गुणो द्रव्याणां संस्कारादिनाऽपि नान्यथा क्रियते,यथा वन्हेरौष्ण्यं,वायोश्चलत्वं, तैलस्य स्नेह इत्यादि। एते हि यावद्द्रव्यभाविन एव गुणाः। गौरवादयस्तु पुराणधान्यादिष्वप्यपगमदर्शनान्न यावद्द्रव्यभाविनः। उक्तं हि–'गुणो द्रव्यविनाशाद्वा विनाशमुपगच्छति। गुणान्तरोपघाताद्वा' इति। यत्र तु संस्कारेण व्रीहेर्लाजलक्षणं द्रव्यान्तरमेव जन्येत तत्र गुणान्तरोत्पादः सुष्ठ्वेव ८४६

८ मात्रालक्षणम्।

**८४७–मात्रा पुनः पिण्डपरिमाणतः समुदायेन, प्रतिद्रव्यापेक्षया चाहारराशिः ॥ ८ ॥**

८४७–मात्रा द्विधा। एका पिण्डपरिमाणेन। यथान्नेना विचारितगुरुलाघवेन कुक्षेर्द्वौ भागौ पूरयितव्याविति।-नानाविधद्रव्यसमुदायेन द्वितीया प्रतिद्रव्यापेक्षया। यथा-गुरुणां द्रव्याणामर्धतृप्त्या, लघूनां च नातितृप्ततया भवति इति। द्विविधोऽप्याहारराशिर्मात्राशब्दवाच्यः ८४७

**टिप्पणी**—अत्र चरकः–'राशिस्तु सर्वग्रहपरिग्रहौ मात्रामात्राफलविनिश्चयार्थः। तत्र सर्वस्याहारस्य प्रमाणग्रहणमेकपिण्डेन सर्वग्रहः। परिग्रहः पुनः प्रमाणग्रहणमेकैकत्वेनाहारद्रव्याणाम्। सर्वस्य ग्रहः सर्वग्रहः। सर्वतो ग्रहः परिग्रह उच्यते' इति। अस्यार्थः–राशिर्मात्रा, स द्विविधः सर्वग्रहः परिग्रहश्च। तत्र **सर्वग्रहः** समुदितद्रव्यापेक्षया परिमाणम्। एकैकद्रव्यापेक्षया च **परिग्रहः**। राशेः प्रयोजनमाह–मात्रेति। मात्रा च अमात्रा च। मात्रा द्विविधा सर्वग्रहपरिग्रहौ। अमात्रापि द्विधा हीनत्वेन अधिकत्वेन वा। तयोः फले शुभाशुभे पथ्यत्वापथ्यत्वे। तयोर्विनिश्चयः स एव अर्थः प्रयोजनं यस्य स मात्रामात्राफलविनिश्चयार्थः। सर्वग्रहपरिग्रहौ विवृणोति–तत्रेति। सर्वस्य आहारस्य एकपिण्डेन प्रमाणं ग्रहणं सर्वग्रहः। मधुराम्लादीनामाहारावयवानां प्रत्येकं मात्रया ग्रहणं परिग्रहः। एतदेव शब्दव्युत्पत्त्या दर्शयति–सर्वस्येति। सर्वस्य समुदायस्य ग्रहः सर्वग्रहः। परितः सर्वतः। परित्र सवार्थे। ग्रहः परिग्रहः। आहारमात्रा अग्निबलमाहारद्रव्यं चापेक्षते। तदुक्तं मात्राशितीये–'मात्रा पुनरग्निबलापेक्षिणी' (च. सू. ५. ३) ८४७

९ देशलक्षणम्।

**८४८–देशो द्रव्यस्योपयोक्तुश्चोत्पत्त्यवस्थाने। तत्र पुनरुपयोक्ता स्वस्थातुरत्वतः प्रकृतिभेदतश्च परीक्ष्यः**

८४८–देशो द्रव्यस्योपयुज्यमानस्योत्पत्तिस्थानमुत्पन्नस्य च स्थितिस्थानमेवमुपयोक्तुश्च पुरुषस्य। तेन कस्मिन्कि-गुणयुक्ते देशे पुरुषो द्रव्यं वा जातं, कस्मिन्वा स्थितमिति विकल्पयेदित्यर्थः। तत्र च देशे तस्य द्रव्यस्योपयोक्ता स्वस्थो वा स्यादातुरो वा किंप्रकृतिश्चेति परीक्ष्यः। एतावता हि नानाविधविशेषावगतिर्भवति ८४८

**टिप्पणी**—देश इति। देशः पुनर्भूमिदेहभेदेन द्विविधः। तत्र भूमिदेशो जाङ्गलानूपसाधारणभेदैस्त्रिविधः। एतेषां लक्षणानि यथा–(१) जाङ्गलः पर्याकाशभूयिष्ठः, तरुभिरपि च कदरखदिरासनाश्वकर्णधवतिनिशशल्लकीसालसोमवल्कबदरीतिन्दुकाश्वत्थवटामलकीवनगहनः, अनेकशमीककुभशिंशपाप्रायः, स्थिरशुष्कपवनबलविधूयमानप्रनृत्यत्तरुणविटपः,

प्रततमृगतृष्णिकोपगूढतनुखरपरुषसिकताशर्करावहुलः, लावतित्तिरचकोरानुचरितभूमिभागो वातपित्तबहुलः स्थिरकठिनमनुष्यप्रायो ज्ञेयः। (२). अथानुपो हिन्तालतमालनारिकेलकदलिवनगहनः, सरित्समुद्रपर्यन्तप्रायः, शिशिरपवनबहुलो वञ्जुलवानीरोपशोभिततीराभिः सरिभिरुपगतभूमिभागः, क्षितिधरनिकुञ्जोपशोभितो मन्दपवनानुवीजितक्षितिरुहगहनः, अनेकवनराजीपुष्पितवनगहनभूमिभागः, स्निग्धतरुप्रतानोपगूढो हंसचक्रवाकबलाकानन्दीमुखपुण्डरीककादम्बमद्गुभृङ्गराजशतपत्रमत्तकोकिलानुनदिततरुविटपः, सुकुमारपुरुषः पवनकफप्रायो ज्ञेयः; (३) अनयोरेव द्वयोर्देशयोर्वीरुद्वनस्पतिवानस्पत्यशकुनिमृगगणयुतः स्थिरसुकुमारवलवर्णसंहननोपपन्नसाधारणगुणयुक्तपुरुषः साधारणो ज्ञेयः (च. कल्प. १. ८, सु. सू. ३५. ४२-४३ ) इति।

देहदेशस्तु स्थूलकृशमध्यभेदैस्त्रिविधः। तत्र रसनिमित्तमेव स्थौल्यं कार्श्यं च। तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्नरतस्य चाम एवान्नरसो मधुरतरश्च शरीरमनुक्रामन्नतिस्नेहान्मेदो जनयति, तदतिस्थौल्यमापादयति। तमतिस्थूलं क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानि क्षिप्रमेवाविशन्ति। सौकुमार्यान्मेदसः सर्वक्रियास्वसमर्थः कफमेदोनिरुद्धमार्गत्वाचाल्पव्यवायो भवति। आवृतमार्गत्वादेव शेषा धातवो नाप्यायन्ते। अत्यर्थमतोऽल्पप्राणो भवति। प्रमेहपिडकाज्वरभगंदरविद्रधिवातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति। सर्व एव चास्य रोगा बलवन्तो भवन्त्यावृतमार्गत्वात्स्रोतसाम्, अतस्तत्सोत्पत्तिहेतुं परिहरेत्। उत्पन्ने तु शिलाजतु-गुग्गुलु-गोमूत्र-त्रिफला-लोहरजोरसाञ्जन-मधु-यव-मुद्ग-कोरदूषश्यामाकोद्दालकादीनां विरूक्षणछेदनीयानां द्रव्याणां विधिवदुपयोगो व्यायामलेखनबस्त्युपयोगश्चेति।

तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाध्ययनभयशोकध्यानरात्रिजागरणपिपासाक्षुत्कषायाल्पाशनप्रभृतिभिरुपशोषितो रसधातुः शरीरमननुक्रामन्नल्पत्वान्न प्रिणाति, तस्मादति कार्श्यं भवति, सोऽतिकृशः क्षुत्पिपासाशीतोष्णवातवर्षभारादानेष्वसहिष्णुर्वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति, श्वास-कास-शोष-प्लीहोदराग्निसाद-गुल्मरक्तपित्तानामन्यतममासाद्य मरणमुपयाति, सर्व एव चास्य रोगा बलवन्तो भवन्त्यल्पप्राणत्वात्; अतस्तत्सोत्पत्तिहेतुं परिहरेत्। उत्पन्ने तु पयस्याश्वगन्धाविदारिगन्धाशतावरीबलातिबलानागबलानां मधुराणामन्यासां चौषधीनामुपयोगः, क्षीरदधिघृतमांसशालिषष्टिकयव गोधूमानां च, दिवास्वप्नब्रह्मचर्याव्यायामबृंहणबस्त्युपयोगश्चेति। यः पुनरुभयसाधारणान्यासेवेत तस्यान्नरसः शरीरमनुक्रामन् समान् धातूनुपचिनोति, समधातुत्वान्मध्यशरीरो भवति, सर्वक्रियासु समर्थः क्षुत्पिपासाशीतोष्णवर्षातपसहो बलवांश्च, स सततमनुपालयितव्य इति, भवति चात्र- अत्यन्तगर्हितावेतौ सदा स्थूलकृशौ नरौ। श्रेष्ठो मध्यशरीरस्तु कृशः स्थूलात्तु पूजितः। ( सु. सू. १५.३५-३८ ) इति। टीकायां स्वस्थ इत्यादि-स्वस्थलक्षणं यथा-समदोषः समाग्निश्च समधातुमलक्रियः। प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते' ( सु. सू. १५. ४४ ) इति। आतुरो रोगी देहस्य प्रकृत्यादिविज्ञानं शारीरस्थानादवगन्तव्यम् ( अ. सं. शा. ८. ) इति।

१० काललक्षणम्।

**८४९-कालस्तु ऋतुव्याध्यपेक्षो जीर्णाजीर्णलक्षणश्च १०**

८४९-कालस्तु द्वैविध्येनान्नपानोपयोगयोग्यतां याति। ऋतुव्याध्यपेक्षत्वेन जीर्णाजीर्णलक्षणत्वेन च। तत्र स्वस्थस्य ऋत्वपेक्षयाऽस्मिन्नृतावेवमाहारपानमाम्नातमित्यातुरस्य तु व्याध्यपेक्षयाऽस्मिन्व्याधावस्यामवस्थायामिदं योज्यमिति। यथा ज्वरे-'क्षीरोचितस्य-'इत्यादि। अथातुरस्यापि ऋत्वपेक्षा-विद्यत एव। तथाहि-शरदि श्लेष्मजेऽपि व्याधौ तद्विपरीतान्यपि अत्यर्थतीक्ष्णोष्णानि दातुं न पार्यन्ते। उभयस्य स्वस्थस्यातुरस्य च जीर्णाजीर्णलक्षणः ८४९

**टिप्पणी**—कालस्त्विति च. वि. १. ३० ; ८ १२५-१२८ टीकायां क्षीरोचितस्येत्यादि-अ. सं. चि. २. ८४९

११ अजीर्णस्य सर्व दोषप्रकोपत्वम्।

**८५०-अजीर्णेऽपि[4] पूर्वस्याहारस्यापरिणामतो रसे उत्तरोत्तरेणोपसंसृज्यमानः[5] सर्वान्दोषान्प्रकोपयत्याशु[6]॥ ११॥**

८५०-एतदुच्यते-अजीर्णस्य तु द्वैविध्यमन्नत्वेनाहारसारत्वेन च। अन्ने त्वजीर्णे भोजनेच्छापि न भवति। आहारसारे त्वजीर्णे उत्तरेणाधततनेन रसेन मिश्रीभूते वातादीनामुपलेपेन मार्गरोधादिना प्रकोपः शीघ्रमेव ८५०

**टिप्पणी**—च. वि. १. ३९. ८५०

१२ जीर्णान्नस्य गुणाः।

**८५१-जीर्णे तु स्वस्थानस्थेषु दोषेषु वातानुलोम्यांदुत्सृष्टेषु मूत्रपुरीषवेगेषु विशुद्धेषूद्गारहृदयस्रोतोमुखेषु विशदकरणे लघूनि शरीरेऽग्नावुदीर्णे जातायां बुभुक्षायामभ्यवहृतमन्नमप्रदूषयद्दोषानायुर्बलवर्णानभिवर्धयति॥ १२॥**

८५१-जीर्णे तु स्वस्थानस्थदोषादिलक्षणे भुक्तमन्नं दोषादिकमकोपयदायुर्बलादीन्वर्धयति ८५१

**टिप्पणी**—च. वि. १. ३९. ८५१

---

४ °अजीर्णे हि पू°-क.　५ °रस उत्तरेण संस°-क.　६ °न्यासष्टे°-क.

१३ भोजनकालः ।

**८५२-केवलमयमेव कालो भोजनस्य ॥ १३ ॥**

८५२-अन्यत्सुबोधम् ८५२

**टिप्पणी**—तथा चोक्तोक्तं सुश्रुतेन-' विसृष्टे विण्मूत्रे विशदकरणे देहे च सुलघौ, विशुद्धे चोद्गारे हृदि सुविमले वाते च सरति ॥ तथान्नश्रद्धायां क्लमपरिगमे कुक्षौ च शिथिले, प्रदेयस्त्वाहारो भवति भिषजां कालः स तु मतः ' ( उ. ६४. ८४; सु. सू. ४६. ४६४-४६७ ) इति ८५२

१४ अतीतकालभोजनस्य दोषाः ।

**८५३-अतीतकालं पुनस्तद्वातावष्टब्धं कृच्छ्राद्विपच्यते कर्शयत्यन्नरुचिं च पुनरुपहन्ति ॥ १४ ॥**

८५३-अतीतकालमग्निम्जीर्णाजीर्णलक्षणकालेऽतिक्रान्ते ।

**टिप्पणी**—सु. सू. ४६ ४७२

१५ आहारोपयोगे नियमाः ।

**८५४-उपयोगव्यवस्था तु नास्नातो, न दिग्वासा नैकवस्त्रधृक्, नमलिनवसनो, नाहुत्वा, न जपित्वा, नानिरुप्य देवताभ्यो, न पितृभ्यो, न दत्वाऽग्रमन्नमग्नये, न गुरुभ्यो, नातिथिभ्यो, नाभ्यागतेभ्यो, न श्वव्यःश्वपचेभ्यः प्रत्यवेक्ष्य चाश्रितोपाश्रितानपि तिरश्चोऽपि स्वपरिगृहीतान्प्रशस्तदेशकालोपकरणयुक्तः स्रग्वी विभूषितः सुगन्धिरार्द्रपाणिपादः सुविशुद्धवदनोऽभिमतसहायः केशमक्षिकाद्यनुपजुष्टमीनन्यमनिन्द्यैरन्ननिन्दितमपुनरुष्णीकृतं नात्युष्णमनुपदग्धं सुसिद्धमलोलो नासात्म्यं,नाविदितं,नाविदितागमं,नातिसायं, नातिप्रगे, नाकाशे,नातपे,नान्धकारे, नाधो वृक्षस्य न शय्यास्थो नोन्नम्य प्रदेशिनीं,न पात्रे भिन्ने, नासंवृते,न मलिने भावदूषिते वा,न चासनस्थिते,न हस्तस्थे,न हस्ते,प्राङ्मुखः सुमनाः शुचिभक्ताक्षुधितानुकूलजनोपाहितं हितमन्नमश्नीयात् ॥१५॥**

८५४-नास्नात इत्याशिनाऽऽहारस्योपयोगे नियम उच्यते दिग्वासा अगृहीतवसनः । न चैकपटः । नाहुत्वा तिलघृतादिभिर्मन्त्रपूर्वमग्निम् । न जपमकृत्वा । न देवताभ्योऽनिरुप्यासङ्कल्प्य तदाहारं न चाग्रं प्रथममनुच्छिष्टसकलभोजनेभ्यस्तोकं स्तोकमग्नये अदत्वा । अतिथिरागन्तुर्भोजनार्थी । अभ्यागतास्तद्देश केनचित्प्रसङ्गेनागता बान्धवाचाः । वयांसि पक्षिणः प्रत्यवेक्ष्य भोजनादिना. आश्रितान् तदुपासकान् भृत्यबान्धवादीनुपाश्रितानाश्रिताश्रितान् । तिरश्चो गवाश्वादयः । परिगृहीताः स्वत्वमापादिताः । तथा प्रशस्तैरदुष्टैर्देशादिभिर्युक्तः अनिन्द्य भोजनमगर्हितं स्वभावेन । तथा चानिन्द्यमपि स्वयमानिन्दन्नाहारे गर्हामकुर्वन्नन्यैश्चानिन्दितम्-उपदिग्धमित्यग्निसंयोगादसात्म्यं वक्ष्यमाणलक्षणमविदितं गुणागुणैरविज्ञातस्वरूपमविदितागममज्ञातागमं नाति सायं नाति प्रग इति चेत्याचार्यस्य दिनारम्भे दिनक्षये च भोजनप्रतिषेधोऽभीष्टः । पूर्वाह्णाभिधायी तु प्रगेशब्दः कथं प्रयुक्त इति न जाने । अथवातिक्रान्तप्रग इति मध्याह्ने भोजनप्रतिषेधः । आकाशं निरावरणो देशः । उन्नमय्य उत्क्षिप्य प्रदेशिनीमङ्गुष्ठतो द्वितीयाङ्गुलिः प्रदेशिनी । भावदूषितमदुष्टमपि दुष्टतया भावितम् । भोक्तुर्न हस्तस्थे,पात्रे गृहीतमाहारमश्नीयात् । केवले हस्ते गृहीत्वा च नाश्नीयात् । शुच्यादिगुणयुक्तेन परिजनेनोपहितं ढौकितम् । हितं वक्ष्यमाणलक्षण ( अ. सं. सू. १०. ८६९ ) मश्नीयात् ८५४

**टिप्पणी**—च. वि. १. ३२;सू. ८. २०. सु. सू. ४६. ४७५-७६. ८५४

१६ पर्युषितान्ने नियमः ।

**८५५-न पर्युषितमन्यत्र मांसोपदंशभक्ष्येभ्यः ॥ १६ ॥**

८५५-मांसार्दांश्च वर्जयित्वाऽन्यमाहारं पर्युषितं गताहोरात्रं नाश्नीयात् । उपदंशं यदनग्निसिद्धमपि फलादि दन्तेनोपदश्यान्नेन सह भुज्यते ८५५

**टिप्पणी**—च. सू. ८. २०. ८५५

१७ अशेषान्नभक्षणे नियमः ।

**८५६-नाशेषमन्यत्र दधि-मधु-घृत-सलिल-सक्तु-शुक्त-पायसेभ्यः ॥ १७ ॥**

८५६-दध्यादीनि च निःशेषाण्यभ्यवहरेदन्यत्सशेषमिति ८५६

**टिप्पणी**—च. सू. ८. २०. ८५६

१८ आहारग्रहणपद्धतिः ।

**८५७- अपि च स्निग्धं लघूष्णमविलम्बितमनतिद्रुतमजल्पन्नहसंस्तन्मनाः समीक्ष्य सम्यगात्मानम् ॥१८॥**

८५७-तथा स्निग्धत्वादिगुणयुक्तं चाहारमभ्यवहरेत्तन्मना अभ्यवह्रियमाणे दत्तचित्तः । आत्मानं च सम्यक् समीक्ष्य विकल्प्य ८५७

**टिपणी**—च. वि. १. ३५. ८५७

१९ स्निग्धलघूष्णाहारस्य गुणाः ।

**८५८-स्निग्धलघूष्णानि हि वह्निमौदर्यमुदीरयन्ति कोष्ठं परिशोधयन्ति धातून् विकुर्वते क्षिप्रं जरयन्त्यनिलमनुलोमयन्ति ॥ १९ ॥**

८५८-स्निग्धादीनि त्रीणि धातून् रसादीन् निर्मलीकरणेन उपबृंहकत्वेन च न विकुर्वते ८५८

**टिपणी**—च. वि. १. ३६-३७. ८५८

२० स्निग्धाहारगुणाः ।

**८५९-तथा स्निग्धं दृढीकरोतीन्द्रियाण्युपचिनोति शरीरमपचिनोति जरसं, बलमभिवर्धयति, वर्णप्रसादमभिनिर्वर्तयति ॥ २० ॥**

८५९-अन्यत् सुबोधम् ८५९

**टिप्पणी**—च. वि. १. ३७. ८५९

---

७ °तृभ्यो नादत्वा°ऽग्र. क. ख. ८ °क्ष्य चाश्रित.न° क. ख. ९ °रश्च परिगृ°-क. ख. च. १० °काद्य जुष्ट° क. ख. ११ °न्दितं पुनर्नोष्णीकृतना°-ख. १२ °न चासनस्थितेन हस्तेन प्राङ्मु°-क. ख. १३ °प्रं जीर्यन्त्यनि°-ख.

२१ लघ्वाहारगुणाः ।

८६०–लघु च पुनः स्वभावादिभिरन्नमप्रतिपीडयद्दो- पानव्यथमानं परिणाममेति । विपन्नमपि चाल्प- दोषं भवति ॥ २१ ॥

८६०–आदिग्रहणेन संयोगसंस्कारादिलघुत्वग्रहणम् । विपन्नमपि अपथ्यतां प्राप्तमपि स्वल्पदोषं भवति ८६०

२२ उष्णाहारगुणाः ।

८६१–उष्णं च पुनर्जनयति रुचिमुपशोषयति श्लेष्माणम्

टिप्पणी—च. वि. १. ३६. ८६१

२३ विलम्बिताहारग्रहणे दोषाः

८६२–विलम्बितं तु भुञ्जानो न तृप्तिमधिगच्छति बहु च भुङ्क्ते शीतीभवति चान्नजातं विषम- पाकं च भवति ॥ २३ ॥

टिप्पणी—च. वि. १. ४३. ८६२

२४ अतिद्रुताहारग्रहणे दोषाः ।

८६३–अतिद्रुतं तु भुञ्जानस्य जल्पतो हसतोऽन्यमनसो वा भवेदुत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं गुणदोषाविभावनं च ॥ २४ ॥

८६३–उत्स्नेहनमन्नस्यान्यनाडीगमनम् । भोजनस्य कोष्ठप्राप्तिपाकयोरवसादः । अन्यमनस्कत्वाच्च भोजनगुण- दोषान् विचारयितुं न शक्यते ८६३

टिप्पणी—च. वि. १. ४२. ८६३

२५ आहारे आत्मसमीक्षानियमः ।

८६४–समीक्ष्य सम्यगात्मानमिति, ममेदं सात्म्यमिद- मसात्म्यमिति नित्यमप्रमत्तः प्रत्यवेक्षेत ॥ २५ ॥

८६४–समीक्ष्य सम्यगात्मानमिति पूर्वोक्तं( अ. सं. सू. १० ) ८५७ व्याकरोति । आत्मानं परीक्ष्य इदं वा तदात्वे प्रस्तुतं सात्म्यमिदमसात्म्यमिति ८६४

टिप्पणी—च. वि. १. ४५. ८६४

२६ सात्म्यासात्म्यलक्षणम् ।

८६५–तत्र सात्म्यं नाम सहात्मना भवत्यभ्यस्तं तदौचित्यादुपशेते इत्योकसात्म्यम् । सात्म्य- विपरीतमनुपशयादसात्म्यम् ॥ २६ ॥

८६५–सात्म्यं यज्जन्मनःप्रभृति सहात्मनाऽभ्यस्तं तच्च शरीरे औचित्यादभ्यस्तत्वादुपशेते सुखावहं भवति । एत- देव च लोके सात्म्यशब्देनोच्यते । यज्जन्मनः प्रभृत्यभ्यस्तं सुखावहं च स्वल्पकालाभ्यस्तं सात्म्यमेव । एतद्विपरीतम- सात्म्यम् ८६५

टिप्पणी—ओकः–अभ्यासः च.वि.१.२३.सू.६४९.८६५

२७ मतान्तरेण सात्म्यासात्म्यलक्षणम् ।

८६६–अन्ये पुनः प्रकृतिवयोदेशर्तुदोषव्याधिवशेन सात्म्यं बहुविधमिच्छन्ति । ते ह्युपशयमात्रमङ्गी- कृत्य विपरीतगुणमप्युपचारेण सात्म्यमाचक्षते । तुल्यगुणं चानुपशयादसात्म्यम् ॥ २७ ॥

८६६–अन्ये त्वाचार्याः प्रकृत्यादिभेदेन सुखकर्तृत्वमात्र- हेतुं बहुविधं सात्म्यमिच्छन्ति । ते च जन्मनः प्रभृत्यभ्य- स्तमनपेक्ष्य प्रकृतिदेशादिविशेषमाश्रित्य शरीरसंवर्धक- द्रव्यगुणेभ्यो विपरीतगुणमपि संप्रति सुखहेतुत्वात् सात्म्य- माचक्षते । तेषां च सदृशगुणमपि शरीरेणाहारजातं सम्प्रत्यसुखावहत्वादसात्म्यम् ८६६

टिप्पणी—अन्ये इति–च. सू. ६. ५०; शा. ६. ८.

२८ सात्म्यस्य त्रैविध्यम् ।

८६७–सात्म्यं तु प्रवरावरमध्यविभागेन त्रिविधम् । तत्र सर्वरसं प्रवरमेकरसमवरं, मध्यं तु मध्यम- मेव ॥ २८ ॥

८६७–सर्वे च सात्म्यं त्रिप्रकारं त इच्छन्ति । सुबोधम् ।

टिप्पणी—च. वि. १. २३. ८६७

२९ सात्म्यानामुपयोगव्यवस्था ।

८६८–तेषु प्रवरं समदोषस्योपदिशन्तीति । इतरेषामपि क्रमेण सात्म्यमपि चाहितं पादेन पादांशेन वा विवर्जयेदित्युक्तं प्राक् ॥ २९ ॥

८६८–तेषु च मध्ये प्रवरं सर्वरसं समदोषप्रकृतेः सुखा- वहत्वेनोपदिशन्ति । इतरेषां च विषमदोषप्रकृतीनामपि क्रमादभ्यासेन सर्वरसस्य शरीरगुणैः सादृश्यात् । तेन बलादुक्तं भवति मध्यमवरं च विषमदोषप्रकृतीनामेवेति । तच्च यथायथमुपशयात् ८६८

टिप्पणी—प्रागिति—अ. सं. सू. ९. ७३७. ८६८

३० हिताहिताहारलक्षणम् ।

८६९–तत्र यदाहारजातं समांश्च धातूननुवर्तयति विष- मांश्च समीकरोति तत्समासतो हितम् । विपरी- तमहितम् ॥ ३० ॥

८६९–पूर्वं (अ. सं. सू. ९. ७३७). च सात्म्यमहितं क्रमेण त्यजेदित्युक्तमतस्तत्रेत्यादिना हिताहितलक्षणमुच्यते।

टिप्पणी—च. सू. २५. ३३. ८६९

३१ हिताहिताहारोपयोगव्यवस्था ।

८७०–तत् पुनर्मात्रायोगादिवैचित्र्यादनियतमपि यथो- पदेशं यथाभूयिष्ठं च शीलयेत् परिहरेच्च ॥ ३१ ॥

८७०–तच्च हिताहितं मात्रासंयोगादीनां वैचित्र्याद- नियतस्वरूपमपि यथोपदेशं शास्त्रोपदेशतन्त्रतया यथाभूयिष्ठं बहुत्वानतिक्रमेण यत् बाहुल्येन सम्भवति तथथासङ्ख्येन शीलयेत् परिहरेच्च । हितं शील्येदभ्यसेदाहितं च परिहरे- दित्यर्थः ८७०

टिप्पणी—च. सू. ५. १३. ८७०

३२ समशनादिपरिहारः ।

८७१–तथा विशेषतः समशनमध्यशनममात्राशनं विषमाशनं च वर्जयेत् ॥ ३२ ॥

८७१–समशनादींस्तु विशेषतःपरिहरेदिति सम्बन्धः ८७१

टिप्पणी—च. चि.१५. २३७; सु.सू. ४६. ५०८. ८७१

---

१४ °ऊष्णं पुनर्ज°ख. १५ °त्म्यमिति च. नि.°–ख. १६ °वत्यतस्तदौ°–क, ख. १७ °त इत्येके°–ग. १८ °शन्तीति। तेषां–क. १९ °समान्धातू°–क. ख.

३३ समशनलक्षणम् ।

**८७२-तत्र पथ्यापथ्यमेकत्र भुक्तं समशनम् ॥ ३३ ॥**

८७२-पथ्यमपथ्यं च मिश्रीभूतं समशनम् ८७२

**टिप्पणी**—च. चि.१५. २३५; सु. सू. ४६. ५०७.८७२

३४ अध्यशनलक्षणम् ।

**८७३-भुक्तस्योपरि भुक्तमध्यशनम् ॥ ३४ ॥**

८७३-यथोचितं भुक्त्वा किञ्चित्कालमतिक्रम्य यत् पुनर्भुज्यते तदध्यशनम् ८७३

**टिप्पणी**—च.चि. १५. २३६:सु. सू. ४६. ५०८. ८७३

३५ अमात्राशनलक्षणम् ।

**८७४-अमात्राशनं पुनः पृथगेवोपदेक्ष्यते ॥ ३५ ॥**

८७४-अमात्राशनमग्रतो वक्ष्यते । ८७४

**टिप्पणी**—अग्रिमाध्याये ९५१ – ९५५ इत्यत्रेति शेषः ८७४

३६ विषमाशनलक्षणम् ।

**८७५-अप्राप्तातीतकालं तु भुक्तं विषमाशनमिति ॥३६**

८७५-यथोचितभोजनकालेऽप्राप्तेऽतिक्रान्ते वा भुज्यते तद्विषमाशनम् ८७५

**टिप्पणी**—च.चि.१५.२३६;सु.सू. ४६.४७२,४७३. ८७५

—:o:—

३७ भोजने राजतपात्रोपयोगनियमः ।

**८७६-भुञ्जानस्तु पेयायूषरसान् व्यञ्जनानि राजतेषु पात्रेषु निदध्यात् ॥ ३७ ॥**

८७६-अन्यत्सुबोधम् ८७६

**टिप्पणी**—सु. सू. ४६. ४४८. ८७६

३८ भोजने सौवर्णपात्रोपयोगनियमः ।

**८७७-परिशुष्कप्रदिग्धानत्युष्णं च पयः सौवर्णेषु ॥ ३८**

**टिप्पणी**—सु. सू. ४६. ४४९. ८७७

३९ भोजने कांस्यपात्रोपयोग नियमः ।

**८७८-खलखट्वरकाम्बलिकान् कांस्येषु ॥ ३९ ॥**

८७८-कट्वरो नाम कटवम्लोपदेह्यव्यञ्जनविशेषः ।

**टिप्पणी**—खलकम्बलिकौ प्रोक्तौ (अ. सं. सू. ७. ३२३ प्रभा) खट्वरं तक्रं व्यंजनं वा । सु. सू. ४६. ४५०. ८७८

४० भोजने वज्रवैडूर्यचित्रितपात्रोपयोगनियमः ।

**८७९-रागषाडवसट्टकान् वज्रवैडूर्यविचित्रेषु ॥ ४० ॥**

८७९-सट्टकनाम रागषाडवसदृशो दशान्तरे प्रसिद्धः८७९

**टिप्पणी**—रागषाडवौ प्रोक्तौ (अ. सं. सू. ७. ३३१, शशिलेखा) त्रिकटु-जीरकं-दाडिम-शर्करायुक्तं मथितं दधि सट्टकः। सु. सू. ४६. ४५२. ८७९

४१ आयसपात्रोपयोगनियमः ।

**८८०-घृतमायसे ॥ ४१ ॥**

**टिप्पणी**—सु. सू. ४६. ४४८. ८८०

४२ ताम्रादिपात्रोपयोगनियमः ।

**८८१-पयः सुशीतं ताम्रमये। पानीयं पानकानि च मृद्धेमस्फटिककाचमयेषु, ओदनं च विस्तीर्णे मनोरमे स्थाने ॥ ४२ ॥**

**टिप्पणी**—सु. सू. ४६. ४५१-४५२. ८८१

—o—

४३ पात्रनियमोल्लंघने दोषाः ।

**८८२-अन्यथा हि वर्णगन्धरसान्यत्वादहितं स्यात् ॥ ४३ ॥**

४४ पात्रे भक्ष्यस्थाननियमः ।

**८८३-अपि च-दक्षिणपार्श्वे भक्ष्यं स्थापयेत् ॥ ४४ ॥**

४५ पात्रे पेयलेह्यादिस्थापननियमः ।

**८८४-सव्ये पेयं लेह्यं मुखोद्घर्षणापिण्डीं च ॥ ४५ ॥**

४६ पात्रे भोज्यस्थापननियमः ।

**८८५-मध्ये भोज्यमिति ॥ ४६ ॥**

—o—

४७ गुरुस्वादुस्निग्धानां भोजने प्रागदननियमः ।

**८८६-यथाग्निसात्म्यं तु प्राक् द्रवमुपशुष्कं वाऽश्नीयात् प्रागेव तु गुरुस्वादुस्निग्धं च ॥ ४७ ॥**

८८६-अग्निबलापेक्षया सात्म्यापेक्षया च द्रवं शुष्कं वा प्रथममद्यात् । गुर्वादिगुणयुक्तमाहारं पूर्वमेवाद्यात् ८८६

**टिप्पणी**—सु. सू. ४६. ४५९. ८८६

४८ मध्ये लवणादननियमः ।

**८८७-मध्येऽम्ललवणम् ॥ ४८ ॥**

**टिप्पणी**—सु. सू. ४६. ४५९. ८८७

४९ अन्तेरूक्षाद्यदननियमः ।

**८८८-अन्ते रूक्षं द्रवमितररसयुक्तं च ॥ ४९ ॥**

**टिप्पणी**—सु. सू. ४६. ४५९. ८८८

५० मन्दाग्निविषये विशेषः !

**८८९-तत्र मन्दाग्नेर्द्रवोष्णेन समुत्तेजितोष्मणोऽन्यदुपयुक्तं सम्यक् पाकमेति ॥ ५० ॥**

मन्दाग्निस्तु द्रवोष्णमेवादौ भुञ्जीत । ८८९

—o—

५१ सर्वानुपाने सलिलस्यश्रैष्ठ्यम् ।

**८९०-अनुपाने तु सलिलमेव श्रे' सर्वरसयोनित्वात्सवभूतसात्म्यत्वाज्जीवनादिगुणयोगाच्च।।५१।। ॥५१॥**

८९०-अनुपाने भुक्तस्योपरि पाने जलमेव श्रेष्ठं सर्वरसजनकशक्तेः सर्वगुणत्वाद्भोजनरसाविरोधाच्छरीरवृद्धिकरम्

**टिप्पणी**—सु. सू. ४६. ४३३. ८९०

५२ शीतजलानुपाननियमः ।

**८९१-तच्छीतं दधिमधुयवगोधूममद्यविशेषेषु सर्वेषु च विदाहिषु शरद्ग्रीष्मयोश्च ॥ ५२ ॥**

**टिप्पणी**—सु. सू. ४६. ४३४. ८९१

---

२० °खट्वरका°-क. ख. २१. °ग. खाडव°-क. ख. २२ °स्फटिकमये°-क. ख, २३ °सव्ये पेयं मुखो°-ख. २४ °रूक्षं द्रव°-ख. २५ °नुपानं तु°-ख.

५३ उष्णजलानुपाननियमः ।

**८९२–उष्णं पिष्टमयेष्वन्येषु च दुर्जरेषु हेमन्ते च ॥५३॥**

**टिप्पणी**—सु. सू. ४६. ४२३, ४२४, ४३४. ८९२

५४ द्रवद्रव्यविज्ञानीयेक्षणोपदेशः ।

**८९३–द्रवद्रव्यविज्ञानियं चेक्षेत ॥ ५४ ॥**

८९३–द्रवद्रव्यविज्ञानीय चेक्षेत इत्येतावतैतदुक्तं भवति शीतस्योष्णस्य च पानीयस्य तत्रोक्तेः स्वविषयेऽनुपान-प्रयोगः ८९३

**टिप्पणी**—टीकायां तत्रोक्तेरिति-अ. सं. सू. अ. ६. १८३-२०-१.८९३

५५ क्षीरानुपाननियमः ।

**८९४–क्षीरं शालिषष्टिकयोस्तथैवोपवासाध्वभाष्य-स्त्रीव्यायामक्लान्तबालवृद्धेषु ॥ ५५ ॥**

८९४–क्षीरं शालिषष्टिकयोरुपवासक्लान्तादिषु च ।

**टिप्पणी**—च. सू. २७. ३२२; सु. सू. ४६. ४२७.८९४

५६ मांसरसानुपाननियमः ।

**८९५–मांसरसः शोषादिषु ॥ ५६ ॥**

८९५–मांसरसः शोषादिषु अतिलङ्घनोक्तेषु रोगेषु ८९५

**टिप्पणी**—च. सू. २७. ३२१; सु. सू. ४६. ४२५.८९५

५७ अम्लानुपाननियमः ।

**८९६–वाते त्वम्लानि च ॥ ५७ ॥**

८९६–वाते तु वृद्धे अनुपानमम्लानि काञ्जिकादीनि चकारान्मांसरसोऽपि ८९६

**टिप्पणी**—च. सू. २७. ३२१. ८९६

५८ शर्करोदकानुपाननियमः ।

**८९७–पित्ते शर्करोदकम् ॥ ५८ ॥**

८९७–पित्ते शर्करोदकम् ८९७

**टिप्पणी**—च. सू. २७. ३२१. ८९७

५९ त्रिफलोदकाद्यनुपाननियमः ।

**८९८–त्रिफलोदकं तु सक्षौद्रं श्लेष्माणि प्रायश्चाक्षिगल-रोगेषु ॥ ५९ ॥**

८९८–श्लेष्मणि माक्षिकसंयुक्तं त्रिफलाक्वथितं जलम् । अक्षिरोगेषु सर्वेषु मलरोगेषु च प्रायशः सर्वेषु समाक्षिकं त्रिफलोदकम् ८९८

**टिप्पणी**—च. सू. २७. ३२१ ८९८

६० मस्त्वनुपाननियमः ।

**८९९–मस्त्वेव वा दध्नि कूर्चिकाकीलाटयोश्च ॥ ६० ॥**

८९९–दध्नि शीतोदकमनुपानं पूर्वमुक्तम् ( ) । सम्प्रयुच्यते मस्त्वेव वेति । दध्न उभयानुपानसमुच्चयप्रतिषेधार्थ-मेवकारकरणम् । तेन शीतोदकं वा मस्तु वा दध्यनुपान-मित्यर्थः कूर्चिकाकीलाटयोश्च मस्त्वेव ८९९

**टिप्पणी**—कूर्चिकाकीलाटौ प्रोक्तौ (अ. सं. सू. ६. २२० प्रभा ) ८९९

६१ धान्याम्लाद्यनुपाननियमः ।

**९००–धान्याम्लं मस्तु तक्रं वा शाकावरान्नेषु ॥ ६१ ॥**

९००–अवरान्नं विदलसस्यान्नम् ९००

**टिप्पणी**—धान्याम्लं पूर्वं गदितम् । (अ. सं. सू. ६. २७७ प्रभा ) ९००

६२ मद्यानुपाननियमः ।

**९०१–मद्यं मांसेषु ॥ ६२ ॥**

**टिप्पणी**—सु. सू. ४६. ४२६. ९०१

६३ फलाम्लाद्यनुपाननियमः ।

**९०२–फलाम्लमम्बु वाऽऽसवांश्च विविधान् विभज्य प्रयोजयेत् ॥ ६३ ॥**

**टिप्पणी**—सु. सू. ४६. ४२७. ९०२

६४ मध्वासवाद्यनुपाननियमः ।

**९०३–विशेषतस्तु मद्ध्वासवान् प्राग्र्येषु, तीक्ष्णान् त्रिफलासवान् वन्येषु ॥ ६४ ॥**

**टिप्पणी**—सु. सू. ४६. ४३२. ९०३

६५ न्यग्रोधादिफलासवानुपाननियमः ।

**९०४–न्यग्रोधादिफलासवान् विष्किरेषु ॥ ६५ ॥**

६६ अर्कशेल्वाद्यासवाद्यनुपाननियमः ।

**९०५–अर्कशेलुशिरीषकपित्थासवान् बिलेशयेषु, दिग्धहतेषु च ॥ ६६ ॥**

९०५–अर्काद्यासवान् बिलेशयेषु सामान्येनान्येषु च विष-दिग्धशल्यहतेषु च ९०५

**टिप्पणी**—सु. सू. ४६. ४३२. ९०५

६७ आम्लफलासवानुपान नियमः ।

**९०६–अम्लफलासवान् प्रसहेषु ॥ ६७ ॥**

**टिप्पणी**—सु. सू. ४६. ४३२. ९०६

६८ काशाद्यासवाद्यनुपाननियमः ।

**९०७–काशेक्षुपद्मबीजशृङ्गाटककशेरुकमृद्वीकाखदिरा-सवान् क्षौद्रयुक्तं वा शीतमुदकमुदश्विद्वा महा-मृगेष्वौदकेषु च ॥ ६८ ॥**

**टिप्पणी**—सु. सू. ४६. ४३२. ९०७

६९ सुरानुपाननियमः ।

**९०८–सुरां प्रतुदेषु तथा श्रमार्तेषु कृशेषु च ॥ ६९ ॥**

**टिप्पणी**—विष्किरादिप्रतुदान्ताः प्राणिविशेषाः पूर्वं मांसवर्गे यथायथं प्रणिगदिताः (अ. सं. सू. ७. ३४५-३५३ प्रभा ) सु. सू. ४६. ४३२. ९०८

७० मधूदकानुपाननियमः ।

**९०९–मधूदकं स्थूलेषु ॥ ७० ॥**

९०९–मधूदकं स्थूलेष्वेव ९०९

७१ मद्यानुपाननियमः ।

**९१०–मद्यं मद्यमांससात्म्येष्वल्पाग्निषु ॥ ७१ ॥**

---

२६°का मधुरास°–ख.

७२ अनुपानसामान्यनियमः ।

**९११-अपि च-समासेनान्नार्वपरतिमाविरोधि च ॥७२॥**

९११-समासतः संक्षेपत उच्यते । भुक्तस्यान्यस्य गुणैर्विपरीतं यद् द्रव्यं तदनुपानाय योज्यम् । तच्च यदि विरुद्धान्नविज्ञानीयोक्तेन ( अ. सं. सू. ९ अ. ) प्रकारेण न विरुध्यते । तत्र परस्परं सदृशानामसदृशानां वा गुणानामुभयत्रापि बलवतां सतां विरोध उक्तः ९११

७३ अनुपानगुणाः ।

**९१२-अनुपानं खलु तर्पयति प्रीणयत्यूर्जयति बृंहयति देहस्य पर्याप्तिमभिनिर्वर्तयति भुक्तमवसादयत्यन्नसंघातं भिनत्ति मार्दवमापादयति क्लेदयति सुखपरिणामितामाशुव्यवायितां चाहारस्योपजनयति ॥ ७३ ॥**

९१२-तर्पणत्वादयोऽनुपानगुणाः ९१२

**टिप्पणी**-च. सू. २७. ३२५; सु.सू.४६.४३४-४३६.९१२

७४ अनुपानवर्ज्या रोगाः ।

**९१३-वर्ज्यं तूर्ध्वजत्रुगदश्वासकासप्रसेकहिध्मास्वरभेदोरःक्षतिभिर्गीतभाष्यप्रसक्तैश्च ॥ ७४ ॥**

९१३-जत्रुण ऊर्ध्वमक्षकसंधेरुपरि यस्य रोगस्तेन श्वासादिमद्भिश्च सर्वमनुपानं न सेव्यम् । अन्ये मन्यन्ते यदेतदनुपानं प्रतिषिद्धं तज्जलमेव, कासादीनां क्षीराद्यनुपानविधानात् । वयं तु मन्यामहे-सामान्येनात्र सर्वप्रतिषेधः । कासादीनां विशिष्टानां क्षीरादीनामपवादत्वं भवति ९१३

**टिप्पणी**—च. सू. २७. ३२७; सु. सू. ४६. ४३९. ९१३

७५ अनुपानवर्ज्यरोगेष्वनुपानेन दोषाः ।

**९१४-तेषां हि प्रदूष्यामाशयमुरःकण्ठस्थितमाहारजं स्नेहमासाद्य तदभिष्यन्दाग्निसादच्छर्द्यादीनामयान् विदध्यात् ॥ ७५ ॥**

९१४-तेषां ह्यूर्ध्वजत्रुगदादीनां तदनुपानं यथोक्तेन प्रकारेणाभिष्यन्दादीन् विदध्यात् । आदिग्रहणेन एवंहेतुकानामन्येषां ग्रहणम् ९१४

**टिप्पणी**-च.सू. २७. ३२८; सु.सू. ४६.४४०-४४१.९१४

७६ पानानन्तरकालवर्तन नियमः ।

**९१५-पीत्वा च भाष्यगेयाध्वस्वप्नान्न शीलयेत् ॥७६॥**

९१५-बहु च पानं पीत्वा भाष्यादीन्न शीलयेत् ९१५

**टिप्पणी**—सु. सू. ४६. ४४०. ९१५

७७ पानवर्ज्या रोगाः ।

**९१६—पानं च प्रक्लिन्नदेहमेहकण्ठाक्षिरोगव्रणिनः इति ॥ ७७ ॥**

९१६-प्रक्लिन्नदेहादिना सता पानं नैव सेव्यम् ९१६

**टिप्पणी**—सु. सू. ४६. ४३९. ९१६

— ० —

७८ भोजनानन्तरकृत्यम् ।

**९१७-ततः पाणिगतमन्नमन्नेनापनीय दन्तान्तरस्थं च शनैः शनैः शोधनेन विशोध्य लेपगन्धस्नेहापनोदमाचान्तोऽङ्गुल्यग्रगलिताम्बुपरिषिक्तनेत्रस्ताम्बूलादिकृतवदनवैशद्यो धूमपानादिहृतोर्ध्वकफवेगः पदशतमात्रं गत्वा वामपार्श्वेन संविशेत् ॥ ७८ ।**

९१७-पाणिगतं हस्तलग्नमन्नं परिशुष्केणान्येनापनीय दन्तान्तरस्थं च शल्यविधौ ( अ. सं. सू. ३४ ) वक्ष्यमाणदन्त शोधनेनापनीयाचोमेत् । ऊर्ध्वकफवेगोऽन्नपीडयो श्लेष्मणः शिरःप्राप्तिः ९१७

**टिप्पणी**—सु. सू. ४६. ४८२-४८६. ९१७

७९ भोजनोत्तरशय्यासेवने नियमः ।

**९१८-द्रवोत्तरभोजनस्तु शय्यां नातिसेवेत ॥ ७९ ॥**

९१८-बहुद्रव आहारो येन भुक्तस्तेन तत्कालं शय्या नाश्रयणीया । अथवा द्रवमुत्तरभोजनमन्तभोजनं यस्येति विग्रहः ९१८

**टिप्पणी**—सु. सू. ४६. ४८९. ९१८

८० भुक्तमात्रे यानादिवर्जनम् ।

**९१९-यानप्लवनवाहनाग्न्यातपांश्च भुक्तवान् वर्जयेत् ॥ ॥ ८० ॥**

**टिप्पणी**—सु. सू. ४६. ४८९. ९१९

८१ आहारपरिणामकरा भावाः ।

**९२०-आहारपरिणामकराः पुनरिमे भावाः । तद्यथा-ऊष्मा, वायुः, स्नेहः, क्लेदः, कालः, समयोगश्च ॥ ८१ ॥**

**टिप्पणी**—च. शा. ६. १४-१५. ९२०

८२ आहारपरिणामकरभावकार्याणि ।

**९२१-तत्रोष्मा पचति, वायुरपकर्षति, स्नेहो मार्दवं जनयति, क्लेदः शैथिल्यमापादयति, कालः सर्ववपुर्व्याप्तिमभिनिर्वर्तयति । समयोगस्त्वेषामन्नपरिणामधातुसाम्यकरः सम्पद्यते ॥ ८२ ॥**

९२१-ऊष्मादय आहारपरिणामकराः-ऊष्माऽग्निः पचति। वायुः स्थानात् स्थानमन्नस्य पाकायापकर्षति। क्लेदोऽन्नसंघातं श्लथयति । स्नेहो अन्नस्य काठिन्यं नाशयति । कालः परिणाममन्नस्य वपुर्व्याप्तिमभिनिर्वर्तयति । तेषां च क्लेदादीनां समयोगः अहीनातिमात्रत्वमन्नपरिणामोद्भवानां दोषधातुमलानां समत्वकरः सम्पद्यते ९२१

**टिप्पणी**—च. शा. ६. १४-१५. ९२१

८३ समयोगकारणानि ।

**९२२-समयोगस्य तु पुनः कारणान्युचितो हितश्च देहसंस्कारोऽभ्यवहारश्चेष्टा शयनं सौमनस्यं च॥ ॥ ८३ ॥**

---

२७ °मभिवर्धय°-ख. २८ °रस्युपनयति°-क. ख. २९ °पानं तु प्र-ख. ३० °रस्थं च शनैः शो°-क. ख.
३१ °यानवाहन°-क. ३२ °कराः पुनरुष्मा वा°-क. ख. ३ ३३ °गस्त्वेषां परिणाम°-ख.

९२२–कथमेतेषां क्लेदादीनां समयोगो भवतीत्युच्यते—उचितोऽभ्यस्तः हितश्च पथ्यश्चाहारादिकृतो देहसंस्कारः एवमभ्यवहारादयोऽपि सुमनस्त्वं च ९२२

टिप्पणी—च. शा. ६. १५. ९२२

८४ परिणमत आहारस्य गुणाः ।

**९२३–परि[३४]णमतस्त्वाहारस्य गुणाः शरीर[३५]गुणभावमापद्यन्ते यथास्वमविरुद्धाः ॥ ८४ ॥**

९२३–एषां क्लेदादीनां समयोगेनान्नस्य परिणामात् किं भवतीत्याह—परिमणतः परिणतिं क्रमेण गच्छतो गुणा गुरुत्वद्रवत्वादयः शरीरस्थैः गुरुत्वद्रवत्वादिभिरेकत्वमापद्यन्ते । अथवा गुणशब्दो भागपर्याय एव गृह्यते, त्रिगुणा रज्जुरित्यत्र यथा । जगतः पञ्चभूतात्मकत्वाच्छरीरस्यापि पञ्चभूतात्मकत्वात् 'वृद्धिः समानैः सर्वेषाम्'इत्यनेन (अ. सं सू. १. २१. ) न्यायेन परिणताहारगुणैः सदृशेषु शरीरगुणेषु वृद्धिरिति यथास्वशब्दस्यार्थः ९२३

टिप्पणी—च. शा. ६. १६. ९२३

८५ विरुद्धाहारकार्यम् ।

**९२४–विरुद्धास्तु विहताश्च विरोधिभिर्विहन्युः शरीरमिति ॥ ८५ ॥**

९२४–शरीरगुणैरविरुद्धास्त्वाहारगुणाः स्वभावप्रकृत्याद्यपेक्षया विरुद्धाहारगुणाश्च विहिताहारगुणाः शरीरं विहन्युरिति । ९२४

टिप्पणी—विरुद्ध आहारः पूर्वं कथितः ( अ. सं. सू. ९. ६८७–७३३ ) च. शा. ६. १६. ९२४

८६ विरुद्धाहारे श्लोकाः ।

**९२५–भवन्ति चात्र– ॥ ८६ ॥**

८७ आहारे वर्ज्याः पदार्थाः ।

**९२५(अ)–[३६]औकुलाभ्योषपृथु[३७]कान् सुपिष्टकृततण्डुलान्**
**न जातु भुक्तवानद्यान्मात्रयाऽद्यात्सुकाङ्क्षितः ॥ ८७ ॥**

९२५–औकुलं काण्डस्थान्यपक्वानि भृष्टानि सस्यानि, अभ्योषस्तद्विधा एव यवाः। पृथुकाः कृतान्नवर्गोक्ताः, ( अ. सं. सू. ७. ३३६ ), एतान् शालिपिष्टकृतांश्च तण्डुलांश्च भुक्तवान्नाद्यात् । अत्यर्थाकांक्षायां तु मात्रयाद्यात् अतिस्तोकमद्यादित्यर्थः ९२५

टिप्पणी—च. सू. २७. २७३. ९२५.

८८ शाकभूयिष्ठाद्याहारनिषेधः ।

**९२६–शाकावरान्नकट्वम्लकषायलवणोत्कटम् ।**
**त्यजेदेकरसासात्म्यं गुरु शुष्कं च भोजनम् ॥८८॥**

९२६–शाकभूयिष्ठमेकरसादिकं च भोजनं त्यजेत् ९२६

८९ रोगहेतुकद्रव्यभक्षणनिषेधः ।

**९२७–वक्ष्यते यन्निदानादौ [३८]सर्वदोषप्रकोपणम् ।**
**अत्याभिष्यन्दि विष्टम्भि विदाहि[३९] गुरु रूक्षणम्**
**किलाटदधिकूचीकामत्स्यशुष्काममूलकम् ।**
**क्षारपिष्टविरूढाद्यं तत्समस्तं न शीलयेत् ॥८९॥**

९२७–तथा निदानस्थानादौ रोगहेतुवक्तव्यप्रसङ्गे सर्वेषां रोगाणां यत् कारणत्वेनोक्तं तन्न शील्येत् । यत् क्वचित् कारणत्वेनोक्तं तत्सातत्येन नाभ्यसेदित्यर्थः । अत्यभिष्यन्दित्वादिगुणयुक्तं च न शीलयेत् ९२७

टिप्पणी—निदानादाविति–अ. सं. नि. १. २६–३१ इत्यत्रेति भावः; च. सू. ५. १०, ११.

९० सेवनीयद्रव्याणि तद्व्यवस्था च ।

**९२८–शीलयेच्छालिगोधूमयवषाष्टिकजाङ्गलम् ॥**
**सुनि[४०]षण्डकजीवन्तीबालमूलकवास्तुकम् ।**
**पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ॥**
**घृ[४२]तदिव्योदकक्षीरक्षौद्रदाडिमसैन्[४१]धवम् ।**
**त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ।**
**स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत् ॥ ९०**

९२८–शालिगोधूमादींस्तु शीलयेदभ्यसेत् । नेत्रबलेच्छुश्च माक्षिकघृताभ्यां मिश्रां त्रिफलां शीलयेत् । तथेदमपि शील्येत् यदाहारविहारं स्वस्थस्य स्वास्थ्यमनुवर्तयत्यातुरस्य च व्याध्युपशमं करोतीति ९२८

टिप्पणी—च. सू. ५. १२, १३; २८. ३४. ९२८

९१ स्वभावादिविपरीतानि वर्ज्यानि ।

**९२९–स्वभावमात्रायोगादिपरस्परविपर्ययैः ।**
**भोजनानि विरुध्यन्ते तानि विद्वान् विवर्जयेत् ॥**

९२९–प्रसङ्गेनोच्यते—स्वभावमात्रेत्यादि । सुबोधम् ।

टिप्पणी—च. सू. २६. ८१. ९२९

९१ ( अ ) समधातूद्भवे विषमधात्वनुद्भवे च कारणम् ।

**९२९–(अ) त्यागाद्विषमहेतूनां समानां चोपसेवनात् ।**
**विषमा नानुबध्नन्ति जायन्ते धातवः समाः॥९१॥**

९२९ (अ) दोषधातुवैषम्यहेतूनामसमयोगस्थितानामाहारदेशादीनां त्यागाद्विषमा धातवः शरीरं नानुबध्नन्ति। समानां च यथोचितहितानां संसेवनाद्धातवः समा जायन्ते। तेनैतदुक्तं भवति—स्वकारणसामग्रीविरहात् स्वयं नाशः, तथा कारणसामग्रीसन्निधानेऽवश्यं जन्मेति ९२९

टिप्पणी—च. शा. १. ९३–सू. १६. २७. ९२९

९२ अन्नेन कोष्ठपूरणनियमः ।

**९३०–अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।**
**आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ ९२ ॥**

९३०–अन्नेन कुक्षेर्द्वौ भागौ पूरयेत्, तृतीयं भागं पानेन पूरयेत्, दोषाणामाश्रयं संचरणस्थानं चतुर्थं भागमवशेषयेत्। अन्यथा अन्नपानपूरिते सर्वकुक्षौ दोषा निराश्रयास्तमेवान्नपानमुत्पीड्य विषूचिकादीन् रोगान् कुर्युः । एषा च कल्पनाअर्धभागत्रयतृप्त्यादिनाऽनुमीयते(अ.सं.सू.११.९४७) न च कुक्षेर्भागो विज्ञायते ९३०

टिप्पणी—च. वि. २. ३. ९३०

---

३४ °णमतस्त्वाहारगु°–क. ख. च. ३५ °रीरजगु°–ख. ३६ उकुलाभ्योष°–क. च. ३७ °थुकान्नपिष्ट°–क; कुकूलभृष्टपृथु°–ख. ३८ °वरोगप्र°–क. च. ३९ °हि हिमरूक्ष°–क. ख. च. ४० °निषण्णकजी°–क. ख. च. ४१ °न्धवान् । त्रि°–च ४२ घृतं दि°–क.

९३ भोजननियमाधिकारिणः ।

**९३१-मन्दानलबलारोग्यनृपेश्वरसुखात्मसु ।**
**योज्यः क्रमोऽयं सततं नावश्यमितरेषु च ॥९३॥**

९३१-अयं चानन्तरोक्तान्नपानक्रमो मन्दानलादीनां पुरुषाणां योज्यः । इतरेषामुक्तेभ्योऽन्येषामवश्यं न योज्यः। दरिद्रात्यन्यातुरदुःखात्मनां हि यथायथमग्निबलोपकरणादिसम्भवापेक्षया बुद्ध्योह्यम् ९३१

**टिप्पणी**—सु. सू. ४६. ४२३. ९३१

९४ रूक्षकार्याणि ।

**९३२-करोति रूक्षं बलवर्णनाशं**
**त्वग्रूक्षतां वातशकृन्निरोधम् ॥ ९४ ॥**

९३२-रूक्ष आहारो बलनाशादिकं करोति ९३२

**टिप्पणी**—सु. सू. ४६. ५१५.

९५ स्निग्धकार्याणि ।

**९३३-स्निग्धं त्वाति श्लेष्मचयप्रसेक-**
**हृद्गौरवालस्यरुचिप्रणाशान् ॥ ९५ ॥**

९३३-अतिस्निग्धः श्लेष्मसञ्चयादीन् करोति। प्रसेको मुखाच्छ्लेष्मस्रुतिः ९३३

९६ अत्युष्णकार्याणि ।

**९३४-अत्युष्णमन्नं मददाहतृष्णा-**
**बलप्रणाशभ्रमरक्तपित्तम् ॥ ९६ ॥**

९३४-अत्युष्णो मदादीन् करोति ९३४

९७ शीतकार्याणि ।

**९३५-शीतं तु सादारुचिवह्निसाद-**
**हृल्लासविष्टम्भनरोमहर्षान् ॥ ९७ ॥**

९३५-अतिशीतमग्निसादादीन् करोति। हृदयस्योत्क्लेशेन युक्तः प्रसेक एव हृल्लासशब्दवाच्यः ९३५

९८ अतिकाठिनकार्याणि ।

**९३६-अतिस्थिरं मूत्रशकृद्विबन्ध-**
**मतृप्तिमव्याप्तिमशीघ्रपक्तिम् ॥ ९८ ॥**

९३६-अतिस्थिरोऽतिकठिनो मूत्रशकृद्विबन्धादीन् करोति । अव्याप्तिरेकस्मिन् मार्गे जठरस्य स्थितिः ९३६

९९ अतिद्रवकार्याणि ।

**९३७-अतिद्रवं पीनसमेहकास-**
**स्यन्दान् करोत्यग्निबलं च हन्ति ॥ ९९ ॥**

९३७-अतिद्रवः पीनसादीन् करोति । स्यन्दो नामाक्षिरोगः ( अ सं. उ. १८ ) ९३७

१०० अतिमधुरकार्याणि ।

**९३८-अतिमधुरमनलशमनं--**

९३८-अतिमधुरश्चाहारोऽग्निनाशनः ९३८

**टिप्पणी**—च. सू. २६. ४२ ( १ )

१०१ असात्म्यकार्यम् ।

**९३९- भुक्तमसात्म्यं न पुष्टये वपुषः ।**

९३९-असात्म्यं च भुक्तं देहपुष्टिं न करोति ९३९

१०२ अतिलवणकार्याणि ।

**९४०-अतिलवणमचक्षुष्यं--**

९४०-अतिलवणं चक्षुषोऽपथ्यम् ९४०

**टिप्पणी**—च. सू. २६. ४२ ( ३ )

१०३ तीक्ष्णात्यम्लकार्याणि ।

**९४१- तीक्ष्णात्यम्लं जरा साक्षात् ॥ १०० ॥**

९४१-अतितीक्ष्णमत्यम्लं च जरा साक्षादतिशयेन जराकारणत्वात् ९४१

**टिप्पणी**—सु. सू. २६. ४२, ( २ )

१०४ अन्नपानविध्याध्यायोपसंहारः ।

**९४२-इति विधिमवलम्ब्य योऽन्नपानं**
**बलमिव विग्रहवत्सदोपयुङ्क्ते ॥**
**तनुमपि तनुजां रुजं त्वनाप्य**
**व्रजति नरः स समाशतस्य पारम् ॥ १०१ ॥**

**इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने अन्नपानविधिर्नाम दशमोऽध्यायः ॥ १० ॥**

९४२-इत्यनेन प्रकारेण विधिं क्रमं मात्राभ्यासादिकमवलम्ब्य गृहीत्वा यो नरोऽन्नपानं भुङ्क्ते। किंभूतम् ? विग्रहवत्सशरीरमिव बलं, तद्धेतुकत्वात् । स नरस्तनुमपि स्वल्पामपि तनुजां देहजां रुजां पीडामनाप्यालब्ध्वा समाशतस्य संवत्सरशतस्य पारमन्तं व्रजति। अनाप्येत्यत्राऽऽङ्प्रयुक्तस्तेन साध्विति ९४२

**इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसंङ्ग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने दशमोऽध्यायः ॥ १० ॥**

---

४३ 'न्हिनाशं हृल्ला'-क. ख. च. ४४ इति विधिसकलं च योऽन्न-क.

# मात्राशितीयैकादशोऽध्यायः ।

## ( उपोद्घातः )

सुरक्षितं सुविहितमप्यन्नपानममात्रया सेवितं महारोगाय मरणाय वा भवत्यतो मात्राप्रदर्शनायाध्यायारम्भः ।

१ प्रतिज्ञा ।

**९४३–अथातो मात्राशितीयं नामाध्यायं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥ १**

**( १ ) मात्राप्रकरणम् ।**

२ मात्राशनविधिः।

**९४४–मात्राशी स्यात् ॥ २**

९४४–मात्राशी स्यादित्यादिना प्रस्तुतप्रदर्शनम् ९४४-

**टिप्पणी**—मात्राशीति–मात्रां मात्रावदाहारम्। मात्रया वा अशितुं भोक्तुं शीलं यस्य स मात्राशी । मात्राशी स्यात्–मात्रावदश्नीयात् । **मात्रा** अनपायि परिमाणम् । अशिरयमिहाविशेषेण खाद्यप्राश्यलेह्यपेयानामभ्यवहारे वर्तते। तेन मात्राशी स्यादित्युक्तम् । तत्राशनवाचिनां द्रव्याणां गलाधोगमनजनकव्यापारोऽशनम्, कठिनद्रव्याणां गलाधोगमनजनकव्यापारः खादनम्, नातिकठिननातिद्रवद्रव्याणां जिव्हयाकर्षणपूर्वकः लेहः, पानं तु अतिद्रवद्रव्याणाम् इति अशनखादनलेहपानभेदेन चतुर्विधाहारे वर्ततेऽशधातुः । स्यादिति–कर्तव्योतोपदेशो विधिः ९४४

३ मात्राधारौ ।

**९४५–मात्रा पुनरग्निबलाहारद्रव्यापेक्षिणी ॥ ३**

९४५–सा च मात्रा अग्नेर्बलमाहारद्रव्याणां च तदनुरूपं गुरुत्वं लघुत्वं चापेक्ष्य भवतीत्यग्नेराहारस्य च परस्परयोग्यत्वमित्यर्थः ९४५

**टिप्पणी**—आहारमात्रा द्विधा, अग्निबलापेक्षया आहारद्रव्यापेक्षया च । तदेतदाह–मात्रेति ९४५

४ मात्रालक्षणम् ।

**९४६–कुक्षेरप्रतिपीडनमाहारेण, हृदयस्यासंरोधः, पार्श्वयोरविपाटनमनतिगौरवमुदरस्य, प्रीणनमिन्द्रियाणां, क्षुत्पिपासोपरतिः, स्थानासनशयनगमनोच्छ्वासप्रश्वासभाष्यसंकथासु सुखानुवृत्तिः, सायं प्रातश्च सुखेन परिणमनं, बलवर्णोपचयकरत्वं चेति मात्राया लक्षणम् ॥ ४**

९४६–ननु मात्रैव न ज्ञाता अतो मात्रालक्षणमुच्यते। आहारेण कुक्षेरपीडनम् । हृदयस्य चासंरोधः । पार्श्वयोश्चान्नभरेण पाटनमिव पाटनं तस्याभावः अविपाटनम् । उदरस्य चानतिगुरुत्वम् । इन्द्रियाणां चक्षुरादीनां प्रीणनं सन्तर्पणम् । क्षुत्तृषोश्च नाशनम् । स्थानासनादिषु सुखानुवृत्तिः सुखप्रवृत्तिः । उच्छ्वासप्रश्वासौ श्वासस्यान्तर्बहिर्नयनम् । सायन्तनस्य च भोजनस्य प्रातः सुखेन परिणामः प्रातस्तनस्य च सायम् । बलाद्युपचयकर्तृत्वं चाहारस्येति मात्रालक्षणम् ९४६

**टिप्पणी**—कुक्षेरिति–अस्मिन्मात्रालक्षणे डल्हणः ( सु. सू. ४६. ४६४ ) अनुवदति–' अपीडनं भवेत् कुक्षेः पार्श्वयोरविपाटनम् । अन्नेन हृदयाबाधो जठरस्य तु गौरवम् । प्रीणनं चक्षुरादीनां शमनं क्षुत्पिपासयोः । उच्छ्वासश्वासहास्यादिकथासु सुखवर्तनम्। सुखेन परिणामः स्यादन्ने भुक्ते दिवा निशि '॥ इति ९४६

५ गुरुद्रव्याणामाहारपरिमाणम् ।

**९४७–त्रिभागसौहित्यमर्धसौहित्यं वा गुरूणामुपदिश्यते ॥ ५**

९४७–यस्मिन्नाहारे यन्मानेन भुज्यमाने शरीरस्यैवंरूपता भवति, सा मात्रेति पिण्डपरिमाणेन । प्रतिद्रव्यापेक्षया तूच्यते गुरूणामाहारद्रव्याणां स्वभावसंस्काराद्यपेक्षया पुरुषबलापेक्षया वा त्रिभागतृप्तिरर्धतृप्तिर्वा ९४७

**टिप्पणी**—त्रिभागेति–तृतीयो भागस्त्रिभागः । तदुचितसौहित्यमर्धसौहित्यं वा गुरूणामाहारद्रव्याणामुपदिश्यते । सौहित्यं तृप्तिः । त्रिभागसौहित्यार्धसौहित्ये तु गौरवप्रकर्षापकर्षाभ्यां ज्ञेये । तेन गुरूणामर्धसौहित्यं गुरुतराणां द्रव्याणां त्रिभागसौहित्यामिति फलितोऽर्थः ९४७

६ लघुद्रव्याणामाहारपरिमाणम् ।

**९४८–लघूनामपि नातिसौहित्यम् ॥ ६.**

९४८–लघूनां च नातितृप्तिः ९४८

**टिप्पणी**—लघ्विति–लघूनामाहारद्रव्याणां स्वगुणादग्निसंधुक्षणस्वभावानामपि नातिसौहित्यं नातितृप्तिरुपदिश्यते ९४८

७ मात्राव्यतिक्रमेऽपि लघूनामल्पदोषत्वं तत्कारणं च ।

**९४९–अनिलानलगुणबहुलानि हि लघूनि तुल्यगुणत्वादग्निसंधुक्षणान्यविधिना चाल्पदोषाणि ७**

९४९–यतो लघूनि वाय्वग्निभागाधिक्येनोत्पद्यन्ते । अतस्तत्स्वभावेनाग्निसादृश्यादग्निवृद्धिकराण्येवं चाविधिना यथोक्तक्रमादिनामभावादेवापि स्वल्पदोषकर्तृत्वं लघूनाम् ९८९

**टिप्पणी**—लघूनि हि द्रव्याणि वाय्वग्निगुणबहुलानि भवन्ति, अतस्तान्यग्निसंधुक्षणस्वभावानि । तुल्यगुणत्वात् । सामान्यस्य वृद्धिकारणत्वात् । तदुक्तं ' वृद्धिः समानैस्सर्वेषाम् '( अ. सं. सू. १. २१. ) इति । अतः अविधिना–मात्रातिक्रमेणापि अतिमात्रया भक्षितान्यपि नातिदोषाणि भवन्ति । आकाशगुणबहुलानि च द्रव्याणि लघूनि भव-

---

४५ °तीयमध्या°–ख. ४६ °स्यामः । मात्रा°–क. ख. च. ४७ °रतिः, स्वस्था°–क. ख. च. ४८ °श्वासहास्यकथा°–ख. च. ४९ °थासुखा°– क; °थासु च सु°–च. ५० °पि च नाति°–क. ख. च.

न्त्यापि वन्हिसंधुक्षणकारीणि न भवन्ति, गगनस्याग्निसाधर्म्याभावात्। अत उक्तमनिलानलगुणबहुलानीति ९४९

८ मात्राव्यतिक्रमे गुरूणां बहुदोषत्वं तत्कारणं च।

**९५०-इतराणि तु पृथिवीसलिलगुणबहुलान्यसामान्याद्विपरीतान्यन्यत्र व्यायामाग्निबलात् ८**

९५०-इतराणि गुरूणि पार्थिवाप्यगुणभूयस्त्वादग्नेर्वैपरीत्यान्नाशहेतवः। व्यायामाग्निबलादन्यत्र व्यायामकारणं हि यदग्निबलं तत्र गुरूण्यप्यदोषकराणि। एषा मात्रा ९५०

**टिप्पणी**—इतराणीति-गुरूणि द्रव्याणि पृथिवीसलिलगुणबहुलतया असामान्यान्नाग्निसंधुक्षणस्वभावानि, अपि तु वन्हिमान्द्यकराणि, विपरीतगुणत्वात्। अतः सौहित्येनोपयुक्तानि तृप्तितो भुक्तान्यतिमात्रं दोषवन्ति भवन्ति। ननु मल्लादिपुरुषाणां सौहित्योपयुक्तगुरुद्रव्याभ्यवहारेऽपि न दोषाः दृश्यन्ते। कथम्? तदेतदाह-अन्यत्रेति। व्यायामादग्निबलं व्यायामाग्निबलम्। व्यायामकृतादग्निबलादन्यत्रेत्यन्वयः। व्यायामं निषेवमाणस्य पुरुषस्य चिरमेवाग्निबलसत्त्वात् गुरुद्रव्याणां सौहित्याभ्यवहारेऽपि न दोषः इति भावः। तदुक्तम्-'दीप्ताग्नयः खराहाराः कर्मनित्या महोदराः। ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरुलाघवम्'। ( च. सू. २७. ३४४. ) इति ९५०

## (२) अमात्राप्रकरणम्

९ अमात्रालक्षणम्।

**९५१-अमात्रा पुनरशनस्य हीनताऽऽधिक्यं च ॥ ९**

९५१-अमात्रा पुनर्यथोक्ताया हीनत्वमाधिक्यं वा ९५१

**टिप्पणी**—मात्रावत्वमुपदिश्यामात्रत्वमुपादिशति-अमात्रेति। अमात्रा द्विधा-आहारस्य हीनतयाऽधिकतया चेति ९५१

१० हीनमात्राशने दोषः।

**९५२-तत्र हीनमात्रमशनं बलवर्णोपचयमनोबुद्धीन्द्रियोपघातकरं विबन्धकृदवृष्यमनायुष्यमनौजस्यं सारविध्मापनमलक्ष्मीजननमशीतेश्चे वातविकाराणामायतनम् ॥ १०**

९५२-तत्र हीनमात्रमाहारं बलवर्णनाशादीन् करोति। सारस्य बलस्य विध्मापनं नाशनम् ९५२

**टिप्पणी**—हीनमात्राहारस्य दोषमाह-तत्रेति। हीनमात्रमशनमभ्यवहारः। बलं च वर्णश्च उपचयश्च मनश्च बुद्धीन्द्रियाणि च बलवर्णोपचयमनोबुद्धीन्द्रियाणि। तेषामुपघातकरं नाशकम्। विबन्धकृत्-उदावर्तकरम्। अवृष्यं-शुक्रक्षपणम्। अनायुष्यं-आयुषे न हितम्। अनौजस्यं ओजसे न हितम्। सारविध्मापनं-सारस्य वक्ष्यमाणस्य (अ. सं. शा. ८.५७७.) त्वग्रक्ताद्यष्टविधस्य सारस्य समस्तस्य व्यस्तस्य वा विध्मापनं ह्रासकरम्। अलक्ष्मीजननं अलक्ष्म्यावहम्। अशीतिर्वातविकाराणामायतनम्। वक्ष्यमाणे (अ. सं. सू. अ. २०.) दोषभेदीयेऽध्याये प्रोक्तानामशीतेर्वातविकाराणामायतनं निदानम्। आहुरिति शेषः ९५२

११ अतिमात्राहारे सर्वदोषप्रकोपणम्।

**९५३-अतिमात्रं पुनः सर्वदोषप्रकोपणमाहुः ॥ ११**

९५३-यथोक्तादतिमात्रं पुनर्दोषान् प्रपीडयत् कुक्षिमापूर्य तिष्ठति ९५३

**टिप्पणी**—अतिमात्राहारस्य दोषमाह-अतिमात्रेति। अतिमात्रेणाहारेण सर्वेषां दोषाणां वातपित्तश्लेष्मणां प्रकोपणम्। हीनमात्रेणाहारेण केवलं वातप्रकोपणम्। अतिमात्रेणाहारेण तु सर्वदोषप्रकोपणम् ९५३

१२ अलसकनिदानम्।

**९५४-तेन हि प्रपीड्यमाना वातादयो युगपत्प्रकुपिताः कुक्ष्यैकदेशस्थास्तदेवापरिपक्वमाविश्य विष्टम्भयन्तोऽलसकमभिनिवर्तयन्ति ॥ १२**

९५४-ततस्ते दोषास्तेन रुद्धमार्गास्तमेवाहारमपक्वमाविश्य द्विधा कुर्वन्ति। कदाचित्तदन्नं विष्टभ्यासते। अथवान्नं पकापकं बहिः प्रेरयन्ति। यदा तु विष्टभ्यासते तदालसकनामानं रोगमभिनिर्वर्तयन्ति ९५४

**टिप्पणी**—अलसकसंप्राप्तिमाह-तेनेति। अतिमात्रेणात्यवामेनाहारेण प्रपीड्यमानाः आमाशयगताः वातादयः स्रोतोरोधात्परस्परसंघट्टनेन त्रयोऽपि युगपत्प्रकुप्यन्ति। अथ युगपत्प्रकुपिताः ते संचरणायावकाशाभावात् कुक्षेरेकदेशमाश्रिताः तदेवापरिपक्वमपरिणतमाहारमाविश्य विष्टम्भयन्तः तदेव दुष्टमन्नं स्रोतस्सु रुन्धानाः अलसकमभिनिर्वर्तयन्ति ९५४

१३ विषूचिकानिदानम्।

**९५५-सहसा वाऽधरोत्तराभ्यां मार्गाभ्यां प्रच्यावयन्तो विषूचिकाम्। अपि च ॥ १३**

९५५-यदा प्रेरयन्ति तदा विषूचिकाम् ९५५

**टिप्पणी**—विषूचिकासंप्राप्तिमाह-सहसेति। अत्र 'तेन हि प्रपीड्यमाना वातादयो युगपत्प्रकुपिताः कुक्ष्यैकदेशस्थाः तदेवापरिपक्वमाविश्य' इत्ययं भागः पूर्वसूत्रादनुवर्तनीयः। अधरोत्तराभ्यां मार्गाभ्याम् ऊर्ध्वाधोमार्गाभ्यां वदनगुदाभ्यां इत्यर्थः। अपरिणतमाहारं सहसा वेगेन प्रच्यावयन्तः युगपत्प्रकुपिताः दोषाः विषूचिकामभिनिर्वर्तयन्ति ९५५

१४ असलकलक्षणम्।

**९५६-प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते। आमाशयेऽलसीभूतस्तेन सोऽसलकः स्मृतः १४**

---

५१ °श्च विका°-क. ५२ °भिनिवर्तय°-क. च. ५३ °भ्यां च्याव°-च, °भ्यां वा प्रच्या°-फ.

९५६-एतदेव प्रयाति नोर्ध्वमित्यादिना सविस्तरमुच्यते ९५६

**टिप्पणी**—पूर्वोक्तार्थमेव शिष्यबुद्धिवैशद्याय पुनः सविस्तरमाह-प्रयातीत्यादिना। ऊर्ध्वं मुखेनाहारो न प्रयाति न चाधस्तात्—गुदेन प्रयाति। आहारः न च पच्यते। आमाशये अलसीभूतः-अनलसः अलसवत्संपद्यमानः अलसीभूतः, यथा अकर्मशीलः पुरुषोऽलस इत्युच्यते तथा यमाहारोऽलसीभूतस्तिष्ठति तेन सः रोगः अलसकसंज्ञः ९५६

१५ विषूचिकालक्षणम्।

**९५७-विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः।**
**सूचीभिरिव गात्राणि विध्यतीति विषूचिका १५**

९५७-वाय्वादीनामित्यर्थकोपान्नानाविधैर्वेदनानामुद्भेदैः सूचीभिरिव गात्राणि यदसौ विध्यति अतो विषूचिकोच्यते ९५७

**टिप्पणी**—विषूचिकानिरुक्तिमाह-विविधैरित्यादि। वाय्वादीनां त्रयाणामत्यन्तप्रकोपात् विविधैः नानाप्रकारैः वेदनोद्भेदैः पीडोत्पादैः यस्माद्गात्राणि सूचीभिरिव विध्यति तस्माद्विषूचिकेत्युच्यते। विविधानां विकाराणां सूचिका अथवा विविधसूचीतुल्यत्वात् विषूचिका इति व्युत्पत्त्या विषूचिकाशब्दस्य निरुक्तिः प्रदर्शिता। अत्र सुश्रुतः 'सूचीभिरिव गात्राणि तुदन् संतिष्ठतेऽनिलः। यस्याजीर्णेन सा वैद्यैरुच्यते तु विषूचिका' (सु. उ. ५६. ४) इति ९५७

१६ वाताधिकविषूचिकालक्षणम्।

**९५८-तत्र वातः शूलानाहाङ्गमर्दमुखशोषप्रलापकंपमूर्च्छाभ्रमजृम्भोद्वेष्टनाक्षिप्रवेशशिरोहृदयातिरुक्सिराकुञ्चनस्तम्भनानि करोति॥ १६**

९५८-तत्र विषूचिकाकारणत्वे यदा वातोऽधिको भवति तदा शूलाद्युत्पत्तिं करोति। अङ्गानां रज्ज्वाद्युद्वेष्टनमिवोद्वेष्टनम् ९५८

**टिप्पणी**—वातविषूचिकालक्षणमाह — तत्रेति। शूलः, आनाहः, आनाहलक्षणं यथा—'साटोपमत्युग्ररुजमाध्मानमुदरे भृशम्। ऊर्ध्वाधोवातरोधेन तमानाहं प्रचक्षते' (अ. सं. नि. ११. ४४५.) इति। अङ्गमर्दः, मुखशोषः, प्रलापः, कम्पः, मूर्च्छा, भ्रमः, जृम्भा, उद्वेष्टनं, अक्षिप्रवेशः, अतिशिरोरुक्, अतिहृदयरुक्, सिराणामाकुञ्चनं स्तम्भनं च, इमानि लक्षणानि वातः विषूचिकाकारणत्वे यदाऽधिको भवति तदा करोति इत्यन्वयः। चरके त्वग्निवैषम्यं पार्श्वपृष्ठकटीनां ग्रहश्चेति लक्षणान्यधिकानि। (च. वि. अ. २. ७) ९५८

१७ पित्ताधिकविषूचिकालक्षणम्।

**९५९-पित्तं पुनर्ज्वरातिसारान्तर्दाहवैवर्ण्यतृष्णामदभ्रमप्रलयानि॥ १७**

९५९-पित्तं वृद्धं ज्वरादीन्। प्रलयो मूर्च्छाप्रायः।

**टिप्पणी**—पित्तविषूचिकामाह-पित्तेति। ज्वरः, अतिसारः-अन्तर्दाहः, वैवर्ण्यम्, तृष्णा, मदः, भ्रमः, प्रलयः, इमानि लक्षणानि पित्तं करोति। अत्र चरके प्रलयशब्दस्थाने प्रलापशब्दो दृश्यते (च. वि. २. ७) ९५९

१८ श्लेष्माधिकविषूचिकालक्षणम्।

**९६०-श्लेष्मा तु छर्द्यरोचकप्रसेकाङ्गसादाविपाकशीतज्वरगात्रगौरवाणि॥ १८**

९६०-श्लेष्मा वृद्धः छर्द्यादीन्। एषामन्यतमस्य वृद्धिराहारविशेषात्, भुक्तात् पूर्वं दोषस्थित्यपेक्षया वा ९६०

**टिप्पणी**—कफविषूचिकामाह-श्लेष्मेति। छर्दिः, अरोचकः, प्रसेकः, अङ्गसादः, अविपाकः, शीतज्वरः, गात्रगौरवं च इमानि लक्षणानि वृद्धः श्लेष्मा करोति। अत्र चरके आलस्यमिति लक्षणमधिकम् (च. वि. २. ७.) हृदये च वाक्संगष्ठीवने अधिके (अ. हृ. सू. ८. ९.) ९६०

१९ अलसकविशेषलक्षणम्।

**९६१-विशेषतस्तु दुर्बलस्याल्पवह्नेर्बहुश्लेष्मणो वातमूत्रपुरीषवेगविधारिणोऽन्नपानमनिलैः प्रपीडितं श्लेष्मणा विबद्धमार्गमलसत्वादबहिर्मुखीभवत् छर्द्यतीसारवर्ज्यानि यथोक्तानि (अ.सं.सू.११.५८) शूलादीन्युपजनयत्यतिमात्राणि, सोऽलसः॥ १९**

९६१-सर्वस्यैवाप्यतिमात्राशिनो वातः शूलादीन् करोति। दुर्बलत्वादियुक्तस्य त्वतिमात्राशिनो विशेषेण वातः प्रकुपितोऽन्नं प्रदूषयति। तच्चैवंप्रपीडितमूर्ध्वमधश्च श्लेष्मणा आकुलितं रुद्धमार्गमलसत्वात् छर्द्यतीसारवर्ज्यान्युक्तानि शूलादीन्युपजनयति। स अलसो नामालसकविशेषः ९६१

**टिप्पणी**—अलसकलक्षणमाह-विशेषत इति। दुर्बलस्याल्पवह्नेः बहुश्लेष्मणः, वातमूत्रपुरीषवेगविधारिणः पुंसा अभ्यवहृतमन्नपानमनिलेन—वायुना प्रपीडितं अलब्धसंचारेण वायुना आक्रान्तं, अत एव ऊर्ध्वमधो वा निर्गच्छदेवान्तरा श्लेष्मणा विबद्धं रुद्धम्। तेन अलसत्वात् निष्क्रियत्वात् अबहिर्भवत्—बहिरप्रविशत् छर्द्यतीसारवर्ज्यानि। यथोक्तानि—'तत्र वातः शूलानाह-इत्यादिसूत्रेषु प्रोक्तानि (अ. सं. सू. ११. ९५८–९६०.) शूलादीनि लक्षणान्यतिमात्रं जनयति। सोऽलसनामालसकविशेषः। अत्र चरके 'स्थिरगुरुबहुरूक्षशीतशुष्कान्नसेविनः' इति पुंसो विशेषणमधिकम् (च. वि. २. १२) ९६१

२० असाध्यालसकलक्षणम्।

**९६२-अतिमात्रदुष्टास्तु दोषाः प्रदुष्टामबद्धमार्गास्तिर्यग्गच्छन्तः कदाचिदस्य शरीरं दण्डवत् स्तम्भयन्ति ततस्तमलसकमसाध्यं ब्रुवते॥ २०**

९६२-अस्य त्वतिमात्राशिनोऽलसीभूता वातादयः पूर्वं प्रदुष्टेनामेन स्पष्टमार्गरोधात् तिर्यक् स्रोतोभिर्गच्छन्तः

---

५४ °मप्रलपनानि। श्ले°-क. ख. च. ५५ °स्याल्पाग्नेर्ब°-क. ख. च. ५६ °निलपीडि°-क. ५७ °खी भवेद्, छ°-ख च. ५८ °त्राणि, अतिमात्र°-क ख. च.

कदाचिद्दोषबलविशेषाच्छरीरं दण्डवत् स्तब्धं कुर्वन्ति। सोऽलसकविशेष आचार्या असाध्य इति ब्रुवते ९६२

. टिप्पणी—असाध्यमलसकमाह—अतिमात्रदुष्टास्त्विति। अतिमात्रदुष्टा वातादयो दोषाः प्रदुष्टेनामेन बद्धमार्गाः मार्गरोधात्तिर्यग्गच्छन्तः कदाचित्कालविशेषे एव न तु सर्वदा। अस्य तथाविधस्य पुंसः केवलं कृत्स्नं शरीरं दण्डवत्स्तम्भयन्ति स्तब्धं कुर्वन्ति। अतः अलसकविशेषं तं दण्डालसकनामानमसाध्यं ब्रुवते ९६३

२१ असाध्यालसकत्वे कारणम्।

**९६३-विरुद्धाध्यशनाजीर्णशीलिनः पुनरामदोषमामविषमामनन्ति, विषसदृशलिङ्गत्वात्। तत्परमसाध्यानाम्। आशुकारितया विरुद्धोपक्रमत्वाच्च ॥ २१॥**

९६३-यश्च विरुद्धादिकं प्रायेणाचरति तस्यामो वक्ष्यमाणलक्षणो दुष्यति। तस्मिन् दुष्टे विषभुक्तस्येव या पीडोत्पद्यते तत्राचार्या आमविषमिति नामामनन्ति कथयन्ति, विषसदृशलक्षणत्वात्। तच्चामविषमसाध्यानां रोगाणां परं कष्टतममसाध्यत्वेन। कुतः आशुकारितया विरुद्धोपक्रमत्वेन च। आशु शीघ्रं रवं कर्म मारणं करोतीत्याशुकारि। तत्र हि दोषास्तथाविधं कोपमापद्यन्ते। यत्रैकस्मिन् दोष औषधमन्यस्मिन् दोषेऽत्यर्थं विरुध्यत इति विरुद्धोपक्रमत्वम्। अन्ये त्वन्यथा ब्रुवन्ति- यदि विषसदृशस्वरूपः पीडाकर्तृत्वेन तत्रामो भवति विषे शीता क्रिया आमे अजीर्णे चोष्णा इत्युपक्रमविरोधः ९६२

टिप्पणी—विरुद्धाशनं विरुद्धभोजनं यथा—मत्स्यपयसी। अध्यशनमिह—भुक्तस्योपरि भुक्तम्। यथा 'अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ( सु. सू. ४६. ५०८ )। अजीर्णे प्राग्भुक्ते अशनमजीर्णाशनम्। एतानि विरुद्धाशनाध्यशनाजीर्णाशनानि शीलितुं प्रायेण भोक्तुं शीलमस्य। तथाविधस्य पुंसः आमदोषमामविषमिति समामनन्ति। कस्मात्? विषसदृशलक्षणत्वात्, तदामविषं परमतीव असाध्यम्। कस्मात्? आशुकारित्वात्। विषरूपतया शीघ्रमारकत्वात्। तथा विरुद्धोपक्रमत्वाच्च। विषे शीता क्रिया, आमाजीर्णे चोष्णाक्रिया इति। आमलक्षणं यथा—'आहारस्य रसः सारो यो न पक्वोऽग्निलाघवात्। आमसंज्ञो स लभते बहुव्याधिसयाश्रयः इति ' ९६३

२२ स्वास्थ्ये मात्राशितत्वेऽपि नालंभावः।

**९६४-न च केवलं मात्रयैव कृत्स्नमाहारफलमवाप्तुं शक्यम्, स्वभावादीनां भिन्नफलत्वात् ॥ २२**

९६४-ननु मात्राशिनोऽपि दुष्टामपीडा दृष्टा, तत् कथमुच्यते। मात्राभोजनेनैव तु केवलेनाहारफलं बलवर्णोपचयादिकमवाप्तुं शक्यते। कुतः-स्वभावसंयोगकालादीनामसदृशफलत्वात्। एतदेवोच्यते-न मात्रैव केवलं स्वास्थ्यकारणं यावद्द्रव्यस्वभावादयोऽपि ९६४

टिप्पणी—मात्रया भुञ्जानः केवलममात्राजन्यविकारं नाप्नोति नतु तेन प्रकृत्यादिदोषजन्यविकाराणामनिष्पत्तिर्भवति इत्याशयेनाह—न चेति। न च केवलमाहारस्य मात्रावत्वादेव कृत्स्नं समग्रं स्वभावादिभिरुपयोक्त्रसंहिताभिरष्टाभिः विधिविशेषायतनैः निष्पाद्यमाहारस्य फलमवाप्तुं शक्यम्। स्वभावादीन्यष्टावाहारविधिविशेषायतनानि यदाहारफलं निर्वर्तयन्ति, न खलु तदेकया मात्रया शक्यते निष्पादयितुम्। कुतः। स्वभावादीनामष्टानामाहारविधिविशेषायतनानां भिन्नफलत्वात् – प्रविभक्तफलत्वात्-न त्वेकैकशः सर्वफलत्वात्। स्वभावादयः पूर्वाध्याये (अ. सं. सू. १०. ८४३-८५४) सप्रपञ्चं निरूपिताः ९६४

२३ मात्राशनेऽपि स्वभावादीनां दोषकरत्वम्।

**९६५-तथा हि-गुरुरूक्षशुष्कशीतद्विष्टविष्टम्भिविदाह्यशुचिविरुद्धात्यम्बुपानद्रवमकाले काले वा कामक्रोधलोभेर्ष्याह्रीशोकोद्वेगभयक्षुदुपतप्तेन वा यदन्नपानमुपयुज्यते तदप्याममेव प्रदूषयति २३**

९६५-तथाहीत्यादिना स्वभावादीन् दर्शयति। गुरुत्वादिगुणयोगान्मात्रयापि भुक्तमाममेव दुष्यतीति। तत्रासाध्यत्ववर्जितमामं दुष्टमलसत्वं प्राप्तम् ९६५

टिप्पणी—तथा हीति—गुरु प्रकृतिगुरु, रूक्षम्, शुष्कम्, शीतम्, द्विष्टम्, मनसोऽननुकूलम्, विष्टम्भि-विष्टम्भकरम्। विष्टम्भः सवाततोदशूलामलाप्रवृत्तिः। विदाहि-विदाहकरम्, विदाहः-भुक्तस्याम्लभावं गत्वा किञ्चिद्विपाकः। अशुचि अपवित्रतयाऽश्रद्धाजननम्। विरुद्धं प्रतिसंस्कारसंयोगादिभिर्विरुद्धम्। अत्यम्बुपानम्, द्रवः-पेयाविलेपीसदृशः, एवंविधानामन्नपानानां कालेऽकाले वा उपसेवनम्। तथा हितानामप्यपानानामकाले उपसेवनं च आममेव प्रदूषयति। एवं कामक्रोधादिभिरुपतप्तमनसा यदन्नपानमुपयुज्यते तदप्याममेव प्रदूषयति। तदुक्तं सुश्रुतेनापि—''अत्यम्बुपानाद्विषमाशनाद्वा सन्धारणात् स्वप्नविपर्ययाच्च। कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य। ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीडितेन ॥ प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति'' इत्यादि ( सु. सू. ४६.४९५-५०० ) इति, अत्र अत्यम्बुपानद्रवक्षुधां समुल्लेखश्चरके न वर्तते (च. वि. २.८) ९६५

२४ अलसके सामान्यानि वमनद्रव्याणि।

**९६६-तत्र साध्यमामं दुष्टमलसीभूतमुल्लिखेत्, पाययित्वा सलवणमुष्णं वारि ॥ २४**

९६६-तत्रेत्यादि। सलवणं लवणसंयुक्तमुष्णं वारि पीत्वा उल्लिखेत् नर आमं वमेदित्यर्थः ९६६

५९ °ध्यजर्णाशनशी°-क. ख; °द्धाध्यशनशी°-च ६० °मामं वि°-क. ६१ °साध्यम्, आ°-ख. ६२ °मेकाल वा य°-ख.

**टिप्पणी**—साध्येऽलसके चिकित्सामाह–तत्रेति। अलसीभूतं पूर्वोक्तविधया अलसलक्षणोपगतं सलवणमुष्णं वारि पाययित्वा उल्लिखेत्–वामयेत्। लवणं सैन्धवम्–तद्धि कफस्य विलयनछेदने करोति ९६६

२५ अलसके तीक्ष्णानि वमनद्रव्याणि।

**९६७–तथा त्वच्छर्दयन्तमतिलीनदोषं (१) कृष्णानागदन्तीकल्कयुक्तं पाययेत्। (२) मदनफलकषायं वा पिप्पलीसिद्धार्थककल्कयुक्तम्।(३)दन्तीमागधिकावचूर्णितं वा कोशातकीरसम्। अवस्थापेक्षी वा वमनकल्पोक्तानि तीक्ष्णवमनानि ॥ २५**

९६७–दोषस्यानुत्क्लिष्टत्वादेवमप्यच्छर्दयन्तं पिप्पलीनागदन्तीचूर्णयुक्तमुष्णाम्बु पाययेत्। पिप्पलीसर्षपचूर्णयुक्तं वा मदनफलकषायम्। कोशातकीनिष्पीडितरसं वा दन्तीपिप्पलीयुक्तम्। एतानि वमनानि योग्यानि योग्यदेशकालशरीरापेक्षया योज्यानि। अन्यानि च वमनकल्पोक्तानि ( अ.सं.क. १ ) तीक्ष्णान्यातुरव्याध्याद्यवस्थापेक्षया योज्यानि ९६७

**टिप्पणी**—अनुत्क्लिष्टदोषस्याच्छर्दयतो वमनार्थं योगत्रयमाह–तथेति। कल्कयुक्तमुष्णं वारि पाययेदित्यन्वयः। अतिलीनदोषमनुत्क्लिष्टदोषम्। कृष्णा-पिप्पली, दन्ती– स्थूलमूला दन्ती। अत्र सलवणमुष्णं वारिं इत्यनुषङ्गः। ९६७

२६ अलसके वमनान्ते स्वेदवर्तिप्रणिधाने।

**९६८–ततः स्वेदवर्तिप्रणिधानाभ्यामुपाचरेत् ॥२६**

९६८–ततः कृतवमनं नानाविधस्वेदगुदवर्तिभ्यां चिकित्सेत् ९६८

**टिप्पणी**—च. वि. २. १३. ९६८

२७ वमनान्ते अलसकजन्योपद्रवचिकित्सा।

**९६९–अपि च।—**

**सद्यः सम्यग्विशुद्धस्य शाम्यन्ति तदुपद्रवाः।**
**शूले निरन्नकोष्ठेऽद्भिः कोष्णाभिश्चूर्णिताः।**
**पिबेत् ॥२७**

( १ ) अलसके हिंग्वादिचूर्णम्।

**(१) हिङ्गुप्रतिविषाव्योषसौवर्चलवचाभयाः।**

( २ ) अलसके पिप्पलीमूलादिचूर्णम्।

**(२) अथवा पिप्पलीमूलं त्रिवृतादारुसैन्धवम् ॥**

( ३ ) अलसके शुंठ्यादि चूर्णम्।

**(३) शुण्ठीः स्नुक्क्षीरलवणपिप्पलीमरिचानि च।**

( ४ ) अलसके पाठादिचूर्णम्।

**(४) पाठाम्लवेतसक्षारयवानीपौष्करीणि वा ॥**

९६९–अपि चेति समुच्चये। सम्यग्विशुद्धस्य कृतवमनविरेकस्य तदुपद्रवा दुष्टामजा रोगाः सद्य एव शमं यान्ति एवं च कृतसंशुद्धेः शूलेऽनुबद्धे कोष्ठे चाजीर्णान्नरहिते। हिङ्ग्वादीन्यभयान्तानि चूर्णितानीषदुष्णजलेन पिबेत्। यथाविहितमात्रया अथवा पिप्पलीमूलादिसैन्धवान्तं कोष्णाभिरद्भिः पिबेदिति सम्बन्धः। शुण्ठ्यादिकं मरिचान्तं वा कोष्णाभिरद्भिरेव। पाठादिकं पुष्करमूलान्तं वा। एते चत्वारः प्रयोगाः शूलहराः अजीर्णान्नशेषाभावे दोषव्याध्याद्यपेक्षया,यथायोगं योज्याः (च. चि.२६.२१)९६९

२८ अलसके द्विरुत्तरं हिङ्ग्वादिचूर्णम्।

**९७०–द्विरुत्तरं हिङ्गुवचाग्निकुष्ठ—**
**सुवर्चिकाक्षारविडाजमोजम्।**
**शूलोदरानाहविषूचिकार्शो-**
**हृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ॥२८**

९७०–हिङ्ग्वादिकमजमोजान्तं द्विरुत्तरप्रमाणयुक्तं शूलादिनाशनम्। यद्यस्माद्द्रव्यादुत्तरं तत्तस्माद्द्विगुणम्। तथा चैवं स्थितम्। द्विरुत्तरमौषधं यस्यौषधस्येति द्विरुत्तरम्। द्वौ भागौ द्विः समभागतया उत्तरम्। तेनैतदुक्तं भवति–

१ हिङ्गुनो भाग एकः।
२ द्वौ भागौ वचायाः।
३ चत्वारश्चित्रकस्य।
४ अष्टौ कुष्ठस्य।
५ षोडश सुवर्चिकाक्षारस्य।
६ द्वात्रिंशद्बिडलवणस्य।
७ चतुष्षष्टिरजमोजस्येति। ( च. चि. २६. २० ) ९७०

२९ अलसके निरन्नकोष्ठे तृट्शूलयोः मुस्तादिक्वाथः।

**९७१–मुस्ताजमोजपूतीकवचाशुण्ठ्यग्निधान्यकैः ॥**
**सबालकशठीबिल्वैः क्वाथं तृट्छूलवान् पिबेत् २९**

९७१–सप्त भेषजानि। निरन्नकोष्ठस्तु तृट्छूलसंयुक्तो मुस्तादीनां क्वाथकल्पनामानेन क्वाथं पिबेत् ९७१

३० अलसके रास्नादिलेपः।

**९७२–रास्नाकट्फलषड्ग्रन्थाबृहतीद्वयजोङ्गकैः।**
**गुग्गुल्वतिविषाकुष्ठपत्रव्याघ्रनखाम्बुदैः।**
**कुर्याच्छुष्कैः समूत्रैर्वा लेपोद्वर्तनधूपनम् ॥३०**

९७२–रास्नादिभिः शुष्कैर्गोमूत्रमिश्रैर्वा लेपादीञ्छरीरे योजयेत्। शुष्कस्य लेपशब्दोऽङ्गसंयोगादौपचारिकः ९७२

३१ अलसके सरुजिचानद्धे चोदरे देवदार्व्यादिलेपः

**९७३–सरुक्चानद्धमुदरमम्लपिष्टैः प्रलेपयेत्।**
**दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ ३१**

९७३–तस्मिंश्चामेऽलसीभूते सरुजमानद्धं हि जठरमम्लेन काञ्जिकमद्यादिना पिष्टैर्देवदार्वादिभिः प्रलेपयेत् ९७३

३२ अलसके कोष्ठार्तौ यवचूर्णलेपः।

**९७४–यवचूर्णश्च सक्षारतक्रः कोष्ठार्तिजित् परम् ॥ ३२**

९७४–यवचूर्णश्च यवक्षारतक्राभ्यां मिश्रितः परमत्यर्थं प्रलेपादेव कोष्ठार्तिजित्। अन्ये क्षारं भस्म वदन्ति ९७४

३३ अलसके विण्मूत्रसङ्गे गुदवर्तिः।

**९७५–योजयेत्सैन्धवान्तैश्च वर्तिं विण्मूत्रसंग्रहे ॥ ३३**

---

६४ पिबेत्। पिबेद्दीपकं सुमृताकषायं कदम्बानिम्बार्जुनवृक्षकाणाम्। क्वाथं सुखोष्णं लवणप्रगाढं विषूचिकाजीर्णविशेषमर्दिनम्। रास्नाक °–क. ख. च.

९७५-विण्मूत्रसंग्रहेऽनन्तरोक्तैर्देवदार्वादिभिः सैन्धवान्तैर्गुदवर्तिः पिष्टैर्देया ९७५

३४ अलसके स्वेदः विषूचिकाचिकित्सा ।

**२७६-नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ३४**

९७६-तत्र चामदोषे दोषवशादङ्गानि नाम्यमानानि संकोच्यमानानि यदि भवन्ति ततस्तान्यत्यर्थं स्विन्नानि चर्मपट्टादिना वेष्टयेत् ९७६

३५ विषूचिकायां पार्ष्ण्योर्दाहक्रिया ।

**९७७-विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ३५**

९७७-अतिवृद्धायां च विषूच्यां पार्ष्ण्योः घुटिकयोस्तप्तशलादिना दाहः प्रशस्यते ९७७

**टिप्पणी**—सु. उ. ५६. १२. ९७७

३६ विषूचिकायां द्विक्षारादि तैलाभ्यञ्जनम् ।

**९७८-द्विक्षारजीर्णपिण्याककुष्ठारुष्करचित्रकैः ।**
**सशुक्तसैन्धवैस्तैलं पक्वमभ्यञ्जने हितम् ॥ ३६**

९७८-द्विक्षारादिभिः पक्वं तैलमभ्यञ्जनायेष्यते । शुक्तं तैलसमम् ९७८

**टिप्पणी**—अत्र सुश्रुतः—"कुष्ठं चागुरुपत्रं च रास्नाशिग्रुवचात्वचम् । पिष्टमम्लेन तच्छ्रेष्ठं विषूच्यामङ्गमर्दनम् । चित्रकं पूतिपिण्याकं कुष्ठं भल्लातकानि च। द्वौ क्षारौ सैन्धवं चैव शुक्तं तैलं विपाचयेत् । एतदुद्वर्तनं कुर्यात् प्रदेहं वा विचक्षणः ।" इति। इदं योगद्वयं प्राचीनसुश्रुतादर्शे दृश्यते। पद्रितसुश्रुतसंहितायां तु एतद्योगद्वयं नास्ति (सु.उ.५६.१९)

३७ खल्लीघ्नघृततैलम् ।

**३७९-मुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे ।**
**भल्लातकमधूच्छिष्टजीर्णपिण्याकनागरैः ।**
**घृततैलं पचेत्साम्लैस्तच्च खल्लीघ्नमुत्तमम् ॥ ३७**

९७९-तत्र चामदोषेऽति दारुणे वातकोपवशात् गात्राणामायामे वातव्याधिनिदानवक्ष्यमाणलक्षणे ( अ. सं. नि. १५. ६११-६१२ ) भल्लातकादिभिर्घृतं तैलं च मिश्रितं पचेत् वाताद्युपयोगाय सुच्छर्दितविरिक्तस्य सतः । तच्च पक्वं घृततैलमुत्तमं खल्लीनाशनम् । खल्ली वक्ष्यमाणलक्षणा (अ. सं. नि. १५. ६३१) वातव्याधौ ९७९

**टिप्पणी**--च. चि. २८. १०१. ९७९

३८ खल्लयां विषूचिकायां च त्वक्पत्रादितैलम् ।

**९८०-त्वक्पत्ररास्नागुरुशिग्रुकुष्ठै-**
**रम्लप्रपिष्टैः सवचाशताह्वैः ।**
**उद्वर्तनं खल्लिविषूचिकाघ्नं**
**तैलं विपक्वं च तदर्थकारि ॥ ३८**

९८०-त्वगादिभिरम्लेन काञ्जिकादिना पिष्टैरुद्वर्तनं खल्लीं विषूचिकां च नाशयति। एभिरेव च त्वगादिभिः पक्वं तैलं तदर्थकारि विषूचिकास्वरूपमेव छर्दिविरेकादिकमर्थं कुर्वद्रोगमुपशमयति ९८०

३९ विषूच्यलसकयोः उपवासः संसर्जनक्रमश्च ।

**९८१-तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ।**
**सामान्येनेति सिद्धोक्ता विषूच्यलसकक्रिया ३९**

९८१-एनं विषूचिकार्तं तदहर्विषूचिकादिवसमुपवास्य विरिक्तवत्संसर्जनक्रमेणोपचरेत् । एतच्च वमनविरेचनविधौ व्याख्यास्यामः ( अ. सं. सू. २७ ) इत्यनेन प्रकारेण विषूच्यलसकयोः सिद्धा निःसंशयाकार्यकरी क्रियोक्ता ९८१

**टिप्पणी**--च. वि. २. १३ ९८१

४० शेषेष्वामदोषेषु चिकित्सा ।

**९८२-आमदोषेषु त्वन्नकाले जीर्णाहारं दोषोपलिप्तामाशयं स्तिमितगुरुकोष्ठमनन्नाभिलाषिणमभिसमीक्ष्य पाययेद्दोषशेषपाचनार्थमौषधं वह्निसन्धुक्षणार्थं च ॥ ४०**

९८२-शेषेषु त्वामदोषेषु जीर्णे आहारे दोषोपलिप्तामाशयं पुरुषं तथा स्तिमितः अचलो गुरुश्च कोष्ठो यस्य तं तथाहारे च निरभिलाषिणं एवंविधावस्थायुक्तमामदोषिणमवेक्ष्याहारस्य जीर्णत्वात् कालवशाद्दोषेषु किञ्चित् पक्वेष्वपि दोषशेषस्य पाचनार्थमग्निसन्धुक्षणार्थं च किञ्चिदेवगुणमौषधं पाययेत् । ९८२

**टिप्पणी**--च. वि. २. १३. ९८२

४१ अजीर्णाहारे औषधपाने निषेधः ।

**९८३-अजीर्णाहारं पुनर्न पाययेत् । यतः आमदोषदुर्बलो ह्यग्निर्युगपदामदोषमौषधमाहारजातं चाशक्तः पक्तुम् ॥ ४१**

९८३-अजीर्णाहाराय न देयमौषधं यतः आमदोषकृतबलहानिरग्निर्भीतादिकमपक्वं दोषं प्रयुज्यमानमौषधमाहारं चाजीर्णं पक्तुमशक्तः ।

**टिप्पणी**--च. वि. २. १३. ९८३

४२ आमप्रदोषे औषधपानं विरुद्धम् ।

**९८४-अपि चैषां विभ्रमोऽतिबलत्वादुपरतानलबलमातुरं सहसैवातिपातयेत् ॥ ४२**

९८४-अपि चेति पादसमुच्चये। एषामामादीनां विभ्रमो दुष्टोत्कर्षिणां सामामतिबलत्वान्नष्टानलबलमातुरं सहसैवातिपातयेत् शीघ्रमेव मारयेदित्यर्थः ।

**टिप्पणी**--च. वि. २. १३. ९८४

४३ आमदोषाणामपतर्पणेन शमः ।

**९८५-आमदोषजानां पुनर्विकाराणामपतर्पणेनैवोपशमो भवति ॥ ४३**

९८५-सर्वेषां च पुनरामदोषजानां स्तैमित्यादीनां विकाराणामपतर्पणं लङ्घनमेव चिकित्सा ।

**टिप्पणी**--च. वि. २. १३. ९८५

---

६५ °ष्करपत्रकैः । सशु°--ख. च. ६६ °न्धुक्षणहेतोश्च । अ°--क. ख. ६७ यतः आमसन्न आमदोषमौषधमाहारजातं चाशक्तः पक्तुमग्निः । इत्येषां विभ्र°--क. ख.

४४ अपतर्पणस्य त्रैविध्यम् ।

**९८६-तत्तु त्रिविधम्। लङ्घनं लङ्घनपाचनमवसेचनं च॰॥ ४४**

९८६-तत्त्वपतर्पणं त्रिप्रकारम् (च. सू. २२. २२.) ९८६

**टिप्पणी**--दोषबलापेक्षया अपतर्पणस्य भेदमाह-तदिति। यद्यपि 'यत्किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम्' इति (च. सू. २२. ९) इति निरुक्त्या पाचनादयोऽपि लङ्घन-शब्देनोच्यन्ते । तथा चोक्तं चरके-"चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम्" (च. सू. २२. १८)। अस्यार्थः-चतुष्प्रकारा संशुद्धिः-वमन-विरेचनास्थापनशिरोविरेचनानीति । अनुवासनस्य बृंहणत्वात्तद्व्यवच्छेदाय चतुष्प्रकारेति । पिपासेति-पिपासानिग्रहस्तृष्णावेगधारणमित्यर्थः । मारुतेति-वायुर्बाह्यः प्राकृत (सु. सू. २०. २३-३०) एव। लङ्घनं स्यात, देहे लाघवकरत्वात्। न तु विकृतः। प्रागादिदिग्-वृष्ट्यादि सोमसंबंधेन लाघवकरत्वाभावात्। ग्रीष्मादौ वातपसंबंधेन वैकृतस्य देहलाघवं प्रत्यकुशलत्वात्। आतपश्च लङ्घनं सर्वदैव देहलाघवकरत्वात्। पाचनानीति-आहारान्पचन्त जाठरमग्निं सन्धुक्षयन्तितद्बलं वर्धयन्ति च। यानि पाचयन्ति तानि पाचनानि वाय्वग्निगुणबहुलानि सैन्धवमरिचादीनि द्रव्याणि । लौकिकोऽयञ्च वान्हेरपि पाचनः। उपवासस्तु जाठराग्निसंधुक्षणेन बलदानेन चाहारपाचनोऽपि द्रवमयत्वाभावात्पृथगुपदिष्टः । आतपान्तास्तु सप्त न पाचनानि जाठराग्निसंधुक्षणाभावेन देहलाघवकरत्वात्पृथगुक्ताः। एव च व्यायामोऽप्यद्रव्यभूतत्वात्पृथगुक्तः न तु पाचनत्वेन संगृहीतः। अत एव लंघनस्य द्रव्याद्रव्य-साधारणत्वख्यापनार्थं लङ्घनलक्षणे यत्किञ्चिदित्युक्तं न द्रव्यमुक्तम्। तथापि पाचनादीनां पृथग्वचनादिह लङ्घन-शब्दः उपवासमात्रवाचनः। लङ्घनपाचनमिति वचनेन यत्र पाचनं क्रियते तत्रापि स्तोकमात्रया लङ्घनं क्रियत इति दर्शयति। अवसेचनम्-दोषावसेचनम्-दोषाणां बहिर्निःसारणं शोधनमित्यर्थः । (च. वि. ३. ४८-४९) ९८६

४५ लङ्घनोपयोगः ।

**९८७-तत्र लङ्घनमल्पदोषाणाम् । तेन ह्यनिलानलवृद्ध्या वातातपपरीत इवाल्पः सलिलाशयोऽल्पदोषः॰ प्रशोषमापद्यते ॥ ४५**

९८७-तत्र स्वल्पदोषाणां लङ्घनमेव । अत्र लङ्घन-शब्देनोपवासो भण्यते । तेन हीत्यादिना दृष्टान्तः। तेन ह्युपवासेनानिलोऽग्निश्च वृद्धिं याति । तद्वृध्या चाल्पो दोषः शोषं प्राप्नोती ति। यथाल्पसलिलाशयो जलस्थान तटाकादि, वाता एतद्वृद्धया शोषं याति। तद्वद्दोषोऽपि (च. सू. २२. २०, २१.) ९८७

**टिप्पणी**--तत्रेति-दोषाणामल्पे बले लङ्घनमुपवासः। तथा चोक्तं चरके-"अत एव यथोद्दिष्टा येषामल्पबला गदाः। पिपासानिग्रहैस्तेषामुपवासैश्च ताञ्जयेत्" (च. सू. २२. २२) इति। इह पिपासानिग्रहोऽनुक्तोऽप्युपवासेन संगृह्यते। हि यतः तेन-लङ्घनेन (उपवासेन) अनिलानलवृद्ध्या-अग्निमारुतवृद्ध्या । वातातपेति-यथा अल्पमुदकं वातातपाभ्यां प्रवृद्धाभ्यां परीतं सत प्रशोषमापद्यते तद्वत्। च. वि. ३. ४९. ९८७

४६ लङ्घनपाचनोपयोगः ।

**९८८-लङ्घनपाचनाभ्यां मध्यदोषो वातातपाभ्यां पांसुभस्मावकिरणैरिव चानतिमहान् सलिलाशयः४६**

९८८-तथा मध्यदोषो नातिवृद्धो लङ्घनेनोपवासेन पाचनेन च क्वाथादिना शोषं याति। यथा मध्यः सलिलाशयो नातिबहुजलो वातातपाभ्यां पांसुभस्मावकिरणेन शोषमापद्यते। तद्वन्मध्योऽपि दोषः। लङ्घनस्य वातातपाभ्यां सादृश्यम्। पाचनस्य पांसुभस्मावकिरणेन ९८८

**टिप्पणी**-लङ्घनपाचनाभ्यामिति-मध्यबलदोषेषु लङ्घन-पाचने। वातातपाभ्याम्-सूर्यसंतापमारुताभ्याम्। पांसवः धूलयः। भस्मानि प्रसिद्धानि। तेषामवकिरणैः अवक्षेपैः। अनतिमहान् मध्यमः। सलिलाशयः तटाकादिः प्रशोषमापद्यते तथाऽत्र लङ्घनपाचनाभ्यां मध्यबलो दोषः प्रशोषमापद्यते । लङ्घनस्य सूर्यसंतापमारुताभ्यां साम्यम्। पाचनस्य च पांसुभस्मावकिरणेन साम्यम्। अत्र चरकः-"येषां मध्यबला रोगाः कफपित्तसमुद्भवाः। छर्द्यतीसार-हृद्रोगाविसूच्यलसकज्वराः । पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत् (च. सू. २२. २०-२१) इति, च. वि. ३. ४९. ९८८

४७ अवसेचनोपयोगः ।

**९८९-बहुदोषाणां पुनर्दोषावसेचनमेव कार्यम्। न ह्यभिन्ने केदारसेतौ पल्वलाप्रसेकोऽस्ति तद्वद्दोषावसेचनम् । न ह्याप्लाविते पल्वलोदकौघे शाल्यादिपुष्टिर्भवति**

९८९-बहुदोषाणां दोषावसेचनं वमनविरेचनेनापतर्पणम्। दृष्टान्तो यथा-पल्वलोदकौघे नड्वलपानीये अप्लाविते तत्स्थानां शाल्यादीनां पुष्टिर्न भवति। बहूनां दोषाण पल्वलोदकेन सादृश्यम्। शालीनामायुषा अमुक्तेनापि बलात्सादृश्यम्। शरीरस्य पल्वलेन च ९८९

**टिप्पणी**--बहिति-बहुदोषाणां दोषावसेचनम्-प्रबलदोषेषु दोषाणामवसेचनं निःसारणं संशोधनमेव कार्यम्। तथा चोक्तम्-' प्रभूतश्लेष्मपित्तास्रमलाः संसृष्टमारुताः । बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः' (च. सू. २२. १९) इति। एतदेव सोदाहरणमुपपादयति-न ह्यप्लावित इति। आलिं भित्त्वा उदकौघे स्राविते सत्येव केदारः शुष्यति। तदा तत्स्थशाल्यादीनां पुष्टिर्भवति । एवं वमनादिभिर्निर्हृतेषु दोषेषु शेषः प्रशोषमापद्यते। तेन शरीरस्य पुष्टिः स्वास्थ्यलक्षणा भवति (च. वि. ३. ४९) ९८९

---

६७ 'दोषः शो'- ख. च. ६८ 'नाभ्यां मध्यबलो वा'- च. ६९ 'ध्यमलो वा'-क.

४८ संतर्पणापतर्पणयोः परस्परोपयोगिता ।

**९९०-तस्मात्संतर्पणानिमित्तानां नान्तरेणापतर्पणमस्ति शान्तिः। अपतर्पणनिमित्तानां च नान्तरेण संतर्पणमिति ॥ ४८**

९९०-तस्मादनया दिशा एतदुक्तं भवति—सर्वेषां सन्तर्पणोत्थानां व्याधीनामपतर्पणं कार्यं, अपतर्पणोत्थानां च सन्तर्पणमिति ९९०

**टिप्पणी**—तस्मादिति-संतर्पणनिमित्तानां पूरणजन्यानानां व्याधीनामपतर्पणमन्तरेण क्षपणेन विना न शान्तिः। नोपशमो भवति, अपतर्पणेनैव तेषां शान्तिर्भवतीत्यर्थः। अपतर्पणनिमित्तानां क्षपणजन्यानां व्याधीनां संतर्पणेनान्तरेण पूरणं विना न शान्तिः। संतर्पणेनैव तेषां शान्तिः, निदानविपरीतत्वात् च. वि. ३. ४७.९९०

४९ अतिदेशेन निदानविपरीतार्थत्वकथनम् ।

**९९१-एवमन्येषामपि व्याधीनां यथास्वं निदानविपरीतमौषधमेवावचारयेत् ॥ ४९ ॥**

९९१-एतच स्वयमुक्तवता शास्त्रकारेणौषधं निदानविपरीतं दर्शितम्। निदानं हेतुरिति पर्यायौ। संतर्पणहेतुकानामपतर्पणमिति ९९१

**टिप्पणी**— च. वि. २. १३.९९१

५० व्याधिविपरीततद्वतदर्थकारित्वयोरुपयोगः।

**९९२-सति त्वनुबन्धे निदानविपरीतमपास्य व्याधिविपरीतमेव तदर्थकारि वा । ५०**

९९२-यदा तु सर्वव्याधयो हेतुविपरीतौषधेन कृतेनापि न शाम्यन्ति तदा व्याधिविपरीतं कार्यम्। तदर्थकारि वा। न हेतुविपरीतमात्रेणैव कृताथतामवलम्बेत। एतानि हेतुविपरीतादीनि वक्ष्यमाणलक्षणानि ९९२

**टिप्पणी**—च. वि. २. १३. ९९२

५१ आमदोषमुक्तावभ्यङ्गादिविधानम्

**९९३-विमुक्तामदोषस्य पुनः परिपक्वामदोषदोषस्य दीप्ते चाग्नावभ्यङ्गास्थापनानुवासनं विधिवत्स्नेहपानं च युक्त्या प्रयोज्यं प्रसमीक्ष्य दोषौषधादीनामवस्थान्तराणि । ५१ ॥**

९९३—विमुक्त आमदोषेण यः पुरुषः कालौषधादिना परिपक्वदोषो दीप्ताग्निश्च तस्य शरीरस्थदोषयुप्रज्यमानौषधादीनां नानाविधान्यवस्थान्तराण्यभिसमीक्ष्याभ्यङ्गादीनामन्यतमं यथेच्छं वा युक्त्या यथा संवाहनेन कामं योजयेत् ९९३

**टिप्पणी**—च. वि. २. १३. ९९३

५२ श्लोकैरर्थसमुच्चयः।

**९९४-भवन्ति चात्र-**

९९४-भवन्ति चात्रेति श्लोकैरर्थसमुच्चये तन्त्ररीतिः ९९४

५३ आमदोषवतोऽसाध्यत्वम् ।

**९९५-यः श्यावदन्तोष्ठनखोऽल्पसंज्ञः छर्द्यर्दितोऽन्तर्गतताम्रनेत्रः। क्षामस्वरः स्रस्तसमस्तसन्धिर्यायान्नरोऽसौ पुनरागमाय ॥ ५२**

९९५-प्रकरणादामदोषवान् श्यावदन्तत्वादिलक्षणयुक्तः स नरोऽपुनरागमनाय यायात्-म्रियत इत्यर्थः ९९५

**टिप्पणी**—सु. उ. ५६. ११. ९९५

५४ विपूचिकाघ्नं नेत्राञ्जनम् ।

**९९६-व्योषं करञ्जस्य फलं हरिद्रे मूलं समावाप्य च मातुलुङ्ग्याः ॥ छायाविशुष्का गुलिकाः कृतास्ता हन्युर्विपूचीं नयनाञ्जनेन ॥ ५३**

९९६-व्योषादिकृता वर्तयो नेत्राञ्जनेन विपूचिकां हन्युः। समावाप्य सम्मिश्र्य ९९६ ( सु. उ. ५६. १८--१९)

५५ विपूचिकघ्नीवर्तिः ।

**९९७-शिरीषनक्ताह्वफणिज्जबीजत्रायन्त्यपामार्गफलैश्च वर्तिः ॥ बस्तस्य मूत्रेण विषूचिकाघ्नी प्रलेपधूमाञ्जननस्ययोगैः ॥ ५४**

९९७-शिरीषादिभिश्चूर्णितैर्वस्तस्य छागस्य मूत्रेण कृता वर्तिः। प्रलेपादियोगाद्विपूचिकाघ्नी। एषाऽऽमदोषचिकित्साऽजीर्णेऽन्ने योज्या ९९७

**टिप्पणी**—सु. उ. ५६. २४--२५. ९९७

५६ अजीर्णस्य त्रैविध्यम् ।

**९९८-अजीर्णं च कफादामं विष्टब्धमनिलाद्भवेत् । विदग्धं पित्तकोपेन त्रिप्रकारमिति स्मृतम् ॥५५**

९९८-अजीर्णमन्नमुच्यते। त्रिविधमजीर्णम्। कफाधिक्येन, वाताधिक्येन, द्रवस्वरूपपित्ताधिक्येन वा। आमविपरीत्येन कफस्याजीर्णकर्तृत्वे प्राधान्यादग्रे पाठः ९९८

**टिप्पणी**-- सु. सू. ४६. ४९८. ९९८

५७ आमाजीर्णलक्षणम्।

**९९९-तत्रामे गुरुता क्लेदः शोफो गण्डाक्षिकूटयोः। उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ ५६**

९९९-तत्र कफकृतोऽजीर्णे आमनामा तस्मिन् स्थिते गात्राणां गुरुत्वं धातूनामुत्क्लेदः। उत्क्लेदो विकारविशेषः। सद्यो भुक्तवदप्राप्तविदाहावस्थो ह्युद्गारः ९९९

**टिप्पणी**—सु. सू. ४६. ५०१. ९९९

५८ विष्टब्धाजीर्णलक्षणम्।

**१०००-विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः। मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम् ५७**

१०००-वातेनाजीर्णं विष्टब्धमुच्यते तस्य लक्षणं जठरशूलाद्युद्भवः १००० ( सु. सू. ४६.५०१ )

---

७० °त्तानां नान्त°--ख. ७१ °षधमवचा°--क. च. ७२ °मदोषस्य दी°--च. ७३ °सनं विविधस्ने°--ग. ७४ °ल्पसंज्ञः। छर्दितोऽभ्यन्तरयातने°--क. ख. ७५ °रः सर्वविमुविमुक्तसं°--ख. ७६ °फलानि व°--ख. ७७ °त्तदोषेण त्रि°--च. ७८ °ण्डाक्षिकूटगः। उ.°--च.

५९ विदग्धाजीर्णलक्षणम् ।

१००१–विदग्धे भ्रमतृण्मूर्च्छाः पित्ताच्च विविधा रुजः
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥५८

१००१–पित्तादजीर्णं विदग्धशब्देनोच्यते तस्य लक्षणं भ्रमाद्युद्भवः । उद्गारश्चास्य धूम इव जठरादुदेति तीक्ष्णतया १००१

टिप्पणी—सु. सू. ४६. ५०१. १००१

६० त्रिविधाजीर्णचिकित्सा ।

१००२–लङ्घनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम् ।
विदग्धे वमनं यद्वा यथावस्थं हितं भजेत् ॥ ५९

१००२–आमे अजीर्णे चिकित्सा लङ्घनमुपवासः । विष्टब्धेऽत्यर्थं स्वेदः । विदग्धे वमनम् । अवस्थाविशेषेण वा सर्वमेतत् सर्वत्रापि १००२

टिप्पणी—सु. सू. ४६. ५०४. १००२

६१ विलम्बिकालक्षणम् ।

१००३–गरीयसो भवेल्लीनादामादेव विलम्बिका ।
कफवातानुविद्धामलिङ्गा तत्समसाधना ॥ ६०

१००३–एतत्प्रसङ्ग इदमाह—आमान्महास्रोतसि लीनात् गरीयसः प्रभूताद्विलम्बिका नाम रोग उत्पद्यते । सा च विलम्बिका वातश्लेष्मभ्यामनुबद्धा भवति । सा चामनामाजीर्णसदृशलक्षणा, तच्चिकित्सा च १००३

टिप्पणी—सु. उ. ५६. ९–१०. १००३

६२ रसशेषाजीर्णलक्षणम् ।

१००४–रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ।
तत्राभुक्त्वा दिवा स्वप्यात् क्षुद्वानर्थांल्लघु प्रति

१००४–जीर्णे त्वन्ने कदाचिदाहारसारो रसं अजीर्णो भवत्यतस्तल्लक्षणमुच्यते–अन्नविद्वेष इत्यादि । तत्र रसेऽजीर्णे अकृतभोजनः स्वप्यादा लाघवात् । प्रबुद्धश्च यदि क्षुद्वांस्ततोऽद्याल्लघुप्रति । लघु स्तोकम् । स्वभावलघु स्वल्पमात्रं चेत्यर्थः १००४ ( सु. सू. ४६.५०२ )

६३ भोज्यभैषज्ययोर्जीर्णाजीर्णनियमः ।

१००५–यामैश्चतुर्भिर्द्वाभ्यां च भोज्यभैषज्ययोः समे ।
पाकोऽग्नौ युक्तयोर्द्राक्च तीक्ष्णेमन्देपुनश्चिरात्

१००५–एतच्चाजीर्णं दोषोपहताग्नित्वशाद्भवति । तस्य च दोषोपहतत्वे त्रिविधं रूपं विषमत्वादि शारीरे वक्ष्यमाण–लक्षणम् ( ४४८–४५२ ) । दोषाननुबन्धेन चतुर्थं रूपं यत्स मत्वम् । तस्य चतुर्विधस्याग्नेर्जीर्णाजीर्णनियमं कालनियमेन दर्शयतिसमेऽग्नौ बलशरीराद्यपेक्षया उपयुक्तस्य भोज्यस्याहारस्य मात्रया चोपयुक्तस्य चतुर्भिर्यामैः पाको भवति । भेषजस्यौषधस्य तद्वद्द्वाभ्यां यामाभ्याम् । युक्तयोर्देशकालशरीराद्यपेक्षया प्रयुक्तयोर्भोज्यभैषज्ययोरित्युक्तमेवास्माभिः । तीक्ष्णेऽग्नौ यथोक्ते काले प्राप्ते विपाकः । मन्देऽग्नौ पुनश्चिरान्मन्दत्वातिशयापेक्षया यथोक्तं कालं बहु बहुतरं चातिक्रम्याटोपादिकं च कृत्वा । विषमे तु प्रकृतानुपयोगः, यतः स कदाचित्तैक्ष्ण्यं कदाचिन्मान्द्यं भजते । अजीर्णभावे तु वर्तमानमेवाहोरात्रमग्निस्तीक्ष्णोऽन्यो वा उपकरोति सातत्येन । अतो विषमोऽत्र नोक्तः १००५

टिप्पणी—सु. सू. ४६: ४६७–४७०. १००५

६४ मन्दाग्नेः समक्तौषधदानं पूर्वाह्णे भोजनं च ।

१००६–सभक्तमौषधं तस्मान्मन्दाग्नेरवचारयेत् ।
पूर्वाह्णे भोजनं सात्म्यं लघु दीपनबृंहणम् ॥६१

१००६–अत एव च कारणादाह सभक्तमित्यादि । यतो मन्दाग्नौ चिरात् पाकस्ततो मन्दाग्नेः पुरुषस्य सभोजनमौषधं दीयते । अत्र युक्तिरुच्यते यस्मान्मन्दाग्नेराहारश्चिरात् पाकं याति अस्तने चाग्नेऽजीर्णे अयतनाहारयोग्ये च कालेऽन्तरा औषधस्योपयोगकरणकालो सम्भवतीति । समे चाग्नौ चतुर्भिर्यामैरन्नपाक उक्तः । अष्टौ च यामा अहोरात्रम् । तेन बलादुक्तं भवति–अहोरात्रवर्तिनस्त्याग्नेस्य द्वौ भोजनकालाविति । तत्र रात्रौ भोजनप्रतिषेधादहन्येव द्वौ वारौ पूर्वाह्णे चापराह्णे च भोजनम् । पूर्वाह्णे तत्सात्म्यमुचितं पथ्यं लघु च सदग्निदीप्तिकरं बृंहणं च । अस्तने आहारे सम्यक्परिणते विमलेषु स्रोतस्सूपयोगादेतस्य चासंभवादपराह्णे भोजनं पूर्वाह्णभोजनाद्गुणैर्हीनम् १००६

टिप्पणी—सु. सू. ४६. ४६८. १००६

६५ अजीर्णाहारे सायंप्रातर्विशेषः ।

१००७–प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति ।
अजीर्णे सायमाशे तु प्रातराशो हि दुष्यति ६४

१००७–ननु चतुर्भिर्यामैरन्नपाक उक्तस्तत्कथमहः संज्ञे चतुर्यामे द्वौ वारौ भोजनं विधीयते, अजीर्णप्रतिषेधः कथं नापततीत्याह—प्रातराशे त्विति पूर्वाह्णभोजनेऽजीर्णेऽपि सायमाशो न दुष्यति । बलादुक्तं सायमाशेऽजीर्णे सायमाशा दुष्यतीति १००७ ( च. चि. १५. २३७ )

६६ सायमाशाजीर्णेऽपि प्रातराशादुष्टत्वस्य कारणम् ।

१००८–दिवा प्रबोध्यतेऽर्केण हृदयं पुण्डरीकवत् ।
तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः॥
व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः।
न क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः ६६
अक्लिन्नेष्वन्नमासिक्तमत्यन्तेन न दुष्यति ।
अविदग्धेष्विव पयस्स्वन्यत्तत्संमिश्रितं पयः ॥६७

१००८–कात्र युक्तिरित्युभयस्यापि युक्तिरुच्यते–प्रथमस्य युक्तिर्दिवसस्य प्रारम्भप्रभृत्यर्केण सूर्यभट्टारकेण बाह्यपुण्डरीकवत् पुरुषस्य हृदयपुण्डरीकं प्रबोध्यते–प्रकाश्यते ।

७९ °वस्थं हितं भवेत् । ग°–क. ख. ग. ८० °थान्मितं लघु । या°–क. ख. ८१ °पाकोऽग्नौ युक्तयोः प्राक् तु तौ°–च. ८२ °वा प्रबुध्यतेऽर्के°–च. ८३ °न्नमासक्तमन्यत्तेषु न दु°–ख.

तस्मिंश्च हृदये प्रबुद्धे पुरुषस्य व्यायामेन शरीरचेष्टया विचारेण च बुद्धिविकल्पनेन तथा चेतसश्च मनसो विक्षिप्तत्वेन क्रियायोगाः व्यायामादियोगाच्च सर्वस्रोतांसि स्ववाह्यवाहकत्वे स्फुटत्वं निरावरणत्वं यान्ति। यतः स्रोतसां स्फुटत्वेन वातादयो धातवः कोष्ठे परिक्लेदं न यान्ति। तेनाक्लिन्नेषु धातुषु सायमाशोऽन्नमासिक्तं जठरे न्यस्तमत्यन्तेन न दुष्यति। अत्यन्तग्रहणं किञ्चिद्दुष्यति सात्म्यत्वादिना रोगं न करोतीति ज्ञापनार्थम्। दृष्टान्तो यथा-अविदग्धे अनभिपृष्टे पयस्यन्यत् पयो न्यस्तं न दुष्यतीति। ये त्वन्नमन्यदासिक्तं तेन हेतुना न दुष्यतीति वदन्ति तेषामासिक्तशब्देनैवान्यत्वस्य लब्धत्वाद्विचारणीयम् १००८

टिप्पणी—च. चि. १५.२३८–२४०; सु. सू. ४६. ५२८, १००८.

६७ प्रातराशाजीर्णे सायमाशदुष्टत्वे कारणम्।

१००९–रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च।
यान्ति कोष्ठे परिक्लेदं संवृते सर्वधातवः॥ ६८
क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति।
विदग्धेषु पयस्स्वन्यत् पयस्तप्तेष्विवार्पितम् ६९
नैशे तस्मादजीर्णेऽन्ने नान्यद्भुञ्जीत भोजनम्।

१००९–इतीयस्य वस्तुनो युक्तिरुच्यते–रात्राविन्यादि पूर्ववैपरीत्येन व्याख्येयम् १००९

टिप्पणी—च. चि. १५. २४१–२४३; सु. सू. ४६. ५२९. १००९.

६८ जीर्णाहारलक्षणम्।

१०१०–उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ७०

१०१०–उद्गारशुध्यादि जीर्णाहारपुरुषस्य लक्षणम्।

६९ अशनलुब्धत्वमेवविपूचिकायाः कारणम्।

१०११–प्रायः प्रज्ञापराधेन रोगग्रामः प्रजायते।
नृणामशनलुब्धानां विशेषेण विषूचिका॥ ७१

१०११–अध्यायार्थमुपसंहरन्नाह। सकलो रोगग्रामो व्याधिसमूहः। प्रायो बाहुल्येन प्रज्ञापराधेन त्याज्यसेवनादनुष्ठेयत्यागाच्च जायते। नराणां भोजनलुब्धानां तु न तथान्ये रोगा उत्पद्यन्ते, यथा विषूचिका १०११

टिप्पणी—च. शा. १. १०२–१०९; सु. उ. ५६५;–चि. ३९. ३७, १०११

७० विषूचिकास्वरूपम्।

१०१२–दोषोपनद्धं यदि लीनमन्नं
पित्तोल्बणस्याप्युणुयान्न वह्निम्।
जायेत दुष्टा तु ततो बुभुक्षा
या मन्दबुद्धीन् विषवन्निहन्ति॥ ७२

इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृताष्टाङ्गसंग्रहसंहितायां सूत्रस्थाने मात्राशीतीयैकादशोऽध्यायः॥ ११॥

१०१२–अजीर्णाहारमुच्यते। तच्च व्याप्तिमदिति प्रदर्शनार्थमाह–दोषोपनद्धमित्यादिना। द्रवस्वरूपपित्तोल्बणस्य पुरुषस्य वातश्लेष्मरुद्धमन्नं कोष्ठैकदेशे लीनं द्रवपित्ताधिक्यादग्निसम्बन्धं गन्तुं न शक्नोति। तत्र तदा दुष्टा भोक्तुमिच्छोत्पद्यते। या मन्दबुद्धीन् भोजनयोग्यत्वविकल्पशून्यान् भोजनोपयोगेन विषवत् पुरुषान् मारयतीति १०१२

इति श्रीमन्महामहोपाध्यायेन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायां शशिलेखायां सूत्रस्थाने एकादशोऽध्यायः॥ ११॥



८४ 'यनेषु च। परिक्लेदं यान्ति कोष्ठे संवृते दहधा' च. ८५ 'ष्वासक्त प्र'–ब. ग

पुण्यपत्तनस्थायुर्वेदविद्यालयप्रधानाध्यापक–पण्डितरामचन्द्रशास्त्रिकिञ्जवडेकरेण प्रतिसंस्कृते प्रभाटिप्पण्या च परिष्कृते

## अष्टाङ्गसङ्ग्रह–

# सूत्रस्थाने

## स्वस्थवृत्तमूलवचनादर्शः ।

### सूत्रस्थाने प्रथमोऽध्यायः ।

टिप्पणी—( २ ) च. सू. १. १; सु. सू. १. १. ( ३ ) च. सू. १. २. ( ४ ) च. सू. १. १५, २७, ४३; ३०. २९. (५–८) च. सू. १.३–२३, २४–४०; सु. सू. १. ३–६, १७–२१ ( ११ ) च. सू. १. ५७;–वि. १. ५;–शा. ४. ३४; सु. शा. ५. ६;–सू. २१. ८; १५. ३;–उ. ६६. ६–७. ( १२ ) च. सू. २०. ८; सु. सू. २१. ६–७, ३. ( १३ ) च. चि. ३०. ३०८–३१२; सु. सू. २१. २०, २२, २४. ( १४ ) च. वि. ६. १२; सु. सू. ३५. २४. ( १५ ) च. सि. १. ९; सु. चि. ३३. २१. ( १६ ) च. वि. ६. १३; सु. शा. ४. ६३, ६२, ७९ ( १७ ) च. चि. ३. ३८; –सू. १. ५९–६१; १२. ४; २०. १७,–वि. ८. १४. ९८, ९७, सु. सू. ४२. ७. ( १–३ ). २१. ११, १५. ( १८ ) च. वि. ६. १०;–सू. १७. ४१–४४; सु. उ. ६६. १०–१२. ( १९ ) च. सू. २८. ४; सु. उ. ६६. ६–७. ( २० ) च. सू. २८. ८; सु. सू. २४. ८; १५. ५. ( २१ ) च. सू. १. ४४;–शा. ६. ९, ११ ( २२ ) च. सू. १. ६५; सु. सू. ४२. ३. ( २३ ) च. सू. १. ६६;–वि. १. ६; सु. सू. ४२. ४. ( २४ ) च. सू. १. ६७. ( २५ ) च. सू. २६. ६४–६५; सु. सू. ४०. ५, १७; ४२. ११. ( २६ ) च. सू. २६. ५७–५८; सु. सू. ४०. १०–१२ ( २७ ) च. शा. ६. १०;–सू. २५, ३६; सु. सू. ४२. ११; ४६. ५१३–५२३ ( २८ ) च. शा. ४. ३६;–सू. ८. ११; १. २७, ३१; सु. शा. १. १०; १. ४, ५; सू. ४६. ५२१–५२२ (२९); च. शा. १. ९८, १२९, ११८–१३१;–सू. १. ५४; ११. ३७–४३ ( ३० ) च. सू. ९. ४; २०. ३; ११. ४५;–वि. ६. ५;–शा. ४. ३४; सु. सू. १. २४–२६. ( ३१ ) च. चि. २५. २२–२३. सु. सू. १०. ४, ५. (३२) च. नि. १. ६;–सू. २९. ७. ( ३३ ) च. वि. ८. ९२; सु. सू. ३५. ३३; १५. ३५–३८ ( ३४ ) च. क. १. ८, ९;–वि. १. २९; सु. सू. ३५. ४२–४३ ( ३५ ) च. वि. १. ३०; १२५–१२८. ( ३६ ) च. सू. ११. ५४, ५५; सु. सू. १. २७. ( ३७ ) च. वि. १. १३–१७–सू. ११. ४६–४७; ३५. ४०; सु. उ. ६१. २६–२७.

### सूत्रस्थाने द्वितीयोऽध्यायः ।

टिप्पणी—( ४६ ) च. वि. ८. १; सु. सू. २. १. (४७) च. वि. ८. ८, १३; सु. सू. २. ३. (४८) च. वि. ८. ९; सु. सू. २. ९–१० ( ४९ ) च. वि. ८. ५. ( ५० ) च. वि. ८. ४;–चि. १. पा. ४. ५६;–सू. २९. ७, १३; सु. क. १. ८–११;–सू. २६. ४४. ( ५१ ) सु. सू. ९. ३; ३. ४८. ( ५२ ) च. सू. २९. ८; सु. सू. ३. ४९. (५३) च. सू. ९. १९; २९. ७; (५४) च. सू. ९. २०. (५५) च. सू. ९. २४. (५६) च. सू. ८. २७; सु. सू. १०. ३, ४; ३५. २१, २२, ४८–५०–(५७) सु. सू. १०. ९; (५८) च. सू. २९. ९;–सि. २. ४–७. (५९) च. चि. १. पा. ४. ५९;–सू. २९. ११, ५, ८, १२; सु. सू. २५. ४१. ( ६० ) च. सू. ९. ३, ५, १०; सु. सू. ३४. १५. ( ६१ ) च. सू. ९. ६; २९. ७;–वि. ८. ८६; सु. सू. ३४. १९–२०. (६२) च. सू. ९. ७; सु. सू. ३४. २२–२३. (६३) च. सू. ९. ८; सु. सू. ३४. २४. ( ६४ ) च. सू. ९. ९; सु. सू. ३४. २१. ( ६५ ) च. सू. ९. १०, १४; सु. सू. ३४. १६–१८. ( ६६ ) च. सू. १०. ९–१०; १८. ३७–४१ ( ६७ ) च. सू. १०. १३, ११; सु. सू. ३५. ४६–४७. ( ६८ ) च. सू. १०. १२;–नि. ८. ३३; ( ६९ ) च. सू. १०. १४–१६;–नि. ८. ३३; सु. सू. ३५. ४७. ( ७० ) च. सू. १०. १७–१९;–नि. ८. ३४; सू. ३५. ४७. ( ७१ ) च. सू. १०. १९–२०;–नि. ८. ३४; ( ७२ ) च. सू. १० २१–२२, ७–८. ( ७३ ) च. सू. नि. ८. ३५. ( ७४ ) च. नि. ८. ३५. ( ७५ ) च. सू. ९. १५–१६. ( ७६ ) च. चि. १. पा. ४. ५८, ६२.

### सूत्रस्थाने तृतीयोऽध्यायः ।

टिप्पणी—( ७७ ) सु. चि. २४. १. (७८) सु. चि. २४. ३. ( ७९ ) सु. चि. २४. ९३. (८०) च. सू. ८. २१; ७. २५ (८२) च. सू. ८. २० (८३) च. सू. ५. ७१–७४; चि. ३. १५७–१५९ सु. चि. २४. ४–९. (८४) च. सू. ५. ७४–७६; सु. चि. २४. १३–१४. (८५) सु. चि. २४. १०–१२. ( ८८ ) सु. चि. २४. ८, १५–१७. ( ८९ ) च. सू. ८.

१८; इं. १२. ७१-८०; सु. सू. २९. २७-३३. (९०) च. सू. ५. १५; सु. चि. २४. १७-२०. (९१) च. सू. ५. १५-२० (९२) च. सू. ५. ५७-७१, ७८-८०; सु. चि. ४०. २१, २२, २८, ५४-७१. (९३) च. सू. ५. २०-५५, २७-३३; सु. चि. ४०. ९-१८. (९४) च. सू. ५. ९६. सु. चि. २४. ६४-६५. (९५) च. सू. ५. ९५; सु. चि. २४. १०१ (९६) च. सू. ५. ७६-७७; सु. चि. २४. २१-२४. (९७) च. सू. ११. ५, ८. २२. (९८) च. सू. ८. १८; ५. १०२; सु. चि. २४. ७१-७२. (९९) च. सू. ८. १९, १८; सु. चि. २४. ८९, ९२. (१००) च. सू. ८. १९; सु. चि. २४. ९१. (१०१) च. सू. ८. १९. (१०२) च. सू. ८. १९, १८; ५. ९९. सु. चि. २४. ९१. (१०३) च. सू. ५. ८१-८९, ९०-९२; सु. चि. २४. २५-३०. (१०४) च. सू. ७. ३१, ३२, ३५; ८. १८; सु. चि. २४. ३८, ३९, ४५-४८, ५०-५१. (१०५) च. सू. ७. ३३-३५; ८. १९; सु. चि. २४. ३८, ४९-५० (१०६) सु. चि. २४. ५१-५२. (१०७) च. सू. ८. १९; ५. ९३-९४; सु. चि. २४. ५७-६१, ९९. (१०८) च. सू. ८. १९; सु. चि. २४. ६२. (१०९) च. सू. ८. २०; सु. चि. २४. ९८. (११०) च. सू. ८. १७. (१११) च. सू. ८. १८, १९; ७. ५६-५८; सु. चि. २४. ८९. (११२) च. सू. ८. १९, २५, १८; सु. चि. २४. ९५, ९६, ९४. (११३) च. सू. ८. १९; ५. ९८; सु. चि. २४. ९२, ९६. (११४) च. सू. ८. १९, २५; सु. चि. २४. ९२.

## सूत्रस्थाने चतुर्थोऽध्यायः ।

टिप्पणी—(१२४) च. सू. ६. १; सु. सू. ६. १. (१२५) च. वि. ८. १२५-१२७; सु. सू. ६. ३. (१२६) च. सू. ६. ४-५;-वि. ८. १२५;-सि. ६. ४; ५; सु. सू. ६. ४ (१२७) च. सू. ६. ४;-वि. ८. १२५; सु. सू. ६. ५-७, १०-१५ (१२८) च. सू. ६. ५-६; सु. सू. ६. ७. (१२९) च. सू. ६. ५, ७; सु. सू. ६. ७. (१३०) च. सू. ६. ८; सु. सू. ६. ८. (१३१) सु. सू. ६. २३-२४; १६. (१३२) च. सू. ६. ९, १०; सु. उ. ६४. २१-२३. (१३३) च. सू. ६. ११-१८; सु. उ. ६४. २३-३१. (१३४) च. सू. ६. १९-२१; सु. उ. ६४. ३१;-सू. ६. २५; (१३५) च. सू. ६. २२; सु. सू. ६. २६-२९, १६. (१३६) च. सू. ६. २३-२६; सु. सू. ६४. ३२, ४०. (१३७) च. सू. ६. २७; सु. सू. ६. ३०-३१, १६. (१३८) च. सू. ६. २८-३२; सु. उ. ६४. ४०-४६. (१३९) सु. सू. ६. ३२-३५, १६. (१४०) च. सू. ६. ३३-४०; सु. उ. ६४. ४६-५४. (१४१) च. सू. ६. ४१; सु. सू. ६. ३६-३७; १६. (१४२) च. सू. ६. ४२-४८; सु. उ. ६४. १३-२१. (१४४) च. सू. ७. ३६, ३७. सु. चि. २४. ९७.

## सूत्रस्थाने पञ्चमोऽध्यायः ।

टिप्पणी—(१४७) च. सू. ७. १; सु. उ. ५५. १, ३. (१४८) च. सू. ७. ३-४; सु. उ. ५५. ४-५. (१४९) च. सू. ७. १२-१३; सु. सू. ५५. ७, ८, २०. (१५०) च. सू. ७. ८-९; सु. उ. ५५. ८-९. (१५१) च. सू. ७. ६, ७; सु. उ. ५५. १०. (१५२) च. सू. ७. ९; सु. उ. ५५. २१. (१५३) च. सू. ७. ७; सु. उ. ५५. ११-२७. (१५४) च. सू. ७. १८; सु. उ. ५५. १४, ३०-३१. (१५५) च. सू. ७. १६-१७; सु. उ. ५५. १३, २९. (१५६) च. सू. ७. २१; सु. उ. ५५. १६, ३४. (१५७) च. सू. ७. २०; सु. उ. ५५. १६, ३४. (१५८) च. सू. ७. २३; सु. उ. ५५. १७, ३५. (१६०) च. सू. ७. २४; सु. उ. ५५. १७, ३५. (१६१) च. सू. ७. १९; सु. उ. ५५. ११, २८. (१६२) च. सू. ७. २२; सु. उ. ५५. १२, २८. (१६३) च. सू. ७. १४, १५; सु. उ. ५५. १४, ३१, ३२. (१६४) च. सू. ७. १०-११; सु. उ. ५५. १५, ३२-३३. (१७०) च. सू. ७. ४८. *(१७२) च. सू. ७. ५१; २५. ४९. (१७३) च. सू. ७. ५३-५४-५५, ५०. (१७४) च. सू. ७. ४६,-शा. २. ४५; सु. सू. ६. ३९. (१७५) च. शा. २. ४६. (१७६) च. शा. २. ४७, ४३. (१७७) च. शा. २. ४७, ४१.

## सूत्रस्थाने षष्ठोऽध्यायः ।

### (जलवर्गः)

टिप्पणी—(१७८) च. सू. २७. १; सु. सू. ४५. १ (१७९) च. सू. २७. १९६-१९८; सु. सू. ४५. ३, २०, २५-२६; ४६; ४३३. (१८०) सु. सू. ४५. ७-८, २६. (१८१) च. सू. २७. २०१, २०२. (१८२) सु. सू. ४६. ४३३; ४५. २६. (१८३) च. सू. २७. १९८-२००; सु. सू. ४५. ४, ५, ६;-क. ३. २३. (१८४) सु. सू. ४५. ७. (१८५) सु. सू. ४५. ८, ३१-३६. (१८६) च. सू. २७. २०९-२११; सु. सू. ४५. २१-२२ (१८७) च. सू. २७. २११-२१२; सु. सू. ४५. २१. (१८८) च. सू. २७. २१३-२१६; सु. सू. ४५. ९-११, १४-१६, १२, १३. १७, १८, १९,-क. ३. ७-८. (१९०) च. सू. २५. ४०. (१९२) च. वि. ३. ४५. (१९४) च. चि. ३. १४३, १४४-वि. ३. ४४-४५; सु. सू. ४५. ३९-४०; ४६. ४३४. -उ. ३९. १०६. (१९५) सु. सू. ४६. ४३९-४४० (१९६) सु. सू. ४६. ४३७-४३८. (१९७) सु. सू. ४५. ३८-३९, २८-२९; ४६. ४३४.-उ. ३९. १०७-१०८. (१९८) सु. सू. ४५. ४०-४१; ४४-४५;-उ. ३९. १०८; (१९९) सु. सू. ४५. ४१-४२. (२००) सु. सू. ४५. २७, ४३-४४. (२०१) च. सू. २५. ३९.

* १६. २०-२१ (१७१) च. सू. १६. २२-२३.

( क्षीरवर्गः )

( २०२ ) च. सू. १. ७५, १०५–११३; सु. सू. ४५. ४७, ४८, ४९. ( २०३ ) च. सू. २७. २१७ --२१८; सु. सू. ४५. ५०–५१. ( २०४ ) च. सू. २७. २१९; (२०५) च. सू. २७. २२२; सु. सू. ४५. ५१–५३. ( २०६ ) च. सू. २७. २२०; सु. सू. ४५. ५३–५४. ( २०७ ) च. सू. २७. २२४; सु. सू. ४५. ५७–५८. ( २०८ ) च. सू. २७. २२३; सु. सू. ४५. ५४–५५. ( २०९ ) च. सू. २७. २२३; सु. सू. ४५. ५८–५९. (२१०) च. सू. २७. २२१; सु. सू. ४५. ५६–५७. (२११) सु. सू. ४५. ६१–६२–६३. (२१२) सु. सू. ४५. ५९–६० (२१३) च. सू. २७. २२५–२२८; ८. ६१-६२; सु. सू. ४५. ६५-८०(२१४) च. सू. २७. २२९; सु. सू. ४५. ८४–८९ (२१५) च. सू. २७. २२८; सु. सू. ४५. ८१–८३. (२१६) च. सू. २७. २३०; सु. सू. ४५. ९२. (२१७) सु. सू. ४५. ९३. ( २१८ ) च. सू. २७. २३१–२३४; १३.१३.१४. सु. सू. ४५.९६–१११. (२१९) सु. सू. ४५. १०६. (२२० ) च.सू.२७. २३४–२३६;सु. सू. ४५. ९०–९१. (२२१) सु. सू. ४५. ६७–७५, ९७–१०४.(२२२)च. सू. २५. ३८.३९; सु. सू. २०. ५; ४६. ३३६; चि.३१.४.

( इक्षुवर्गः )

( २२३ ) च. सू. २७. २३७; सु. सू. ४५. १४८. ( २२४ ) च. सू. २७. २३७; सु. सू. ४५. १५५-१५७. ( २२५ ) च. सू. २७. २३७; सु. सू. ४५. १५८.(२२६)च. सू. २७. २३८; सु. सू. ४५. १४९–१५४. (२२७) च. सू. २७.२३९; सु. सू.४५.१५९, १६९. (२२८) च. सू. २७. २३९; सु. सू. ४५. १६०. (२२९) च. सू. २७. २३८; सु. सू. ४५. १६०. ( २३० ) सु. सू. ४५. १६१. (२३१) च. सू. २७ २४०–२४२; सु. सू.४५. १६२--१६८. ( २३२ ) च. सू. २५. ३८, ३९; ( २३३ ) च. सू. २७. २४५; सु. सू. ४५. १३२. (२३४) च. सू. २७. २४६; सु. सू. ४५. १४४, १४३, १४५. (२३५) च. क. १. १५;सु.सू. ५. १४६. (२३६) च. सू. २७. २४७–२४८; सु. सू. ४५ १४७. (२३७) च. सू. २७. २४९; सु. सू. ४५.१४२.(२३८) च. सू. २७. २४३–२४४; सु. सू. ४५. १३३–१४०.

( तैलवर्गः )

( २३९ ) च. सू. २७. २८६–२८७; १३.१२; सु. सू. ४१. ११२, ११३. ( २४० ) च. सू. २७. २८८. ( २४१ ) च. सू. २७. २८९; १३. १२, १५; सु. सू. ४५. ११४;–चि. ३१. ५. ( २४२ ) च. सू. २७. २८९; सु. सू. ४५. ११५. (२४३) च. सू. २७. २९०; सु. सू. ४५. ११७. ( २४४ ) च. सू. २७. २९२–२९३; सु. सू. ४५. ११९, ११६. ( २४५) च. सू. १३–१०, ११; सु. सू. ४५. ११५. ( २४७ ) सु. सू. ४५. १२३;–चि. ३१. ५. ( २४८ ) सु. सू. ४५. १२२;–चि. ३१. ५. (२४९) सु. सू. ४५. १२०;–चि. ३१. ५. ( २५१ ) च. सू. १३. १२; सु. सू. ३१. ४; ४५. १३०. (२५२) च. सू. २७. २९५; सु. सू. ४५. १३१. (२५३) च. सू. २५. ३८, ३९. (२५४)च.सू. २५.३८, ३९.

( मद्यवर्गः )

(२५५)च.सू.२७.१७८,१९४, १९५;–चि. २४.३०–सु.३६, ३७–३८, ५९, ६०, ६१, ६७, ९८, ९९, ११४–११६. सु. सू. ४५. १७०, १७१, ( २५६ ) च.सू. २७. १९३: सु. सू. ४५. १९२–१९४. ( २५८ ) च. सू. २७. १७९; सु. सू. ४५. १७५–१७७. ( २६० ) च. सू. २७. १८१; सु. सू. ४५. १८०–१८१, १८२. ( २६१ ) च. सू. २७. १८६; सु. सू. ४५. १७९. ( २६२ ) च. सू. २७. १९०. ( २६३ ) च. सू. २७. १९०; सु. सू. ४५. १८० ( २६४ ) च. सू. २७. १८२; सु. सू. ४५. १९४–१९७. ( २६५ ) च. सू. २७. १८८, १८९; सु. सू. ४५. १७२–१७३. ( २६६ ) सु. सू. ४५. १७४–१७५. ( २६७ ) च. सू. २७. १८३; सु. सू. ४५. १८३. ( २६८ ) च. सू. २७. १८६; सु. सू. ४५. १८२. ( २६९ ) च. सू. २७. १८४–१८५; सु. सू. ४५. १८४–१८७. ( २७० ) च. सू. २७. १८८, १८७; सु. सू. ४५. १८८–१९०. (२७२)सु. सू. ४५. १९२. (२७३) सु. सू. ४५. २१०–२११ ( ७४ ) सु.सू. ४५. २१२. (२७५) च.सू. २७. २८४; सु. सू. ४५. १९२. ( २७६ )च. सू. २७.२८५; सु. सू. ४५. २११. ( २७७ ) च. सू. २७. १९२, १९१; सु. सू. ४५. २१४–२१६, २१३.

( मूत्रवर्गः )

(२७८) च.सू.१. ९२–९९, १०१, १०३, १००; सु.सू. ४५. २१७–२१९, २२०–२२१, २२८ ( २७९ ) च. सू. १. १००, १०२, १०४; सु. सू. ४५. २२३, २२५, २२६. ( २८० ) च. सू. १. १०४; सु. सू. ४५. २२७. ( २८२ ) ( २८३ ) सु. सु. ४५. २२८. ( २८४ ) सु. सू. ४५. २२९.

## सूत्रस्थाने सप्तमोऽध्यायः ।

( शूकधान्यवर्गः )

टिप्पणी -( २८५ ) च. सू. २७. १; सु. सू. ४६. १. ( २८६ ) च. सू. २७. ८, ९; सु. सू. ४६. ४.( २८७ ) च. सू. २७. १०; सु. सू. ४६. ५. ( २८८ ) च. सू. २७ ११; सु. सू. ४६. ६–७. ( २८९ ) च. सू. २७. १२ ( २९० ) च. सू. २७. १३; सु. सू. ४६. १०–११ (२९१) च. सू. २७. १४; सु. सू. ४६. ११–१२, १३ ( २९२ ) च. सू. २७. १५; ( २९३ ) च. सू. २७. १५ सु. सू. ४६. १३. ( २९४ ) च. सू. २७. १६–१८; सु. सू. ४६. २१–२२–२३. ( २९५ ) च. सू. २७. १६–१८; सु. सू. ४६. २३, २४, २५. ( २९६ ) च. सू. २७. १९–२०; सु. सू. ४६. २६, ४१–४२, ४३. ( २९७ ) च. सू. २७. २१–२२; सु. सू. ४६. २५. ४३, ४४.

( शिंबिधान्यवर्गः )

(२९८) सु.सू. ४६. २७, २८. ( २९९ ) च. सू. २७. २३; सु.सू.४६. २९. (३००) च. सू. २७. २७–२८, २९; सु. सू. ४६. ३०. ( ३०१ ) च. सू. २७. २५; सु. सू. ४६. ३५.

(३०२) च. सू. २७. २६; सु. सू. ४६. ३७-३८. (३०३) च. सू. २७. ३३; (३०४) च. सू. २७. २४; सु. सू. ४६. ३४, ३६. (३०५) च. सू. २७. ३४; सु. सू. ४६. ३६. (३०६) सु. सू. ४६, ४६-४७. (३०७) च. सू. २७. ३१; सु. सू. ४६. ४४-४५. (३०८) च. सू. २७. ३०; सु. सू. ४६. ३९-४०. (३०९) च. सू. २७. ३४; सु. सू. ४६. ४९. (३१०) सु. सू. ४६. ४८. (३११) च. सू. २५. ३९. (३१२) च. सू. २७. ३०९. ३१०; सु. सू. ४६. १६; १८.

(कृतान्नवर्गः)

(३१३) सु. सू. ४६. ३४५. (३१४) च. सू. २७. २५१-२५३. (३१५) च. सू. २७. २५०; सु. सू. ४६. ३४२. (३१६) च. सू. २७. २५१; सु. सू. ४६. ३४३. (३१७) च. सू. २७. २५७-२६०; सु. सू. ४६. ३४७, ३४८, ३४९. (३१८) च. सू. २७. २७६. (३१९) च. सू. २७. ३१२-३१४; सु. सू. ४६. ३५९-३६१. (३२०) सु. सू. ४६. ३६७. (३२१) सु. सू. ४६. ३६९, ३७२-३७३, ३७५. (३२२) च. सू. २७. ४. (३२३) सु. सू. ४६. ३७६, ३८१. (३२४) सु. सू. ४६. ३८०, ३६७-३७५. (३२५) सु. सू. ४६. ३७६, ३७७, ३८१. (३२६) सु. सू. ४६. ३७९. (३२७) च. सू. २७. २६२. (३२८) च. सू. २७. २६२; सु. सू. ४६. ३८०. (३२९) सु. सू. ४६. ३८१, ३८२, ४०४, ४०५. (३३०) च. सू. २७. २७२. (३३१) च. सू. २७. २८१; सु. सू. ४६. ३८३, ३६८. (३३२) सु. सू. ४६. ३८६. (३३३) च. सू. २७. २७८; सु. सू. ४६. ३८४. (३३४) च. सू. २७. २७९, २८०; सु. सू. ४६. ३८८-३९१. (३३५) सु. सू. ४६. ४१४. (३३६) सु. सू. ४६. ४१५. (३३७) च. सू. २७. २६६; सु. सू. ४६. ४१०. (३३८) च. सू. २७. २६३, २६४; २६७, २८२; सु. सू. ४६. ३९६, ४११, ४१२ (३३९) च. सू. ८. २०. (३४०) सु. सू. ४६. ३८६ (३४१) च. सू. २७. ४. (३४२) च. सू. २७. २६९; सु. सू. ४६. ३६५, ३६६, ४००. (३४३) च. सू. २७. २३८; सु. सू. ४६. ४००, ४०७, ४०८. (३४४) च. सू. २७. २७२; सु. सू. ४६. ४०८, ४०९.

(मांसवर्गः)

(३४५) च. सू. २७. ४५-४६; सु. सू. ४६. ५४. (३४६) च. सू. २७. ४७-४९; सु. सू. ४६. ५९. (३४७) च. सू. २७. ५०-५१; सु. सू. ४६. ६७. (३४८) च. सू. २७. ३७-३८; सु. सू. ४६. ७८. (३४९) च. सू. २७. ३५-३७; सु. सू. ४६. ७२, ७४, ८५. (३५०) च. सू. २७. ३९; सु. सू. ४६. ९४. (३५१) च. सू. २७. ४१-४४; सु. सू. ४६. १०५. (३५२) च. सू. २७. ४०-४१; सु. सू. ४६. १०८, १०९, ११३, ११८. (३५३) च. सू. २७. ५६; सु. सू. ४६. ५३. (३५४) च. सू. २७. ६३; सु. सू. ४६. ८७-८८. (३५५) च. सू. २७. ५३-५६; सु. सू. ४६. ५३. (३५६) च. सू. २७. ५९-६०; सु. सू. ४६. ६०, ६८, ५५. (३५७) च. सू. २७. ७७-७८; सु. सू. ४६. ५७, ५६.

(३५८) च. सू. २७. ७७-७८; सु. सू. ४६. ५७, ५५. (३५९) च. सू. २७. ७६-७७; सु. सू. ४६. ८०. (३६०) च. सू. २७. ६९-७०; सु. सू. ४६. ६०. (३६१) च. सू. २७. ६८-६९; सु. सू. ४६. ६२. (३६२) च. सू. २७. ७२-७४; सु. सू. ४६. ७०. (३६३) च. सू. २७. ६१, ५६-५७; सु. सू. ४६. ५९-६०. (३६४) च. सू. २७. ६७-६८; सु. सू. ४६. ६१. (३६५) च. सू. २७. ६४-६५; सु. सू. ४६. ६४-६५. (३६६) च. सू. २७. ६६-६७; सु. सू. ४६. ६५-६६. (३६७) च. सू. २७. ५७, ५९-६१, ४९, ४७; सु. सू. ४६. ६३-६४. (३६८) च. सू. २७. ७३. ७४; सु. सू. ४६. ६९. (३६९) च. सू. २७. ५६-५८; सु. सू. ४६. ७८, ७२-७४, ११२-१२५. (३७०) च. सू. २७. ५९-६०; सु. सू. ४६. ९४, ९५. (३७१) च. सू. २७. ५८-५९; सु. सू. ४६. ७२-७७. (३७२) च. सू. २७. ७१-७२; सु. सू. ४६. ८१. (३७३) सु. क. ७. ३-७. (३७४) च. सू. २९. ७९-८०; सु. सू. ४६. ८९. (३७५) च. सू. २७. ७५-७६; सु. सू. ४६. ७१. (३७६) च. सू. २७. ८०-८१; सु. सू. ४६. ९८. (३७७) च. सू. २७. ७८-७९; सु. सू. ४६. १०२. (३७८) च. सू. २७. ६५-६६; सु. सू. ४६. १०७. (३७९) च. सू. २७. ८१-८२; सु. सू. ४६. ११४, ११९. (३८०) च. सू. २७. ८२-८३; सु. सू. ४६. ११५ (३८१) च. सू. २५. ३९; सु. सू. २०. १३. (३८२) च. सू. २७. ५७; सु. सू. ४६. १११ (३८३) च. सू. २७. ६१-६२; सु. सू. ४६. ८७, ८६. (३८४) च. सू. २७. ६२-६३; सु. सू. ४६. ८८, ८६. (३८५) च. सू. २७. ३११; सु. सू. ४६. १२६-१२८. (३८६) च. सू. २७. ३१२; सु. सू. ४६. १२६, १३७. (३८७) च. सू. २५. ३८, ५५; सु. सू. ४६. ३३३; २०. ५. (३८८) च. सू. २५. ३८. (३८९) च. सू. २५. ३९. (३९०) च. सू. २७. ८५, ८७ (३९१) च. सू. २७. ३३८, ३३४, ३३५; सु. सू. ४६, १३२, १२९, १३०, १३१ (३९२) च. सू. २७-३३७; सु. सू. ४६-१३०

(शाकवर्गः)

(३९४) च. सू. २७. ८८, ९०, ९१ (३९५) च. सू. २७. ८८, ८९; सु. सू. ४६. २६२, २६५ (३९६) च. सू. २७. ९०-९१; सु. सू. ४६. २७६. (३९७) च. सू. २७. ८८; सु. सू. ४६. २६० (३९८) च. सू. २७. ८९-९०; सु. सू. ४६. २६६. (३९९) च. सू. २७. ९२-९३; सु. सू. ४६, २७३ (४००) च. सू. २७. ९५-९८; सु. सू. ४६. २६२, २६३ (४०१) च. सू. २७. सु. सू. ४६. २६८ (४०२) सु. सू. ४६. २६७ (४०३) च. चि. ४. ८८; सु. सू. ४६. २७० (४०४) सु. सू. ४६. २६९ (४०५) च. सू. २७. ९७, ९८; सु. सू. ४६. २६९ (४०६) सु. सू. ४६. १९४, २८३ (४०७) च. सू. २७. ९६, ९८; सु. सू. ४६. २६५, २६२ (४०८) च. सू. २७. १०४, १०६; सु. सू. ४६. २४९, २५० (४०९) च. सू. २७. १०७; सु. सू.

४६. २५२ ( ४१० ) च. सू. २७. १०७; सु. सू. ४६. ३०१, ३०२ ( ४११ ) च. सू. २७. ९४, ९५; सु. सू. ४६. २५८ ( ४१२ ) च. सू. २७. ११९, १२० ( ४१३ ) च. सू. २७. १००; सु. सू. ४६. २६१ ( ४१४ ) च. सू. २७. ९३, ९४; सु. सू. ४६. २५९ ( ४१५ ) च. सू. २७. १००; सु. सू. ४६. २५१ ( ४१६ ) च. सू. २७. १००, सु. सू. ४६. २६१ ( ४१७ ) च. सू. २७. १२०, १२१; सु. सू. ४६, ३०० ( ४१८ ) च. सू. २७. १०७, १०८; सु. सू. ४६. २५२ ( ४१९ ) च. सू. २७. १०७, १०८ (४२०) च. सू. २७. ११२, ११३, ११०; सु. सू. ४६. २११, २१६, २१२, २१७ ( ४२१ ) सु. सू. ४६. २१३ ( ४२२ ) च. सू. २७. १११; सु. सू. ४६. २१८ ( ४२३ ) च. सू. २७. ११२; सु. सू. ४६. २१५ ( ४२४ ) च. सू. २७. ११२; सु. सू. ४६. २१८, २१४, २१९ ( ४२५ ) सु. सू. ४६. २१८ ( ४२६ ) च. सू. २७. ११३; सु. सू. ४६. २२० ( ४२७ ) च. सू. २७. ११४, ११५; सु. सू. ४६. २९८, २९९ ( ४२८ ) च. सू. २७. ९९–१०२; सु. सू. ४६. २७४, २७५, २५६, २५७ ( ४२९ ) च. सू. २७. ९८; सु. सू. ४६. २६०, २६१. ( ४३० ) सु. सू. ४६. २५४, २५५. ( ४३१ ) सु. सू. ४६. २३९, २७२ ( ४३२ ) सु. सू. ४६. २७८ ( ४३३ ) च. सू. २७. १०८; सु. सू. ४६. २६२ ( ४३४ ) च. सू. २७. १०९; सु. सू. ४६. २७० ( ४३५ ) च. सू. २७. १०९; सु. सू. ४६. २५४–२५५ ( ४३६ ) सु. सू. ४६. ३०५. २९०, २९२ ( ४३७ ) च. सू. २७. १०७; सु. सू. ४६. २५४, २५५ (४३८) च. सू. २७. १०६; सु. सू. ४६. २७० ( ४३९ ) च. सू. २७. १०६, १७१ ( ४४० ) च. सू. २७. १००; सु. सू. ४६. २७४ ( ४४१ ) सु. सू. ४६. ३३६ ( ४४२ ) च. सू. २७. ११०; सु. सू. ४६. २७२ ( ४४३ ) च. सू. २७. १२२; सु. सू. ४६. २३८ ( ४४४ ) च. सू. २७. १६८; सु. सू. ४६. २४० ( ४४५ ) च. सू. २७. १६८; सु. सू. ४६. २४१ ( ४४६ ) च. सू. २७. १६८; सु. सू. ४६. २४१ ( ४४७ ) च. सू. २७. १६८; सु. सू. ४६. २४२ ( ४४८ ) च. सू. २५. ३९; सु. सू. ४६. २४१ ( ४४९ ) च. सू. २७. १२३; सु. सू. ४६. ३०४ ( ४५० ) च. सू. २७. १६६–१७७; सु. सू. ४६. २२१, २२२ ( ४५१ ) च. सू. २७. १६९; सु. सू. ४६. २३४. ( ४५२ ) च. सू. २७. १७३; सु. सू. ४६. २३४ ( ४५३ ) च. सू. २७. १७३; सु. सू. ४६. २३०, २३१ ( ४५४ ) च. सू. २७. १७२ ( ४५५ ) च. सू. २५. ४६; ४. ९ ( ६. ); सु. सू. ४६. २३९ ( ४५६ ) च. सू. २७. १७६; सु. सू. ४६. २४४, २४५ ( ४५७ ) च. सू. २७. १७५; सु. सू. ४६. २४६ ( ४५८ ) सु. सू. ४६. ३०६, ३०७ ( ४५९ ) च. सू. २७. १२३; सु. सू. ४६. २९३ ( ४६० ) सु. सू. ४६. २४३, २९६; ( ४६१ ) च. सू. २५. ३८. ३९

## ( फलवर्गः )

( ४६२ ) च. सू. २७. १२५, १२६; सु. सू. ४६. १८३, १८४ ( ४६३ ) च. सू. २७. १५१; सु. सू. ४६. १४२ ( ४६४ ) च. सू. २७. १५०; सु. सू. ४६. १४: ( ४६५ ) च. सू. २७. १४९; सु. सू. ४६. १४१ ( ४६६ च. सू. २७. १४३, १२७, १३०, १३२, १२९, १३५ १२८, १४१, १५९, १५७, १५८; सु. सू. ४६. १७७ १८२, १६३, १३९, १८७ ( ४६७ ) च. सू. २७. १३० सु. सू. ४६. १८० ( ४६८ ) च. सू. २७. १४३, १४४ सु. सू. ४६. १८१ ( ४६९ ) च. सू. २७. १४३, १४४ सु. सू. ४६. १६६ ( ४७० ) च. सू. २७. १३१, १३५. सु. सू. ४६. १७९ (४७१) च. सू. २७. १२८; सु. सू. ३४ ४; ४६. १८५ ( ४७२ ) च. सू. २७. १४१; सु. सू. ४६. १४५–१४६ ( ४७३ ) च. सू. २७. १५७; सु. सू. ४६. १४५ ( ४७४ ) च. सू. २७. १४१; सु. सू. ४६. १८७–१८८ ( ४७५ ) च. सू. २७. १५८, १५७; सु. सू. ४६. १५६ ( ४७६ ) सु. सू. ४६. २०५ ( ४७७ ) सु. सू. ४६. २०६ ( ४७८ ) च. सू. २७. १४७, १३६, १४२, १३१, १४०, १६४; सु. सू. ४६. १६३, १६४ (४७९) च. सू. २७. १३६–१३७; सु. सू. ४६. १४७–१४८ ( ४८० ) च. सू. २७. १४२; सु. सू. ४६, १४७ ( ४८१ ) च. सू. २७. १३१; सु. सू. ४६. १५७ ( ४८२ ) च. सू. २७. १४०; सु. सू. ४६. १६६. ( ४८३ ) च. सू. २७. १६४; सु. सू. ४६. १६५ ( ४८४ ) च. सू. २७. १४८; सु. सू. ४६. २०० (४८५) च. सू. २७. १३९; सु. सू. ४६. १५२–१५३;–का. ३. १६ (४८६) च. सू. २७. १३९; सु. सू. ४६. १५४ ( ४८८ ) च. सू. २७. १४४, १४५; सु. सू. ४६. १८९;–का. ३. १७ ( ४८९ ) च. सू. २७. १३८; सु. सू. ४६. १७४ ( ४९० ) च. सू. २७. १५१ ( ४९१ ) सु. सू. ४६. १५९, १६० ( ४९२ ) च. सू. २७. १६०; सु. सू. ४६. १९७, १९८ ( ४९३ ) च. सू. २७. १६०; सु. सू. ४६. १९३ ( ४९४ ) च. सू. २७. १४५–१४६; सु. सू. ४६. २०७ ( ४९५ ) च. सू. २७. १४५–१४६; सु. सू. ४६. १५८ ( ४९६ ) च. सू. २७. १५३–१५४; सु. सू. ४६. १४९–१५२ ( ४९७ ) च. सू. २७. १६५; सु. सू. ४६. १९६ ( ४९८ ) च. सू. २७. १३४; सु. सू. ४६. १५८( ४९९ ) च. सू. २७. १३२ ( ५०० ) च. सू. २७. १३२, १६१; सु. सू. ४६. १७२ ( ५०१ ) च. सू. २७. १३२, १६१, १३५, १५६; सु. सू. ४६. १५५, १४५, १६२ ( ५०२ ) च. सू. २७. १६१; सु. सू. ४६. १३९, १४० ( ५०३ ) च. सू. २७. १५२; सु. सू. ४६. १६०, १९७. ( ५०४ ) च. सू. २५. ३९; सु. सू. ४६. १५५ ( ५०५ ) च. सू. २७. ३१६, ३१७;–चि. १. पा. १. ३८–४०; सु. सू. ४६. ३१२.

## ( मात्रादिवर्गः )

( ५०६ ) च. सू. २७. ३२९–३३० ( ५०७ ) च. सू. २५. ३१–३५ ( ५०८ ) च. चि. २४. १०९; १०

पा. ३.२५–वि. २.७;–सू. २६.८४. (५०९) च. चि. २४. ११४;–नि. २. ४;–चि.. ७. ८३; ७. ७, १११–११६; १५.-२२५, २२८, म. भा. आदिप. १२८. ५७; च. सू. २७. २६३; सु. सू. ४४. ६८; ४६. ३८६. (५१० ) च. चि. २३. २५२. २५३ (५११ ) च. सू. २७. ३३९ (५१२ ) च. सू. २७. २७३; ५..५; २५. ३८. (५१३ ) च. सू. ५. ५; २७, २१ (५१४ ) च. सू. २७. ३३९; १५, २६०; सु. सू. ४६. २८, २९; ४५. ८९. (५१५) सु. सू. ४६. ३८८ (५१६ ) च. सू. २७. २७८; सु. सू. ४६. ३८४ (५१७ ) च. सू. २७. २२९; च. चि. १२. ५, २० (५१८ ) च. सू. २७. ३३०; सु. सू. ४६. ९२ (५१९) च. सू. २६. ८४; २७. १६८, २४६; सु. सू. ४६. ४०६, ४०७;; ४५. १३२, १४४ (५२० ) च. चि. १ पा. ३.४३ (५२१ ) च. चि. ३०. ३२४; ३. १७४. (५२२ ) च. सू. २७. २८७;सु. सू. ४६. ४०, ३७६; ४५. ११२; (५२३ ) च. सू. २७. ४; २२९, २३०; सु. सू. ४५. ८४, ९२ (५२४ ) च. चि. ३०. ३१५–३१९ (५२५ ) च. चि. ३०. ३१९–३२०, ३१५. (५२६ ) च. चि. ३०. ३२० (५२७ ) च. सू. १. १११; सु. सू. ४५. ४९ (५२९ ) च. सू. २७. २१७, २१८,–चि. २३. २४; सु. सू. ४५. ४९,–क. २.१९, २०. (५३० ) च. सि. २. ८; सु. चि. ३३. १४ (५३१ ) सु. सू. ४५. ८४, ८७ (५३२ ) च. सू. २७. ६४, ६५; सु. सू. ४६. ६४, ६५. (५३४ ) च. सू. २६. ५०; २७. २२८ (५३६ ) च. सू.६. २८; २१. ४३, ४४ (५३७ ) च. सू. १७. ११४–शा. १. ११० (५३८ )च. सू. ६, ८, ६. ७. (५३९ ) च. सू. २७. ८९; २६. ८४ (५४० ) च. सू. २७. १६८; २५. ३९ (५४१ ) च. चि. ३०. ३०२ (५४२ ) च. सि. २. ८,– १४,–चि. ५. २९; २०. ३४; २६. ९६; १४. १३७. ७. ४६. (५४३ ) च. चि. ३. ३३, ४२; ५. ४,–नि. ४. ११ सू. १०.११ (५४४ ) च. चि. २६,–३६. (५४५) च. चि. २६. २३६; सु. उ. २४. ३८–४१ (५४८ ) च. चि. ६. १९, २३;–सू. २७. २६३. (५४९ ) च. सू. ६. ३६ (५५० ) च. चि. २४. १०९, ११० (५५१ ) च. चि. २३. १७ (५५३ ) च. चि. ३. २८, २९; सु. उ. ३९. २५, २६ (५५५ ) सु. उ. ४६. ५०२. (५५६ ) च. सू. २१. ५,–चि. १४. ९,–सु. नि. २. २५, २६ (५५८ ) च. चि .२३. १४०, १४२; सु. क. ८. ३. (५६० ) सु. क. ३. २८ (५६१ ) च. चि. ३०. ३२५ (५६३ ) च. चि. ३०. २२९; सु. सू. १९. १६, १७.

## सूत्रस्थाने अष्टमोऽध्यायः

(५६६ ) च. चि. २३. १०५; सु. क. १. १ (५६७ ) च. चि. २३. १०६; सु. क. १. ४–६ (५६८ ) च. सू. २९.७–चि.१. पा.४. ५१; सु. क. १. ८–११ (५६९) सु. क. १. ६–७(५७१) च. सू. २४. [illegible] सु. क. १. १२–१७ ([illegible]) च. चि. २३.७७–८१; सु. क. ६. ३, ४(५७४) च. [illegible] २३. ११० (५७६) च. चि. २३. ११०, १११; सु. क. १. ४४, ४५. (५७७ ) सु. क. १. ४७. (५७८ ) सु. क. १. ४६. (५७९ ) च. चि. २३. १२०; सु. क. १. ६५ (५८० ) सु. क. १. ५५, ५६ (५८१ ) सु. क. १. ७४ (५८२ ) च. चि. २३. १०७; सु. क. १.१८–२३ (५८३ ) च. चि. २३. १०८; सु. क. १. २३–२४. (५८४ ) च. चि. २३. १०९; सु. क. १. २९ (५८५ ) च. चि. २३. १०९; सु. क. १. ३० (५८६ ) सु. क. १. ३५ (५८७) च. चि. २३. ११०; सु. क. १. ३०–३४ (५८८ ) सु. क. १. ३४–३६ (५८९ ) च. चि. २३. ११२; सु. क. १. ३७ (५९० ) च. चि. २३. ११३; सु. क. १. ३८, ३९ (५९१ ) च. चि. २३. ११४; सु. क. १. ४०. (५९२ ) च. चि. २३. १२२; सु. क. १. ४१–४३ (५९६ ) च. चि. २३..११५; सु. क. १. ४२ (५९७ ) सु. क. १. ४३, २. ५१, ५२ (५९८ ) च. चि. २३. ११६; सु. क. १. ४८. (५९९ ) च. चि. २३. १२२; सु. क. १. ४९, ५० (६०० ) सु. क. १. ५१, ४८–५० (६०१ ) च. चि. २३: ११७; सु. क. १. ६९ (६०२ ) सु. क. १. ७०–७२. (६०३ ) च. चि. २३. १२०; सु. क. १. ६३, ६४. (६०४ ) सु. क. १. ६४, ६५. (६०५ ) च. चि. २३. ११८; सु. क. १. ५१, ५२. (६०६ ) च. चि. २३. १२२; सु. क. १. ५३, ५४ (६०७ ) च. चि. २३. ११९; सु. क. १. ५५, ५१–५४ (६०८ ) च. चि. २३. १२२ (६०९ ) च. चि. २३. १२२; सु. क. १. ७३. (६११) च. चि. २३. १२२ (६१३ ) च. चि. २३. ११६. (६१४) च. चि. २३. १२२; सु. क. १. ५७, ५८. (६१५ ) च. चि. २३. ११६ (६१६ ) सु. क. १. ६७ (६१७ ) सु. क. १. ६८ (६१८) सु. क. १. ६० (६१९ ) सु. क. १. ६१ (६२० ) सु. क. १. ६६ (६२१ ) सु. क. १. ६६; ३५ (६२२ ) सु. क. १. १६. १७. (६२३ ) सु. क. १. ७८, ७९(६२४ ) सु. सू. ३६. १६. (६२५ ) सु. क. १. १२, १३. (६२६ ) सु. क. १. १४–१६. (६२७ ) सु. क. १. १६, ८–११ (६२८ ) सु. क. १. १४, १५. (६२९ ) सु. क. १. १७– १८,–सू. ३४.१८ (६३० ) सु सू. ३४. ७, ३, ४ (६३१ ) च. चि. २३. १२१; सु. सू. ३४. ५,–क. ३. ६ (६३२ ) सु. क. ३. १०. (६३३ ) सु. क. १. ६२; ३. ११ (६३४) सु. क. ३. १२ (६३५ ) सु. क. ३. ७, ८ (६३६ ) सु. क. १. ३८–४० (६३७ ) सु. क. ३, १२, ९, १० (६३८) सु. क. ३. १६, १२, १७ (६३९) च. चि. २३. १२०; सु. क. १.६५; ३. १२ (६४०) सु. क. १. ६ (६४१) सु. क. १. ६ (६४२)च. चि. २३. १०८ (६६१ ) सु. क. १. ७८, ७९. (६६२)सु. क. ३. ३. ४.(६६४)च. चि. २३. १००; सु. क. ५. ६८–७३. (६६५ ) च. चि.२३. ९८; सु. क. ८. ७२, ७३. (६७२ ) च. चि. २३. ५४–६०; सु. क. ५. ७३– ७५. (६७४ ) च. चि. २३. २४२–२४९; सु. क. १. ७९- ८१; २. ४७–४९; ६. १२, १३ (६७५ ) सु. क. १. ८२- ८४ (६७६ ) सु. क. ३. ३५, ३६ (६७७ ) च. चि. २३. २३९, २४०

## सूत्रस्थाने नवमोऽध्यायः ।

( ६८६ ) च. सू. २६. ८०, ८१; सु. सू. २०. ८, १३. ( ६८७ ) च. सू. २६. ८१; सु. सू. २०. ८. ( ६८८ ) च. सू. २६. ८२; सु. सू. २०. १३ ( ६८९ ) च. सू. २६. ८३; सु. सू. २०. १३. ( ६९० ) च. सू. २६. ८४; सु. सू. २०. १३, ८. ( ६९१ ) च. सू. २६.८४; सु. सू. २०. १३ ( ६९२ ) च. सू. २६. ८४; सु. सू. २०. १३ (६९३) च. सू. २६.८४; सु. सू. २०. १४ ( ६९४ ) सु. सू. २०. १३ ( ६९५ ) सु. सू. २०. १३ ( ६९६ ) सु. सू. २०. १३ ( ६९७ ) सु. सू. २०. १३. ( ६९८ ) सु. सू. २०. १३. ( ६९९ ) सु. सू. २०. ८ ( ७०० ) सु. सू. २०. १३. ( ७०२ ) च. सू. २६. ८४; सु. सू. २०. १४ ( ७०४ ) च. सू. २६. ८४; सु. सू. २०. १३. (७०५) च. सू. २६. ८४; सु. सू. २०. १३. ( ७०६ ) च. सू. २६. ८४; सु. सू. २०. १३ ( ७०७ ) च. सू. २६. ८४. सु. सू. २०. १३. ( ७०८ ) च. सू. २६. ८४; सु. सू. २०. १४. ( ७०९ ) सु. सू. २०. १४. ( ७१० ) च. सू. २६. ८४; सु. सू. २०. १३, १४; ४६. ४२२, ४२४.( ७११ ) च. सू. २६. ८४ ( ७१२ ) च. सू. २६. ८४; सु. सू. २०. १४ ( ७१३ ) सु. सू. २०. १३ ( ७१४ ) सु. सू. २०. १५ ( ७१५ ) सु. सू. २०. १५. ( ७१६ ) च. सू. २६. ८४ ( ७१७ ) च. सू. २६. ८४ ( ७१८ ) च. सू. २६. ८४ ( ७१९ ) च. सू. २६. ८४ ( ७२० ) च. सू. २६. ८४; सु. सू. २०. १४, १३ ( ७२१ ) च. सू. २६. ८४; सु. सू. २०. १४ ( ७२२ ) च. सू. २६. ८४ (७२३) च. सू. २६. ८४ ( ७२४ ) सु. सू. २०. १७ ( ७२९ ) च. सू. २६. ८५; सु. सू. २०. २० ( ७३१ ) च. सू. २६. ८६–१०१; सु. सू. २०. १८. ( ७३३ ) च. सू. २६, १०२, १०३; सु. सू. २०. १९. ( ७३४ ) च. सू. २६. १०४, १०५; सु. सू. २०. २१. ( ७३५ ) च. सू. २६. १०६; सु. सू. २०. २२. ( ७३६ ) च. सू. १. ६२, ५९–६१ ( ७३७ ) च. सू. ७. ३६, ३७ ( ७३८ ) च. सू. ७. ३८ ( ७३९ ) च. सू. ११. ३५. ( ७४० ) सु. शा. ४. ३४, ३५. ( ७४१ ) च. सू. २१. ३५; सु. शा. ४. ३३, ३५, ५६. ( ७४२) च. इं. ५. ४१–४३ ( ७४३ ) च. सू. २१. ३६ ( ७४४ ) च. सू. २१. ३७ ( ७४५ ) च. सू. २१. ३८. ( ७४६ ) च. सू. २१. ५० ( ७४७ ) च. सू. २१. ४३; सु. शा. ४. ३८. ( ७४८ ) च. सू. २१. ४४; सु. शा. ४. ३८, ३९. (७४९) च. सू. २१. ३९–४२; सु. शा. ४. ३८ (७५०) च. सू.२१. ४५(७५१) च. सू. २१. ४५; सु. शा. ४. ४८. (७५२) च. सू. २१. ४६–४८ (७५३) सु. शा. ४. ५२; ५५, ( ७५४ ) च. सू. २१. ५५, ५६; सु. शा. ४. ४७. ( ७५५ ) च. सू. २१. ५७; सु. शा. ४. ४२ ( ७५७ ) च. चि.३. ९६, १०५; सु. उ. ३९. ३५ ( ७५९ ) सु. शा. ४. ३९, ४० (७६०) उ. सू. ४६. ५०२. (७६१) च. सू. २१. ५२–५४; सु. शा. ४. ४३–६४. (७६२) (७६३) सु. शा. ४. ४३–४६ ( ७६४ ) च. सू. २१. ५८, ५९; सु. शा. ४. ३३, ५६ ( ७६५ ) च. सू. ८. २२,–चि. २-३; सु. शा. २. ३–५; चि. २४. ११०–१३२ ( ७६६ ) सु. चि. २४. १२३, ११४, १२१, १२६. ( ७६८ ) सु. चि. २४. १२०. ( ७६९ ) सु. चि. २४. १३० ( ७७० ) सु. चि. २४. ११० ( ७७२ ) सु. चि. २४. १३०–१३२ ( ७७३ ) सु. चि. २४. ११३, ११४ ( ७७४ ) च. चि. २ पा. ४.३८; सु. शा. ४. १३२ ( ७७५ ) च. चि. २ पा. ४. ३७, ३८ ( ७७६ ) सु. चि. २४. १२२, १२८. ( ७७७ ) सु. चि. २४. १२८–१२९ ( ७७९ ) च. चि. २. पा. ४. ४० ( ७८० ) च. चि. २ पा. ४. ४१ ( ७८१ ) च. चि. २ पा. ४. ४२ ( (७८३ ) च. सू. २८. ४०, ४? ( ७८४ ) च. शा. १. १०२–१०९, ११८–१२६, ९८,–नि. ७. २४, २५–सू. २८. ७ ( ७८५ ) च. सू. २८. ७ (७८६) च. सू. २८. ७. ( ७८७ ) च. वि. ३. ७ ( ७८९ ) च. वि. ३. ५-६ ( ७९३ ) च. वि. ३. ७ ( ७९४ ) च. वि. ३. ९. ( ७९५ ) च. वि. ३. १०. ( ७९६ ) च. वि. ३. १३–१६. ( ७९७ ) च. वि. ३. १७, २२, ४; सु. सू. ६. १९, २०, २१ ( ७९८ ) च. वि. ३. २३–३३; सु. सू. ६. १७–१९. ( ७९९ ) च वि. ३. ३४. ( ८०० ) च. वि. ३. ३५, ३६. ( ८०१ ) च. वि. ३. ३६ ( ८०२ ) च. वि. ३. ३७, ३८ ( ८०३ ) च. वि. ३. ३८, ३९ ( ८०४ ) च. वि. ३. ३९ ( ८०५ ) च. वि. ३. ४०. ४१. ( ८०६ ) ३. ४३; सु. सू. ३४, ७ (८०७) सु.सू. ३४.६. ( ८१३ ) च. वि. ३. ४१ (८१४) * ( ८१५ ) च. वि. ३. ४१ ( ८१६ ) च. सू. ११. ५४, –चि. १ पा. ४. ३०–३५. अ. १.२.–सु. चि. २७–३०. ( ८१७ ) च. वि. ३. ४१ ( ८१८ ) च. वि. ३. ४१ ( ८१९ ) च. सू. २५. ४०. ( ८२१ ) च. सू. २४. ४४ ( ८२४ ) च. वि. ३. ४१ ( ८२५ ) च. शा. ६. २८. ( ८२६ ) च. शा. ६. २८. ( ८२७ ) च. वि. ३. ४३,–शा. ६. २८. ( ८२९ ) च. नि. ६. ७ ( ८३० ) च. सू. ६. १०३ ( ८३१ ) च. सू. २८. ४१ ( ८३२ ) च. सू. ७. २७ ( ८३४ ) च. सू. २८. ४३ ( ८३५ ) च. सू. २८. ४. ( ८४० ) च. सू. २७. १. ( ८४१ ) च. सू. २७. ३.

## सूत्रस्थाने दशमोऽध्यायः

( ८४२ ) च. वि. १. २४; सू. २६. ३२, ३४; ( ८४३ ) च. वि. १. २५;–सू. ५. ५. (८४५) च. वि. १. २७. (८४६) च. वि. १. २६ ( ८४७ ) च. वि. १. २८. ( ८४८ ) च. वि. १. २९ ( ८४९ ) च. वि. १. ३०; ८. १२५–१२८. ( ८५० ) च. वि. १. ३९ ( ८५१ ) च. वि. १.–३९

* शस्त्रघाताद्यैरिति–अत्रादिशब्देन जलाग्निविषराजकुलस्त्र्यादयो गृह्यन्ते । तथा चोक्तम्–'जलमग्निर्विषं शस्त्रं स्त्रियो राजकुलानि च । अकालमृत्यवो ह्येते तेभ्यो बिभ्यति पण्डिताः ॥ डल्हणः ( सु. सू. ३४. ६ )

(८५२) च. वि. १. ३९; सु. उ. ६४. ८४; –सू. ४६. ४६४–४६७ (८५३) सु. सू. ४६. ४७२. (८५४) च. वि. १. ३२; –सू. ८. २०; सु. सू. ४६. ४७५, ४७६. (८५५) च. सू. ८. २०. (८५६) च. सू. ८. २०. (८५७) च. वि. १. ३५. (८५८) च. वि. १. ३७. (८५९) च. वि. १. ३७. (८६०) च. वि. १. ३८. (८६१) च. वि. १. ३६. (८६२) च. वि. १. ४३. (८६३) च. वि. १. ४२. (८६४) च. वि. १. ४५. (८६५) च. वि. १. २३;–सू. ६. ४९; ११. ३८. (८६६) च. सू. ६. ५०;–शा. ६. ८. (८६७) च. वि. १. २३. (८६८) च. सू. ७. ३६,३७ (८६९) च. सू. २५. ३३. (८७०) च. सू. ५. १३. (८७१) च. चि. १५. २३७; सु. सू. ४६. ५०८. (८७२) च. चि. १५. २३५; सु. सू. ४६. ५०७. (८७३) च. चि. १५. २३६; सु. सू. ४६. ५०८. (८७५) च. चि. १५. २३६; सु. सू. ४६. ४७२, ४७३. (८७६) सु. सू. ४६. ४४८. (८७७) सु. सू. ४६. ४४९. (८७८) सु. सू. ४६. ४५० (८७९) सु. सू. ४६. ४५२ (८८०) सु. सू. ४६. ४४८. (८८१) सु. सू. ४६. ४५१, ४५२. (८८२) (८८३) सु. सू. ४६. ४५४. (८८४) सु. सू. ४६. ४५५. (८८५) सु. सू. ४६. ४५६. (८८६) सु. सू. ४६. ४५९ (८८७) सु. सू. ४६. ४५९. (८८८) सु. सू. ४६. ४५९. (८९०) सु. सू. ४६. ४३३. (८९१) सु. सू. ४६. ४३४ (८९२) सु. सू. ४६. ४२३, ४२४, (८९४) च. सू. २७. ३२२; सु. सू. ४६. ४२७. (८९५) च. सू. २७. ३२१; सु. सू. ४६. ४२५. (८९६) च. सू. २७. ३२१; सु. सू. ४६. ४२९. (८९७) च. सू. २७. ३२१; सु. सू. ४६. ४२९. (८९८) च. सू. २७. ३२१. सु. सू. ४६. ४२९ (८९९) सु. सू. ४६. ४२४, ४२६. (९००) सु. सू. ४६. ४२६. (९०१) च. सू. २७. ३२४; सु. सू. ४६. ४२६. (९०२) सु. सू. ४६. ४२७. (९०३) सु. सू. ४६. ४३२. (९०४) सु. सू. ४६. ४३२. (९०५) सु. सू. ४६. ४३२, ४३०. (९०६) सु. सू. ४६. ४३२. (९०७) सु. सू. ४६. ४३२. (९०८) सु. सू. ४६. ४३२. (९०९) सु. सू. ४६. ४२८. (९१०) च. सू. २७. ३२४; सु. सू. ४६. ४२६. (९११) च. सू. २७. ३१९. (९१२) च. सू. २७. ३२५; सु. सू. ४६. ४३४–४३६. (९१३) च. सू. २७. ३२७; सु. सू. ४६. ४३९, (९१४) सु. सू. २७. ३२८; सु. सू. ४६. ४४०, ४४१. (९१५) सु. सू. ४६. ४४०. (९१६) सु. सू. ४६. ४३९ ४४०. (९१७) सु. सू. ४६. ४८२–४८६. (९१८) सु. सू. ४६. ४८९. (९१९) सु. सू. ४६. ४८९. (९२०) च. शा. ६. १४. (९२१) च. शा. ६. १५. (९२३) च. शा. ६. १६. (९२४) च. शा. ६. १६. (९२५) च. सू. २७. २७३. (९२७) च. सू. ५. १०, ११. (९२८) च. सू. ५. १२, १३; २८. ३४ (९२९) च. सू. २६. ८१. (९२९ अ.) च. शा. १ ९३,–सू. १६. २७८ (९३०) च. वि. २. ३. (९३२) सु. सू. ४६. ५१५ (९३९) च. सू. २६. ४२. (१). (९४०) च.सू. २६. ४२. (३). (९४१) च. सू. २६. ४२. (२)

## सूत्रस्थाने एकादशोऽध्यायः।

(९४३) च. सू. ५. २. (९४४) च. सू. ५. ३. (९४५) च. सू. ५. ३. (९४६) च. वि. २. ६; सु. सू. ४६. ४६४. (९४७) च. सू. ५. ७; २७. ३४१. (९४८) च. सू. ५. ७; २७. ३४१. (९४९) च. सू. ५.६; सु. सू. ४०. १०. (९५०) च. सू. ५. ६. सु. सू. ४०. १०. (९५१) च. वि. २. ७. (९५२) च. वि. २. ७ (९५३) च. वि. २. ७. (९५४) च. वि. २. ७. (९५५) च. वि. २. ७. (९५६) च. वि. २. १२. (९५७) च. वि. २. ११ (९५८) च. वि. २. ७ (९५९) च. वि. २. ७ (९६०) च.वि. २. ७ (९६१) च. वि. २. ७ (९६२) च. वि. २. ७ (९६३) च. वि.२. ७. (९६४) च. वि. २. ४ (९६५) च. वि. २. ८; सु. सू. ४६. ४९५–५०० (९६६) च. वि. २. १३;–सि. ४. ४४–४५ (९६८) च. वि. २. १३ (९६९) (९७०) च. चि. २६. २० सु. उ. ५६. १२ (९७८) सु. उ. ५६. २०–२१ (अतिप्राचीनकोषे) (९७९) च. चि. २८. १०१ (९८१) च. वि. २. १३ (९८२) च. वि. २. १३ (९८३) च. वि. २. १३ (९८४) च. वि. २. १३ (९८५) च. वि. २. १३ (९८६) च. वि. ३. ४८; सू. २२ (९८७) च. वि. ३. ४९;–सू. २२. २०, २१. (९८८) च. सू. २२. २०, २१ (९८९) च. वि. ३. ४९ (९९०) च. वि. ३. ४७ (९९१) च. वि. २. १३ (९९२) च. वि. २. १३ (९९५) सु. उ. ५६. ११ (९९६) सु. उ. ५६. १८–१९ (९९७) सु. उ. ५६. २४–२५ (९९८) सु. सू. ४६. ४९८ (९९९) सु. सू. ४६. ५०१ (१०००) सु. सू. ४६. ५०१ (१००१) सु. सू. ४६. ५०१ (१००२) सु. सू. ४६. ५०४ (१००३) सु. उ. ५६. ९–१० (१००४) सु. सू. ४६. ५०२ (१००५) सु. सू. ४६. ४६७–४७० (१००६) सु. सू. ४६. ४६८ (१००७) च. चि. १५. २३७ (१००८) च. चि. १५.२३८–२४०; सु. सू. ४६. ५२८ (१००९) च. चि. १५. २४१–२४३; सु. सू. ४६. ५२९ (१०११) च. शा. १. १०२–१०९; सु. उ. ५६. ५; –चि. ३९. ३७.

इति स्वस्थवृत्तमूलवचनादर्शः समाप्तः।

पुण्यपत्तनस्थायुर्वेदविद्यालयप्रधानाध्यापक–पण्डितरामचन्द्रशास्त्रिकिञ्जवडेकरेण प्रतिसंस्कृत्य
संग्रहस्थमूलवचलप्रदर्शिन्या प्रभाटिप्पण्या च परिष्कृतम्

# अष्टाङ्गसङ्ग्रहसारभूतम्

# अष्टाङ्गहृदयम् ।

## तत्र

## सूत्रस्थानम् ।

### आयुष्कामीयः प्रथमोऽध्यायः ।

१ रागादिरोगान् सततानुषक्ता-
नशेषकायप्रसृतानशेषान् ।
औत्सुक्यमोहारतिदाञ् जघान
योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥ १ ॥
२ अथात आयुष्कामीयमध्यायं व्याख्यास्यामः ।
३ इति ह स्माहुरात्रेयादयो महर्षयः ॥
४ आयुःकामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ २ ॥
५ ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् ।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान्मु-
नीन् ॥ ३ ॥
तेऽग्निवेशादिकान्
६ ते तु पृथक् तन्त्राणि तेनिरे ।
७ तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः
क्रियतेऽष्टाङ्गहृदयं नातिसंक्षेपविस्तरम् ।
८ कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान् ॥५॥
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता ।
९ वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः।
विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च।
१० ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः
११ वयोहोरात्रिभुक्तानां तेऽन्तमध्यादिगाःक्रमात्
१२ तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः
१३ कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि
१४ शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः ॥ ९
तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक्
समधातुः समस्तासु श्रेष्ठा निन्द्या द्विदोषजाः
१५ तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः
पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ॥
स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः
कफः ।
१६ संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः॥१२
१७ रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।
सप्त दूष्याः मला मूत्रशकृत्स्वेदादयोऽपि
च ॥ १३ ॥
१८ वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ।
१९ रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ १४
षड् द्रव्यमाश्रितास्ते तु यथापूर्वं बलावहाः ।
२० तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्॥
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ।
२१ शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ॥
२२ उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ।
२३ त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः
२४ गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ।
गुणाःससूक्ष्मविशदा विंशतिः सविपर्ययाः ॥
२५ कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥
२६ रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।
निजागन्तुविभागेन तत्र रोगा द्विधा स्मृताः
तेषां कायमनोभेदादधिष्ठानमपि द्विधा ॥ २०
रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ।
२७ दर्शनस्पर्शनप्रश्नैः परीक्षेताथ रोगिणम् ॥ २१
२८ रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ।
२९ भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ॥ २२ ॥
३० जाङ्गलं वातभूयिष्ठमनूपं तु कफोल्बणम् ।
साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥२३
३१ क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृत् ।

---

टिप्पणी ।

(१) १ (२) २ (३) ३ (४) ४ (५) ५ (६) ६७ (७) ८ (८) ५ (९) ११ (१०) १२ (११) १३ (१२) १४ (१३) १५ (१४) १६ (१५) १७ (१६) १८ (१७) १९ (१८) २१ (१९) २२ (२०) २३ (२१) २४ (२२) २५ (२३) २६ (२४) २७ (२५) २९ (२६) ३० (२७) ३१ (२८) ३२ (२९) ३३ (३०) ३४ (३१) ३५

३२ शोधनं शमनं चेति समासादौषधं द्विधा ॥ २४
३३ शरीरजानां दोषाणां क्रमेण परमौषधम् ।
बस्तिर्विरेको वमनं तथा तैलं घृतं मधु ॥ २५
३४ धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ।
३५ भिषक् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्॥
चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम्
३६ दक्षस्तीर्थात्तशास्त्रार्थो, दृष्टकर्मा शुचिर्भिषक् ॥
३७ बहुकल्पं बहुगुणं संपन्नं योग्यमौषधम्
३८ अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः ॥
३९ आढ्यो रोगी भिषग्वश्यो ज्ञापकःसत्त्ववानपि
४० साध्योऽसाध्य इति व्याधिर्द्विधा तौ तु पुनर्द्विधा । सुसाध्य :कृच्छ्रसाध्यश्च याप्यो यश्चानुपक्रमः ।
४१ सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः ३०
अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः ।
अतुल्यदूष्यदेशर्तुप्रकृतिः पादसम्पदि ॥ ३१॥
४२ ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः ।
शस्त्रादिसाधनः कृच्छ्रः सङ्करे च ततो गदः ॥
४३ शेषत्वादायुषो याप्यः पथ्याभ्यासाद्विपर्यये ।
अनुपक्रम एव स्यात्स्थितोऽत्यन्तविपर्यये ३३
औत्सुक्यमोहारतिकृद् दृष्टरिष्टोऽक्षनाशनः ।
४४ त्यजेदार्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम् ॥
हीनोपकरणं व्यग्रमविधेयं गतायुषम् ।
चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ३५
४५ तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसङ्ग्रहः
४६ आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः ॥
अन्नज्ञानान्नसंरक्षामात्राद्रव्यरसाश्रयाः ।
दोषादिज्ञानतद्भेदतच्चिकित्साद्युपक्रमः ॥ ३७
शुद्ध्यादिस्नेहनस्वेदरेकास्थापननावनम् ।
धूमगण्डूषदृक्सेकतृप्तियन्त्रकशस्त्रकम् ॥३८॥
शिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः
सूत्रस्थानमिमेऽध्यायास्त्रिंशत्
४७ शारीरमुच्यते
गर्भावक्रान्तितद्व्यापदङ्गसर्मविभागिकम् ।
४८ विकृतिर्दूतजं षष्ठम्
निदानं सार्वरोगिकम् ॥ ४० ॥
ज्वरासृक्श्वासयक्ष्मादिमदात्ययर्शोऽति-
सारिणाम् ।
मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ॥ ४१
पाण्डुकुष्ठानिलार्तानां वातास्रस्य च षोडश
४९ चिकित्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि
वमौ मदात्ययेऽर्शःसु विशि द्वौ द्वौ च मूत्रिते
विद्रधौ गुल्मजठरपाण्डुश्वेफाविसर्पिषु ॥४३॥
कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम्
द्वाविंशतिरिमेऽध्यायाः
५० कल्पसिद्धिरतः परम् कल्पो
वमेर्विरेकस्य तत्सिद्धिर्बस्तिकल्पना ।
सिद्धिर्बस्त्यापदां षष्ठो द्रव्यकल्पः
५१ अतः उत्तरम्
बालोपचारे तद्व्याधौ तद्ग्रहे द्वौ च भूतगौ ।
उन्मादेऽथ स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु सन्धिषु
कर्णनासामुखशिरोव्रणे, भग्ने भगन्दरे ॥४७॥
दृक्मोलिङ्ग नाशेषु त्रयो द्वौ द्वौ च सर्वगे
ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम् ।
विषे भुजङ्गे कीटेषु मूषकेषु रसायने ॥ ४८॥
चत्वारिंशोऽनपत्यानामध्यायो बीजपोषणः ।
५२ इत्यध्यायशतं विंशं षड्भिः स्थानैरुदीरितम्

## दिनचर्या द्वितीयोऽध्यायः ।

५३ अथातो दिनचर्याध्यायं व्याख्यास्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः ।
५४ ब्राह्मे मुहूर्त उत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः
५५ शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः॥ १
अर्कन्यग्रोधखदिरकरंजककुभादिकम् ।
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ।
कनीन्यग्रसमस्थूलं प्रगुणं द्वादशाङ्गुलम् २
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥ ३॥
५६ नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ।
५७ तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥४
५८ सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ॥
चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मतो भयम्
योजयेत्सप्तरात्रेऽस्मात्स्रावणार्थे रसाञ्जनम् ।
५९ ततो नावनगण्डूषधूमताम्बूलभाग्भवेत् ॥६॥
६० ताम्बूलं क्षतपित्तास्त्ररूक्षोत्कुपितचक्षुषाम् ।
विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि ॥
६१ अभ्यंगमाचरेन्नित्यं स जराश्रमवातहा।
दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत्॥

(३२) ३६ (३३) ३७ (३४) ३७ (३५) ६० (३६) ६१ (३७) ६२ (३८) ६३ (३९) ६४ (४०) ६६ (४१) ६७ (४२) ६८ (४३) ७० (४४) ७१ (४५) ३८ (४६) ३९ (४७) ४४ (४८) ४१ (४९) ४२ (५०) ४३ (५१) ४४ (५२) ४१. (५३) ७१ (५४) ७८ (५५) ८३ (५६) ८५ (५७) ९० (५८) ९१ (५९) ९२ (६०) ९६ (६१) १०२

६२ शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ।
६३ वर्ज्योऽभ्यंगः कफग्रस्तकृतसंशुध्यजीर्णिभिः
६४ लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ।
विभक्तघनगात्रत्वं व्यायामादुपजायते ॥१०॥
६५ वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत्
अर्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभो-
जिभिः ॥ ११ ॥
शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ।
६६ तं कृत्वाऽनुसुखं देहं मर्दयेच्च समन्ततः ॥१२
तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ।
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ।
व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसम्
गजं सिंह इवाकर्षन् भजन्नतिविनश्यति ॥
६७ उद्वर्तनं कफहरं मेदसः प्रविलायनम् ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥
६८ दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ।
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित्॥१६
६९ उष्णाम्बुनाधःकायस्य परिषेको बलावहः ।
तेनैव तूत्तमांगस्य बलहृत्केशचक्षुषाम् ॥
७० स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥
७१ जीर्णे हितं मितं चाद्यान्न वेगानीरयेद्बलात् ।
न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्य-
मामयम् ॥ १९ ॥
७२ सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः
सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ।
७३ भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ।
७४ हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ॥ २१
संभिन्नालापव्यापादमभिध्यां दृग्विपर्ययम् ।
पापं कर्मेति दशधा कायवाङ्मनसैस्त्यजेत् ॥
७५ अवृत्तिव्याधिशोकार्ताननुवर्तेत शक्तितः ।
७६ आत्मवत्सततं पश्येदपि कीटपिपीलिकम् ॥
७७ अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् ।
७८ विमुखान्नार्थिनः कुर्यान्नावमन्येत नाक्षिपेत्॥
७९ उपकारप्रधानः स्यादपकारपरेऽप्यरौ ।
८० सम्पद्विपत्स्वेकमना हेतावीर्ष्येत्फले न तु २५
८१ काले हितं मितं ब्रूयादविसंवादि पेशलम् ।
८२ पूर्वाभिभाषी, सुमुखः सुशीलः करुणामृदुः॥
८३ नैकः सुखी न सर्वत्र विश्रब्धो न च शङ्कितः
न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम्
प्रकाशयेदपमानं न च निःस्नेहतां प्रभोः ।
८४ जनस्याशयमालक्ष्य यो यथा परितुष्यति ॥
तं तथैवानुवर्तेत पराराधनपण्डितः ।
८५ न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत्॥
त्रिवर्गशून्यं नारम्भं भजेत्तं चाविरोधयन् ।
८६ अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ॥ ३०
८७ नीचरोमनखश्मश्रुर्निर्मलाङ्घ्रिमलायनः ।
स्नानशीलः सुसुरभिः सुवेषोऽनुल्बणोज्ज्वलः
८८ धारयेत्सततं रत्नसिद्धमन्त्रमहौषधीः ।
८९ सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ॥ ३२ ॥
९० निशि चात्ययिके कार्ये दंडी मौली सहायवान्
९१ चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ॥
नाक्रामेच्छर्करालोष्टबलिस्नानभुवो न च
९२ नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् ॥
सन्दिग्धनावं वृक्षं च नारोहेद्दुष्टयानवत् ।
९३ नासंवृतमुखः कुर्यात्क्षुतिहास्यविजृम्भणम् ॥
९४ नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम्
नाङ्गैश्चेष्टेत विगुणं नासीतोत्कटकस्थितः ॥ ३६
९५ देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्तयेत्।
नोर्ध्वजानुश्चिरं तिष्ठेन्नक्तं सेवेत न द्रुमम् ३७
तथा चत्वरचैत्यान्तश्चतुष्पथसुरालयान् ।
सूनाटवीशून्यगृहश्मशानानि दिवापि न ॥
९६ सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत् ।
नेक्षेत प्रततं सूक्ष्मं दीप्तामेध्याप्रियाणि च ३९
९७ मद्यविक्रयसन्धानदानादानानि नाचरेत् ।
९८ पुरोवातातपरजस्तुषारपरुषानिलान् ॥ ४० ॥
अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् ।
कूलच्छायांनृपद्विष्टं व्यालदंष्ट्रिविषाणिनः ४१
हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ।
सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम्॥
शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् ।
गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम् ॥ ४३
तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ।
मद्यातिसक्तिं विश्रम्भस्वातंत्र्ये स्त्रीषु च त्यजेत्
९९ आचार्यः सर्वचेष्टासु लोक एव हि धीमतः ।
अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः ॥
१०० आर्द्रसन्तानता त्यागः कायवाक्चेतसां दमः
स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम्॥४६
१०१ नक्तंदिनानि मे यान्ति कथंभूतस्य संप्रति ।
दुःखभाङ्न भवत्येवं नित्यं सन्निहितस्मृतिः
१०२ इत्याचारः समासेन यं प्राप्नोति समाचरन् ।
आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ॥

——०——

(६२) १०३ (६३) १०३ (६४) १०४ (६५) १०४ (६६) १०५ (६७) १०६ (६८) १०७ (६९) १०७ (७०) १०८ (७१) ८० (७२) च. सू. २८. ३५. (७३) (७४) ११६ च. सू. ११. ३९. (७५) ११६; (७६) (७७) ८९ (७८) १११, ११२ (७९) १११, ११२ (८०) १११, ११२ (८१) १११ (८२) १११ (८३) च. सू. ८. २६. ११३ (८४) (८५) १०२ (८६, (८७) १०२ (८८) (८९) ९८ (९०) ९८ (९१) ९९ (९२) १०२ (९३) ११२ (९४) ११२, १०२ (९५) (९६) १०९ (९७) (९८) ११४, १०९, ११२, १०८ (९९) (१०० ((१०१) १२२ (१०२) १२३.

## ऋतुचर्याख्यस्तृतीयोऽध्यायः ।

१०३ अथात ऋतुचर्याध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
१०४ मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड् ऋतवः
स्मृताः ।
शिशिरोऽथ वसंतश्च ग्रीष्मवर्षाशरद्धिमाः॥ १
शिशिराद्यास्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।
आदानं च, तदादत्ते नृणां प्रतिदिनं बलम्॥ २
१०५ तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षामार्गस्वभावतः
आदित्यपवनाःसौम्यान् क्षपयंति गुणान् भुवः
तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात्
तस्मादादानमाग्नेयम्
१०६ ऋतवो दक्षिणायनम् ।। ४ ॥
वर्षादयो विसर्गश्च
१०७ यद् बलं विसृजत्ययम् ।
सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः
मेघवृष्ट्यनिलैः शीतैः शान्ततापे महीतले ।
स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः॥ ६
१०८ शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यं तु शेषयोः
१०९ बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ॥७
भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ।
११० अतो हिमेऽस्मिन्सेवेत स्वाद्वम्ललवणान्रसान्
दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ।
अवश्यकार्यं सम्भाव्य यथोक्तं शीलयेदनु ॥ ९
वातघ्नतैलैरभ्यङ्गं मूर्ध्नि तैलं विमर्दनम् ।
नियुद्धं कुशलैः सार्धं पादाघातं च युक्तितः ॥
१११ कषायापहृतस्नेहस्ततः स्नातो यथाविधि ।
कुंकुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ॥ ११
रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम्
गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ॥
नवमन्नं वसां तैलं शौचकार्ये सुखोदकम् ।
प्रावाराजिनकौशेयप्रवेणीकौचवास्तृतम्॥१३
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ।
युक्त्यार्ककिरणान् स्वेदं पादत्राणं च सर्वदा॥
११२ पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ।
हरन्ति शीतमुष्णाङ्ग्यो धूपकुंकुमयौवनैः ॥१५
११३ अङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः ।
शीतपारुष्यजनितो न दोषो जातु जायते॥
११४ अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः ।
तदा हि शीतमधिकं रौक्ष्यं चादानकालजम्॥
११५ कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः ।
हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत् ॥

तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ।
व्यायामोद्वर्तनाघातैर्जित्वा श्लेष्माणमुल्बणम्
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुंकुमैः ।
पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक् ।। २०
सहकाररसोन्मिश्रानास्वाद्य प्रिययार्पितान् ।
प्रियास्यसङ्गसुरभीन् प्रियानेत्रोत्पलाङ्कितान्॥
सौमनस्यकृतो हृद्यान्वयस्यैः सहितः पिबेत् ।
निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान्।। २२
शृङ्गवेरांबु साराम्बु मध्वम्बु जलदाम्बु वा ।
११६ दक्षिणानिलशीतेषु परितो जलवाहिषु ॥ २३
अदृष्टनष्टसूर्येषु मणिकुट्टिमकान्तिषु ।
परपुष्टविघुष्टेषु कामकर्मान्तभूमिषु ॥ २४ ॥
विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ।
गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥
११७ गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।
११८ तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत्॥
प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्धते ।
११९ अतोऽस्मिन् पटुकट्वम्लव्यायामार्ककरां-
स्त्यजेत् ॥ २७ ॥
भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ।
१२० सुशीततोयसिक्ताङ्गो लिह्यात्सक्तून् सशर्करान्
१२१ मद्यं न पेयं पेयं वा स्वल्पं सुबहुवारि वा ।
१२२ अन्यथा शोफशैथिल्यदाहमोहान् करोति तत्
१२३ कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः ।
पिबेद्रसं नातिघनं रसालां रागखाण्डवौ ॥३०
पानकं पञ्चसारं वा नवमृद्भाजने स्थितम् ।
मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः ॥
पाटलावासितं चाम्भः सकर्पूरं सुशीतलम् ।
१२४ शशाङ्ककिरणान् भक्ष्यान् रजन्यां भक्षयन्
पिबेत् ॥ ३२ ॥
ससितं माहिषं क्षीरं चन्द्रनक्षत्रशीतलम् ।
१२५ अभ्रंकषमहाशालतालरुद्धोष्णरश्मिषु ॥ ३३ ॥
वनेषु माधवीश्लिष्टद्राक्षास्तवकशालिषु ।
१२६ सुगन्धिहिमपानीयसिच्यमानपटालिके॥ ३४
कायमाने चिते चूतप्रवालफललुम्बिभिः ।
१२७ कदलीदलकह्लारमृणालकमलोत्पलैः ॥ ३५ ॥
कोमलैः कल्पिते तल्पे हसत्कुसुमपल्लवे ।
मध्यन्दिनेऽर्कतापार्तः स्वप्याद्धारागृहेऽथवा॥
पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि ।

( १०३ ) १२४ ( १०४ ) १२७, १२८ ( १०५ ) १२८ ( १०६) १२९ (१०७) १२९ (१०८) १३० (१०९) १३१, १३२ ( ११० ) १२३ ( १११ ) १२३ ( ११२ ) १३३ ( ११३ ) १३३ (११४) १३४ ( ११५ ) १३५, १३६ ( ११६ ) ( ११७ ) १३६ ( ११८ ) १३७ ( ११९ ) १३८ ( १२० ) १३८ ( १२१ ) १३८ ( १२२-१२९ ) १३८

१२८ निशाकरकराकीर्णे सौधपृष्ठे निशासु च ॥३७
आसंना
१२९ स्वस्थाचित्तस्य चन्दनार्द्रस्य मालिनः ।
निवृत्तकामतन्त्रस्य सुसूक्ष्मतनुवाससः ॥ ३८
जलार्द्रास्तालवृन्तानि विस्तृताः पद्मिनीपुटाः ।
उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः ॥
कर्पूरमल्लिका माला हाराः सहरिचन्दनाः ।
मनोहरकलालापाः शिशवः सारिकाः शुकाः
मृणालवलयाः कांताः प्रोत्फुल्लकमलोज्ज्वलाः
जङ्गमा इव पद्मिन्यो हरन्ति दयिताः क्लमम् ।
१३० आदानग्लानवपुषामग्निः सन्नोऽपि सीदति ।
वर्षासु दोषैर्दुष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे ॥
सतुषारेण मरुता सहसा शीतलेन च ।
भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा ॥
वह्निनैव च मन्देन तेष्वित्यन्योन्यदूषिषु ।
भजेत्साधारणं सर्वमूष्मणस्तेजनं च यत् ॥
१३१ आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान्
जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्तनम् ॥
मस्तु सौवर्चलाढ्यं वा पञ्चकोलावचूर्णितम् ।
दिव्यं कौपं शृतं चाम्भो भोजनं त्वतिदुर्दिने
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।
१३२ अपादचारी सुरभिः सततं धूपिताम्बरः ॥
हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवर्जिते ।
१३३ नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् ॥
१३४ वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानां संचितं वृष्टौ पित्तं शरदि कुप्यति ॥
१३५ तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ।
तिक्तं स्वादु कषायं च क्षुधितोऽन्नं भजेल्लघु ॥
शालिमुद्गसिताधात्रीपटोलमधुजाङ्गलम् ।
१३६ तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः ॥
समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् ।
शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् ॥
नाभिष्यन्दि न वा रूक्षं पानादिष्वमृतोपमम्
१३७ चन्दनोशीरकर्पूरमुक्तास्रग्वसनोज्ज्वलः ॥ ५३
सौधेषु सौधधवलां चन्द्रिकां रजनीमुखे ।
१३८ तुषारक्षारसौहित्यदधितैलवसातपान् ॥
तीक्ष्णमद्यदिवास्वप्नपुरोवातान् परित्यजेत् ।
१३९ शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान्
रसान्भजेत् ।
स्वादुं निदाघे शरदि स्वादु तिक्तकषायकान्
शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः ॥
अन्नपानं समासेन विपरीतमतोऽन्यदा ।
१४० नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ
१४१ ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः ।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरःक्रमात्
असात्म्यजा हि रोगाः स्युः सहसात्यागशीलनात्

## रोगानुत्पादनीयश्चतुर्थोऽध्यायः ।

१४२ अथातो रोगानुत्पादनीयाध्यायं
व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
१४३ वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ।
निद्राकासश्रमश्वासजृम्भाश्रुच्छर्दिरेतसाम् ॥
१४४ अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ।
वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः ॥ २ ॥
स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ।
पानानि बस्तयश्चैव शस्तं वातानुलोमनम् ॥
१४५ शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः ।
ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम् ॥ ४
मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः
१४६ अङ्गभङ्गाश्मरीबस्तिमेढ्रवंक्षणवेदनाः ॥ ५ ॥
मूत्रस्य रोधात्पूर्वे च प्रायो रोगाः
१४७ तदौषधम् ।
वर्त्यभ्यङ्गावगाहाश्च स्वेदनं बस्तिकर्म च ॥६
अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ।
१४८ मूत्रजेषु च पाने च प्राग्भक्तं शस्यते घृतम् ॥
जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्
१४९ अवपीडकमेतच्च संज्ञितं
धारणात्पुनः ॥ ८ ॥
उद्गारस्यारुचिः कम्पो विबन्धो हृदयोरसोः
आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम्
१५० शिरोर्तीन्द्रियदौर्बल्यमन्यास्तम्भार्दितं क्षुतेः ।
तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः ॥
प्रवर्तयेत्क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत् ।
१५१ शोषाङ्गसादबाधिर्यसम्मोहभ्रमहृद्गदाः ॥११
तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः
१५२ अङ्गभङ्गारुचिग्लानिकार्श्यशूलभ्रमाः क्षुध ।
तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम्
१५३ निद्रायामोहमूर्धाक्षिगौरवालस्यजृम्भिकाः ।
अङ्गमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ।
१५४ कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः
शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः

(१३० )१३९, १४९ ( १३१-१३३) १४० ( १३४ ) १४१ ( १३५-१३८ ) १४२ ( १३९) (१४०) १४३ (१४१)
१४४ ( १४२ ) १४७ ( १४३ ) १४८ ( १४४ ) १४९ ( १४५ ) १५० ( १४६ ) १५१ (१४७) १५२ ( १४८ ) १५३
( १४९ ) १५४ ( १५० ) १५५ ( १५१ ) १५६ ( १५२ ) १५७ ( १५३ ) १५८ ( १५४ ) १५९

१५५ गुल्महृद्रोगसम्मोहाः श्रमश्वासाद्विधारितात्॥
हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ।
१५६ जृम्भायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः
१५७ पीनसाक्षिशिरोहृद्रुङ्मन्यास्तम्भारुचिभ्रमाः
सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः
१५८ विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ।
सकासश्वासहृल्लासव्यङ्गश्वयथवो वमेः ॥ १८
गण्डूषधूमानाहारान् रूक्षं भुक्त्वा तदुद्वमः
व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम्
सक्षारलवणं तैलमभ्यङ्गार्थं च शस्यते।
१५९ शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुज्वराः ॥ २०
हृद्व्यथा मूत्रसङ्गाङ्गभङ्गवृद्ध्यश्मषण्ढताः ।
ताम्रचूडसुराशालिबस्त्यभ्यङ्गावगाहनम् ।
बस्तिशुद्धिकरैः सिद्धं भजेत्क्षीरं प्रियाः स्त्रियः
१६० तृट्शूलार्तं त्यजेत् क्षीणं विड्वमं वेगरोधिनम्
१६१ रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ।
१६२ निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ।
ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति ।
अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम् ॥
१६३ धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ।
लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ॥
१६४ यतेत च यथाकालं मलानां शोधनं प्रति ।
अत्यर्थसञ्चितास्ते हि क्रुद्धाः स्युर्जीवितच्छिदः
१६५ दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥
१६६ यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत् ।
रसायनानि सिद्धानि वृष्ययोगांश्च कालवित्
१६७ भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ।
शालिषष्टिकगोधूममुद्गमांसघृतादिभिः ॥ २९
हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः ।
साभ्यङ्गोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ॥ ३०
तथा स लभते शर्म सर्वपावकपाटवम् ।
धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ॥ ३१
१६८ ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः ।
कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः ॥
१६९ त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥
अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम् ॥
भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक् ।
अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः ।
निजागन्तुविकाराणामुत्पन्नानां च शान्तये॥
शीतोद्भवं दोषचयं वसन्ते
१७० विशोधयन् ग्रीष्मजमभ्रकाले ।
घनात्यये वार्षिकमाशु सम्यक्
प्राप्नोति रोगानृतुजान्न जातु ॥ ३६ ॥
१७१ नित्यं हिताहारविहारसेवी
समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावा-
नाप्तोपसेवी च भवत्यरोगः ॥ ३७ ॥

——

## द्रवद्रव्यविज्ञानीयः पञ्चमोऽध्यायः ।

१७२ अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्या-
स्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः

### ( १ ) तोयवर्गः ।

१७३ ‘ जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ।
तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ॥ १
१७४ गाङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः ।
हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ २
१७५ येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम् ।
अक्लिन्नमविवर्णं च तत्पेयं गाङ्गम्
१७६ अन्यथा
सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना ।
१७७ ऐन्द्रमंबु सुपात्रस्थमविपन्नं सदा पिबेत् ॥ ४
१७८ तदभावे च भूयिष्ठमान्तरिक्षानुकारि यत् ।
शुचिपृथ्वसितश्वेते देशेऽर्कपवनाहतम् ॥ ५ ॥
१७९ न पिबेत्पङ्कशैवालतृणपर्णाविलास्तृतम् ।
सूर्येन्दुपवनादृष्टमभिवृष्टं घनं गुरु ॥ ६
फेनिलं जंतुमत्तप्तं दंतग्राह्यातिशैत्यतः ।
अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत् ॥
लूतादितंतुविण्मूत्रविषसंश्लेषदूषितम् ।
१८० पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ।
पथ्याः समासात्ता नद्यो विपरीता-
स्त्वतोऽन्यथा ।
१८१ उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥
हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः
कृमिश्लीपदहृत्कंठशिरोरोगान् प्रकुर्वते ॥

(१५५) १६० (१५६) १६१ (१५७) १६२ (१५८) १६३ (१५९) १६४ (१६०) १६५ (१६१) १६६ (१६२) १६७ (१६३)(१६४) १६९, १७० (१६५) १७० (१६६) १७० (१६७) १७१ (१६८) १७ (१६९) १७३ (१७०) १७४ (१७१)(१७२) १७८ (१७३) १७९ (१७४) १७९ (१७५) १८० (१७६) १८० (१७७) १८१ (१७८) १८२ १७९) १८८ (१८०) १८६ (१८१) १८६

१८२ प्राच्याऽऽवंत्यपरांतोत्था दुर्नामानि महेंद्रजाः
उदरश्लीपदातंकान् सह्यविंध्योद्भवाः पुनः ॥
कुष्ठपांडुशिरोरोगान् दोषघ्न्यः पारियात्रजाः ।
बलपौरुषकारिण्यः सागरांभस्त्रिदोषकृत् ॥
१८३ विद्यात्कूपतडागादीन् जांगलानूपशैलतः ।
१८४ नांबु पेयमशक्त्या वा स्वल्पमल्पाग्निगुल्मिभिः
पांडूदरातिसारार्शोग्रहणीदोषशोथिभिः ।
ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि
चाल्पशः ॥ १४ ॥
१८५ समस्थूलकृशा भुक्तमध्यान्तप्रथमांबुपाः ।
१८६ शीतं मदात्ययग्लानिमूर्च्छाच्छर्दिश्रमभ्रमान्
तृष्णोष्णदाहपित्तास्रविषाण्यंबु नियच्छति ।
१८७ दीपनं पाचनं कंठ्यं लघूष्णं बस्तिशोधनम् ॥
हिध्माध्मानाऽनिलश्लेष्मसद्यःशुद्धे नवज्वरे ।
१८८ कासामपीनसश्वासपार्श्वरुक्षु च शस्यते ॥
अनभिष्यंदि लघु च तोयं क्वथितशीतलम् ।
पित्तयुक्ते हितं दोषे व्युषितं तत् त्रिदोषकृत्॥
१८९ नारिकेलोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥
१९० वर्षासु दिव्यनादेये परं तोये वरावरे ।
१९१ 'गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम्
ऐभमैकशफं चेति क्षीरमष्टाविधं मतम् ।'

(२) क्षीरवर्गः ।

स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम्॥२१
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ।
प्रायः पयः
१९२ अत्र गव्यं तु जीवनीयं रसायनम्
क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ।
श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ॥
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ।
१९३ हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम्
१९४ अल्पांबुपानव्यायामकटुतिक्ताशनैर्लघु ।
आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ॥
१९५ ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।
शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ॥
१९६ मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ।
तर्पणाश्चोतनैर्नस्यैः
१९७ अहृद्यं तूष्णमाविकम् ॥
वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ।
१९८ हास्तिन्याः स्थैर्यकृत्
बाढमुष्णं त्वैकशफं लघु
१९९ शाखावातहरं साम्ललवणं जडताकरम् ।
पयोभिष्यंदि गुर्वामं युक्त्या शृतमतोऽन्यथा
भवेद्गरीयोऽतिशृतं धारोष्णममृतोपमम् ।
२०० अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ॥
मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ।
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥३१
पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ।
नैवाद्यान्निशि नैवोष्णं वसंतोष्णशरत्सु न ॥
नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलम् ।
न चानामलकं नापि नित्यं नो मंदमन्यथा ॥
ज्वरासृक्पित्तवीसर्पकुष्ठपांडुभ्रमप्रदम् ।
२०१ तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ।
प्लीहगुल्मघृतव्यापद्गरपांडुामयान् जयेत् ॥ ३५
२०२ तद्वन्मस्तु सरं स्रोतःशोधि विष्टंभजिल्लघु ।
२०३ नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ॥३६
संग्राहि वातपित्तासृक्क्षयार्शोर्दितकासजित्
२०४ क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित् ॥
२०५ शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् ।
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम्॥
क्षतक्षीणपरिसर्पशस्त्राग्निग्लपितात्मनाम् ।
वातपित्तविषोन्मादशोषाऽलक्ष्मीज्वरापहम्॥
स्नेहानामुत्तमं शीतं वयसः स्थापनं परम् ।
सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत् ॥
मदापस्मारमूर्च्छायशिरःकर्णाक्षियोनिजान् ।
पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ॥९
२०६ बल्याः किलाटपीयूषकूर्चिकामोरणादयः ।
शुक्रनिद्राकफकरा विष्टंभिगुरुदोषलाः ।
२०७ गव्ये क्षीरघृते श्रेष्ठे निंदिते चाविसंभवे ।

(३) इक्षुवर्गः ।

२०८ इक्षो रसो गुरुः स्निग्धो बृंहणः कफमूत्रकृत्
वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरसः सरः
२०९ सोऽग्रे सलवणो दंतपीडितः शर्करासमः ॥
२१० मूलाग्रजंतुजग्धादिपीडनान्मलसंकरात् ।
किंचित्कालं विधृत्या च विक्रिय याति
यांत्रिकः ॥ ४५ ॥
विदाही गुरुविष्टंभी तेनासौ
२११ तत्र पौंड्रकः ।
शैत्यप्रसादमाधुर्यैर्वरस्तमनु वांशिकः ॥४६ ॥
शातपर्वककांतारनैपालाद्यास्ततः क्रमात् ।
सक्षाराः सकषायाश्च सोष्णाः किंचिद्विदाहिनः

---

(१८२) १८७ (१८३) १८४, १८५. (१८४) १९६ (१८५) १९७ (१८६) १९८ · (१८७) १९९ (१८८) २०० (१८९) २०१ (१९०) २०२ (१९१) २०३ (१९२) २०४ (१९३) २०५ (१९४) २०६ (१९५) २०७ (१९६) २०८ (१९७) २०९ (१९८) २१० (१९९) २११ (२००) २१३ (२०१) २१४ (२०२) २१५ (२०३) २१६ (२०४) २१७ (२०५) २१८ (२०६) २२० (२०७) २२२ (२०८) २२३ (२०९) २२४ (२१०) २२५ (२११) २२६

२१२ फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।
२१३ नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः ॥
२१४ प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः
२१५ हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत्
२१६ वृष्याः क्षतक्षीणहिता रक्तपित्तानिलापहाः ।
मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः ॥
तद्गुणा तिक्तमधुरा कषाया यासशर्करा ।
दाहतृट्छर्दिमूर्छासृक्पित्तघ्न्यः सर्वशर्कराः ।
२१७ शर्करेक्षुविकाराणां फाणितं च वरावरे ।
२१८ चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत् ॥
मेहकुष्ठकृमिच्छर्दिश्वासकासातिसारजित् ।
व्रणशोधनसंधानरोपणं वातलं मधु ॥ ५३ ॥
रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ।
२१९ उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ।
२२० प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ।
अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ॥ ५५ ॥

### (४) तैलवर्गः ।

२२१ तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ।
त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥
कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।
बद्धविट्कं कृमिघ्नं च संस्कारात्सर्वदोषजित् ।
२२२ सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु ।
वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् ॥ ५८
रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ।
२२३ तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति
२२४ कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम् ।
लघुपित्तास्रकृत् कोठकुष्ठार्शोव्रणजन्तुजित् ॥
आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम्
नात्युष्णं निम्बजं तिक्तं कृमिकुष्ठकफप्रणुत् ॥
२२५ उमाकुसुम्भजं चोष्णं त्वग्दोषकफपित्तकृत् ।
२२६ वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥ ६२
मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ।

### (५) मद्यवर्गः ।

२२७ दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ॥
सस्वादुतिक्तकटुकमम्लपाकरसं सरम् ।
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ॥ ६४
नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ।
कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम्
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ।
२२८ गुरु त्रिदोषजननं नवं जीर्णमतोऽन्यथा ॥ ६६
२२९ पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ।
नात्यर्थतीक्ष्णमृद्वल्पसम्भारं कलुषं न च ॥ ६७
२३० गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ।
सुराऽनिलघ्नी मेदोसृक्स्तन्यमूत्रकफावहा ६८
२३१ तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च
शूलकासवमिश्वासविबन्धाध्मानपीनसान् ॥
२३२ नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा ।
व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ।
२३३ विष्टम्भिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ।
२३४ यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ॥ ७१
ग्रहणीपाण्डुकुष्ठार्शःशोफशोषोदरज्वरान् ।
हन्ति गुल्मकृमिप्लीह्नः कषायकटुवातलः ७२
२३५ मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ।
अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ॥
२३६ अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ।
२३७ शार्करः सुरभिः स्वादु हृद्यो नातिमदो लघुः
२३८ सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ।
२३९ वातपित्तकरः सीधुः स्नेहश्लेष्मविकारहा ॥
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ।
२४० छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित्
२४१ रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।
भृशोष्णतीक्ष्णरूक्षाम्लं हृद्यं रुचिकरं सरम्
दीपनं शिशिरस्पर्शं पाण्डुदृक्कृमिनाशनम् ।
२४२ गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ॥ ७८
२४३ कन्दमूलफलाद्यं च तद्वद्विद्यात्तदाऽऽसुतम् ।
२४४ शाण्डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु
२४५ धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्श-
शीतलम् ।
श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ॥
शस्तमास्थापने हृद्यं लघु वातकफापहम् ।
एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ।
कृमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे ।
ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवैः कृते ॥
२४६ मूत्रं गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ॥
पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ।
कृमिशोफोदरानाहशूलपाण्डुकफानिलान् ॥
गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ।
२४७-२४८ तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात्
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ।

---

( २१२ ) २२७ ( २१३ ) २२८ ( २१४ ) २२९ ( २१५ ) २३० ( २१६ ) २३१ ( २१७ ) २३२ ( २१८ )
२३३ ( २१९ ) २३४ ( २२० ) २३५ ( २२१ ) २३९ ( २२२ ) २४१ ( २२३ ) २४२ ( २२४ ) २४३ ( २२५
२४४ ( २२६ ) २५२ ( २२७ ) २५५ ( २२८ ) २५६ ( २२९ ) २५७ ( २३० ) २५८ ( २३१ ) २५९ ( २३२ )
२६१ ( २३३ ) २६२ ( २३४ ) २६४ ( २३५ ) २६५ ( २३६ ) २६६ ( २३७ ) २६७ ( २३८ ) २६८ ( २३९ )
२६९ ( २४० ) २७० ( २४१ ) २७३ ( २४२ ) २७४ ( २४३ ) २७५ ( २४४ ) २७६ ( २४५ ) २७७ ( २४६ )
२७८ ( २४७ ) २८४

## अन्नस्वरूपविज्ञानीयः षष्ठोऽध्यायः ।

२४९ अथातोऽन्नस्वरूपविज्ञानीयमध्यायं
व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

### ( १ ) शूकधान्यवर्गः ।

२५० रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः ।
सारामुखो दीर्घशूको रोध्रशूकः सुगन्धकः ॥
पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदो गौरसारिवौ ।
काञ्चनो महिषः शूको दूषकः कुसुमाण्डकः ।
लाङ्गलालोहवालाख्याः कर्दमाः शीतभीरुकाः
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः।
२५१ स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः
कषायानुरसाः पथ्या लघवो मूत्रला हिमाः ।
२५२ शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ॥ ३ ॥
महांस्तस्यानुकलमस्तं चाप्यनु ततः परे ।
२५३ यवका हायनाः पांसुबाष्पनैषधकादयः ॥ ४
स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः
श्लेष्मपित्तलाः
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः ॥ ५
२५४ स्निग्धो ग्राही लघुः स्वादुस्त्रिदोषघ्नः स्थिरो
हिमः ।
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ॥
२५५ ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ।
कुक्कुटाण्डकलावाख्यपारावतकशूकराः ॥
वरकोद्दालकोज्ज्वालचीनशारददुर्दराः ।
गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः
२५६ स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः
२५७ बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ ९
२५८ कङ्गुकोद्रवनीवारश्यामाकादि हिमं लघु ।
तृणधान्यं पवनकृल्लेखनं कफपित्तहृत् ॥
२५९ भग्नसन्धानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः ।
कोरदूषः परं ग्राही स्पर्शशीतो विषापहः ॥
२६० रूक्षः शीतो गुरुः स्वादुः सरो
विड्वातकृद्यवः ।
वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफान् जयेत् ।
पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ।
न्यूनो यवादनुयवो
रूक्षोष्णो वंशजो यवः ॥ १३ ॥
२६१ वृष्यः शीतो गुरुः स्निग्धो जीवनो
वातपित्तहा ।
सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥

### ( २ ) शिम्बिधान्यवर्गः

पथ्या नन्दीमुखी शीता कषायमधुरा लघुः ।
२६२ मुद्गाढकीमसूरादि शिम्बीधान्यं विबन्धकृत्
कषायं स्वादु संग्राहि कटुपाकं हिमं लघु ।
मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ॥
२६३ वरोऽत्र मुद्गोऽल्पचलः कलायस्त्वतिवातलः
२६४ राजमाषोऽनिलकरो रूक्षो बहुशकृद्गुरुः ॥
२६५ उष्णाः कुलत्थाः पाकेऽम्लाः
शुक्राश्मश्वासपीनसान् ।
कासार्शःकफवातांश्च घ्नन्ति पित्तास्रदाः
परम् ॥ १८ ॥
२६६ निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरुः ।
सरो विदाही दृक्शुक्रकफशोफविषापहः ॥
२६७ माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ।
गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत्
२६८ फलानि माषवद्विद्यात्काकाण्डोलात्मगुप्तयोः
२६९ उष्णस्त्वच्यो हिमः स्पर्शे केश्यो बल्यस्तिलो
गुरुः ॥ २१ ॥
अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ।
२७० स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः
दृक्शुक्रहृत्कटुः पाके
२७१ तद्वद्बीजं कुसुम्भजम् ।
२७२ माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ॥
२७३–नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।
२७४–शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम्

### ( ३ ) कृतान्नवर्गः

मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।
यथापूर्वं
२७५ शिवस्तत्र मण्डो वातानुलोमनः ॥
तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत्
स्रोतोमार्दवकृत्स्वेदी सन्धुक्षयति चानलम् ॥
२७६ क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।
मलानुलोमनी पथ्या पेया दीपनपाचनी ॥
२७७ विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥
२७८ सुधौतः प्रसृतः स्विन्नोऽत्यक्तोष्मा चौदनो
लघुः ।
यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः ॥
विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ।
२७९ इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ।
बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ।

---

(२४९) २८५ (२५०) २८६ (२५१) २८७ (२५२) २८८ (२५३) २८९ (२५४) २९० (२५५) २९१ (२५६) २९२ (२५७) २९३ (२५८) २९४ (२५९) २९५ (२६०) २९६ (२६१) २९७ (२६२) २९८ (२६३) २९९ (२६४) ३०१ (२६५) ३०२ (२६६) ३०३ (२६७) ३०४ (२६८) ३०५ (२६९) ३०८ (२७०) ३०९ (२७१) ३१० (२७२) ३११ (२७३) ३१२ (२७४) ३१३ (२७५) ३१४ (२७६) ३१५ (२७७) ३१६ (२७८) ३१७ (२७९) ३१८

२८० मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम्
२८१ वातानुलोमी कौलत्थो गुल्मतूनीप्रतूनिजित्
२८२ तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम्
शांडाकीवटकं दृष्टं दोषलं ग्लपनं गुरु ।
२८३ रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा
२८४ श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ।
विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ।
२८५ लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ।
कासपित्तोपशमना दीपना लघवो हिमाः ॥
२८६ पृथुका गुरवो बल्याः कफविष्टम्भकारिणः ।
२८७ धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः
२८८ सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान् ।
घ्नन्ति संतर्पणाः पानात्सद्य एव बलप्रदाः ॥
२८९ नोदकान्तरितान्न द्विर्न निशायां न केवलान्
न भुक्त्वा न द्विजैश्छित्वा सक्तूनद्यान्न
वा बहून् ॥ ३८ ॥
२९० पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः।
२९१ वेसवारो गुरुः स्निग्धो बलोपचयवर्धनः ॥
२९२ मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ।
२९३ कुकूलकर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ॥ ४० ॥
एकयोनींल्लघून्विद्यादपूपानुत्तरोत्तरम् ।

## ( ४ ) मांसवर्गः ।

२९४ हरिणैणकुरङ्गर्क्षगोकर्णमृगमातृकाः ॥ ४१ ॥
शशशम्बरचारुष्कशरभाद्या मृगाः स्मृताः ।
२९५ लाववर्तीकवर्तीररक्तवर्त्मककुक्कुभाः ॥ ४२
कपिञ्जलोपचक्राख्यचकोरकुरुबाहवः ।
वर्तको वर्तिका चैव तित्तिरिः क्रकरः शिखी
ताम्रचूडाख्यबकरगोनर्दगिरिवर्तिकाः ।
तथा शारपदेन्द्राभवारटाश्चेति विष्किराः ॥
२९६ जीवंजीवकदात्यूहभृङ्गाह्वशुकसारिकाः ।
लट्वाकोकिलहारीतकपोतचटकादयः ॥ ४५
प्रतुदाः
२९७ भेकगो धाहिश्वाविदाद्या विलेशयाः ।
२९८ गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ॥ ४६
मार्जारमूषिकव्याघ्रवृकबभ्रुतरक्षवः ।
लोपाकजम्बुकश्येनचाषवान्तादवायसाः ४७
शशघ्नीभासकुररगृध्रोलूककुलिङ्गकाः ।
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ॥
२९९ वराहमहिषन्यङ्कुरुरुरोहितवारणाः ।
सृमरश्चमरः खड्गो गवयश्च महामृगाः ॥ ४९

३०० हंससारसकादम्बबककारण्डवप्लवाः ।
बलाकोत्क्रोशचक्राह्वमद्गुक्रौञ्चादयोऽप्चराः
३०१ मत्स्या रोहितपाठीनकूर्मकुंभीरकर्कटाः ।
शुक्तिशङ्खोद्रशम्बूकशफरीवर्मिचन्द्रिकाः ॥ ५१
चुलूकीनक्रमकरशिशुमारतिमिङ्गिलाः ।
राजीचिलिचिमाद्याश्च
३०२ मांसमित्याहुरष्टधा ॥
(मृग्यं वैष्किरकं किञ्च प्रातुदं च बिलेशयम् ।
प्रासहं च महामृग्यमप्चरं मात्स्यमष्टधा)
३०३ योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ।
३०४ आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ
स्मृतौ ॥ ५४ ॥
३०५ तत्र बद्धमलाः शीता लघवो जाङ्गला हिताः
पित्तोत्तरे वातमध्ये सान्निपाते कफानुगे ॥
३०६ दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः
३०७ ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः ॥
३०८ तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।
ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ।
३०९ नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम्
३१० तद्वच्च कुक्कुटो वृष्यः
ग्राम्यस्तु श्लेष्मलो गुरुः ॥ ५८ ॥
३११ मेधाऽनलकरा हृद्याः क्रकराः सोपचक्रकाः ।
३१२ गुरुः सलवणः काणकपोतः सर्वदोषकृत् ॥
३१३ चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः
परम् ।
३१४ गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥
मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ।
३१५ शीता महामृगास्तेषु
३१६ क्रव्यादाः प्रसहाः पुनः
लवणानुरसाः पाके कटुका मांसवर्धनाः ।
जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ॥
३१७ नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥
३१८ विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ।
३१९ शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ॥
कार्श्यं केवलवातांश्च गोमांसं संनियच्छति ।
३२० उष्णो गरीयान्महिषः स्वप्नदार्ढ्यबृहत्त्वकृत् ॥
३२१ तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ।

---

( २८० ) ३२० ( २८१ ) ३२१ ( २८२ ) ३२९ ( २८३ ) ३३३ ( २८४ ) ३३४ ( २८५ ) ३३५ ( २८६ ) ३३६-
( २८७ ) ३३७ ( २८८ ) ३३८ ( २८९ ) ३३९ (२९०३ ४१ ( २९१ ) ३४२ ( २९२ ) ३४३ ( २९३ ) ३४४
( २९४ ) ३४५ ( २९५ ) ३४६ ( २९६ ) ३४७ (२९७) ३९८ ( २९८ ) ३४९ ( २९९ ) ३५० ( ३०० ) ३५१
( ३०१ ) ३५२ ( ३०२ ) ३५३ ( ३०३ ) ३५४ (३०४ ) ३५५ ( ३०५ ) ३५६ ( ३०६ ) ३५९ ( ३०७ ) ३६३
( ३०८ ) ३६४ ( ३०९ ) ३६५ ( ३१० ) ३६६ ( ३११ ) ३६७ ( ३१२ ) ३६८ ( ३१३ ) ३७५ ( ३१४ ) ३६९
३१५ ) ३७० ( ३१६ ) ३७१ ( ३१७ ) ३८३ ( ३१८ ) ३८४ ( ३१९ ) ३७४ ( ३२० ) ३७६ ( ३२१ ) ३७७

३२२ मस्त्याः परं कफकराः
३२३ चिलिचीमस्त्रिदोषकृत् ॥ ६६ ॥
३२४ लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम् ।
३२५ मांसं सद्योहतं शुद्धं वयःस्थं च भजेत्
३२६ त्यजेत् ॥ ६७ ॥
मृतं कृशं भृशं मेद्यं व्याधिवारिविषैर्हतम् ।
३२७ पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः ॥
लघुर्योषिच्चतुष्पात्सु विहङ्गेषु पुनः पुमान् ।
शिरःस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम्
तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत् ।
३२८ शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ॥
मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ।

( ५ ) शाकवर्गः ।

३२९ शाकं पाठाशठीसूषासुनिषण्णसतीनजम् ॥ ७१
त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ।
३३० सुनिषण्णोऽग्निकृद्वृष्यस्तेषु
३३१ राजक्षवः परम् ॥ ७२ ॥
ग्रहण्यर्शोविकारघ्नः
३३२ वर्चोभेदि तु वास्तुकम् ।
३३३ हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनम्
काकमाची सरा स्वर्या
३३४ चाङ्गेर्यम्लाऽग्निदीपनी ।
ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः
३३५ पटोलं सप्तलारिष्टशार्ङ्गेष्टावल्गुजामृताः ।
वेत्राग्रं बृहती वासा कुन्तली तिलपर्णिकाः ॥
मण्डूकपर्णी कर्कोटकारवेल्लकपर्पटाः ।
नाडीकलायगोजिह्वावार्ताकं वनतिक्तकम्
करीरं कुलकं नन्दी कुचैला शकुलादनी ।
कठिल्लं केम्बुकं शीतं सकोशातककर्कशम् ॥
तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ।
३३६ हृद्यं पटोलं कृमिनुत्स्वादुपाकं रुचिप्रदम् ७८
३३७ पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ।
३३८ वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ॥ ७९
३३९ कारवेल्लं सकटुकं दीपनं कफजित्परम् ।
३४० वार्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ॥
सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ।
३४१ करीरमाध्मानकरं कषायं स्वादुतिक्तकम् ॥ ८१
३४२ कोशातकावल्गुजकौ भेदनावग्निदीपनौ ।
३४३ तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ॥
मदपित्तविषास्रघ्नः
३४४ मुञ्जातं वातपित्तजित् ।
स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत्परं ॥
३४५ गुर्वी सरा तु पालक्या
३४६ मदघ्नी चाप्युपोदका ।
३४७ पालक्यावत्स्मृतश्चञ्चुः स तु संग्रहणात्मकः ॥
३४८ विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ।
जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनम्
३४९ चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा।
३५० कूष्माण्डतुम्बकालिङ्गकर्कार्वैर्वारुतिण्डिशम् ॥
तथा त्रपुसचीनाकाचिर्भटं कफवातकृत् ।
भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥ ८
३५१ वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित् ।
बस्तिशुद्धिकरं वृष्यम्
३५२ त्रपुसं त्वतिमूत्रलम् ॥ ८८ ॥
३५३ तुम्बं रूक्षतरं ग्राहि
३५४ कालिङ्गैर्वारुचिर्भटम् ।
बालं पित्तहरं शीतं विद्यात्
३५५ पक्वमतोऽन्यथा ॥
३५६ शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित् ।
रोचनं दीपनं हृद्यमष्ठीलाऽऽनाहनुल्लघु ॥ ९० ॥
३५७ मृणालबिसशालूककुमुदोत्पलकन्दकम् ।
नन्दीमाषककेलूटशृङ्गाटककशेरुकम् ॥ ९१ ॥
क्रौञ्चादनं कलोड्यं च रूक्षं ग्राहि हिमं गुरु ।
३५८ कलम्बनालिकामार्षकुटिञ्जरकुतुम्बकम् ॥ ९२
चिल्लीलट्वाकलोणिकाकुरूटकगवेधुकम् ।
जीवन्तझुञ्झ्वेडगजयवशाकसुवर्चलम् ॥ ९३
आलुकानि च सर्वाणि तथा सूप्यानि
लक्ष्मणम् ।
स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ॥ ९४
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ।
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम्
३५९ लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता
३६० तर्कारीवरणं स्वादु सतिक्तं कफवातजित् ॥
३६१ वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम्
दीपनं भेदनं हन्ति गरशोफकफानिलान् ९७
३६२ दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराःसराः

---

(३२२) ३७९ (३२३) ३८१ (३२४) ३८७–३८८ (३२५) ३८६ (३२६) ३८५ (३२७) ३९१ (३२८) ३९२ (३२९) ३९४ (३३०) ३९५ (३३१) ३९६ (३३२) ३९७ (३३३) ३९८ (३३४) ३९९ (३३५) ४०० (३३६) ४०१ (३३७) ४०२ (३३८) ४०३ (३३९) ४०४ (३४०) ४०५ (३४१) ४०६ (३४२) ४०७. (३४३) ४११ (३४४) ४१२ (३४५) ४१३ (३४६) ४१४ (३४७) ४१५ (३४८) ४१७ (३४९) ४१८ (३५०) ४२० (३५१) ४२१ (३५२) ४२२ (३५३) ४२३ (३५४) ४२४ (३५५) ४२५ (३५६) ४२६ (३५७) ४२७ (३५८) ४२८ (३५९) ४२९ (३६०) ४३० (३६१) ४३१ (३६२) ४३२.

३६३ शतावर्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः॥
३६४ रूक्षो वंशकरीरस्तु विदाही वातपित्तलः।
३६५ पत्तुरो दीपनस्तिक्तः प्लीहार्शः कफवातजित्
३६६ कृमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः
३६७ रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ॥
३६८ गुर्वुष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत् ।
३६९ यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकम् ॥
तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ।
गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ॥१०२
स्वराग्निसादोदावर्तपीनसांश्च
३७० महत्पुनः ।
रसे पाके च कटुकमुष्णवीर्यं त्रिदोषकृत् ॥
गुर्वभिष्यन्दि च
३७१ स्निग्धसिद्धं तदपि वातजित् ।
३७२ वातश्लेष्महरं शुष्कं सर्वम्
३७३ आमं तु दोषलम् ॥ १०४ ॥
३७४ कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ।

## ( ५ ) हरितवर्गः ।

३७५ कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम् ॥ १०५ ॥
फणिज्जार्जकजम्बीरप्रभृति ग्राहि शालनम् ।
विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम् ॥
दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु ।
३७६ हिध्मकासश्रमश्वासपार्श्वरुक्पूतिगन्धहा ।
सुरसः
३७७ सुमुखो नातिविदाही गरशोफहा ।
३७८ आर्द्रिका तिक्तमधुरा मूत्रला न च पित्तकृत्
३७९ लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः ।
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः
भग्नसंधानकृद्बल्यो रक्तपित्तप्रदूषणः ।
किलासकुष्ठगुल्मार्शोमेहकृमिकफाऽनिलान्
सहिध्मपीनसश्वासकासान् हन्ति रसायनम् ।
३८० पलाण्डुस्तद्गुणन्यूनः श्लेष्मलो नाऽतिपित्तलः
कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा ।
३८१ तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न सः
३८२ दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः
विशेषादर्शसां पथ्यः
३८३ भूकन्दस्त्वतिदोषलः ॥११३ ॥
३८४ पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ।
३८५ वरा शाकेषु जीवन्ती सर्षपास्त्ववराः परम् ॥

## ( ६ ) फलवर्गः ।

३८६ द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ।
स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः
निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ।
तृष्णाकासश्रमश्वासस्वरभेदक्षतक्षयान् ॥११६
३८७ उद्रिक्तपित्तान् जयति त्रीन् दोषान् स्वादु दाडिमम् ।
३८८ पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ॥
३८९ सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ।
३९० मोचखर्जूरपनसनालिकेरपरूषकम् ॥ ११८ ॥
आम्राततालकाश्मर्यराजादनमधूकजम् ।
सौवीरबदरांकोलफल्गुश्लेष्मातकोद्भवम् ॥
वातामाभिषुकाक्षोडमुकूलकनिकोचकम् ।
उरुमाणं प्रियालं च बृंहणं गुरु शीतलम् ॥
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ।
स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ॥
३९१ फलं तु पित्तलं तालं सरं
३९२ काश्मर्यजं हिमम् ।
शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ॥
३९३ वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ।
३९४ परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ॥
३९५ प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।
३९६ कोलमज्जा गुणैस्तद्वत्तृट्छर्दिःकासजिच्च सः
३९७ पक्वं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम् ।
दीपनं कफवातघ्नं बालं ग्राह्युभयं हि तत् ॥
३९८ कपित्थमामं कण्ठघ्नं दोषलं दोषघाति तु ।
पक्वं हिध्मावमथुजित्सर्वं ग्राहि विषापहम् ॥
३९९ जाम्बवं गुरु विष्टम्भि शीतलं भृशवातलम् ।
संग्राहि मूत्रशकृतोरकण्ठ्यं कफपित्तनुत् ।
वातपित्तास्रकृद्बालं
४०० बद्धास्थि कफपित्तकृत्
गुर्वाम्रं वातजित्पक्वं स्वाद्वम्लं कफशुक्रकृत् ॥
४०१ वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु
४०२ शम्या गुरूष्णं केशघ्नं रूक्षं
४०३ पीलु तु पित्तलम्
कफवातहरं भेदि प्लीहार्शःकृमिगुल्मनुत् ।
सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित्

---

(३६३) ४१०(३६४) ४३६ (३६५) ४४० (३६६) ४४१ (३६७)४४२ (३६८) ४४३ (३६९) ४४४ (३७०)४४५(३७१) ४४६ (३७२) ४४७ (३७३) ४४८ (३७४) ४४९ (३७५) ४५० (३७६) ४५१ (३७७) ४५२(३७८) ४५३ (३७९) ४५६ (३८०) ४५७ (३८१) (३८२) ४५८ (३८३) ४५९ (३८४) ४६० (३८५) ४६१ (३८६) ४६२ (३८७) ४६३ (३८८) ४६४ (३८९) ४६५ (३९०) ४६६ (३९१) ४७० (३९२) ४७१ (३९३) ४७४ (३९४) ४७५ (३९५) ४७६ (३९६) ४७७ (३९७) ४८९ (३९८) ४७९ (३९९) ४८२ (४००) ४८६ (४०१) ४९० (४०२) ४९३ (४०३) ४९४

४०४ त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित्
बृंहणं मधुरं मांसं वातपित्तहरं गुरु ॥ १३१ ॥
लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ।
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ।
गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत्
भल्लातकस्य त्वङ् मांसं बृंहणं स्वादु शीतलम्
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ।
४०६ स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु।
रुच्यमत्यग्निशमनं
४०७ रुच्यं मधुरमारुकम् ।
पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम्
४०८ द्राक्षा,परूषकं चार्द्रमम्लं पित्तकफप्रदम् ।
गुरूष्णवीर्यं वातघ्नं सरं च करमर्दकम् ॥
४०९ तथाऽम्लं कोलकर्कन्धूलकुचाम्रातमारुकम् ।
ऐरावतं दन्तशठं सतुदं मृगालिण्डिकम् ॥१३
नातिपित्तकरं पक्वं
४१० शुष्कं च करमर्दकम् ।
४११ दीपनं भेदनं शुष्कमम्लीकाकोलयोः फलम्
तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः ।
४१२ फलानामवरं तत्र लकुचं सर्वदोषकृत् ॥ १३९
४१३ हिमानिलोष्णदुर्वातव्याललालादिदूषितम् ।
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ॥ १४०
अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽति च ।
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम्
असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ।
प्रायेण फलमप्येवं तथाऽऽमं बिल्ववर्जितम्

( ७ ) औषधवर्गः ।

४१४ विष्यान्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ।
वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत्
४१५ सैन्धवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत् ।
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ॥
४१६ लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम् ।
कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम् ॥
४१७ ऊर्ध्वाधःकफवातानुलोमनं दीपनं बिडम् ।
विबन्धानाहविष्टम्भशूलगौरवनाशनम् १४६
४१८ विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम् ।
४१९ सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।
४२० कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः ।
४२१ रोमकं लघु
४२२ पांसूत्थं सक्षारं श्लेष्मलं गुरु ॥
४२३ लवणानां प्रयोगे तु सैन्धवादि प्रयोजयेत् ।
२२४ गुल्महृद्ग्रहणीपाण्डुप्लीहानाहगलामयान् ॥
श्वासार्शःकफकासांश्च शमयेद्यवशूकजः ।
४२५ क्षारः सर्वश्च परमं तीक्ष्णोष्णः कृमिजिल्लघुः
पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारणः ।
अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ॥
४२६ हिङ्गु वातकफानाहशूलघ्नं पित्तकोपनम् ।
कटुपाकरसं रुच्यं दीपनं पाचनं लघु ॥ १५२
४२७ कषाया मधुरा पाके रूक्षा विलवणा लघुः ।
दीपनी पाचनी मेध्या वयसः स्थापनी परम्
उष्णवीर्या सराऽऽयुष्या बुद्धीन्द्रियबलप्रदा ।
कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ॥ १५४॥
शिरोऽक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान् ।
सशोषशोफातिसारमेदमोहवमिक्रिमीन् ॥
श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ।
विबन्धं स्रोतसां गुल्ममूरुस्तम्भमरोचकम् ॥
हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान्
४२८ तद्वदामलकं शीतमम्लं पित्तकफापहम् ॥
४२९ कटु पाके हिमं केश्यमक्षमपि च तद्गुणम् ।
४३० इयं रसायनवरा त्रिफलाऽक्ष्यामयापहा ॥१५८
रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ।
४३१ सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम् ॥
पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् ।
४३२ रसे पाके च कटुकं कफघ्नं मरिचं लघु ॥ १६०
४४३ श्लेष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली ।
४३४ सा शुष्का विपरीताऽतः स्निग्धा वृष्या रसे कटुः ॥ १६१
स्वादुपाकाऽनिलश्लेष्मश्वासकासापहा सरा ।
४३५ न तामत्युपयुञ्जीत रसायनविधिं विना ॥
४३६ नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ।
रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित्
०६४ तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ।
स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ॥
४३८ चविका पिप्पलीमूलं मरिचाल्पान्तरं गुणैः ।
४३९ चित्रकोऽग्निसमः पाके शोफार्शःकृमिकुष्ठहा॥
४४० पञ्चकोलकमेतच्च मरिचेन विना स्मृतम् ।
गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम् ॥११६

---

(४०४) ४९६ (४०५) ४९७ (४०६) ४९८ (४०७) ४९९ (४०८) ५०० (४०९) ५०१ (४१०) ५०२ (४११) ५०३ (४१२) ५०४ (४१३) ५०५ (४१४) १०७० (४१५) १०७१ (४१६) १०७२ (४१७) १०७३ (४१८) १०७४ (४१९) १०७५ (४२०) १०७६ (४२१) १०७७ (४२२) १०७८ (४२३) १०७९ (४२४) १०८० (४२५) १०८२ (४२६) ११११ (४२७) १०८३ (४२८) १०८४ (४२९) १०८५-१०८६ (४३०) १०८८ (४३१) १०८९ (४३२) १०९० (४३३) १०९१ (४३४) १०९२ (४३५) १०९३ (४३६) १०९४ (४३७) १०९५ (४३८) १०९६ (४३९) १०९७ (४४०) १०९८

४४१ बिल्वकाश्मर्यतर्कारीपाटलाटिण्टुकैर्महत् ।
जयेत्कषायतिक्तोष्णं पञ्चमूलं कफानिलौ ॥
४४२ ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ।
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ॥
४४३ बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन तु ।
मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ॥
४४४ अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ।
जीवनाख्यं च चक्षुष्यं वृष्यं पित्तानिला-
पहम् ॥ १७० ॥
४४५ तृणाख्यं पित्तजिद्दर्भकासेक्षुशरशालिभिः ।
४४६ शूकशिम्बीजपक्वान्नमांसशाकफलौषधैः ॥ १७१
वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः ।

## अन्नरक्षा सप्तमोऽध्यायः ।

४४७ अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
४४८ राजा राजगृहासन्ने प्राणचार्यं निवेशयेत् ।
सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः ॥ १
अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः ।
योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः
४४९ ओदनो विषवान् सान्द्रो
यात्यविस्राव्यतामिव ।
चिरेण पच्यते पक्वो भवेत्पर्युषितोपमः ॥ ३
मयूरकण्ठतुल्योष्मा मोहमूर्च्छाप्रसेककृत् ।
हीयते वर्णगन्धाद्यैः क्लिद्यते चन्द्रकाचितः ॥
४५० व्यञ्जनान्याशु शुष्यन्ति ध्यामक्काथानि तत्र च
हीनाऽतिरिक्ता विकृता छाया दृश्येत नैव वा
फेनोर्ध्वराजीसीमन्ततन्तुबुद्बुदसम्भवः ।
विच्छिन्नविरसा रागाः खाण्डवाः शाकमामिषम्
४५१ नीला राजी रसे, ताम्रा क्षीरे, दधनि दृश्यते ।
श्यावा,ऽऽपीताऽसिता तक्रे, घृते पानीयसन्निभा
मस्तुनि स्यात्कपोताभा, राजी कृष्णा तुषोदके ।
काली मद्याम्भसोः, क्षौद्रे हरित्तैलेऽरुणोपमा ।
३५२ पाकः फलानामामानां पक्वानां परिकोथनम् ॥८
४५३ द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ।
मृदूनां कठिनानां च भवेत्स्पर्शविपर्ययः ॥ ९ ॥
४५४ माल्यस्य स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः ।
४५५ ध्याममण्डलता वस्त्रे, शदनं तन्तुपक्ष्मणाम् १०
४५६ धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता ।
स्नेहस्पर्शप्रभाहानिः, सप्रभत्वं तु मृण्मये ११
४५७ विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः ।
स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जृम्भते ॥१२
४५८ प्राप्यान्नं सविषं त्वग्निरेकावर्तः स्फुटत्यति ।
शिखिकण्ठाभधूमार्चिरनर्चिर्वोग्रगन्धवान् ॥१३
४५९ म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत्
उत्क्रोशन्ति च दृष्ट्वैतच्छुकदात्यूहसारिकाः ॥ १४
हंसः प्रस्खलति ग्लानिर्जीवं जीवस्य जायते ।
चकोरस्याऽक्षिवैराग्यं क्रौञ्चस्य स्यान्मदोदयः ॥
कपोतपरभृद्दक्षचक्रवाका जहत्यसून् ।
उद्वेगं याति मार्जारः शकृन्मुञ्चति वानरः ॥ १६
हृष्येन्मयूरस्तद्दृष्ट्या मन्दतेजो भवेद्विषम् ।
४६० इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः ॥ १७
यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः ।
४६१ स्पृष्टे तु कण्डुदाहोषाज्वरार्तिस्फोटसुप्तयः ॥ १८
नखरोमच्युतिः शोफः सेकाद्या विषनाशनाः ।
शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ॥ १९
ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ।
४६२ लालाजिह्वौष्ठयोर्जाड्यमूषा चिमिचिमायनम् ॥
दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे ।
सेव्याद्यैस्तत्र गण्डूषाः सर्वं च विषाजिद्धितम् ॥
४६३ आमाशयगते स्वेदमूर्च्छाऽऽध्मानमदभ्रमाः ।
रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ॥ २२ ॥
बिन्दुभिश्चाचयोऽङ्गानां
४६४ पक्वाशयगते पुनः ।
अनेकवर्णं वमति मूत्रयत्यातिसार्यते ॥ २३ ॥
तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसंक्षयः ।
४६५ तयोर्वान्तविरिक्तस्य हरिद्रे कटभीं गुडम् ॥ २४
सिन्दुवारितनिष्पाववाष्पिकाशतपर्विकाः ।
तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ॥२५
नावनाञ्जनपानेषु योजयेद्विषशान्तये ।
४६६ विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ॥२६॥
सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ।
४६७ शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥ २७
न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम् ।
जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ॥

— ० —

(४४१) १०९९ (४४२) ११०० (४४३) ११०१ (४४४) ११०२ (४४५) ११०३ (४४६) ५०६ (४४७) ५५६ (४४८) ५७१ (४४९) ५७४ (४५०) ५७५ (४५१) ५७६ (४५२) ५७७ (४५३) ५७८ (४५४) ५७९ (४५५) ५८० (४५६) ५८१ (४५७) ५८२ (४५८) ५८४ ५८५ (४५९) ५८७ (४६०) (४६१) ५८९ (४६२) ५९० (४६३) ५९१ (४६४) ५९६ (४६५) ५९२ (४६६) ६७६ (४६७) ६७७

४६८ विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ।
४६९ आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ॥ २९ ॥
विरुध्यते सह बिसैर्मूलकेन गुडेन वा ।
४७० विशेषात्पयसा मत्स्या
४७१ मत्स्येष्वपि चिलीचिमः ॥
४७२ विरुद्धमम्लं पयसा सह सर्वं फलं तथा ।
तद्वत्कुलत्थवरककण्ङ्गुवल्लमकुष्ठकाः ॥ ३१ ॥
४७३ भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् ।
४७४ वाराहं श्वाविधा नाद्यात्
४७५ दध्ना पृषतकुक्कुटौ ॥ ३२
४७६ आममांसानि पित्तेन ।
४७७ माषसूपेन मूलकम्
४७८ अविं कुसुम्भशाकेन
४७९ बिसैः सह विरूढकम् ॥३३
४८० माषसूपगुडक्षीरदध्याज्यैर्लाकुचं फलम् ।
४८१ फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ॥ ३४
४८२ कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ।
४८३ सिद्धां वा मत्स्यपचने पचने नागरस्य वा ॥ ३५
सिद्धामन्यत्र वा पात्रे कामात्तामुषितां निशाम् ।
मत्स्यनिस्तलनस्नेहसाधिताः पिप्पलीस्त्यजेत् ॥
४८४ कांस्ये दशाहमुषितं सर्पिः
४८५ उष्णं त्वरुष्करे ।
४८६ भासो विरुध्यते शूल्यः
४८७ कम्पिल्लस्तक्रसाधितः ॥
४८८ ऐकध्यं पायसमधुराक्शराः परिवर्जयेत् ।
४८९ मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ॥ ३८ ॥
एकत्र वा समांशानि विरुध्यन्ते परस्परम् ।
४९० भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ॥
४९१ मधुपुष्करबीजं च मधुमैरेयशार्करम् ।
४९२ मन्थानुपानः क्षैरेयो
४९३ हारिद्रः कटुतैलवान् ॥ ४०
४९४ उपोदकातिसाराय तिलकल्केन साधिता ।
४९५ बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ॥
भृष्टा वराहवसया सैव सद्यो निहन्त्यसून् ।
४९६ तद्वत्तित्तिरिपत्राढ्यगोधालावकपिञ्जलाः ॥ ४२
ऐरण्डेनाग्निना सिद्धास्तत्तैलेन विमूर्छिताः ।
४९७ हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ॥ ४३ ॥
हारिद्रवह्निना सद्यो व्यापादयति जीवितम् ।
भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ॥ ४४

४९८ यत्किञ्चिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ।
विरुद्धं
४९९ शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ॥
द्रव्यैस्तैरेव वा पूर्वं शरीरस्याऽभिसंस्कृतिः ।
५०० व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ।
विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ।
५०१ पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ॥ ४७
निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम् ।
अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा ॥ ४८
सात्म्यासात्म्यविकाराय जायते सहसाऽन्यथा ।
५०२ क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ॥
नाप्नुवन्ति पुनर्भावमप्रकम्प्या भवन्ति च ।
अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम् ॥
अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति ।
५०३ आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितैः ॥
शरीरं धार्यते नित्यमागारमिव धारणैः ।
आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते ॥ ५२ ॥
५०४ निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥
५०५ अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।
सुखायुषी पराकुर्यात्कालरात्रिरिवाऽपरा ॥ ५४ ॥
५०६ रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥
५०७ ग्रीष्मे वायुचयादानरौक्ष्यराम्यल्पभावतः ।
दिवास्वप्नो हितः
५०८ अन्यस्मिन्कफपित्तकरो हि सः ॥
५०९ मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ।
क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः
वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् ।
अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि ॥
धातुसाम्यं तथा ह्येषां श्लेष्मा चाऽङ्गानि पुष्यति
५१० बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाऽहनि ॥
५११ विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ।
५१२ अकालशयनान्मोहज्वरस्तैमित्यपीनसाः ॥ ६० ॥
शिरोरुक्शोफहृल्लासस्रोतोरोधाग्निमन्दताः ।
५१३ तत्रोपवासवमनस्वेदनावनमौषधम् ॥ ६१ ॥
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ।
नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः ६२
५१४ एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात् ।

---

( ४६८ ) ( ४६९ ) ६८७ ( ४७० ) ६८८ ( ४७१ ) ६८९ ( ४७२ ) ६९० ( ४७३ ) ६९१ ( ४७४ ) ६९४ ( ४७५ ) ६९६ ( ४७६ ) ६९५ ( ४७७ ) ७०० ( ४७८ ) ६९७ ( ४७९ ) ७०४ ( ४८० ) ७०५ ( ४८१ ) ७०६ ( ४८२ ) ७०७ ( ४८३ ) ७०८ ( ४८४ ) ७०९ ( ४८५ ) ७१० ( ४८६ ) ७१२ ( ४८७ ) ७११ ( ४८८ ) ७१३ ( ४८९ ) ७१४ ( ४९० ) ७१५ ( ४९१ ) ७१६ ( ४९२ ) ७१८ ( ४९३ ) ७१७ ( ४९४ ) ७१९ ( ४९५ ) ७२० ( ४९६ ) ७२१ ( ४९७ ) ७२२ ( ४९८ ) ७२९ ( ४९९ ) ७३४ ( ५०० ) ७३५ ( ५०१ ) ७३७ ( ५०२ ) ७३८ ( ५०३ ) ७३९ ( ५०४ ) ७४३ ( ५०५ ) ७४४ ( ५०६ ) ७४६ ( ५०७ ) ७४७ ( ५०८ ) ७४८ ( ५०९ ) ७४९ ( ५१० ) ७५० ( ५११ ) ७५१ ( ५१२ ) ७५२ ( ५१३ ) ७५४ ( ५१४ ) ७५५

५१५ निद्रानाशादङ्गमर्दशिरोगौरवजृम्भिकाः ॥ ६३ ॥
जाड्यग्लानिभ्रमापक्तितन्द्रारोगाश्च वातजाः ।
५१६ यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ॥
५१७ असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान्
५१८ शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ॥६५॥
अभ्यङ्गोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ।
कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ॥६६
मनोनुकूला विषयाः कामं निद्रासुखप्रदाः ।
५१९ ब्रह्मचर्यरतेर्ग्राम्यसुखनिःस्पृहचेतसः ॥ ६७ ॥
निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्तते ।
५२० ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम् ॥ ६८
अप्रियामप्रियाचारां दुष्टसङ्कीर्णमेहनाम् ।
अतिस्थूलकृशां सूतां गर्भिणीमन्ययोषितम् ॥
वर्णिनीमन्ययोनिं च गुरुदेवनृपालयम् ।
चैत्यश्मशानाऽयतनचत्वराम्बुचतुष्पथम् ॥७०॥
पर्वाण्यनङ्गं दिवसं शिरोहृदयताडनम् ।
अत्याशितोऽधृतिःक्षुद्वान् दुःस्थिताङ्गःपिपासितः
बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ।
५२१ सेवेत कामतः कामं तृप्तो वाजीकृतो हिमे ॥ ७२
त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः ।
५२२ भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयः ॥ ७३॥
अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ।
५२३ स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः ।
अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ॥७४
५२४ स्नानानुलेपनहिमानिलखण्डखाद्य-
शीताम्बुदुग्धरसयूषसुराप्रसन्नाः ।
सेवेत चानुशयनं विरतौ रतस्य
तस्यैवमाशु वपुषः पुनरेति धाम ॥ ७५ ॥
५२५ श्रुतचारितसमृद्धे कर्मदक्षे दयालौ
भिषजि निरनुबन्धं देहरक्षां निवेश्य ।
भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः
स्वकुशलफलभोगी भूमिपालश्चिरायुः ७६

## मात्राशितीयोऽष्टमोऽध्यायः ।

५२६ अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
५२७ मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका
५२८ मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥१॥
५२९ गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।
मात्रा प्रमाणं निर्दिष्टं सुखं यावद्विजीर्यति ॥२॥
५३० भोजनं हीनमात्रं तु न बलोपचयौजसे ।
सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ॥ ३ ।
५३१ अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत् ।
पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः ।
५३२ आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ।
विष्टम्भयन्तो ऽलसकं
५३३ च्यावयन्तो विषूचिकाम्
अधरोत्तरमार्गाभ्यां सहसैवाजितात्मनः ।
५३४ प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ॥
आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ।
५३५ विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ॥ ७ ॥
सूचीभिरिव गात्राणि विध्यतीति विषूचिका ।
५३६ तत्र शूलभ्रमाऽनाहकम्पस्तम्भादयोऽनिलात् ॥
५३७ पित्ताज्ज्वरातिसारान्तर्दाहतृट्प्रलयादयः ।
५३८ कफाच्छर्द्यङ्गगुरुतावाक्सङ्गष्ठीवनादयः ॥ ९ ॥
५३९ विशेषाद्दुर्बलस्याऽल्पवह्नेर्वेगविधारिणः ।
पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ॥ १० ॥
अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।
शूलादीन्कुरुते तीव्रांश्छर्द्यतीसारवर्जितान् ॥ ११
सोऽलसः
५४० अत्यर्थदुष्टास्तु दोषा दुष्टामबद्धखाः ।
यान्तस्तिर्यक्तनुं सर्वां दण्डवत्स्तम्भयन्ति चेत् ॥
दण्डकालसकं नाम तं त्यजेदाशुकारिणम् ॥
५४१ विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम् ॥
आमदोषं महाघोरं वर्जयेद्विषसंज्ञकम् ।
विषरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः ॥ १४॥
५४२ अथाऽऽममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।
पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ १५
५४३ स्वेदनं फलवर्तिं च मलवातानुलोमनीम् ।
५४४ नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत्
५४५ विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ।
५४६ तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १७ ॥
५४७ तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥
५४८ निहन्यादपि चैतेषां विभ्रमः सहसाऽऽतुरम् ।
५४९ जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे ॥
दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ।
५५० शान्तिरामविकाराणां भवन्ति त्वपतर्पणात् २०

(५१५) ७५६ (५१६) ७५९ (५१७) ७६० (५१८) ७६१ (५१९) ७६२ (५२०) ७६५, ७६८, ७७९–७८० (५२२ ७७८ (५२२) (५२३) (५२४) ७७४ (५२६) ९४३ (५२७) ९४४ (५२८) ९४५ (५२९) ९४७ (५३०) ९५२ (५३१) ९५३ (५३२) ९५४ (५३३) ९५५ (५३४) ९५६ (५३५) ९५७ (५३६) ९५८ (५३७) ९५९ (५३८) ९६० (५३९) ९६१ (५४०) ९६२ (५४१) ९६३ (५४२) ९६६ (५४३) ९६८ (५४४) ९७६ (५४५) ९७७ (५४६) ९८१ (५४७) ९८३ (५४८) ९८४ (५४९) ९६९ (५५०) ९८५

५५१ त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत्।
५५२ तत्राऽल्पे लंघनं पथ्यं
५३५ मध्ये लङ्घनपाचनम् ॥ २१
५५४ प्रभूते शोधनं तद्धि मूलादुन्मूलयेन्मलान् ।
५५५ एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ॥
चिकित्सेत्
५५६ अनुबन्धे तु सति हेतुविपर्ययम् ।
त्यक्त्वा यथायथं वैद्यो युञ्ज्याद्व्याधिविपर्ययम् ॥
तदर्थकारि वा
५५७ पक्वे दोषे त्विद्धे च पावके ।
हितमभ्यञ्जनस्नेहपानबस्त्यादियुक्तितः ॥ २४
५५८ अजीर्णे च कफादामं तत्र शोफोऽक्षिगण्डयोः ।
सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम्॥ २५
५५९ विष्टब्धमनिलाच्छूलविबन्धाध्मानसादकृत् ।
५६० पित्ताद्विदग्धं तृण्मोहभ्रमाम्लोद्गारदाहकृत् ॥
५६१ लङ्घनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम् ।
विदग्धे वमनं यद्वा यथावस्थं हितं भजेत् ॥
५६२ गरीयसो भवेल्लीनादामादेव विलाम्बिका ।
कफवातानुबद्धाऽऽमलिङ्गा तत्समसाधना ॥ २८
५६३ अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः ।
शयीत किञ्चिदेवात्र सर्वश्चानाशितो दिवा ॥
५६४ स्वप्यादजीर्णी
५६५ सञ्जातबुभुक्षोऽद्यान्मितं लघु ।
५६६ विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता ॥ ३०
अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः ।
५६७ न चातिमात्रमेवान्नमामदोषाय केवलम् ॥ ३१
द्विष्टविष्टम्भिदग्धामगुरुरूक्षहिमाशुचि ।
विदाहि शुष्कमत्यम्बुप्लुतं चान्नं न जीर्यति ॥
उपतप्तेन भुक्तं च शोकक्रोधक्षुधादिभिः ।
५६८ मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ॥ ३३
५६९ विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ॥
५७० अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम् ॥
५७१ त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन्सृजन्ति वा ।
५७२ काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः
षड्रसं मधुरप्रायं नातिद्रुतविलम्बितम् ।
स्नातः क्षुद्वान् विविक्तस्थो धौतपादकराननः ॥
तर्पयित्वा पितॄन् देवानतिथीन् बालकान्गुरून्।
प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ॥ ३७
समीक्ष्य सम्यगात्मानमनिन्दन्नब्रुवन् द्रवम् ।
इष्टमिष्टैः सहाश्नीयाच्छुचि भक्तजनाहृतम् ॥

५७३ भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ।
शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३९
५७४ किलाटदधिकूर्चीकाक्षारशुक्तामकमूलकम् ।
कृशशुष्कवराहाविगोमत्स्यमहिषामिषम् ॥
माषनिष्पावशालूकबिसपिष्टविरूढकम् ।
शुष्कशाकानि यवकान् फाणितं च न शीलयेत्
५७५ शीलयेच्छालिगोधूमयवषाष्टिकजाङ्गलम् ।
सुनिषण्णकजीवन्तीबालमूलकवास्तुकम् ॥४२॥
पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ।
घृतदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम् ॥ ४३ ॥
त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ।
स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत् ॥
बिसेक्षुमोचचोचाम्रमोदकोत्कारिकादिकम्।
५७६ अद्यात्तद्द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिरं पुरः॥
५७७ विपरीतमतश्चान्ते
५७८ मध्येऽम्ललवणोत्कटम् ।
५७९ अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥ ४६ ॥
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ।
५८० अनुपानं हिमं वारि यवगोधूमयोर्हितम् ॥ ४७
५८१ दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु च ।
५८२ शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ॥
५८३ सुरा कृशानां पुष्ट्यर्थं
५८४ स्थूलानां तु मधूदकम् ।
५८५ शोषे मांसरसो
५८६ मद्यं मांसे स्वल्पे च पावके ॥
५८७ व्याध्यौषधाध्वभाष्यस्त्रीलङ्घनातपकर्मभिः ।
क्षीणे वृद्धे च बाले च पयः पथ्यं यथाऽमृतम् ॥
५८८ विपरीतं यदन्नस्य गुणैः स्यादविरोधि च ।
अनुपानं समासेन सर्वदा तत्प्रशस्यते ॥ ५१ ॥
५८९ अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढाङ्गताम् ।
अन्नसंघातशैथिल्यविक्लित्तिजरणानि च ॥ ५२
५९० नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ।
गीतभाष्यप्रसङ्गे च स्वरभेदे च तद्धितम् ॥ ५३
५९१ प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुराः ।
पानं त्यजेयुः
५९२ सर्वश्च भाष्याध्वशयनं त्यजेत् ।
पीत्वा भुक्त्वाऽऽतपं वह्निं यानं प्लवनवाहनम्
५९३ प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे
विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।
तथाऽग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ
प्रयुञ्जीताहारं विधिनियमितः कालः स हि मतः

---

( ५५१ ) ९८६ ( ५५२ ) ९८७ ( ५५३ ) ९८८ ( ५५४ ) ९८९ ( ५५५ ) ९९१ ( ५५६ ) ९९२ ( ५५७ ) ९९३ ( ५५८ ) ९९९ ( ५५९ ) १००० ( ५६० ) १००१ ( ५६१ ) १००२ ( ५६२ ) १००३ ( ५६३ ) १००४ ( ५६४ ) ७४९ ( ५६५ ) १००४ ( ५६६ ) ८५० ( ५६७ ) ९६५ ( ५६८ ) ८७२ ( ५६९ ) ८७३ ( ५७० ) ८७५ ( ५७१ ) सु. सू. ४६.५०८ ( ५७२ ) ८५४, ८५७ ( ५७३ ) ९२६ ( ५७४ ) ९२७ ( ५७५ ) ९२८ ( ५७६ ) ८८६ ( ५७७ ) ८८८ ( ५७८ ) ८८७ ( ५७९ ) ९३० ( ५८० ) ८९१ ( ५८१ ) ८९२ ( ५८२ ) ८९९,९०० ( ५८३ ) ९०८ ( ५८४ ) ९०९ ( ५८५ ) ८९५ ( ५८६ ) ९१० ( ५८७ ) ८९४ ( ५८८ ) ९११ ( ५८९ ) ९१२ ( ५९० ) ९१३ ( ५९१ ) ९१६ ( ५९२ ) ९१५ ( ५९३ ) ८५१, ८५२

**पुण्यपत्तनस्थायुर्वेदविद्यालयप्रधानाध्यापक–पण्डितरामचन्द्रशास्त्रिकिञ्जवडेकरेण प्रतिसंस्कृते प्रभाटिप्पण्या च परिष्कृते**

# अष्टाङ्गसङ्ग्रहसूत्रस्थाने

## स्वस्थवृत्तपरिशिष्टम् ।

### स्वस्थाधिकारः १

**( वृन्दमाधवविरचितः सटीकः )**

स्वास्थ्यरक्षणस्योपादेयतामाह—

**१–धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ॥**
**रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च (1) ॥१॥**

१–आरोग्यं धातुसाम्यम् । **मूलमुत्तममिति** । प्रधानं कारणम् । आरोग्ये सति धर्माद्यनुष्ठानसाधर्म्यात् । **तस्येति** । आरोग्यस्य । आरोग्यापहारश्च रोगाणामुत्पाद एव । उत्पन्ना रोगा अपगता आरोग्यम् । **श्रेयसो जीवितस्य चेति** । श्रेयो यज्जीवितं सुखहेतुतया हितत्वेन तस्य जीवितस्यापहर्तारः । अश्रेयो यज्जीवितं पुनर्दुःखहेतुतयाऽहितत्वेन चानुपादेयमतस्तदपहारो नोक्तः । किंवा श्रेयसोऽभ्युदयस्य जीवितस्य वाऽपहन्तार इति व्याख्येयम् ॥ १ ॥

**२–तस्मादात्मवता नित्यमाहाराचारभेषजम् ॥**
**धीमता तदनुष्ठेयं स्वास्थ्यं येनानुवर्तते (2) ॥२॥**

२–सुगमम् ॥ २ ॥

स्वस्थ एव कथं ज्ञेय इत्याह—

**३–समदोषः समाग्निश्च समधातुमलक्रियः ॥**
**प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते (3) ॥३॥**

३–समा अक्षीणवृद्धा दोषा यस्य स समदोषः । समदोषत्वं यद्यपि तत्त्वहोरात्राहारावस्थाकृतं तद्दोषवैषम्यस्य नित्यानुगतत्वान्न संभवति तथाऽप्यल्पत्वेनाव्यपदेशादिह व्यपदेश्यदोषवैषम्यविरहेण समदोषत्वं ग्राह्यम् । अत एव स्वस्थ इत्यभिधीयत इत्युक्तम् । इत्थंभूतो व्यपदेशश्च दोषवैषम्यवान्स्वस्थो गृह्यत इत्यर्थः । किंवा, ऋत्वादिजं दोषवैषम्यमनागताबाधप्रतिषेधः । स्वस्थवृत्तं च यथा वा प्रयुञ्जानस्य न भवत्येव । अन्यथा तस्य वैयर्थ्यं स्यात् । स्व आत्मनि प्रकृतौ स्वभावे च तिष्ठतीति स्वस्थः । समदोषत्वमेव कुतो ज्ञायत इत्याह–**समाग्निश्च समधातुमलक्रिय इति** । (4) धातुशब्देन चेहोपधातूनामपि (5) ग्रहणम् । क्रियाग्रहणमिह समक्रिययैव धातुमलानां (6) परोक्षाणां प्रायः साम्यं गम्यत इति सूचनार्थम् । अग्न्यादिसमतयैव दोषाः समा लक्ष्यन्ते । समाग्नित्वाद्यप्यन्तर्हितार्थत्वेन दुर्विज्ञानं कथं ज्ञेयमित्याह— **प्रसन्नात्मेन्द्रियमना इति** । अत्राऽऽत्मा संसारी ग्राह्य इति परमात्मनो निर्विकारत्वात्समुदायोऽन्यपदार्थः । आत्मादिप्रसन्नता च दुःखरूपाग्न्यादिवैषम्यविरहे सति भवति । आत्मादिप्रसन्नता स्वात्मनि व्यक्तैव परात्मनि पश्चादवगन्तव्या । आत्मादित्रितयाभिधानं च त्रिभिरेव मिलितैर्न दुःखताज्ञानरूपं प्रसादयते । यदुक्तम्—आत्मज्ञः करणैर्योगी ज्ञानं तस्य प्रवर्तत इति । अत्र करणैरिति ज्ञातृमनःसाहितैरिन्द्रियार्थैः । अनेन च व्याख्याक्रमेण यदुच्यते समदोषत्वेनैव लब्धमग्न्यादिसाम्यं तत्किं पुनरुच्यत इति वाक्यं तन्नावतरति । एतेन प्रसन्नात्मेन्द्रियमनस्त्वमेव स्वस्थलक्षणं समदोषत्वादि **वैद्यकसिद्धान्ते** यदुक्तत्वेन तत्परिकरतयाऽभिहितमिति प्रयुज्यते । **अन्ये** त्वाहुः—समदोषत्वमेव स्वस्थलक्षणं समदोषत्वेनैव समाग्नित्वादिविशेषणानां लब्धानां यत्पुनरभिधानं तदग्निधातुमलात्ममनइन्द्रियाणां प्रतिपत्त्यपेक्षचिकित्साविशेषसूचनार्थम् । तेनाग्न्यपेक्षया मात्रावल्लघ्वन्नोपयोगो गुर्वतिमात्रपरित्यागश्च सूचितः । तथा रसादिदुष्ट्यपेक्षया द्रव्यप्रभावनियतरसादिवृद्धिविधिरात्महितपुष्पाभिधानं मनस्करक्षीरघृतादिप्रयोगस्तथेन्द्रियहितचक्षुष्यादिविधिश्च सूचितो भवतीति । एतत्तु नातिमनोहरं लक्षणवसरानुपयुक्तत्वात् । शास्त्रे च बहुधा प्रतिपादितत्वादिति ।

अथ **सोमटिप्पणव्याख्या** —— दोषादिसाम्यकार्यभूतं स्वास्थ्यमाह—**समदोष इत्यादि** । ननु द्विविधेऽपि काले नित्यदोषचयाद्यनुबन्धात्कथं समदोषत्वं नित्यमेवाऽऽह्निके प्रातः कफः प्रकुप्यति मध्याह्ने पित्तमित्यादि । आर्तवेऽपि हेमन्ते कफश्चीयते वसन्ते च कुप्यतीत्यादि । आवास्थिके च काले बाल्ये विवर्धते श्लेष्मेत्याद्युक्तत्वात् । सत्यम् । दोषचयादेरल्पत्वादतद्व्यपदेश एकतण्डुलाभ्यवहारेऽनशनव्यपदेशवत् । दोषसाम्येनैवाग्न्यादिसाम्यं लब्धं तत्किं पृथगभिधानेनेति चेत् । अत्रोच्यते । न दोषैरेव समाग्न्यादयो भवन्ति पृथक्चिकित्सितत्वात् । तथा हि सर्पिरजापयश्च पित्तहरमप्यग्निं वर्धयति । **श्रीमान्माधवः** प्राह—

लब्धाश्चे समदोषत्वे समाग्नित्वादयस्तदा
पृथगुक्ताः किमर्थं ते तत्किमेतन्निरर्थकम्

समाधत्ते च—

दोषेभ्यस्ते यतो भिन्नाः पृथगुक्ता अतस्तु ते । इति

अनेन प्रत्यक्षेण लिङ्गेन दोषादिसाम्यमनुमीयते

---

1 च. सू. १. १५–१६. 2 च. सू. ५. १३. 3 सु. सू. १५. ४४;–उ. ६४. ३. 4 रसासृङ्मांसमेदास्थिमज्जशुक्राणि धातवः । 5 स्तन्यं रजो वसा स्वेदो दन्ताः केशास्तथैव च । ओजश्च सप्तधातूनां क्रमात्सप्तोपधातवः ॥ 6 कफः पित्तं मलाः खेषु प्रस्वेदो नखरोम च । स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः ॥

**समधातुमलक्रिय इति** । समा धातूनां मलानां क्रिया च यस्य। क्रिया वायोः प्रस्पन्दनादिकर्म(1)पित्तस्य पक्त्यादि(2) कफस्य संश्लेषणादि(3)रसादीनां प्रणिनादि (4)पुरीषादीनामुपस्तम्भादि(5)यावदोजसः स्थिरोपचयादि (6)।अथवा समा धातवः समा मलाः समाः क्रियाश्च । तत्र क्रिया कायवाङ्मानसी चेष्टा । प्रसन्नान्यात्मेन्द्रियमनांसि यस्य स तथा। आत्मशब्देन देहोऽभिप्रेतः केवलस्याऽऽत्मनो निर्विकारत्वात्। कर्मेन्द्रियाणां बुद्धीन्द्रियाणां च संप्रति स्वविषयग्रहणम् । मनस्त्विन्द्रियानुग्राहकम् । ननु समदोषवचनेनैव समाग्नित्वं लभ्यते दोषदुष्टिनान्तरीयकत्वात् । अग्निदुष्टेन समधातुमलक्रियावचनमप्यनर्थकम् । धातूनां दोषा एव दुष्टा दूषयितारः । मलानामपि सङ्गोत्सर्गौ यथाकालं दोषसाम्यवचनेनैव । एवमात्मादिप्रसन्नवचनेनाप्यलम् । आत्माऽत्रापि मते देहः । अन्ये कर्मात्मा बद्धः पुरुष इत्याहुः । तस्य निर्विकारस्यापि शरीरगुणदोषाभ्यां पटुत्वापटुत्वमाचार्यैर्बहुधोक्तम् । स च दोषधातुमलसंघातः । न च तद्व्यतिरिक्तेनान्यानीन्द्रियाणि । अथ व्यतिरिक्तानि । तथाऽप्याश्रयदुष्टिनान्तरीयकत्वात्तद्विकारस्य कुड्यविकारे तदाश्रितचित्रविकारवत् । मनोग्रहणमपि न कर्तव्यं तस्यापीन्द्रियत्वात् । अथवा मनःप्रसत्त्यैवेन्द्रियप्रसादो विपर्यये तत्प्रसादाभावात् । तस्मादसांप्रतमेव तल्लक्षणं समदोषवचनमेवास्तु । अथवा तदपि न वक्तव्यं वैषम्यहेतुसंतानस्याऽऽहोरात्रिकस्याऽऽर्तवस्य च नित्यानुपक्तत्वात् । अत्र समाधीयते–यथा हि वैषम्यहेतुसंतानस्य सदाऽनुषक्तिस्तथा साम्यहेतुविध्युपन्यासोऽपि । आहोरात्रिकस्याऽऽर्तवस्य चानागताबाधप्रतिषेधनीये (7) ऋतुचर्याध्याये च ( 8 ) साम्यहेतुविधेरुक्तत्वात् । यच्चोक्तं समदोषवचनेनैव समाग्नित्वं लभ्यते तन्न, पित्तस्य व्यतिरिक्त एवाग्निः, तीक्ष्णः पित्तेनेति (9)वचनात् । एतच्च व्रणप्रश्ने व्याख्यास्यामः (10) । लब्धेऽपि हि दोषसाम्यवचनेन समाग्नित्वे पुनर्वचनमुभयोरग्निदोषयोरन्योन्यानुविधानख्यात्यर्थम् । तथा च—

शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ । अपि च,
विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा ।
विषमो वातजान्रोगांस्तीक्ष्णः पित्तसमुद्भवान् ।
मन्दस्तु कुरुते वह्निर्विकारान्कफसंभवान् ( 9 ) ॥

एवमग्निदोषयोरन्योन्यानुविधायित्वम् । न चात्रेतरेतराश्रयो दोषः, तयोर्हि परस्परोपकारकोपकार्यत्वात् । यच्चोक्तं समधातुमलक्रियावचनमप्यनर्थकं तदप्यसमीक्ष्योक्तम् ।

यतोऽत्रापि पूर्व एव परीहारः यथा दोषाग्न्योः परस्परानुविधायित्वं तथा दोषाणां धातुमलानां च परस्परानुविधायित्वमेव । अपि च, न केवलं दोषदुष्ट्यैव धातुमलानां क्षयवृद्धी, अपि तु क्रियातो द्रव्यतोऽपि भवत इति हेत्वन्तरमाहारविहारौ । यदप्युक्तमात्मादिप्रसादवचनेनाप्यलम् । मैवं वादीः । आत्मेन्द्रियमनसामप्रसत्तिर्वाताद्विकृतमन्तरेणापि भवति । करणानामप्रसत्तिनिमित्तं हि शारीरा मानसाश्च दोषाः । तथा स्वविषयाणां शब्दादीनामयोगातियोगमिथ्यायोगाश्च । तदुक्तम्—

कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाऽति च ।
द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः (11)॥

अपि च–कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकाः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् (12)॥

तथा मनसोऽपीन्द्रियाणां च पृथग्युगपच्च विकाराश्रयत्वम्। तदुक्तम्—"धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् (13) चरकेऽपि च देहेन्द्रियमनस्तापीति । (14) एतदुक्तं भवति-दोषवैषम्यमप्यग्न्यादीनां वैषम्यहेतुरात्मेन्द्रियमनसां वाऽप्रसत्तिहेतुः । तथा परेभ्योऽपि कारणेभ्यो भवति । यथा हि कुड्यविकारेऽपि चित्रविकारः । तथा कुड्यविकाराभावेऽपि वृष्टितुषारधूमादिकारणेभ्योऽपि तद्विकारोत्पत्तिरिति सर्वं सूक्तं समदोष इत्यादिकम् । अथवा क्रमप्रतिपादकमिदं वाक्यम् । तत्रायमर्थः । नामी दोषादयो युगपत्साम्येऽवस्थापयितुमुल्लङ्घ्य क्रमं शक्यन्ते । तत्रायं क्रमः । प्राग्दोषाः शमनेन शोधनेन वा समाः कार्याः । समैश्च तैरग्निरपि समः शक्यो विधातुम् । समेऽग्नौ च रसादीनां मलानां क्रियाणां च समत्वं सुखसाध्यमेवेति साम्ये सर्वेषां दोषादीनामापादिते प्रसन्नात्मेन्द्रियमनस्त्वं फलं स्वास्थ्यं च सम्पद्यत इति ॥ ३ ॥

आरोग्यव्याधी काबुच्येते इत्याह—

**४–दोषाणां साम्यमारोग्यं वैषम्यं व्याधिरुच्यते** (15)

४–दोषाणांवातादीनां साम्यं स्वरूपादप्रच्युतिः समभाव आरोग्यं स्वास्थ्यमिति यावत् । दोषाणां स्वप्रमाणादेकस्य द्वयोस्त्रयाणां वा वृद्धिः क्षयो वा व्याधिरुच्यते । वैषम्यं विषमता **वैषम्यं व्याधिरिति** । दोषाणां वैषम्येण हेतुना जातत्वाद्वैषम्यं व्याधिरुच्यते । वैषम्यमेव वा व्याधिः । अजनितव्याधेरपि वैषम्यस्य बाधितत्वात् । वैषम्यजातेष्वपि रसादिषु वैषम्यरूपताऽस्त्येव । तथा स्वमानक्षीणश्च दोषो न विकारं जनयति । क्षीणलक्षणं तु वैषम्यमेव जनयतीति ४

कैश्चिद्वृद्धिः समानैरित्यादिशमनं च यथाक्रममित्यन्तो ग्रन्थः कैश्चिद्ग्रन्थमध्ये पठ्यते तस्मान्मयाऽपि व्याख्यायते–

**५–वृद्धिः समानैः सर्वेषां प्रशमस्तु विपर्ययैः** (16) ४

५–सर्वेषां दोषधातुमलानां समानैस्तुल्यसद्भावैर्वृद्धिः स्वप्रमाणाधिक्यं विपर्ययैः प्रशमः । तथा चाऽऽहुः–

सर्वेषां सर्वदा वृद्धिस्तुल्यद्रव्यगुणक्रियैः।
भावैर्भवति भावानां विपरीतैर्विपर्ययः ॥ (17)

द्रव्यतो यथोक्तम् (17) रक्तमाप्याय्यते रक्तेन,मांसं मांसेन, मेदो मेदसा, अस्थि अस्थ्ना, मज्जा मज्ज्ञा, शुक्रं शुक्रेण, तथा

1 सु. सू. १५. ३.(१) 2 सु. सू. १५. ३. (२) 3 सु. सू. १५. ४. 4 सु. सू. १५. ५. 5 सु. सू. १५. ६. 6 सु. सू. १५. २२. 7 सु. चि. २४. 8 सु. सू. ६;–उ. ६४. 9 सु. सू. ३५. २५. 10 सु. सू. २१. 11 च. सू. १. ५४. 12 अ. सं. सू. २९. 13 अ. सं. सू. ३७. 14 च. चि. ३. ४. 15 च. सू. ९. ४. सु. सू. १. २३. 16 च. सू. १. ४.–शा. ६.९–११. 17 च. शा. ६.१०

गर्भं आमगर्भेण । तत्र रक्तेन रक्तमित्युभयमप्यौदकमांसं मांसेनेति पार्थिवम्। तथा सलिलात्मकं पयस्तदात्मकमेव श्लेष्माणमभिवर्धयति 18, तद्वत्क्षीराज्जातं घृतं 19 शुक्रम्। तथा जीवन्तिकाकोल्यादयः सोमात्मानो द्रव्यविशेषाः सौम्यधातवेककारणानि स्नेहबलपुंस्त्वौजांसि 20; मरिचकोलभल्लातकादयो बुद्धिमेधाग्न्यादीन्संवर्धयन्ति 21. गुणतश्चोचमोचखर्जूराणि प्राथिवानि22,द्रव्यतो निर्दिष्टान्यपि श्लेष्माणमुदकात्मकम भिवर्धयन्ति स्निग्धगुरुशीतादिगुणसामान्यात्। कर्मापि त्रिविधं कायवाङ्मनोव्यापारात्मकम्। तत्र कायिकं धावनलङ्घनप्लवनादीनि 23,चलत्वसामान्याद्वायोर्वृद्धये। वाचिकानि भाष्याध्ययनगेयादि23,मानसं मनोव्यापारश्चिन्ताकामशोकभयानि, तान्यपि मनसः क्षोभणहेतुत्वाद्वायोर्वद्धिकराणि23। तथा सन्तापकत्वसामान्यात्क्रोधेर्ष्यादि पित्तस्य 24। स्वप्नालस्यशय्यासुखादीनि स्थैर्यसामान्यात्कफस्येति 25 । विशेषस्तु क्षयाय। यथाऽऽह—द्रव्यतो गवेधुकाः कर्शनीयानाम्। तत्र वाय्वात्मिकया गवेधुकया पार्थिवानां मांसादीनां कशिमा क्रियते 26। तथा तैजसेन क्षारेण श्लेष्मणः 27 । गुणतो यथा आरनालमौदकं श्लेष्माणं तद्विपरीतैर्लघुरूक्षोष्णतीक्ष्णविशदगुणैः क्षपयति । कर्मतो निद्रालस्यसौमनस्यानि सपरिस्पन्दं वातमपरिस्पन्दस्वभावतयाऽपचिन्वन्ति । तथा परिस्पन्दरूपाश्चिन्ताव्यवायव्यायामा मन्दपरिस्पन्दवैपरीत्यात्कफमिति ॥ ४ ॥

सम्प्रति साममललिङ्गमाह—

**६–स्रोतोरोधबलभ्रंशगौरवानिलमूढताः ॥**
**आलस्यापक्तिनिष्ठेवमलसङ्गारुचिक्लमाः ॥**
**लिङ्गं मलानां सामानां निरामाणां विपर्ययाः ॥५**

स्रोतसो रोधः । बलस्य भ्रंशो हानिर्बलभ्रंशः । गौरवं गुरुत्वम् । वायोर्मूढता सम्यगसञ्चारः । आलस्यं तन्द्रा । अपक्तिराहारस्यापाकः । निष्ठेवो मुखस्रावः । मलस्य पुरीषादेः सङ्गः । अरुचिरन्नानभिलाषः । क्लमो ग्लानिः । इत्येतत्सामानां मलानां लिङ्गं लक्षणम् । निरामाणां विपर्ययोऽस्माद्वैपरीत्यं स्रोतःशुद्ध्यादिरूपम ॥ ५ ॥

आमलक्षणमाह—

**७–ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ॥**
**दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ ६ ॥**

ऊष्मणो रसाग्नेः । अल्पबलत्वेन दौर्बल्येन । धातुं न दोषं मलं वा । आद्यं, न रक्तादिकम् । रसं न रसत्वात्प्रच्युतं रक्तत्वमप्राप्तमपाचितमामं प्रचक्षते वदन्त्याचार्याः । किम्भूतं रसम्, आमाशयगतं तथा दुष्टं वाताद्यनुदूषितम् ६

सामत्वं व्याचष्टे—

**८–आमेन तेन सम्पृक्ता दोषा दूष्याश्च दूषिताः ॥**
**सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥ ७**

तेन पूर्वोक्तलक्षणेनाऽऽमेन सम्पृक्ताः संयुक्ता दोषा दूष्याश्च रसादयः । कीदृशा दूषितास्तैर्वातादिभिः । सह, आमेन सामा इत्युपदिश्यन्ते तत्र तत्र प्रदेशे भण्यन्ते । ये च रोगा ज्वरादयः सामैर्दोषैर्धातुभिश्च मलैश्च जनिताः सामा उच्यन्ते । यथा'सामे तीव्ररुजि ज्वरे' इत्यादि ॥७॥

**९–वायुः सामो विबन्धाग्निसादस्तम्भान्त्रकूजनैः ॥**
**वेदनाशोथनिस्तोदैः क्रमशोऽङ्गानि पीडयन् ॥ ८**
**विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम् ॥**
**स्नेहाद्यैर्वृद्धिमायाति सूर्यमेघोदये निशि ॥९॥**

सुगमम् ॥ ८ ॥ ९ ॥

**१०–निरामो विशदो रूक्षो निर्विबन्धोऽल्पवेदनः ॥**
**विपरीतगुणैः शान्तिं स्निग्धैर्याति विशेषतः ॥१०**

सुगमम् ॥ १० ॥

**११–दुर्गन्धि हरितं श्यावं पित्तमम्लं स्थिरं गुरु ॥**
**अम्लिकाकण्ठहृद्दाहकरं सामं विनिर्दिशेत् ॥११॥**
**१२–आताम्रपीतमत्युष्णं रसे कटुकमस्थिरम् ॥**
**पक्वं विगन्धि विज्ञेयं रुचिपक्तिबलप्रदम् ॥१२॥**
**१३–आविलस्तन्तुलः स्त्यानः कण्ठदेशेऽवतिष्ठते ॥**
**सामो बलासो दुर्गन्धः क्षुदुद्गारविघातकृत् १३॥**
**१४–फेनवान्पिण्डितः पाण्डुर्निःसारोऽगन्ध एव च ॥**
**पक्वः स एव विज्ञेयश्छेदवान्वक्त्रशुद्धिकृत् ॥१४**
**१५–पटुतिक्तककट्वम्लस्वादुतिक्तकमृष्टकाः ॥**
**कषायश्च कषायश्च क्रमात्तेषां त्रयस्त्रयः ॥१५॥**
**१६–आमेषु पच्यमानेषु पक्वेष्वप्यनिलादिषु ॥**
**पाचनं पाकसमकृच्छमनं च यथाक्रमम् ॥ १६ ॥**

सुगमम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

वातादीनां साम्यमारोग्यं वैषम्यं च रोगं प्रतिपाद्य तेषां लक्षणं च संक्षेपादाह—

**१७–रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः॥**
**विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ १७ ॥**

वायोरग्रेऽभिधानं प्राधान्यात्। प्राधान्यं चाऽऽशु भूरिदारुणविकारकारित्वात् 28। वातमनु पित्तं प्रधानं देहमूलभूताग्निहेतुत्वात्। वैशेषिकेऽनुष्णाशीतो वायुरुक्तः। वैद्यके तु शीतेन वृद्धेरुष्णेन प्रशमाच्च शीतोऽङ्गीकृतः। सूक्ष्मः सूक्ष्ममार्गानुसारी । विशदोऽपिच्छिलः । विपरीतगुणैरिति । गुणशब्दोऽत्र धर्मवाची, तेन रसवीर्यविपाकप्रभावा अपि विपरीता गृह्यन्ते। एवं पित्ते श्लेष्माणि च व्याख्येयम्। संप्रशाम्यति सम्यक्शीघ्रं शाम्यति ।

अथेशानदेवव्याख्या—इदानीं वातादीनां पृथक्त्वज्ञापकं लक्षणमुच्यते—रूक्षः शीतो लघुरित्यादि।

---

18 अ. सं. सू. २०२. 19 अ. सं. सू. २१८. 20 अ. सं. सू. ४१८; च. सू. ४. ९ (१). 21 अ. सं. सू. १०९०, १०९८, ४९७. 22 अ. सं. सू. ४६६ चोचम्=नारिकेलफलम् इति हेमाद्रिः अ. हृ. सू. ३. ३१. 23 अ. सं. नि. २६. 24 अ. सं. नि. २७. 25 अ. सं. नि. २८ 26 अ. सं. सू. १२६९. 27 सु. सू. ११. ५. 28 सु. नि. १. ९.

रूक्षादीनामसमासकरणादनुक्ता अपि वातगुणा दारुणादयो लभ्यन्ते । दारुणादीनां च साक्षादपाठाद्रूक्षादीनां प्राधान्यं दर्शयति । स एवं गुणो वायुः प्रकुपितो विपरीतगुणैर्द्रव्यैः प्रशाम्यति । विपरीता गुणा येषां तानि विपरीतगुणानि स्निग्धोष्णगुरुस्थूलस्थिरपिच्छिलमृदूनि तैर्विपरीतगुणैः । कैर्द्रव्यैः सम्यक्शीघ्रं च शाम्यति सम्प्रशाम्यति । अनेन च सम्प्रशब्दप्रयोगेण विपरीतगुणभूयिष्ठैरपि द्रव्यैः शाम्यति न तु तथेति ज्ञापयति । अत्र चोदयन्ति-वायोः शीतो गुणो नोपपद्यते योगवाहित्वात् ।

वक्ष्यति-"योगवाहः परं वायुः संयोगादुभयार्थकृत्॥29
दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयात्॥"

यस्य च कफसंयोगाच्छैत्यं पित्तसंयोगाचौष्ण्यं जायते स त्वयमनुष्णाशीत उक्तो भवति । यो हि शीतः स स्वत एव शीतं करोति न संयोगमपेक्षते कफवत् । पित्तसंयोगाच न दाहं करोति कफवदेव । उत मन्यसे स्वभावेन शीतो वायुः तस्य कफसंस्पर्शादधिकं शैत्यमुदकस्येव हिमसम्पर्कात् । ततश्चाधिकशीतं करोतीत्यर्थप्रदर्शनार्थं शीतकृत्सोमसंश्रयादित्युक्तम् । एवं सति कफस्यापि योगवाहत्वं प्राप्नोति तस्मात्तस्यापि वायुसंसर्गादधिकं शैत्यं भवति शैत्यादधिकं शीतं करोति । अथैवं मन्यसे यः स्वं स्वभावं त्यक्त्वा येन युज्यते तत्स्वभावं भजते स योगवाह उच्यते । यथा पिप्पलीमध्वादि । एवं सति यत्र पिप्पल्यादीनां प्रयोग उक्तः स निष्प्रयोजनः । यस्मात्पिप्पल्याद्यन्तरेणैव तदौषधं द्विकार्यकरणे शक्तं, पिप्पल्यादीनि तत्र किमधिकं करिष्यन्ति । अत्रोच्यते-स्वभावेनैव शीतो वायुः केवलस्यापि कुपितस्य शीतकरणाच्छ्लेष्मवत् । यत्पुनः शीतकृत्सोमसंश्रयादित्यत्र शीतत्वं वायावाम्नातं तदेवमर्थं वातश्लेष्मभ्यां शीते शीतवेपथुव्याधौ कथं नाम श्लेष्मण एव चिकित्सितं स्यान्न वायोरिति । अथवा श्लेष्मसंयोगाद्वायुः स्वकं शैत्यं मुक्त्वा श्लेष्मणो यच्छैत्यं तद्भजते योगवाहित्वात्पित्तसंयोगात्स्वशीतत्यागाद्दाहकरणवत् । तस्माच श्लैष्मिकमेव चिकित्सितमुत वाऽनुष्णाशीत एव वायुः । तस्य तु शीतो गुणः कार्यार्थमुक्तः । कथं नामोष्णेनास्योपशमः स्यात् । यद्येवं तत्केवलो वायुः कुपितः कथं शीतं जनयति । ब्रूमः, प्रभावात्सलिलवदिति ॥ १७ ॥

पित्तलक्षणमाह—

**१८-सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु ॥**
**विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥१८॥**

सस्नेहमितीषत्स्नेहम् । सस्नेहमम्लरसत्वं च पित्तस्य तेजोम्बुबाहुल्यादुचितमेव । सुश्रुतस्तु-अविदग्धस्य कटुरसत्वमेव सामतया विदग्धस्य त्वम्लत्वमेवेच्छति । सस्नेहत्वं द्रवत्वेन सुश्रुतेऽपि लभ्यते । तथा च सुश्रुतः— 30

" पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च ॥
उष्णं कटु सरं चैव विदग्धं चाम्लमेव च " इति ॥

अस्यार्थः । तीक्ष्णं राजिकामरिचादिवत् । पूति विस्रगन्धि । नीलं सामावस्थायां पीतं निरामावस्थायाम् । कटुरसं प्रकृतिस्थम् । विदग्धं चाम्लविरुद्धपाकोपपन्नं पुनरम्लरसं स्यात् । विदग्धाजीर्णसंसृष्टमम्लरसं भवतीत्यन्ये । विदग्धं पित्तमम्लपित्तं रोगविशेष इति केचित् । द्रवस्थाने सरामिति पाठान्तरम् । नन्वाग्नेयत्वात्पित्तस्यामूर्तत्वाच वायोः पाकजननत्वाभावात्का विदग्धमानता । सत्यम्, परमार्थतो न वातादीनां पाकः पाकव्यपदेशश्चैषामामापगमात्तदन्वितत्वादामा इति तदपगमात्पक्वा, इत्युच्यन्ते । यद्वा विदग्धाजीर्णसंश्लेषात्पित्तमिदमम्लं सम्पद्यते । इति सोमटिप्पणात् ।

अथेशानदेवव्याख्या—सस्नेहमुष्णमित्यादि । तत्र सस्नेहमीषत्स्नेहमित्यर्थः । यथा-'सतिक्ता यासशर्करा' इति 31 । सरमित्यधः प्रवर्तते न स्थिरमास्ते । यद्येवं तत्कथं सरणेन पित्तस्योपशमो भवति । सरविपरीतेन स्थिरेण तु पित्तोपशमो युक्तः । ' विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ' इति वचनात् । ब्रूमः । न विरेचनं पित्तमभ्यन्तर एव पाचनवत्क्षपयित्वा जयति किन्तु बहिरेव निष्कासयत्येवमर्थं इति । अथवा सरेण विरेचनेन सामान्यात्पित्तमतिसरं क्रियते ततः प्रबले सरत्वे स्वयं देहान्निर्गच्छति । यदा पुनरतीसारादिष्वतिसरत्वं पित्तस्य जायते यदा वा स्वस्थानमस्थितं शमनीयावस्थं पित्तं भवति, तदाऽस्य सरविपरीतेन स्थिरेणैवोपशमो भवतीत्याह । यथा-कटवम्लं पित्तं विपरीतगुणत्वान्मधुरतिक्तकषायैः शाम्यति, एवं लवणेनापि कस्मान्न शाम्यति । तदप्यस्य विपरीतं पित्तलवणस्याभावात् । ब्रूमः । न, औष्ण्यात्तत्तुल्यत्वात् । पित्तमुष्णं लवणमप्युष्णम् । अतः सत्यपि रसविपरीतत्वे तुल्येनोष्णगुणेन लवणं पित्तमभिवर्धयति । तद्यथा । प्रसहादयः सत्यपि माधुर्ये पित्तं वर्धयन्त्युष्णवीर्यत्वात् । यत्तु लवणत्वेऽपि नोष्णं भवति तच्छमयति । यथा सैन्धवम् । तद्धि त्रिदोषघ्नं पठ्यत इति 32 । एवं श्लेष्माऽप्यम्ललवणाभ्यां कटुतिक्तकषायवद्विपरीताभ्यां स्निग्धतुल्यत्वान्न शाम्यति यत्त्वम्लत्वेऽपि न स्निग्धं तच्छमयत्येव श्लेष्माणं यथाऽऽमलकमिति ॥ १८ ॥

**१९-गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ॥**
**श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥१९॥**

विपरीतगुणैः श्लेष्मा प्रशाम्यतीति वक्तव्ये यतः श्लेष्मणो

---

29 च. चि. ३. ३८-३९. 30 सु. सू. २१. ११. 31 अ. सं. सू. २३१. 32 अ. सं. सू.

गुणानां ( गुरुस्निग्धादीनां ) प्रतिपादनार्थम् । ... ...
अथेशानव्याख्या—गुरुशीतेत्यादि । आह श्लेष्मणो गुणा विपरीतगुणैः प्रशमं यान्तीति कस्मादर्थितं न तु पूर्ववद्विपरीतगुणैर्द्रव्यैः श्लेष्मा शाम्यतीति । उच्यते । विशेषोपलब्ध्यर्थं गुणवृद्ध्या गुणिनो वृद्धिर्गुणोपशमाच्च शम इति ॥ १९ ॥

—०—

२०– क्षुत्सम्भवति जीर्णेषु रसदोषमलेषु च ॥
उचितोऽनुचितो वाऽपि सोऽन्नकालः प्रशस्यते २०

उचितोऽनुचितो वेति । यावति काले प्रत्यहं भुङ्क्ते स उचितः ॥ २० ॥

२१–अर्धरात्रेऽपि भुञ्जानः परमार्थं बुभुक्षितः ॥
क्षुधी वैद्यपरित्यागी व्याधिभिर्नाभिभूयते ॥ २१

सुगमम् ॥ २१ ॥

२२–अहिताशनसम्पर्कात्सर्वरोगोद्भवो यतः ॥
अतस्तदहितं त्याज्यं न्याय्यं पथ्यनिषेवणम् ॥२२

सुगमम् ॥ २२ ॥

२३–कलमाः शालयो रक्ता नीवारः षष्टिकाङ्गुकाः॥
श्यामाककोद्रवोद्दालसतीनयवमुद्गकाः ॥
मसूराढकिगोधूमा हरिणैणकुरङ्गकाः ॥ २४ ॥
तित्तिरिः क्रकरा लावाः श्रेष्ठा वर्तीरवर्तिकाः ॥
सुनिषण्णकवास्तूकचिल्लीमण्डूकपर्णिकाः ॥२५॥
तण्डुलीयकजीवन्त्यो दाडिमामलकं मधु ॥
सैन्धवं गव्यमाज्यं च पथ्यवर्गोऽयमुत्तमः ॥ २६

कलमः कलिचिरिति लोके प्रसिद्धः । रक्तः स्वनाम्ना ख्यातः । नीवारः प्रसातिका, धान्यमध्ये रक्तशूको भवति तुलजीधान्यमिति लोके प्रसिद्धः । षष्टिको गौरषष्टिकः । काङ्गुको गौरकृष्णषष्टिकः । उद्दालोऽरण्यकोद्रवः । सतीनो वर्तुलकः । आढकी तुवरी । हरिणस्ताम्रो मृगः । एणः कृष्णः । कुरङ्गः कृष्णताम्रः ।

तदुक्तम्—"एणः कृष्णोऽथ हरिणस्ताम्रवर्णोऽभिधीयते ।
यो न कृष्णो न ताम्रः स्यात्स कुरङ्ग उदाहृतः" 33

तित्तिरिः कृष्णतित्तिरिः । वर्तिरो घर्घर इति लोके । वर्तिकस्तद्भेदः । सुनिषण्णकः सिरिवालिका, चतुष्पर्णीत्यपरे । चिल्ली क्षेत्रवास्तुकः । मण्डूकपर्णी ब्राह्मी । जीवन्ती दोडिका । एते कलमादयः शूकधान्येषु । श्यामाकादयः कुधान्येषु । सतीनमुद्गादयो वैदलसूपेषु । हरिणादयो जाङ्गलमृगेषु । तित्तिर्यादयो जाङ्गलाः पक्षिषु । सुनिषण्णकादीनि शाकेषु । दाडिमामलके फलेषु । सैन्धवं लवणेषु । गव्यमाज्यं घृतेषु। नीवारकोद्रवोद्दालकादीनामल्पवातकरत्वाददोषकरत्वव्यपदेशः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

२४–व्यायामश्च निशास्वापो निवातोष्णजलं तथा ॥
आयुष्यं भोजनं जीर्णे वेगानामविधारणम् ॥
ब्रह्मचर्यमहिंसा च साहसानां च वर्जनम् ॥२७॥

सुगमम् ॥ २७ ॥

२५–अन्नादष्टगुणं पिष्टं पिष्टादष्टगुणं पयः ॥ २८ ॥
पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् ॥
घृतादष्टगुणं तैलं मर्दने, न तु भोजने ॥ २९ ॥

॥ २८ ॥ २९ ॥

संयोगविरुद्धानि दर्शयन्नाह—

२६–वल्लीफलैरम्लकुलत्थशाकै-
र्मत्स्यैः सुरामांसतिलैः करीरैः ॥
पिण्याकजम्बूलवणैश्च दध्ना
व्यस्तैः समस्तैश्च पयो विरोधि ॥ ३० ॥

वल्लीफलं कूष्माण्डादिवल्लीजम् । अन्ये शिम्ब्यादिमाहुः । करीरं वंशाङ्कुरम् । अम्लमाम्रातकादि । जम्बूर्जम्बूफलम् । एतानि वल्लीफलादीनि व्यस्तसमस्तान्यपि पयसा सह नाश्नीयादिति ॥ ३० ॥

कर्मविरुद्धान्याह—

२७–कपिञ्जलो लावकतित्तिरी तु
गोधामयूरौ रुबुतैलकाष्ठैः ॥
सिद्धा विरुद्धाश्च तथा कपोता-
स्तैलेषु भृष्टा अपि सर्षपाक्ताः ३१

सुगमम् ॥ ३१ ॥

२८–उष्णेन दिव्यसलिलेन वराहगोधा-
मांसेन याति विकृतिं मधु मूलकेन ॥
तक्रेण चोष्णमपि तुल्यघृतं घृतं च
कांस्ये दशाहमुषितं च तथा घृतं च ॥

उष्णेन उष्णस्पर्शद्रव्येण । उष्णस्पर्शत्वं चाग्न्यादिजनितं ज्ञेयम् । दशाहमुषितं दशनिशावासितम् ॥ ३२ ॥

२९–घृतं धानाश्च तक्रेण दध्ना मद्यं च कुक्कुटैः ॥
बलाका न हिता मद्यैः सुराकृशरपायसैः ॥ ३३ ॥

कुक्कुटस्ताम्रचूडः । बलाका बकभेदः । सुरा मद्यभेदः । कृशरा तिलतण्डुलमाषैः कृता यवागूः । पायसं क्षीरसिद्धास्तण्डुलाः । एतानि द्विशस्त्रिशो वा विरुद्धानि । 'सुराकृशरपायसान्नैकध्यमश्नीयात ' 34 इति सुश्रुतः ॥ ३३ ॥

३०–मत्स्या उपोदका चैव विकारैरैक्षवैस्तथा ॥
सौवीरैस्तिलशष्कुल्यः काकमाची गुडेन च ॥

सौवीरं काञ्जिकविशेषः । शेषं सुगमम् ॥

३१–अतिस्निग्धातिरूक्षादीन्वर्जयेदात्मवान्नरः ॥३४

सुगमम् ॥ ३४ ॥

विरुद्धं यत्करोति तदाह—

३२–व्याधिमिन्द्रियदौर्बल्यं मरणं चाधिगच्छति ॥
विरुद्धरसवीर्याणि भुञ्जानोऽनात्मवान्नरः ॥ ३५

३३–यत्किञ्चिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत् ॥
रसादिषु यथार्थं वा तद्विकाराय कल्पते ॥ ३६ ॥

33 सु. सू. ४६. ५७. 34 सु. सू. २०. १२.

**व्याधिमिति**। शोफविसर्पदकोदरविस्फोटकादिकमधिगच्छति प्राप्नोति। **विरुद्धरसवीर्याणि भुञ्जान इति**। रसग्रहणं द्रव्यवीर्यपरिहारार्थम्। तेनोष्णस्यापि दुग्धस्य प्रयोगो भवति। क्षीरद्रव्यस्य ह्युष्णत्वं तद्गतमधुररसशैत्येन विरोधिनाऽपि न दुष्यति। एवमुष्णपानीयस्यापीति। अनात्मवानबुद्धिमान्। **अन्ये** रसवीर्यादीनिति पठन्ति तेषां मानपाकयोरपि गुरुलघुसंज्ञयोर्विरोधो वर्जनीय इति॥ ३५॥ ३६॥

विरुद्धाशनादुत्पन्नानां रोगाणां चिकित्सासूत्रमुद्दिशन्नाह—

**३४–विरुद्धाशनजान्रोगान्प्रतिहन्ति विरेचनम्॥**
**वमनं शमनं चापि पूर्वं वा हितभोजनम्॥३७॥**

**प्रतिहन्ति विरेचनमिति**। विरुद्धाशनजव्याधिप्रत्यनीकं विरेचनं प्रतिशब्देनोच्यते। तेन कुष्ठव्याधिप्रत्यनीकं विरेचनं विरुद्धाशनजं कुष्ठं हन्ति॥ ३७॥

विरुद्धाशनं कुर्वतोऽपि कस्यचिद्विरुद्धाशनजा दोषा न भवन्तीत्याह—

**३५–सात्म्यतोऽल्पतया वाऽपि दीप्ताग्नेस्तरुणस्य च॥**
**स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत्॥३८**

सात्म्यादिभिर्विरुद्धं वितथं निष्फलं भवतीत्यर्थः। पिण्डः। स्निग्धव्यायामबलिनामिति—स्निग्धव्यायामाभ्यां बलिनामिति सम्बध्यते। तेनायमर्थः—स्निग्धद्रव्याभ्यवहारबलिनां बलवदग्नित्वाद्विरुद्धं निष्फलं भवति। केचिद्बलिनामिति पदं भिन्नं मन्यन्ते। तेनायमर्थः—स्निग्धानां व्यायामिनां बलिनां च विरुद्धं वितथं भवेदिति॥ ३८॥

**३६–शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि॥**
**प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्॥३९**

सुगमम्॥ ३९॥

**३७–सद्योमांसं नवं चान्नं बाला स्त्री क्षीरभोजनम्॥**
**घृतमुष्णोदकं चैव सद्यःप्राणकराणि षट्॥४०॥**

सुगमम्॥ ४०॥

हेमन्तस्याग्रे तत्सात्म्यमाह—

**३८–शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली॥**
**पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः॥ ४१॥**

शीत इति हेमन्तविशेषणम्। शीत इत्यस्मिन्ननु……… तत्पुनरुच्यते। सत्येव शीतप्रकर्षे बली भवति वह्निः। आरम्भमात्रप्रतिपादनार्थम्। **शीतानिलस्पर्शसंरुद्ध इति**। हिमसम्बन्धे……षम्। शीतोऽनिलः शीतानिलस्तस्य स्पर्शः सम्बन्धस्तेन संरुद्धः प्रतीपीकृतोष्मा। बलिनामुपचयवतां प्राणिनां हेमन्तस्वभावात्। अतः प्राणिबलादप्यग्नेर्बलं भवति। **मात्राद्रव्यगुरुक्षम इति**। मात्रागुरु, अतिमात्रं द्रव्यस्वभावतश्च यद्गुरु नवधान्यादि तत्सेव्यम्।

अथ बाष्पचन्द्रव्याख्या—ऋतवो यथा दोषाञ्जनयन्ति तद्वशाश्च यस्मिन्नृतौ सेव्यं परिहार्यं वा तद्व्याकुर्वन्नाह—**शीते शीतानिलस्पर्शेत्यादि**। आह–किमर्थमपास्य प्रावृषं हेमन्तमयमग्रेऽभिधातुं प्रवृत्तः। तथा चान्यत्र वर्षादीनवोचत्, चयप्रकोपप्रशमा इत्यादिना 35। अथवा विसर्गस्याऽऽदीर्वर्षाः प्रागभिधीयतामिति। उच्यते। न। प्राणिनामग्र्यबलाधानात्स्यक्तबलसम्प्रदानाच्च हेमन्तः श्रेष्ठः। तस्मात्तस्यैव प्रागभिधानम्। चयप्रकोपप्रशमा इत्यादिनाऽत्र पित्तादिक्रमो दर्शितः। इह च श्लेष्मादिके तेनैवोत्तरत्र क्रमेण वक्ष्यति 'हैमन्तिकं दोषचयं वसन्ते' इत्यादि 36। ननु हेमन्तस्य शीतत्वं लोकशास्त्रयोः प्रसिद्धमेव। तत्र लोके तावद्धेमन्तः शीत इत्यविगानेन सम्मतः। शास्त्रेऽपि 'शीतोष्णवर्षलक्षणाः पुनर्हेमन्तग्रीष्मवर्षाः संवत्सरः स कालः' 37 इति। अतो लोकशास्त्रप्रसिद्धत्वाच्छीत इति किमर्थं विशेषणमनुच्यमानेऽपि लप्स्यत एव शीतगुणो हेमन्त इति। भ्रमः–सम्यग्यदनुचिह्नं भवति 'तदा बली पक्ता संपद्यते नान्यदा' 38 इत्येतस्यार्थस्योपलब्धौ शीतग्रहणमुपयोगीति कथमुपधेयमन्यथा हेमन्ते, ऋतुव्यापत्तावपि प्राप्नुयात्। ननु शीतानिलस्पर्श इत्युक्तं स्वभावशीतत्वाद्योगवाहत्वाच्च पवनस्य। यथोक्तम्–'रूक्षः शीतो लघुः सूक्ष्मः' इति। तथा 'लघुरूक्षशीतदारुणखरविशदाः षडिमे वातगुणाः' 39 इति। अतः स्वभावशीतत्वाद्वायोः शीतविशेषणमनर्थकम्। शीतसंपर्कात्कोष्ठगतं प्रापयतीति–चेत्तदसम्यक्, योगवाहित्वादस्य। तथा चोक्तम्–'योगवाहः परं वायुः' 40 इति। उपलभ्यते वा द्रव्यसंनिकर्षादुष्णः। तुषारादिसंपर्काच्च शीतः। तस्माद्योगवाहवचनेन लब्धे शीतत्वे शीतनिर्देशो नातिक्षमः। उच्यते। हेमन्तविशेषणं शीतव्यापान्निवारणार्थमिदं त्वनिलविशेषणं संपूर्णलिङ्गोपलब्ध्यर्थं सम्यग्योगयुक्तेऽपि हेमन्ते प्रवृत्तमात्रेऽल्पेन हेमन्तसम्बन्धकृतेन शीतानिलस्पर्शेन संनिरोद्धुं नैव सम्यक्शक्यत इति। निर्गच्छत्येव हि बहिः शरीरलोमकूपायनैरूष्मेत्यतो न बली पक्ता भवति। यदा तु प्रतिदिनं विवर्धमानशीतविशेषो मध्यावस्थायां संपूर्णलिङ्गो हेमन्तो भवति तदा तत्संबन्धेन शीतानिलस्पर्शेन संनिरुद्धोऽग्निर्बली भवति। अथवा शीतशीतानिलस्पर्श इति पाठोऽयमपि पुरातन एव। **आचार्यभीमदत्तेना**प्यलेखि–शीतशीतानिलस्पर्शपाठोऽन्यः–सुप्तसुप्तवत्। अस्यायमर्थः–यथा स्तब्धानि सुप्तसुप्तान्यस्वेदनकण्डुलानि कुष्ठानीति सुप्तसुप्तशब्देन भृशं सुप्तत्वं कुष्ठानामुच्यते, तथेहापि शीतशीतत्वेन प्रधानार्थप्रतिपादनादत्यर्थशीतत्वमुच्यते। आस्मिंश्च पाठे कालातियोगोऽनिष्टः प्रसज्यते। स व्याधेर्हेतुत्वेन गृहीतत्वान्न गृह्यत इति चेत्। तन्निवारकाभावे तस्याप्यग्निबलहेतुत्वं प्रतीयते, अहितस्यापि कालवशेन पथ्यत्वाद्धेमन्ते मत्स्योपयोगवत्। आह–शीतानिलसंरुद्ध इत्यस्तु किं स्पर्शग्रहणेन। उच्यते–नायं समासः

35 च. सू. १७. १४४. 36. च शा. २. ४५. 37 च. वि. ८. १२५. 38 च. सू. ६. ९. 39 च. सू. १२. ४, ७. 40 च. चि. ३. ३८, ३९.

शीतश्चासावनिलश्चेति । किं तर्हि, अनिलश्च स्पर्शश्चानिलस्पर्शौ शीतौ च तावनिलस्पर्शा च । शीतानिलेन शीतस्पर्शेन च संरुद्ध इति गम्यते । शीतशब्देन हिमद्रव्यमुच्यते। ननु संरोधानुपपत्तिर्विक्षेपणक्रियत्वाद्वायोः । तन्न, यतः सर्वतो निर्गच्छन्नूष्मा वायुना संनिरुध्यमानेषु स्रोतस्सु पुनरन्तरेव प्रक्षिप्यते । अतो विक्षेपणान्न भिद्यते । उदाहरणं हि—' बाह्यैश्च शीतैः सेकाद्यैरूष्माऽन्तर्याति पीडितः ' स चान्तः प्रविष्टोऽनिर्गच्छन्नूष्माख्य आग्नेयो धातुरुपचीयमानः पक्तुर्बलमादधाति । तस्मात्पवनसंरोधेन हेमन्ते जाठराग्निर्बलीयाञ्जायते । आह । शीतानिलस्पर्शेनाग्निवृद्धिरयुक्ता, असमानगुणत्वात् । समानगुणो हि धातूनां वृद्धिकारणमिष्यते । उच्यते । यथा कर्मकरोऽग्निमन्तःसंरोद्धुमिच्छतीति सलिलपरिषेकमङ्गाराणामाधत्ते सोऽग्निर्बहिः शीतेन स्पर्शेन प्रतिबध्यमानोऽन्तःसंचितस्तीक्ष्णो भवति तद्वदत्रापीति । शीतानिलस्पर्शनिमित्तं वर्ण्यते । आह । बलिनामित्यसत् , हेमन्ताभिधानेन प्राप्तत्वात् । बलं त्वन्ते श्रेष्ठमग्रेश्च निर्दिशेदित्यनेन चोक्तम् । हेमन्ते बलिनः प्राणिनो भवन्तीति । अत्र ब्रूमः । बलशब्देनात्रोपचयलक्षणं बलमभिप्रेतम् । बलिनामुपचितानां न कृशानां मन्दादीनामित्यर्थः । यतो यदुपचितानां पथ्यं न तत्कृशानाम् । अन्यथा हैमन्तिकं बलं स्थूलमध्यकृशानां समानमित्युपचितानामिति न लभ्यते । ततश्च निमित्तान्तरदुर्बलानामपि बली प्राप्नुयादतो बलिनामित्याह । आह । उक्तं 'वायुः शीतः शीते प्रकुप्यति ' 41 वायुना चाग्निवैषम्यमभिहितं 'वाताभिभूतेऽग्न्यधिष्ठाने विषमा भवन्त्यग्नयः 42 इति । तस्मात्कथं बली पक्ता भवतीति । उच्यते । आधिकेनापि वायुनाऽऽभ्यन्तरेणानतितीव्रबलेन यदाऽग्नेः संधुक्षणमात्रं क्रियते तदा वृद्धिं यायात् ।

उक्तं च—"मेदसाऽऽवृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ।
चरन्संधुक्षयत्यग्निम् " इति । 43

यत्पुनरुदितं वाताभिभूतेऽग्न्यधिष्ठान इति । तत्राभिभूतमित्युक्तं न वायुवृद्धयेति । वातलानां प्रकोपे कोष्ठमुपेत्य वायुराशयादनलं शरीरे परिक्षिप्य तदाशयमधिष्ठायाग्निमान्द्यमावहति न प्रकोपमात्रेण । हेमन्तग्रहणं च शीतवचनाप्राप्तं न कर्तव्यमिति केचित् । तन्न । अन्यत्रापि शीतोपदेशात्—'वातवर्षाकुलेऽहनि, विशेषशीते' । 44 तथा वसन्तादिष्वपि वर्षावायुनिमित्तं शीतमुपलभ्यते । अतस्तन्निवारणार्थं हेमन्तग्रहणम् । ननु मात्राद्रव्यगुरुक्षम एव बली भण्यते । अतस्तद्वचनेनैव लब्धत्वात्किं मात्राद्रव्यगुरुक्षमाभिधानेन । उच्यते । अन्यस्मिन्नपि काले बलिनां बली पक्ता भवति यो मात्राद्रव्यगुरुक्षम इति युक्तम् । अन्ये त्वग्निप्रतिषेधार्थं मन्यन्ते । मात्रा च द्रव्यं च मात्राद्रव्ये, ताभ्यां गुरु मात्राद्रव्यगुरु । 'तृतीया तत्कृतार्थेन' इति समास45।तं क्षमत इति मात्राद्रव्यगुरुक्षमः । शालिषष्टिकादेराहारस्य मात्रातिरेककृतं गुरुत्वम् । पिष्टकगुडविकृतिपायसमाषमाहिषशूकरपिशितादीनां द्रव्यकृतं गौरवम् । एवं मात्रातिरेकद्रव्याभ्यामुभयमपि गौरवम् । तदेतत्त्रिप्रकारमाहारं क्षमते । अतो मात्राद्रव्यगुरुक्षमः । एष पिण्डार्थः—सम्यक्शीतलक्षणहेमन्ते बलीयसां शीतवातस्पर्शसंरुद्धोऽग्निर्बली मात्राद्रव्यगुरुक्षमो भवतीति ॥ ४१ ॥

**३९-स यदा नेन्धनं युक्तं लभते देहजं तदा ॥**
**रसं हिनस्त्यतो वायुः शीतः शीते प्रकुप्यति॥४२॥**

देहार्थं देहजम् । अतो रसधातुक्षयात् । **शीतः शीत इति** । शीतगुणो वायुः शैत्यादपि कालजातात्कुप्यति । अत्र चानतिवृद्धत्वेन वायुर्मेदस्विन इवाग्निवृद्धिं करोति न तु वैषम्यमिति ज्ञेयम् ।

अथ **बाष्पचन्द्रव्याख्या**—स यदि यथाप्राप्तमिन्धनं न प्राप्नोति तदा धातुक्षयमावहतीत्याह—**स यदा नेन्धनमित्यादि** । कीदृक्पुनरिन्धनमस्य...ब्रूमः । स्निग्धाम्ललवणात्रसानित्येवमादिकम् । इन्धनशब्देनात्राशितपीतादिराहारोऽभिप्रेतः 46 । सोऽन्तरग्निर्बली यदाऽऽहारं प्राप्तं स्वस्याः पचनशक्तेरनुरूपं न लभते तदा देहजं रसं हिनस्ति देहसंभवं रसधातुमिन्धनीकृत्य क्षपयतीत्यर्थः । ननु देहजग्रहणं कस्मात् । अदेहजरसनिवृत्त्यर्थं चेत् । तदयुक्तं बाह्याहाररसस्य जाठराग्निना दूषणासंभवात् । तस्मादन्तरेणापि देहजग्रहणं देहान्तर्गतस्यैव रसस्य ग्रहणं विज्ञास्यते । नैतदेवम् । यथा देहान्तर्बाह्यवद्द्विविधो रस आहाररसो धातुरसश्च । तत्राऽऽहाररसो यश्चतुर्विधाहारात्सम्यक्परिणतादुपजायते। असत्याहारे लङ्घने क्रियमाणे न संभवति । द्वितीयश्च सप्तानां धातूनामाद्यो हृदयस्थायी सह देहजेन जात आहारप्रसादाद्रसात्पुनरन्येन पाकेन पच्यमानात्पुष्यति । तस्य हिंसार्थं देहजग्रहणम् । एतच्च रसग्रहणं सोपपत्तिकं स्वप्रस्तावे प्रतिपादयिष्यामः । यद्यप्याहारप्रसादरसक्षयपूर्वको धातुरसक्षयस्तथाऽपि नाऽऽहारजरसक्षयाद्वायुप्रकोपः । किं तर्हि धातुरसक्षयादिति सुस्थं देहजग्रहणम् । आहाररसं हिनस्त्यतो वायुः कुप्यतीत्यस्तु। शीतः शीत इति किम् । वायोर्धातुक्षयात्कोपः '47 प्रतिपादयितुमारब्धः। स च विनाऽपि शीतःशीत इत्यनेन गम्यत एव । तस्मात्, शीतः शीत इति विश्राम्यतु । क्रियमाणे चायं दोषः । यस्माच्छशस्य विषाणे नस्तस्तस्मात्प्रावृषि बलाहका धीरतरं नदन्ति । तदुपमेयमेतत् । यस्मात्तीक्ष्णाग्निर्हिनास्ति रसम् । अतः शीतः शीते प्रकुप्यति । अत्रोच्यते । चशब्दोऽत्र लुप्तो वर्णोपजननहेतुः समुच्चयार्थो व्याख्यातव्यः । **शीत इति** । निमित्तसप्तमीयम् । ततश्चायमर्थः । रसं हिनस्ति, अतो वायुः प्रकुप्यति, शीतः शीते च कुप्यति । यस्माच्छीतो वायुः । अतः शीतेन च निमित्तेन कुप्यतीत्यर्थः । तथा च **सुश्रुताचार्यः**—48

41 च. सू. ६. १०. 42 च. वि. ६. १२. 43 च. सू. २१. ५ 44 च. सू. ६. ३७. 45 पा. सू. २. १. ३०. 46 च. सू. २८. ३–वि. २. १५, १७.47 च. चि. २८. ५९. 48 सु. उ. ६४. २०

हेमन्तः शीतलो रूक्षो मन्दादित्योऽनिलाकुलः ।.
ततः स्वयोनिमासाद्य वायुस्तत्र प्रकुप्यति इति ॥
अतश्चैतदेवं प्रकोपकारणद्वयसंनिधानान्महान्वायुप्रकोपः, येन तुषारसमये चीयमानबलासवर्धनानि स्निग्धाम्ललवणौदकानूपमांसादीनि भोक्तुं शास्ति । **भट्टारकहरिश्चन्द्रस्त्वाह**—विशेषात्तु पक्त्यर्थं शीतग्रहणं क्रियते । यद्यन्यस्मिन्नप्यृतौ शीतेऽग्निर्युक्तमन्नपानं न लभते, समीरणस्तस्मिन्नपि प्रकोपमेति । कस्मात् । यस्मात्सोऽपि शीतो मातरिश्वा ।। ४२

बाह्यविधिमभ्यवहार्यविधिं चाऽऽह—

**४०–अभ्यङ्गोत्सादनं स्वेदः स्निग्धोष्णगुरुभोजनम् ४३**
**शीते सुसंवृतं सेव्यं यानं शयनमासनम् ॥**
**आलिङ्ग्यागुरुदिग्धाङ्गीं स्वप्याद्यौवनशालिनीम् ।**

अभ्यङ्गशब्दो ' गात्राभ्यङ्गवचनः । उत्सादयति व्याधीनुत्सादनम् । पादाभ्यामुद्वर्तनम् । तथा च **तन्त्रान्तरीयाः** पठन्ति—

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नाभिसर्पन्ति वैनतेयमिवोरगाः ॥

**शीते सुसंवृतमित्यादि** । सुसंवृतं सम्यगावृतम् । आह । सुसंवृतं सेव्यमित्येतावदभिधीयतां शीतशब्दोपदेशो न न्याय्यो हेमन्ताधिकारात् । ब्रूमहे । अन्यस्मिन्नप्यृतावहनि शीते सुसंवृतं सेव्यमित्यासञ्जनार्थमदोषः । सुसंवृतमविस्तीर्णम् । अथवा सुप्रावृतमित्यर्थः । किं तत् । यानं शयनमासनम् । गम्यतेऽनेनेति यानं यानयानादि । शयनं खट्वादि । आसनं लोहासनादि । आलिङ्ग्यागुरुदिग्धाङ्गीम् । आलिङ्गनमुपगूहनम् । हेमन्तानन्तरं शिशिरः ॥ ४३ ॥ ४४ ॥

हेमन्तविधिं शिशिरेऽतिदिशन्नाह—

**४१–शिशिरे सर्वमप्येवं निवातोष्णगृहं श्रयेत् ॥ ४५ ॥**
**४२–वसन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ॥**
**कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून् ॥**
**तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ॥ ४६ ॥**

निचितः संचितो हेमन्ते दिनकरभाभिरीरितो विलायितो कायाग्निं बाधते । कायाग्निं जठराग्निम् । **वमनादीनीति** । वमनप्रधानानि । तेनाऽऽदानमध्यत्वेन वातपित्तयोरनुबलत्वाद्विरेचनाद्यपि कार्यम् । शिरोविरेकश्च कफजयार्थं क्रियत एव । एतच्च वमनादि कर्म चैत्रे कार्यम् । यदाह **कपिबलः**—

मधौ सहसि नभसि मासि दोषान्प्रवाहयेत् ।
वमनैश्च विरेकैश्च निरूहैः सानुवासनैः इति ॥ 49

अथ **बाष्पचन्द्रव्याख्या**—क्रमप्राप्ते वसन्ते दोषानपेक्षया सेव्यासेव्यविधानायाऽऽह—**वसन्ते निचितः श्लेष्मेत्यादि** । वसन्ते श्लेष्मप्रचयस्याऽऽर्तवस्यासंभवाच्छ्लेष्मा वसन्ते निचित इति नैवमभिसंबध्यते । तस्मादेवं व्याख्यायते निचितश्लेष्मा क हेमन्ते कायाग्निं बाधत इति । तत्र हेमन्तेऽपि श्लेष्मसंचयो न संगच्छते । यतस्तत्र स्निग्धाम्ललवणाद्युपयोगो वातापजयाय मद्यमैथुनसेवनं च कफक्षयाय विहितमिति । अथ तत्र युक्तः स्निग्धाम्ललवणादिकृत एव संचयो न कालकृत इति **दृढबलाचार्येण** दर्शितमिति चेत् । तन्न । अर्थापरिज्ञानात् । मद्यमैथुनसेवारहितस्य स्निग्धाम्लाद्युपयोगतः कफसंचयस्तत्राभिमतः । अन्यथा यदि कफप्रत्यनीकेऽपि सेव्यमाने चीयते तदा सर्वकालं चीयेत । इदं च वचनं विरुध्येत । " आद्भिश्चौषधिभिश्चैव मधुराभिश्चितः कफः । हेमन्ते " इत्येतच्च सप्रपञ्चं तत्रैव प्रतिपादयिष्यामः तस्मात्कथं हेमन्ते बलाससंचयः । किं च, व्यायामसेवनाच्च । हेमन्ते व्यायामसेवनं विहितमेव । ग्रीष्मवर्षयोर्निषेधाच्छरीरचेष्टायाः । चेष्टा स्थैर्येत्यादिना सामान्येन विहितस्य ग्रीष्मवर्षायां च निषेधं कुर्वता व्यायामस्यान्येष्वनुज्ञां ज्ञापयति । तथा च **तन्त्रान्तरीयं** वचः— 50

" अर्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः ।
स च शीते वसन्ते च मन्दमेव ततोऽन्यदा " ॥

अतो व्यायामस्य कफक्षयकरत्वम् । ' दोषक्षयोऽग्निवृद्धिश्च व्यायामात् ' इति वचनात् । 51 कफसंचयो हेमन्ते न सिध्यति । अतश्चैककालीनयोः क्रियानिष्ठयोर्विरोधात् । प्रत्यहोरात्रं बलासः प्रत्युषसि चीयते पूर्वाह्णे कुप्यति मध्याह्ने शाम्यति । तथा च **तन्त्रान्तरम्**—पूर्वाह्णे वसन्तलिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकं, शारदमर्धरात्रे, प्रत्युषसि हैमन्तमुपलक्षयेत् 4 । एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षदोषोपचयप्रकोपोपशमैर्जानीयात् । अतः कथं संचीयते । अथैवमुच्यते । आर्तवश्चयोऽनुवर्तत एव । आहोरात्रिकस्तु चयः कुप्यति शाम्यति च । एतच्चायुक्तम् । अहोरात्रव्यतिरेकेण कोऽन्यर्तुर्नाम । तथा च । षष्ट्याऽहोरात्रैर्ऋतुरुच्यते । भवतु वा भेदः । तथाऽप्येकस्यैव श्लेष्मण एककालीने जन्ममरणे कथं स्याताम् । यदैव चीयते तदैव चीयमान एव शाम्यतीति विरुद्धमेतत् । तस्मात्समुच्छुष्कवालुकामुष्टिरिव हेमन्ते कफनिचयो विशीर्णि इति । अत्र वृद्धैर्व्याख्यातं प्रत्यवस्थानमुच्यते । स्वे स्व ऋतौ यथास्वहेतुभिर्दोषाश्चीयन्ते । यथोक्तम्—'अद्भिश्चैवौषधीभिश्च मधुराभिश्चितः कफः । हेमन्ते ' इति । तथा—'वर्षास्वम्लविपाकाभिरद्भिरौषधिभिस्तथा । संचितं पित्तम् ' इति । अस्य चायमर्थः । कालपरिणामाद्धेमन्त अपि ओषधयश्च मधुरं विपच्यमानाः कफसंचयमावहन्ति । कालपरिणामादेव वर्षास्वम्लं विपच्यमानाः पित्तसंचयमातन्वन्ति । रूक्षं ग्रीष्मे च रूक्षाः कटु विपच्यमाना वायुप्रचयमापादयन्ति । ते च विहितव्यत्ययाचाराणामाचीयन्ते । न स्वस्थवृत्तपरायणानां, यतः प्रतीकारार्थत्वात्स्वस्थवृत्तानुष्ठानस्य ।

---

49 च. सू. ७. ४६, चक्रपाणौ; च. सि. ६. ५. 50 अ. सं. सू. १०४. 51 च. सू. ७. ३२. . 52 सु. सू. ६. १५.
52 च. चि. ३. ४३–४४.

तथा च वक्ष्यति— विषमस्वस्थवृत्तानामेते रोगास्तथा परे।
जायन्ते नाऽऽतुरस्तस्मात्स्वस्थवृत्तपरो भवेत्

यश्च वसन्ते स्निग्धाम्ललवणादीनेवोपयुङ्क्ते न मद्यमैथुनव्यायामानाचरति स विषमस्वस्थवृत्त एव भवति । तथा च 'तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्तते' 53 इत्यत्राऽऽहाराचारौ स्वास्थ्यवृत्तकौ स्वास्थ्यानुवर्तनाय व्याख्यातौ। संशोधनस्य जातानां विकाराणामनुत्पत्तिकरं चेत्यनेन संगृहीतत्वात् । तस्माद्विहितव्यत्ययाचाराणां कफसंचयो हेमन्ते सिद्धः । यच्चानुक्रान्तमेकस्य श्लेष्मण एकस्मिन्नेव काले निष्ठा प्रशमरूपा न युज्यते विरोधादित्यत्राप्यनुनयः श्रूयते युज्यते सर्पिर्वत् । यथा हेमन्ते चीयमानस्य महतः सर्पिष्पिण्डस्याल्पोष्णसंपर्कादेकदेशविलयनेन सर्वविलयनमुष्णापगमे च तत्स्त्यानमेव स्यात्तथा बलासस्याप्यार्तवेन महता चयेन चीयमानस्य या काचिद्विक्रिया पूर्वाह्णमध्याह्नयोः कालप्रभावात्साऽपराह्णे शाम्यत्येवातः प्रदक्षिणमृतुवशाच्चीयत एव । न च परमार्थतोऽहोरात्रावयवेषु दोषाणां चयप्रकोपप्रशमाः संभवन्ति । किं तर्हि गूढलिङ्गव्याध्यवगमार्थं क्रियाकालावधारणार्थं च दोषाणां बलवत्त्वाबलत्वे व्याख्याते । यच्चोपदिष्टमहोरात्रव्यतिरेकेण कोऽन्य ऋतुरिति । अत्र ब्रूमः । अन्योऽहोरात्रादृतुः संज्ञालक्षणकार्यभेदात् । नक्तंदिनस्याहोरात्र इति संज्ञा । द्विमासनिर्वर्त्यस्य हेमन्तादेर्ऋतुरिति चेत् । अथ संज्ञाभेदः । लक्षणभेदश्च— आदित्यप्रकाशस्थितिव्यवच्छिन्नः कालो दिवस उच्यते। सूर्यप्रकाशाभावे ज्योत्स्नान्धकारस्थितिपरिच्छिन्नो रात्रिरभिधीयते । ताभ्यामहोरात्रः । ऋतुस्तु शीतोष्णवर्षस्थितिक्रियावच्छिन्नो द्विमासिकः कालभाग उच्यते । अयं च लक्षणभेदः । कार्यभेदश्च—

ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात् ।
कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते ॥ 54

इत्यनेन कथितः । वसन्तादावुत्पन्नः श्लैष्मिकः सततकस्तस्मिन्नेवाहोरात्राणि बलीयांसि प्राप्य संततो जायते वसन्ततुर्विशेषेऽपि । तथा वसन्तमध्याहोरात्रोत्पन्नः संततोऽन्याहोरात्रेषु सततकस्तृतीयको वा जायते दुर्बलत्वादन्याहोरात्राणि ऋतुबलाबलात् । शिशिर उत्पन्नः श्लैष्मिकश्चतुर्थको वसन्तं प्राप्य संततो जायते । तथा च संततः प्राकृतस्ततो ग्रीष्मं प्राप्य सततकतृतीयकचतुर्थानामन्यतमो जायते । यदि पुनर्ऋत्वहोरात्रयोरभेदः स्यादेष विशेषो न भवेत् । ये चैवं मन्यन्ते—आर्तवोऽन्यः श्लेष्मणश्चयोऽन्यश्चाऽऽहोरात्रिक इति । तदसम्यक्, एकस्थानेष्वार्तवश्चयस्तेष्वेवाहोरात्रावयवजोऽपि । यतः स्वेष्वेव स्थानेषु दोषाश्चीयन्ते । यदि पुनः परस्थानेष्वापि चीयेयुः स्रोतोभिर्विसृता दोषा इत्यादिनाऽस्थानात्तु मरणं न कथयेद्यत्रैव विकारास्तत्रैव चितः कुपितश्चेति कृत्वा । तस्मात्स्वस्थाने सञ्चयः । तथा च तन्त्रान्तरम्–'एतानि दोषस्थानान्येषु सञ्चीयन्ते दोषाः' 55 इति । तस्मादेकसञ्चयस्थानत्वान्न पृथगहोरात्रावयवजः सञ्चय इति । तथा च वातेनोद्धूयमानाः सक्तवो जलेनैकेन स्थिरीकृता इव हैमन्तिकः श्लेष्मणश्चयो न विशीर्यत इति । अयमेवाऽऽक्षेपः सोत्तरो ग्रीष्मवर्षाजयोर्वातपित्तसञ्चयप्रकोपयोरुदाहार्यः ।

इदानीं ग्रन्थो व्याख्यायते—निचितः श्लेष्मा दिनकृद्भाभिरीरितो विलापितः कायाग्निं बाधते मन्दीकरोति बाह्योऽग्निरुदकेनेव । कदा वसन्ते । स विषण्णः श्लेष्माऽग्निमान्द्यमापाद्य स्रोतोभिः शरीरमनुसरंस्ततो विकारान्बहून्करोति **सामान्यजाञ्ज्वरादीन्नानात्मजांश्च** तृष्यादीन् 56 । ननु यस्मिन्नेव स्थानं चितस्तस्मिन्नेव स्थाने विलीनस्तत्कथं देशान्तरस्थितस्य वह्नेर्मान्द्यमावहति । उच्यते । कायाग्निं बाधत इत्यनेनैव स्थानान्तरसञ्चरणमाचष्टे । ईर प्रेरण इत्ययं धातुर्विलायनं स्वाशयात्परिक्षेपं च प्रतिपादयति । तेन प्रसरोऽप्युपदिष्टो भवति । तथा च **तन्त्रान्तरम्** 'एभिरातङ्कविशेषैः प्रकुपितानां किण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति' इति57 । आतङ्कविशेषैर्हेतुविशेषैरित्यर्थः । दिनकृद्भाभिस्तेजोभिः । ननु शीतलस्य श्लेष्मणो नोपपन्नः प्रकोपो विपर्ययाद्ध्रास इति शास्त्रप्रवृत्तेः । उच्यते । अतिमहानसौ दीर्घकालसंभृतो दोषः संहतो नैव शक्यते वैपरीत्ये सत्यपि भास्करदीधितिभिरप्रचण्डत्वाद्ध्रासयितुं हिमवद्घृतवच्च । यथा हिमान्या रविमरीचयो विलयनं कर्तुं शक्ता न परिक्षयम् । सा च विलीना समविषमाण्याप्लाव्य विस्यन्दमाना च स्थावराणां क्लेदादीनि करोति । तद्वदर्कगभस्तिभिः सन्तापितशरीराणि विलयमापन्नः श्लेष्मा स्थालीस्थस्योदकस्य वह्निनोर्ध्वसमीरणक्रियेव स्वाशयात्समुत्सृज्यमानः स्रोतांसि व्याप्नुवन्कुरुते गदान् । अयमेव सञ्चयप्रकोपयोर्भेदः । संहतिस्वरूपा वृद्धिश्चयो, विलयनलक्षणा वृद्धिः प्रकोपः । तेन यद्यपि रविमयूखैर्न वर्धते तथाऽपि वृद्धः प्रसन्नविलीन इति प्रकुपित उच्यते । तथा च **वक्ष्यति**—58

अद्भिश्चैवौषधीभिश्च मधुराभिश्चितः कफः ।
हेमन्ते सूर्यसंतप्तो वसन्ते च प्रकुप्यति ॥

आह । कायाग्निमिति कायग्रहणं न कार्यं बाह्यस्याग्नेः श्लेष्मणाऽऽबाधासंभवात् । धात्वाग्निव्युदासार्थं कायग्रहणं धातुगता अपि सप्ताग्नयो विद्यन्ते । वचनं हि—59'यथा स्वेनोष्मणा पाकं शारीरा यान्ति धातव इति । अस्यैवोदर्यस्य वह्नेरेतन्निमित्तः प्रबाधः । यद्यपि तेषामप्याबाधः कायाग्निबाधाद्द्वारेण । तथा चोक्तम्—60'तन्मूलास्ते हि ते तद्वृद्धिक्षयवृद्धिक्षयात्मकाः' इति । तथाऽपि कायाग्निं बाधत इत्यदोषः । यस्माद्वसन्ते कुपितः श्लेष्मा विकारान्कुरुते तस्मात्प्रागेव रोगोत्पत्तेर्वसन्ते कर्माणि वमनादीनि कारयेत् । वमनं शमनाद्यवस्थापेक्षया । अथवा महतः श्लेष्मसङ्घातस्य भेत्तुं

---

53.च. सू. ५. १३. 54 च. चि. ३. ७५. 55 सु. सू. २१. १८. 56 च. सू. १९; २०. १०–११, १४, १७. 57 सु. सू. २१. २८. 58 च. चि. ३. ४५. 59 च. चि. १५. १५. 60 . च. चि. १५. ३९.

नान्तरेण वमनमन्यत्प्रधानतममार्षं हि। बहुदोषाणां पुनर्दोषावसेचनमेव कार्यम्। न ह्यभिन्ने केदारसेतौ पल्वलप्रसेकोऽस्ति' 61 इति न्याय्यं वमनम्। ' आदानमध्ये तस्यापि वातपित्तं भवेदनु' 62 इति विरेचनस्योपपत्तिः। कृतवमनस्य वेष्यते शिरोविरेचनम्। वमनाद्यपचितशरीराणामादानरौक्ष्याच्चाप्रतिवार्या मातरिश्वनो दुष्टिस्तदपेक्षयाऽऽस्थापनानुवासने अपि युक्ते आरब्धुम्। ननु पूर्वं एवाधिकारोऽनुवर्त्यते 'वसन्ते निचितः' इति, पुनर्वसन्तग्रहणं कस्मात्तस्माद्वसन्ते कर्माणीति। उच्यते। यतः श्लेष्मा स्वयं कुपितोऽनुबलत्वेन च वातपित्ते तदेव सर्वदोषसांनिध्याद्वसन्ते यत्नमास्थायाल्पमपि दोषं न परिहापयेदन्यतमांऽपि ह्येषामनुपचर्यमाणो जनयेदेवाऽऽमयमित्येतद्वसन्तग्रहणेन द्योतयति ॥ ४६ ॥

**४७-गुर्वम्लस्निग्धमधुरं दिवास्वप्नं च वर्जयेत् ॥४७॥**

श्लेष्मपित्तहेतुत्वात्। ननु गुर्वम्लादयः किं विहितव्यत्ययाचारेण चितप्रकुपितश्लेष्मवर्ज्या आहोस्विद्विहितस्वस्थाचारेणाप्रचितदोषेणापि। तथा य एते वक्ष्यमाणा व्यायामोद्वर्तनादयो यवगोधूमभोजनादयश्च ते किं प्रकुपितदोषैरकुपितदोषैर्वा सेव्याः। किञ्च त उभयथाऽपि न घटते चितप्रकुपितदोषाणां तावद्वमनादिविधानात्कृतवमनादिसर्वोपक्रमाणां स्निग्धादिभिरेव प्रकृतिगमनोक्तेः—' स्निग्धमस्वादुहृद्यानि ततोऽम्ललवणौ रसौ। स्वादुतिक्तौ ततो भूयः' इत्यादि यावत्प्रकृतिं गमयेत्पुनरिति। प्रकृतिं गतस्य च मात्राशितीयेऽभिहितं 63 भोजनमिति नार्थो यवमुद्गादिभोजनोपदेशेन। अप्रचितदोषोऽपि स्वस्थोऽपि यथेष्टचेष्टाहारो मात्राशितीयोक्तमाहारं सर्वरसं चोपभुङ्क्ते। ' सर्वरसाभ्यवहारो बलकराणाम्' इति 64 वचनात्। तस्माद्गुर्वम्लादिवर्जनं व्यायामोद्वर्तनादिर्यवगोधूमभोजनोपदेशश्च न न्याय्य इति। सत्यमाह। उभयोरपि युज्यते गुर्वम्लादयोऽपथ्यद्रव्याश्रिता न दाडिमामलकाश्रिताः स्वस्थातुरयोर्हितत्वात्। ते च न कुपितदोषेण सेव्या अभिवृद्धिहेतुत्वात्। नापि कृतसंशोधनेन भूयो दोषाभिवृद्धिहेतुत्वात्। व्यायामादीनां च सेवनं यवगोधूमादिभोजनं च वमनादिभिर्निर्हृतदोषशेषशमनार्थमप्रचितदोषेणापि गुर्वम्लादयो वर्ज्या दोषकोपभयात्। नन्वप्रचितस्य कथं दोष इति चेदस्त्येवेति ब्रूमः। विलयनलक्षणा वृद्धिः प्रकोपः। सा च गुर्वम्लादिभिः श्लेष्मणोऽधीयत एव। अप्रचितस्यैव कालस्वाभाव्यात्प्रकुपितश्लेष्मणः प्रतिकारार्थम्—

" व्यायामोद्वर्तने धूमः कवलग्रहमञ्जनम्"। 65 यवगोधूमादिभोजनं च। तथाऽऽचार्यभगदत्तेनाप्युच्यते—

"त्यागः शरद्विधेः स्थानं कथं कोपो हि कामतः।
नोचितस्याचितस्यापि द्वेधा सिद्धो हि प्रकोपः" ॥

अस्यायमर्थः। प्रवृत्तिहेतुं विना पित्तसञ्चयो नास्ति। तदभावे यस्मान्न प्रकोपोऽतः शरद्विधेस्त्यागः। कथं तर्हि स्थातव्यमुच्यते स्थानं कामत इच्छयेत्यर्थः। सिद्धस्तर्हि प्रचितस्यापि प्रकोपः। प्रकोपकाणां दध्यादीनां दिवा स्वप्नादीनां च सेवनात्। अत एव संशोधनसंशमनलक्षण आर्तवो द्विविधो द्विप्रकारः प्रकोपप्रतिकाराय विधिरुद्दिष्टः। तत्र संशोधनलक्षणः—

" तिक्तस्य सर्पिषः पानं विरेको रक्तमोक्षणम्" । 66

संशमनलक्षणश्च—

" तत्रान्नपानं मधुरं लघु शीतं सतिक्तकम्" इति। 67

एतमेवार्थं द्रढयंस्तन्त्रान्तरमुदाहरति—

" त्रिधा दोषचयः पथ्यापथ्यागन्तुनिमित्तजः।
तत्रापथ्यनिमित्तो यः स संशोधनमर्हति।
पथ्यजः शमनीयस्तु प्राय आगन्तुजश्च यः" ॥

अस्यायमर्थः। दोषनिचयो दोषप्रकोपः। स विषमस्वस्थवृत्तानामपथ्यजः। विहितस्वस्थाचाराणां पथ्यनिमित्तो यतः पथ्य उपयुज्यमाने कालप्रभावाद्भवत्युदारणं हि। शरत्काल स्वभावाच्चेत्यतो लक्षणया पथ्यज इति। तस्मादसञ्चयपूर्वकोऽपि प्रकोपोऽस्ति। तन्त्रिकः—'सर्वशरीरचरास्तु खलु वातपित्तश्लेष्माणः सर्वस्मिन्हि शरीरे कुपिताकुपिताः शुभाशुभानि कुर्वन्ति '।68 सर्वस्मिन्हि शरीरे कुपिता इति वचनात्प्रकोपो जायते परस्थाने सञ्चयानुपपत्तेः। सञ्चयेन हि बलीयान्दोषो भवति। स यदि परस्थाने स्यात्तदा बली-यस्त्वं मन्यते दौर्बल्योपदेशात्स्वस्थाने हि बली पठ्यते। अथैवमुच्यते। सञ्चितः परस्थानेऽपि बली, असञ्चितस्य दौर्बल्यं न तु प्रकृतिस्थस्य बलीयस्त्वनिरूपणेन। अथ यदाऽप्रचितः कुप्यात् तदा परस्थाने दुर्बलः। एतच्च न युज्यते सर्वत्रसंचयाभ्युपगमात्। तस्येदं प्रयोजनमचितस्य कोपो मा भूत्। स चेदभ्युपगतः सिद्धः स्वाशये संचयः। दृढबलाचार्येणापि द्विविधः प्रकोपोऽभिहितः—

" काठिन्यादूनभावाद्वा दोषोऽन्तः कुपितो महान्।
पथ्यैर्मृद्वल्पतां नीतो मृदुदोषकरो भवेत् 69 ॥

काठिन्यान्निचयादित्यर्थः। ऊनभावादसंचित इत्यभिसंधिः। तस्मादचयः प्रकोपः सिद्धः। तत्परिजिहीर्षया गुर्वादिवर्जनं व्यायामोद्वर्तनादिसेवनं चेति। स्थितमेतत्। ननु यदा संचितप्रकुपितदोषेणाप्यातर्वे आहारः सेव्यस्तदा मात्राशितीयोक्तस्वस्थवृत्त्यर्थाहारोपदेशस्य वैयर्थ्यमधिकारिणोऽभावात्। यतो यः कश्चित्स्वस्थः स संचितदोषो वा स्यादसंचितो दोषो वा। अत्र ब्रूमः। स्वस्थोऽप्रचितदोषोऽधिकारी। तस्य च कालद्वयमाहारोऽभिहित उत्तरतन्त्रे " समधातोस्तथाऽऽहारो द्वौ कालावपि शस्यते "70

61 च. वि. ३. ४९. 62 च. चि. ३. ४७. 63 च. सू. ५. 64 च. सू. २५. ४०. 65 च. सू. ६. २४
66 च. सू. ६. ४४. 67 च. सू. ६. ४२. 68 च. सू. २०. ९. 69 च. चि. ३०. ३२९–३३० 70 सु. उ. ६४. ६२

ग्रहणीदोषिके च पठ्यते—" प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति " 71 इति। तस्मात्समधातूनां प्रातः सायं च विहितं भोजनम्। स चाऽऽहारो द्विविधः पठितः—

वृत्त्यर्थं पुनराहारः स्वस्थायांभिमतो हितः।
यथर्तुविहितो नित्यमाहारो दोषनाशनः ॥

तत्र वृद्धा हेमन्तशिशिरयो रात्रौ बलवताऽग्निना शीताभिवृद्ध्या च खिन्नशरीराय संभाव्यमानवातप्रकोपाय प्रातर्दोषप्रशमनमाहारं ददाति। तस्मिंस्तु जर्णे वृत्त्यर्थं रात्रौ ग्रीष्मवर्षयोस्तु प्रातर्वृत्त्यर्थं भुक्तवते चिरकालमुष्णाभिसंतापवर्षखिन्नशरीरायापराह्णे दोषप्रशमन आहारो देयः। शरद्वसन्तयोः साधारणत्वात्पूर्वं पश्चाद्वा दोषप्रशमनोपयोग इष्ट इति। तथा चाऽऽह **सुश्रुताचार्यः**— 72

अतीवाऽऽयतयामास्तु क्षपा येष्वृतुषु स्मृताः।
तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु।
येषु चापि भवेयुश्च दिवसा भृशमायताः ॥
तेषु तत्कालविहितमपराह्णे प्रशस्यते।
रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ॥
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम्

**अन्ये** तु पर्यायेणेच्छन्ति। तथा चोक्तं प्राजापत्ये-'तत्र लघुतिक्तकच्छेदनीयं शिशिरपूर्वाह्णे भोजनं प्रसिद्धम्। मधुराम्लरससंसृष्टं सुसंस्कृतं वाऽपराह्णे दिवसाल्पत्वाच्छेदनीयं रात्रेर्महत्त्वाद्ग्रहणीयं नानाविधं प्रभूतं सुरसं ग्रीष्मे पौर्वाह्णिकं मात्राहीनं लघुप्रायं द्रव्यं चापराह्णे नातिपेलवं सुस्निग्धं वर्षास्वनवरतं कायाग्नेः समत्वात्। तत्र हेमन्ते बलवानाग्निर्ग्रीष्मे दिवा वर्षास्वहोरात्र इति। एतच्च नोपपन्नम्। यतो न शिशिरे वृत्त्यर्थमाहारः कटुतिक्तच्छेदनीयो मात्राशितीयेऽनभिधानात् 73। न च वर्षास्वग्नेः समत्वम्। 'वर्षास्वग्निबले हनि' इति वचनात् 74। तेन यद्यपि साक्षात्प्रतिषेधो नास्ति तथाऽपि स्वसिद्धान्तं निरुणद्धीति नाऽऽश्रीयते प्राजापत्यवचनं **वृद्धैः**। तस्मात्पूर्वैव कल्पना श्रेयसीति ॥ ४७ ॥

**४४–व्यायामोद्वर्तनं धूमं कवलग्रहमञ्जनम् ॥**
**सुखाम्बुना शौचविधिं शीलयेत्कुसुमागमे ॥**
**चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः ॥ ४८ ॥**

**चन्दनागुरुदिग्धाङ्ग इति**। चन्दनेन शीतेनागुरुणा चोष्णेन मिलित्वा प्रदेहोऽनतिशीतोष्णत्वाद्वसन्तस्य। **यवगोधूमभोजन इति**। ननु गोधूमो गुरुमधुरस्निग्धशीतो द्रव्यगुणेन। 'गुर्वम्लस्निग्धमधुरं दिवास्वप्नं च वर्जयेत्' 75 इत्यनेन गुरुमधुरस्निग्धोपयोगो निषिद्धः। तत्कथं गोधूमस्य भोजनविधिरिति ? उच्यते—गोधूमः पुराणोऽत्रापेक्षितः पुराणश्च न श्लेष्मकरः।'सर्वं मधुरं श्लेष्मलमन्यत्र पुराणयवगोधूमात्' 76 इति। किं च। यवगोधूमसंयुक्त एवोपयोगः।

अथ **बाष्पचन्द्रव्याख्या**--आह। कुसुमागम इति किं यतो वसन्ताधिकारान्वयः प्राक्कीर्तितः। उच्यते। इह कुसुमागमग्रहणेन वसन्तस्याव्यापन्नत्वं दर्शयति। तथा च **सुश्रुते**ऽव्यापन्नलक्षणमेवेदं पठितम्— 77

" दिशो वसन्ते विमलाः काननैरुपशोभिताः।
किंशुकाम्भोजबकुलचूताशोकैः प्रपुष्पितैः " ॥

ईदृशे च भिजस्वभावस्थिते वसन्ते व्यायामोद्वर्तनादयः कार्याः। **अन्ये** तु वर्णयन्ति 'न वसन्तावतार एव कुसुमानि भवन्ति। अतो यदा वसन्ते कुसुमानि प्रादुर्भवन्ति तदा व्यायामोद्वर्तनादयः कर्तव्याः'। एतच्च न। यतो हेमन्तशिशिरयोरपि व्यायामोद्वर्तनादयः क्रियन्ते तस्मात्पूर्वैव व्याख्या। येन समयोगलक्षण ऋतौ व्यायामोद्वर्तनादि सेव्यते व्यापन्ने तु जनपदोद्ध्वंसनीय78 विहितमिति। व्यायामः शरीरचेष्टालक्षणः। अञ्जनमत्र तीक्ष्णाञ्जनं कफक्षयशान्त्यर्थं सुखाम्बुना शौचविधिं शीलयेत्। ईषदुष्णमम्बु सुखाम्बु। चन्दनागुरुदिग्धाङ्ग इति साधारण्यादुष्णशीतयोरत्र काले चन्दनागुरुणोर्द्वयोरपि प्रयोगमाह यवगोधूमयोरुपसेवनं च ॥ ४८ ॥

**४५–दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले ॥**
**व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः ॥ ४९ ॥**
**काननानि च शीतानि जलानि कुसुमानि च।**
**ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥ ५० ॥**

दिवा शीतगृहे निद्रां निषेवेत। निशि चन्द्रांशुशीतले गृहे हर्म्यगृहमस्तके। **तन्त्रान्तरदृष्टत्वात्**। गृहग्रहणमुपलक्षणं प्राङ्गणेऽपि चन्द्रांशुशीतल इति। **व्यजनैरिति**। वीज्यते येन तद्व्यजनं तज्जन्यो वायुरपि व्यजनम्। कार्यकारणोपचारात्। तस्य चन्दनोदकशीतलत्वमाश्रयशैत्यात्। उत वा एतदेव व्यजनानां सेवनं यत्तैर्वीजनमिति। **काननानीत्यादि** 'ग्रीष्मकाले निषेवेत' इति। ग्रीष्मवचनमिदं द्योतयति ग्रीष्मे शिशिराणि जलकुसुमकाननान्यविच्छेदेन सेव्यानि। शरद्वसन्तयोरप्येषां सेवनमनुमतम्। नन्वविच्छेदेन, निदर्शनं च प्रदोषे चेन्दुरश्मयः स्यान्निमित्तं न सातत्येनेन्दुरश्मयः सेव्यन्ते। उच्यते। 'तस्य चानुबलः कफः' इत्यध्यष्यते 79। तस्य चावश्याय....तो भूयान्प्रकोपः स्यात् अपरे तु **मन्यन्ते**-'मैथुनाद्विरतो नरः' इत्यनेन ग्रीष्मकालोऽभिसंबध्यते। सकलग्रीष्मप्रतिपादनार्थं कृत्स्ने ग्रीष्मे मैथुनाद्विरमेदिति यावत् ॥ ४९ ॥५०॥

**४६–आदानदुर्बले देहे पक्ता भवति दुर्बलः ॥**
**स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः ॥ ५१ ॥**

देहस्य दौर्बल्यात्पक्ताऽपि दुर्बलः। देहबलानुविधायित्वादग्नेः। पक्ताऽग्निः। स इति दुर्बलो वह्निः। **अनिलादीनामिति**। अनिलप्रधानानाम्।

71 च. चि. १५. २३७. अ. सं. सू. १००७. 72 सु. स. ४६. ४६७–४७०. 73 च. सू. ५. 74 च. सू. ६. ३४. 75 च. सू. ६. २३. 76 अ. सं. सू. सु. १८. 77 सू. ६. २८. 78 च. वि. ३. 79 च. चि. ३. ४४.

अथ बाष्पचन्द्रव्याख्या— आदानदुर्बल इत्यादि। किं पुनरत्र कारणम् । ब्रूमः । आदानेन धातुपरिक्षयात् । ऊष्मणोऽपि धातुत्वात्परिक्षयः । तथाहि । उपचीयमानधातूनां यूनां तीक्ष्णता वह्नेर्दृश्यते । अपचीयमानधातूनां च वृद्धानां मन्दता स्थूलानां दीप्ताग्निः पठ्यते । यद्यपि स्थूलस्य दौर्बल्यमुक्तम्-"दौर्बल्यं दौर्गन्ध्यं स्वेदा बाधः क्षुदतिमात्रम्80 इति । सति च तस्मिंस्तीक्ष्णाग्निता तथाऽप्यदोषः । यतः शरीरोपचयमात्रमत्र बलमभिप्रेतम् । तच्च स्थूलेऽपि विद्यत एव । स वर्षास्विति । दुष्टदूषणमादानदुर्बलस्य पक्तुर्भूयो वर्षासु वातादिदुष्टिनिदानं मान्द्यं जायते ॥ ५१ ॥

वर्षास्वनिलादयः कुतः कुप्यन्तीत्याह—

४७–भूबाष्पान्मेघनिष्यन्दात्पाकादम्लाज्जलस्य च ॥
वर्षास्वग्निबले हीने कुप्यन्ति पवनादयः ॥
तस्मात्साधारणः सर्वो विधिर्वर्षासु चेष्यते ॥ ५२

भूबाष्पो जलस्याम्लपाकता च पित्तश्लेष्माणौ कोपयतः । मेघनिष्यन्दो वातश्लेष्मकारकः । जलस्य चेति । चकार आहारस्याम्लपाकतासमुदायार्थः । दुर्बलत्वादग्नेराहारस्यापि विदाहसंभवात् । उक्तं हि—' दुर्बलो विदहत्यन्नम् ' इति । अग्निबले हीने, इत्यनेनाग्निमान्द्यादपि दोषकोपं दर्शयति । साधारण इति । त्रिदोषघ्नोऽग्निदीपकश्च ।

अथ बाष्पचन्द्रव्याख्या— वातादीनां पुनर्वर्षासु किं दुष्टिनिमित्तमित्यत आह—भूबाष्पादित्यादि । अन्ये तु व्याचक्षते दूष्यन्ते यैस्तानि दूषणानि । तानि च भूबाष्पादीन्येव । वचनं हि—भूबाष्पान्मेघनिष्यन्दादित्यादि । तत्र भूबाष्पात्पित्तप्रकोपः । मेघनिष्यन्दाद्वातश्लेष्मप्रकोपः पाकादम्लात्पित्तश्लेष्मणोः प्रकोप इति । आह । भूबाष्पादिभिर्वातप्रकोपो नोपपद्यते वैधर्म्यात् । भूबाष्पास्तावद्वातकफाभ्यां विधर्मा मेघाभिष्यन्दः पित्तस्य । अपां चाम्लो विपाको वायोरत एषां भूबाष्पादिभिरुपशमः प्राप्तः कथं प्रकोपः । ब्रूमः । न प्रभाववशेनान्यत्र दृष्टत्वात् । दृष्टमेतदेवं प्रभावेन वशान्मन्द–कफाणित–मूलकादिषु । यतस्तद्वर्तिनः स्निग्धोष्णादयो गुणाः समानानां प्रकोपाय, न तु विपरीतानां हान्यै । न चाचिन्त्यत्वात्प्रभावस्य शक्योऽत्र हेतुरुन्नेतुम् । अन्यथा सर्वेषामेव द्रव्याणां यथोक्तकर्माभावः प्रसज्येत । कस्मादेवम् । न मधुराभ्यां रसपाकाभ्यां श्लेष्माणं रूक्षशीताभ्यां वायुं कोपयन्तीत्यादि सर्वमुदाहार्यम् । तस्मान्मन्दकादिवद्भूबाष्पादयो दोषकोपना न शमना इति स्थितम् । द्वितीये तु व्याख्याने दूष्यन्त एभिरिति दूषणानीत्यस्मिन्नयं परिहारः । भूबाष्पादिभिरग्नेरुपघातः साक्षाद्भवति न वातादिप्रकोपः । अग्नावुपहते वातादिप्रकोपो भवति । तथा च भूबाष्पान्मेघनिष्यन्दाज्जलपाकाच्चाम्लादग्निबले हीने पवनादयः कुप्यन्तीत्युक्तं न तु भूबाष्पादिभिः कुप्यन्तीत्युक्तम् । शमप्रकोपौ दोषाणां सर्वेषामग्निसंश्रयौ । ननु कथं तर्हि, अनिलादीनां दूषणानि । पारंपर्येणेति ब्रूमः । ननु गुरुशीतादीन्यग्निमान्द्यक्रमेणापि दूषणानि स्युस्तत्र कालनिमित्ताधिकारात् । अत एव मन्दकादीनामनिलादिदूषणत्वेनोपादानात् । आद्ये पक्षे भूबाष्पादयोऽग्निमान्द्यं कस्मात्कुर्वन्तीति चेन्न । अपर्यनुयोज्यो हि वस्तुस्वभावोऽग्निमान्द्यदर्शनात्प्रतिपत्तव्यः । यश्च व्यभिचारः केषांचिद्वर्षासु नाऽऽदानदुर्बलदेहत्वम् । न चाग्निमान्द्यं दृश्यते । तत्रापूर्वनिमित्तं बोद्धव्यम् । तस्मादग्निमान्द्यनिमित्ता पवनादीनां दुष्टिरिति चोद्यानवकाश एव । नन्वग्निमान्द्ये मारुतकोपोनुपपन्नस्तीक्ष्णाग्नेः शासनात् । वचनं हि–'बली पक्ता भवति हेमन्ते यावदतो वायुः प्रकुप्यति ' 81 । तस्मात्स्थूलस्याग्नितैक्ष्ण्यात्पवनवृद्धिरिति शास्त्रम् । उच्यते । न मन्दाग्नित्वं समीरणं कोपयति किं तर्हि भूबाष्पादयः । द्वितीये तु व्याख्यानेऽग्निमान्द्यादाहारस्यासम्यक्पक्त्या प्रायः किट्टाभिनिर्वृत्तिर्न तथा रसस्य । किट्टाच्च वातादिजन्म । 'किट्टाद्वातमूत्रपुरीषपित्तश्लेष्माणः ' इति 82 वचनात् । रसाच्च सर्वेषां शरीरस्य च स्थितिस्तदल्पत्वात्परिहीणे ज्यायसि वातो वह्न्यग्नेः कुप्यति मातरिश्वा पूर्वसंचित इति सांप्रतम् । ननु कोपे संशयः, त्रयव्यवस्थापनात् । 'क्षयः स्थानं च वृद्धिश्च दोषाणां त्रिविधा गतिः' 83 इति । न चात्र कोप उदाहृतः । तत्किं चतुर्विधा दोषगतिः । यदि चतुर्थी तर्हि तत्रैवोपसंहर्तव्या । उच्यते । नावस्थाविशेषादिह व्यवस्था वृद्धेः । यदाऽभिव्यञ्जकं कारणं नोपलभ्यते तदा वा दोषांश्चेत इत्याख्यायेत । यदा त्वीरकं हेतुमासाद्य व्याधिजननाभिमुखः पूर्वरूपाणि दर्शयति तदा कुपित इत्येतामाख्यां विन्दति । आह । वृद्धो दोषश्चयावस्थायां रोगान्न जनयति । कुतो हेतोः । उच्यते । सामर्थ्यादविसर्पतो दोषस्य चात्र हेतुमुत्तरकालम्(?)

तत्रस्थाश्च विलम्बन्ते कदाचिन्नासमीरिताः ।
नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः 84 ॥

आह । कुप्यन्ति पवनादय इत्ययुक्तम् । यस्मात्—
" चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम् ।
भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु " 85

इति वायोरेव केवलस्य वर्षासु कोप उक्तो न सर्वेषां वातादीनाम् । ब्रूमो वातायेत्येतस्मादभिधानादिदमावेदयति । वायुरेव स्वतन्त्रः प्रकर्षेण कुप्यति तत्प्रेरितौ पित्तश्लेष्माणौ । दृष्टं चैतद्बलवान्स्वतन्त्रो दोषो दुर्बलमस्वतन्त्रं दोषमादाय व्याधिं जनयतीति " प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये 86 एवमादि । तथा–

" वायुरेव स्वतन्त्रत्वाद्द्वयोस्तत्राप्युदीरकः ।
कुपितस्तौ समुद्धूय तत्र तत्र क्षिपन्गदान् ॥
करोत्यावृतमार्गत्वात् " 87 इत्यादि ।

80 च. सू. २१. ४. 81 च. सू. ६. ९–१०. 82 च. सू. २८. ४. 83 च. सू. १७. ११२. 84 च. सू. २८. ३२. 85 च. सू. १७. ११४. 86 च. सू. १७. ४५. 87 च. चि. २८. ६०–६१.

एवं वसन्ते बलासः स्वतन्त्रः कुप्यति शरदि च पित्तम् । वक्ष्यति चेतरयोरनुबलत्वम् । यथा—

"आदानमध्ये तस्यापि वातपित्तं भवेदनु" 88

'तस्य चानुबलः कफः' 89 इति। कियन्तःशिरसीये च पठ्यते

"प्रकृतिस्थं कफः पित्तं यदा वातपरिक्षये ।
संनिरुध्यात्तदा कुर्यात्सतन्द्रागौरवं ज्वरम् 90

तथा—"प्रकृतिस्थं यदा वातं पित्तं कफपरिक्षये।
संरुणद्धि तदा दाहः शूलं चास्योपजायते" 91

तस्मात् 'चयप्रकोपप्रशमाः' 92 इत्यत्राप्राधान्यात्पित्तादीनां ग्रहणमतोऽविरोधः । आह । पाकादम्लाज्जलस्येत्यनुपपन्नमपां मधुरपाकित्वात् । न केवलमेतदन्यच्च वक्ष्यते—

"वर्षास्वम्लविपाकाभिरद्भिरोषधिभिस्तथा ।
संचितं पित्तम्" 93 इति।

तथा—"अद्भिरोषधिभिश्चैव मधुराभिश्चितः कफः ।
हेमन्ते' 94 इत्येतच्च न युज्यते । प्रतिनियतपाकत्वादोषधिनाम् । तथा च वक्ष्यति—

"कटुतिक्तकषायाणां विपाकः प्रायशः कटुः ।
अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा" 95 ॥

आह । मधुरादिरस आहार उपयुक्तः प्रावृषि कालस्वाभाव्यादम्लं विपच्यते । हेमन्ते चाम्ललवणादिर्मधुरं प्राप्तस्तर्हि कालायत्तो रसानां पाक इत्येवं सत्यनवस्थितस्वभावानि द्रव्याणि स्युः । कश्चैवं सति दोष इति । 'शीता रसे विपाके च मधुराः स्वल्पमारुताः' 96 । तथा । 'मधुरा मधुराः पाके त्रिदोषशमनाः' 97 इत्यन्नपाननिर्देशः प्लवेत् । अत्र केचिदाचक्षते अग्नेर्बलाबलाधीनो विपाकः । तथा दुर्बलेनाऽग्निना सम्यक्पक्तुमसमर्थेन विदह्यत आहारः । ततो द्रव्याणां स्वाभाविकः पाको न भवति ।

यथोक्तम्—"दुर्बलो विदहत्यन्नं तद्यात्यूर्ध्वमधोऽपि वा ।
अधस्तु पक्वमामं वा प्रवृत्तं ग्रहणीगदः ॥
उच्यते सर्वमेवान्नं प्रायो ह्यस्य विदह्यते 98 ॥

पुनश्चोक्तम्—"तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता" 99

तदेवं सर्वस्यैवाऽऽहारस्य कटुकविपाकस्य मधुरविपाकस्य च दुर्बलोऽग्निः स्वाभाविकं पाकं बाधित्वाऽम्लविपाकं करोतीति तन्त्रे निरूपितं स्पष्टम् । वर्षासु दुर्बलोऽग्निर्भवति । तत्कृतश्चाम्लः पाकः पानौषधीनां च । हेमन्ते त्वतिबलत्वादग्नेर्द्रव्यस्वभावविपरीतो मधुरः पाको भवति सर्वेषामेव द्रव्याणां यतस्तत्रौषध्यो मधुराः परिणतवीर्या भवन्ति । 'तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्या आपश्चाप्रशान्ताः क्षितिमलप्राया उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां शीतवातवर्षविष्टब्धाग्नीनां विदह्यन्ते विदाहात्पित्तसंचममापादयन्ति' 100 । 'ता एवौषधयः कालपरिणामात्परिणतवीर्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रशान्ताः स्निग्धा अत्यर्थं गुर्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपित्वाच्च कफसंचयमापादयन्ति इति' 101 ।

**भट्टारकहरिश्चन्द्रस्त्ववादीत्** । तत्कालं खल्वोपधीनामुत्पद्यमानानां मधुरलवणकट्वादीनामनुरसः कालस्वभावादम्ल उपजायते । तथा विपाकस्य मधुरस्याभिनिवर्तमानस्यानुरसोऽम्लोऽभिनिवर्तयति । ततः स्वकारणादत्र पित्तसंचयः प्रावृषिको भवति । तं चानु श्लेष्मणः । वक्ष्यति च—'तस्य चानुबलः कफः' 102 । न चाचितस्य प्रकोपो न्याय्यः । किं चाम्लविपाकानामोषधीनामुपजनकस्तत्कालं भूयिष्ठं नेष्टयवक्रमो मधुरविपाकस्य व्याकरणीयः । अथवाऽऽदावस्मिन्कालद्वयेऽन्यथा द्रव्यमन्यत्र यथैव विहिता व्यवस्था तथैवेति । वयं तु मन्यामहे, अयमेवोत्तरपरिहारः । किं त्वस्मिन्कालद्वयेऽप्यन्यथा द्रष्टव्यं किंचिदेव द्रव्यं न सर्वम् । तथा हि । रक्तशाल्यादीनां स्वास्थ्यानुवर्तनाय विहितानां न कालबाध उत्कृष्टवीर्यत्वात् । स्याच्चेन्न स्वास्थ्यमनुवर्तेत । न तु वर्तयन्ति च । तस्मादितरेषां सम्यग्लक्षणेन कालेन बाधः । अत एवोक्तम्—विहितान्यथाचारिणां धातुवैषम्यम् । 'विषमस्वस्थवृत्तानामेते रोगास्तथा परे 103 । आह—सकृन्नियोक्तव्ये वर्षासंशब्देन किमर्थं बहूनि वर्षासंशब्दनानि क्रियन्ते ? । उच्यते । **प्रथमं** तावद्वर्षासंशब्दनमृत्वधिकारार्थं तदन्तरेण ग्रीष्माधिकारस्य प्रवृत्तत्वात् । ग्रैष्मिक एवायं विधिरापतेत् । वर्षास्वग्निबले हानि, इत्येतच्च निमित्ततां दर्शयति । वर्षानिमित्तैर्वाग्नेर्मन्दता वातादिकोपश्च । यदि हि वर्षातापस्तद्भवाष्पादीनामसंभवान्न स्यात्त्रिदोषकोपोऽग्निमान्द्यं च । तृतीयं तु वर्षाग्रहणं 'तस्मात्साधारणः सर्वो विधिर्वर्षासु वक्ष्यते 104 इत्येतदवधारणार्थम् । अपि त्रयाणां दोषाणां कोपे पावकमन्दत्वे च साधारणः सर्वो वर्षास्वेव वक्ष्यते नान्यत्र । तेन वसन्ते त्रयाणां दोषाणां वर्षास्विव कोपसंभवेऽपि न साधारणो विधिः क्रियते ॥

**भिषगीश्वरसेनस्तु** व्याचष्टे—वर्षास्वेव साधारणो विधिर्यस्मादत्र त्रयाणामपि प्रकोपोऽस्तीति । अन्येष्वृतुषु सत्यप्यन्यदोषप्रकोपे न साधारण उपक्रमः । यतः शरदि तावत्सत्यपि कफप्रकोपे'तस्य चानुबलः कफः' इति वचनादुपशान्ते पित्तप्रकोपेऽनुबलः कफो भवति, अनु बलं यस्य स भवत्यनुबलः क्षणिपित्ते यदाऽऽत्मलाभं लभतेऽतस्तदा कफस्यैव क्रिया न वातपित्तयोरिति नास्ति साधारणत्वम् । तथा

88 च.चि. ३. ४७. 89 च. चि. ३. ४४. 90 च. सू. १७.४९. 91 च. सू. १७. ४८. 92 च. सू. १७. ११४-शा. १. ११० 93 च. चि. ३. ४३. 64 च. चि.३. ४५-४६. 95 च. सू. २६. ५८. 96 च. सू. २७. १०. 97 च. सू. २७. ७७. 98 च. चि. १५. ५१-५२. 99 च. चि. १५. ६८. 100 सु. सू. ६. ११. 101 सु. सू.६. ११. 102 च. चि. ३. ४४. 103 च. सू. ७. ४५. 104 च. सू. ६. ३५.

वसन्ते क्षीणे श्लेष्मणि पश्चात् 'आदानमध्ये तस्यापि वातपित्तं भवेदनु ' 105 अतस्तयोरेव तदा विधिर्भवति न कफस्येति साधारणो न भवति ॥ ५२ ॥

तमेव साधारणं विधिं निर्दिदिक्षुराह—

**४८-अग्निं संरक्षता सेव्या यवगोधूमशालयः ॥**
**पुराणा जाङ्गलैर्मांसैर्भोज्या यूषैश्च संस्कृतैः ॥ ५३**

ननु च यथा शरद्वसन्तयोः संशोधनमभिहितमेवं किमिति वातप्रकोपकाले वर्षासु संशोधनं नाभिहितम् । यथा **तन्त्रान्तरे—**

वसन्ते वमनं कार्यं शरद्यपि विरेचनम् ।
वर्षासु बस्तिरुभयं स्वस्थवृत्तमवेक्ष्य च 106 ॥

अत्र ब्रूमः । भूबाष्पादिभिरग्निदोषाद्वा प्रचयपूर्वकं प्रकोपमनिलादीनामास्थाय साधारणो विधिरुपदिष्टः । यस्तु विहितव्यत्ययाचारकृतो निचयपूर्वकः प्रकोपस्तत्र विधास्यति—

" हैमन्तिकं दोषचयं वसन्ते प्रवाहयेद्ग्रैष्मिकमभ्रकाले " इति ॥ 107

उत वा यस्मात्साधारणः सर्वो विधिरित्यनेनोभौ संशोधनसंशमनलक्षणौ विधी उभयोर्दोषप्रकोपयोश्चयाचयपूर्वयोः शास्तीति न दोषः । बस्तेश्च साधारणत्वम्—

' बस्तिर्वाते च पित्ते च कफे रक्ते च पूज्यते ।
संसर्गे संनिपाते च ' 108 इति तन्त्रान्तरात् ।

**स्वतन्त्रेऽपि—**

" विट्श्लेष्मपित्तानिलमूत्रकर्षी दार्ढ्यावहः शुक्रबलप्रदश्च " 109 इति ॥ ५३ ॥

**४९-भूबाष्पपरिहारार्थं शयीत च विहायसि ॥ ५४ ॥**

**विहायसीति** खट्वादौ ॥ ५४ ॥

किमत्र वर्ज्यमित्याह—

**५०-उदमन्थं दिवास्वप्नमवश्यायं नदीजलम् ॥**
**व्यायाममातपं चैव व्यवायं चात्र वर्जयेत् ॥ ५५ ॥**

**उदमन्थमिति** । उदकाप्लुतान्सक्तून् । स च तक्राम्लादिभिरपि संभवति तद्व्युदासायोदमन्थमित्याह । उदकेन मन्थ उदमन्थः । ननु पित्तसंचयकाले पित्तश्लेष्महरस्य मन्थस्य कस्माद्वर्जनम् । सक्तूनां वातलत्वाद्वातकोपापेक्षया प्रतिषेध इति चेन्न सर्पिःसंस्कारेण तदपगमात् ।

सक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः ।
नात्यच्छा नातिसान्द्राः स्युर्मन्थ इत्यभिधीयते ॥ 110

उच्यते । कालवशात्तद्द्रव्यस्य शक्तिरुदेति यया तदा विहितं स्यात् । स्तैमित्यकरणाद्वा—" ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात्प्रकुप्यतः । श्लेष्मपित्ते " 111 अतोऽस्य निषेधः । अवश्यायस्य तु पुरोवातादीश्चाद्यादिति त्यागं वक्ष्यत इत्याह । पुनर्विशेषार्थवचनम् । नदीजलस्य तु वर्जनम्—' वर्षाजलवहा नद्यः सर्वदोषसमीरणाः ' 112 इतिः कृत्वा व्यायामातपव्यवायानां च वातकोपकत्वात् ॥ ५५ ॥

इदानीं शरदृतुमभिप्रेत्य हेतुमत्सेव्यासेव्यं निर्दिदिक्षुराह—

**५१-वर्षासु संचितं पित्तं प्रायः शरदि कुप्यति ॥**

प्राय इत्यनेन वर्षासु पित्तचयप्रत्यनीकं विधिं सम्यगाचरतो न भवत्यपि चयः ।

न अथ बाष्पचन्द्रव्याख्या—प्रायः शब्दो विशेषार्थो विशेषेण शरदि कुप्यति पूर्वतो संचितत्वात् । न चाचितो न कुप्यति । किं च विशेषेण प्रचितत्वात् । अथवा प्रायो बाहुल्येन शरदि कुप्यति । अन्यदाऽपि प्रकोपात् । शरद्ग्रहणमिहाऽऽधिकारिकम् । इतः प्रभृति यद्वक्ष्यते विधानं तत्सर्वं शरदि वेदितव्यम् । आह । चितं पित्तमित्ययुक्तं चयहेत्वभावात् ।

' तस्मात्साधारणः सर्वो विधिर्वर्षासु शस्यते " 113 इति ।

यदा शेषदोषप्रशमनो विधिरुपदिष्टस्तदा चायकहेत्वसंभवादाचितं पित्तमित्ययुक्तम् । अत्र संचक्ष्महे । सर्वमेवैतन्निर्णीतं विहितान्यथाचारिणाम्—

" वर्षास्वम्लविपाकाभिरद्भिरोषधिभिस्तथा ।
संचितं पित्तम् " 114 इति ॥

तत्र यथोक्तविधिचारिणां कालस्वभावादाचितकुपितपित्तसंशमनमाह—

**५२-तत्रान्नपानं मधुरं लघु शीतं च तिक्तकम् ॥**
**पित्तप्रशमनं सेव्यं रेचनं रक्तमोक्षणम् ॥ ५६ ॥**

आचितं पित्तं शरदि कुप्यति यत्तन्निर्हरणार्थमाह—**रेचनं । रक्तमोक्षणमिति** । पित्तरोगेषु प्रधान उपक्रमो विरेकः । आचार्यकं हि विरेचनं तु खलु सर्वोपक्रमेभ्यः । पित्ते प्रधानतमं मन्यते 'विरेचनं पित्तहरणानाम्' 115 इति । ततः प्रागुक्ताद्रक्तमोक्षात् । असृजस्तु यदा सर्पिष्पानविरेकादिभिरतिमात्रप्रदुष्टत्वान्न पार्यते शान्तिं कर्तुं तदाऽन्योपक्रमासाध्यत्वादन्ते रक्तमोक्षणं कार्यम् । अतश्चान्ते तच्छ्रावणं वक्ति । अन्यथा ' रक्तं शुक्रौजसी, गुदम् ' 116 इति तस्य प्राणायतनत्वाज्जीवरक्तं तदादानाज्जीवादानं स्यात् प्रधानधातुक्षये च महादोषः ॥ ५६ ॥

**५३-इक्षवः शालयो मुद्गाः सरोम्भः क्वथितं पयः ॥**
**शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः ॥ ५७ ॥**

निशाप्रदोष एव परं चन्द्रांशुसेवा नोपरि । ' वसां तैलमवश्यायम् ' इति निषेधात् ॥ ५७ ॥

सेव्यमभिधायासेव्यमाह—

**५४-वसां तैलमवश्यायमौदकानूपमांमिषम् ॥**
**क्षारं दधि दिवास्वप्नं प्राग्वातं चात्र वर्जयेत् ॥ ५८**

वसायाः पित्तश्लेष्मजननाद्वर्जनं तैलस्य च पित्तलत्वात् । वसा तु प्राणिनामुष्णवीर्याणां न तु पृषतादीनाम् । तैलं च प्रधानकल्पनया तैलमतिलं च तैलमेव कृत्वा निषिध्यते । तेन सर्षपतैलादीनां निषेधः । प्राग्वातस्याभिष्यन्दित्वाद्वि-

---

105 च. चि. ३. ४७. 106 च. सि. ६. ५-६. 107 च. शा. २. ४५. 108 सु. चि. ३५. ६. 109 च. सि. १. २८. 110 सु. सू. ४६. ३८५. 111 च. सू. २१. ४४. 112 च. सू. २७. २१३. 113 च. सू. ६. ३५. 114 च. चि. ३. ४३-४४. 115 च. सू. २५. ४०. 116 च. सू. २९. ३-शा. ७. ९.

शेषेण वर्जनार्थं वचनम् । पुरोवातातपावश्यायातिप्रवाताञ्छयादिति वर्जनस्य सिद्धत्वात् । औदकानूपामिषस्य कफपित्तकर्तृत्वात् । क्षारदध्नोश्च । अवश्यायो दिवास्वप्नश्च व्याख्यातौ वर्षाख्याने ॥ ५८ ॥

**५५–पृथक्पानं पुनर्दानं सामिषं पयसा निशि ॥**
**दन्तच्छेदनमौष्ण्यं च सप्त सक्तुषु वर्जयेत् ॥ ५९॥**

**पृथक्पानमिति** । सक्तुमेव जलेनाऽऽप्लाव्य पिबेदिति । पृथक्केवलजलपानमित्यर्थः । पुनर्दानमुत्सृष्टस्य दानम् । निशि, अलक्ष्मीभयात् । दन्तच्छेदं दन्तच्छेदकठिनमिति ऋतुसात्म्यमुक्तम् । तथा च **चरकः**—

तस्याशितीयाद्याहाराद्बलं वर्णश्च वर्धते ।
यस्यर्तुसात्म्यं विदितं चेष्टाहारव्यपाश्रयम् इति ॥ 117

**चरके**, ऋतुसात्म्यप्रसङ्गेनैकः सात्म्यदेशसात्म्यव्याधिसात्म्यान्युक्तानि तान्यत्र प्रदर्श्यन्ते । ननु किमृतुसात्म्यमेवैकमुतान्यदप्यस्तीत्यत आह— "उपशेते यदौचित्यादोकःसात्म्यं तदुच्यते" 117 ॥

उपशेते यत्सुखमादधातीत्यर्थः । उपशयः सुखानुबन्ध उक्तः । तत्तु पथ्यमपथ्यं वा किं पुनरत्र कारणं यदपथ्यमप्याबाधां न जनयतीत्युच्यतेऽचिन्त्यात्सात्म्याभावादित्यर्थः, उत वाऽचिन्त्यात्सातत्यप्रयोगात् । नित्यानुगतं तच्छरीरस्य सहजमिव विषमाशीविषस्य नोत्पादयति पीडां तदेव लक्षणं सात्म्यमोकःसात्म्यमुच्यते । 'सात्म्यं नाम तद्यदात्मन्युपशेते सात्म्यार्थो ह्युपशयार्थः' 118 । अथ देशव्याधिसात्म्ये कथयितुमाह—

"देशानामामयानां च विपरीतगुणं गुणैः ।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितं चाऽऽद्यमेव च"
इति 119

तत्र देशो मरुरनूपश्च । ननु साधारणोऽप्यस्ति देशः ।
तथा च **तन्त्रान्तरीयं** वचः—
अल्पोदकद्रुमो यस्तु प्रवातः प्रचुरातपः ।
ज्ञेयः स जाङ्गलो देश आरोग्यबहुलस्तु सः ॥
प्रचुरोदकवृक्षो यो निवातो दुर्बलातपः ।
अनूपो बहुरोगोऽसौ समः साधारणो मतः 120 इति ॥

अत्र **भट्टारकहरिश्चन्द्रेणो**च्यते— 'मरुभूमिरारोग्यदेशानाम्' इति । जाङ्गलस्याऽऽरोग्यं कार्यम् । 'अनूपोऽहितदेशानाम्' 121 इति । तस्याप्यनारोग्यं कार्यम् । साधारणस्य तु न किंचित्कार्यमतोऽनुमिनुयामो नोक्तोऽपि साक्षाद्वियत इति । **अपरे** त्वेवं मन्यन्ते-देशानां विपरीतगुणं सात्म्यमिष्टम् । न च साधारणस्यास्ति विपर्यय इति सतोऽपि तस्येहावचनम् । साधारणस्य तु जाङ्गलानूपविपर्यये पठितत्वात् । तदेव द्विविधस्य देशस्य विपरीतगुणं प्रतिलोमम् । कैर्गुणैः । तत्र मरोर्देशस्ये गुणा रूक्षलघूष्णादयः । तद्विपरीतगुणं स्निग्धशीतादिगुणम् । किं तत्सात्म्यम् । तथाऽनूपस्य गुणाः स्निग्धगुरुशीतादयस्तेषां विपरीतगुणम् । किं तत्सात्म्यमामयो व्याधिस्तद्विपरीतगुणम्–संतर्पणोत्थेऽपतर्पणमपतर्पणोत्थे च संतर्पणं, शीतसमुत्थे चोष्णमुष्णसमुत्थे शीतम् । आह । हेतुविपरीतमेतद्धेतुव्यतिरिक्ताच्च व्यतिरिक्तं व्याधिविपरीतं निर्दिष्टम् । **'उपशयः**– पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणां चौषधाहारविहाराणां सुखानुबन्धः' 122 इति । उच्यते । सत्यमस्त्येतयोर्भेदो न ह्यत्र हेतुविपरीतं तदर्थकारि वा भेषजं प्रस्तुतं किं तर्हि सात्म्यभेदोऽत्र व्याख्यायते । तच्च हेतुविपरीतं वा भवतु व्याधिविपरीतं वा सर्वमेवेदं व्याधिसात्म्यान्न भिद्यत इत्यर्थः । व्याधिविपरीता ज्वरे यवागूः सर्पिश्च । तथा– "प्रतिमार्गं च हरणं रक्तपित्तेऽभिधीयते" 123 । तथा गुल्मे–"विमार्गाजपदादर्शैर्यथालाभं प्रपाडयेत्" 124 ॥

ननु विपरीतार्थकार्यविभेषजं व्याधिसात्म्यमिच्छति । यतो हेतुव्याधिविपरीतयोरौषधयोरर्थं व्याधिशमनलक्षणं तदपि करोति । यथा-**छर्द्यां**,125 वमनमति**सारे** विरेचनं 126 **मदात्यये** मद्यपानम्, 127 अतो विपरीतगुणं गुणैरित्ययुक्तं लक्षणम् । तस्यानवरोधान्नेदं व्याधिगुणैर्विपरीतगुणमर्थं तु विपरीतगुणं संपादयति । भ्रमः । न सर्वस्मिन्रोगे तदर्थकारि सात्म्यमुपपादितं तस्माद्बाहुल्यं परिगृह्योक्तम् ननु किं तद्विपरीतगुणं देशानामामयानां च यत्सात्म्यम् । उच्यते । चेष्टितं चाऽऽद्यमेव च । तत्र सात्म्यमुपशयः 'सात्म्यार्थो ह्युपशयार्थः' 119 इति **वचनात्** । **चेष्टितं** धावनलङ्घनस्वप्नास्याहर्जागरादि । **आद्यमदनीयमाहार** उष्णस्निग्धमात्रावदादियुक्तः । एवमेतदृतुसात्म्यमोकःसात्म्यं देशसात्म्यं **व्याधिसात्म्यं** चेति चतुष्प्रकारं सात्म्यमुक्तम् 128

नन्वन्यान्यपि सात्म्यानि सन्ति । यथा षष्टिकादीनां प्रकृत्यैव हिततमानां **सर्वकालसात्म्यम्** । तथा सात्म्यार्थो ह्युपशयार्थस्य सुखानुबन्धः । षष्टिकादिभिश्च सर्वदा सुखानुबन्धो नित्यप्रयोगवचनात् । तथा दोषविपरीतमपि **दोषसात्म्यमुक्तम्** —

समपित्तानिलकफाः केचिद्गर्भादिमानवाः ।
दृश्यन्ते वातलाः केचित्पित्तलाः श्लेष्मलास्तथा॥ 129
विपरीतगुणस्त्वेषां स्वस्थवृत्तविधिर्हितः ।
समसर्वरसं सात्म्यं समधातोः प्रशस्यते ॥ 130

तथा तत्र सर्वरसं समधातुप्रवरावरमध्यस्थम् । तत्रावरमध्यमाभ्यां सात्म्याभ्यां क्रमेण प्रवरमुपपादयेत्सात्म्यमिति । तदेतानि सर्वसात्म्यदोषसात्म्यरससात्म्यानि कस्मादत्र नोदाहृतानि । किं चैषां बहूनां सात्म्यानां युगपदुपनिपतितानां किं प्रयोक्तव्यमिति संदेहः । तद्यथा । हेमन्ते गोरसेक्षुवसातैलादीनि केषांचित्पुरुषाणां जन्मप्रभृत्येव तान्यनुचितानि ।

117 च.सू. ६. ४९. 118 च.वि. १. २३. 119च. सू.६.५० 120 च. वि.३. ५२–५३. 121 च. सू. २५. ४०. 122 च.नि. ११०. 123. च.नि. २.१९. 124 च. चि. ५. १४०. 125 च. चि. २०. २२. 126च. चि. १९. २० 127 च.चि. २४. १०९–११०. 128 च. सू. ६. ४९–५०. 129 च. सू. ७. ३९; 130 च. सू. ७ ४१.

अन्येषां श्लेष्मप्रकृतित्वादोकःसात्म्यं न भवति । कटुतिक्तकषायास्तु रसा ऋत्वोकःसात्म्यं तथा यदि हेमन्तश्च कालो भवति । अनूपदेशश्च सिन्धुदेशो वा । तत्र तावत्किं देशसात्म्यं क्रियतामुत हेमन्तर्तुसात्म्यम् । एवं व्याधिसात्म्येनापि भाव्यमिति । अत्र ब्रूमः—यत्तावदुक्तमन्यान्यपि सात्म्यानि सन्तीति । तन्न चतुर्ष्वेवान्तर्भावात् । तत्र व्याधिविपरीतेनैव दोषप्रकृतिः विपरीतसंग्रहाद्दोषसात्म्यम् । प्रकृतिसात्म्यं व्याधिसात्म्येनैवोक्तं प्रतिपत्तव्यम् । रससात्म्योपदेशोऽपि ऋत्वोकःसात्म्योपदेश एवान्तर्गतो ज्ञेयः । सर्वकालसात्म्यमृतुसात्म्येऽन्तर्भवतीति यतस्ततः षड्स्वप्यृतुषूपदिश्यत इति । यच्चोक्तम्—बहूनां युगपन्निपतितानां किं प्रयोक्तव्यमिति । अत्राप्युच्यते—किंचिदेव कस्यांचिदवस्थायां बलवत्त्वात्प्रधानम् । तस्यैव प्रयोगो नेतरस्य तत्रर्तुसात्म्याद्देशसात्म्यं बलवद्यदृतुसात्म्यं सर्वदेशसामान्यं देशसात्म्यं चैकदेशत्वाद्विशेषः । देशसात्म्यमपि तत्र देशे सर्वपुरुषसात्म्यकस्तु प्रात्यात्मिकत्वाद्विशेषः । ऋत्वोकःसात्म्यादपि व्याधिसात्म्यं बलवद्व्याधेः पीडाकरत्वात्कादाचित्कत्वाच्च । सात्म्याविशेषभावाच्चोत्सर्गस्यापवादेन बाधो भवति । वचनादपि बलवत्त्वं गम्यते ।

यथोक्तम्—'ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात्प्रकुप्यतः ।
श्लेष्मपित्ते दिवास्वप्नस्तस्मादन्येषु नेष्यते॥" 131

एवमृतुसात्म्यमुक्त्वा पुनरवोचत्—

गीताध्ययनमद्यस्त्रीकर्मभाराध्वकर्षिताः ।
अजीर्णिनः क्षताः क्षीणा बाला वृद्धास्तथाऽबलाः ॥
सर्व एते दिवास्वप्नं सेवेरन्सार्वकालिकम् इति । 132

अतो विज्ञायते, ऋतुसात्म्याद्व्याधिसात्म्यं बलवत् । तथा ग्रीष्मे स्वप्नमृतुसात्म्यमुक्त्वा पुनरवदत्—

मेदस्विनः स्नेहनित्याः श्लेष्मलाः श्लेष्मरोगिणः ।
दूषीविषार्तश्च दिवा न शयीरन्कदाचन इति॥ 133

ग्रीष्मकालेऽप्येषां प्रतिषेधादृतुसात्म्याद्व्याधिसात्म्यस्य बलवत्त्वमुक्तम् । नवज्वरे दिवास्वप्नप्रतिषेधाद्ग्रीष्मे च विधानादृतुसात्म्याद्व्याधिसात्म्यं बलवद्यथा देशसात्म्यौकःसात्म्याच्चोभयस्मादपि व्याधिसात्म्यं बलवत् । यथोक्तम्—'येऽप्यतिलवणसात्म्याः पुरुषास्तेषां खलतीन्द्रलुप्तपालित्यानि वलयश्चाकाले भवन्ति ' 134 इत्यनागतव्याध्यपेक्षया देशशरीरसात्म्ययोः प्रतिषेधमाह । तथा—" आगन्तूनामनुत्पत्तिविषमार्गो निदर्शितः इति ॥" 135

पाखण्डिका अप्याहुः—

तत्रौकःसात्म्यं सामान्यं सर्वदेशेषु संभवात् ।
ऋतोर्देशविशेषो हि सामान्याद्बलवान्यतः ॥
देशौकःसात्म्ययोरोकःसात्म्यं तु बलवन्मतम्
ऋत्वोकःसात्म्यादपि व्याधिसात्म्यं । बलवदुच्यते-
तद्यथा कण्ठरोगे तु श्वासगलरोधिनि ।
ग्रीष्मर्तौ सिन्धुदेशे च पुंसि क्षीराज्यशालिनि ॥
मुक्त्वा सात्म्यत्रयं व्याधिसात्म्यमेव प्रयोजयेत् ।
कटुतिक्तकषायादि रूक्षं यच्चापतर्पणम् ॥
न ह्यस्यां व्याध्यवस्थायां ग्रैष्मिके विधिरिष्यते ।
न सैन्धवो विधिस्तत्र मत्स्यानूपामिषादिकः ॥
नापि तत्र च शाल्यन्नक्षीराज्यादिहितं तदा ।
अनया तु दिशा सर्वमूह्यं सात्म्यबलाबलम् ॥
मिथःसात्म्याविरोधी स्यादनुरोधे तु योजयेत् ।
सर्वाण्येव हि सात्म्यानि तद्यथा पैत्तिके गदे ॥
शरदृतौ मरौ देशे नरे मधुरशालिनि ।
तत्रर्तुदोषपुरुषरोगसात्म्यं प्रयोजयेत् ॥
अयमेव विधिर्ज्ञेयान्यत्सात्म्यानां चतुष्टयम् ।
प्रयुज्यते विरोधेन विरोधे ज्ञापितो विधिः ॥
सात्म्यस्य नियमो ह्येष आत्मना सह यत्स्थितम् ।
आत्मा ह्यनुमतो देहो यदा द्रव्योपयोगतः ॥
विकारं नैव भजते तस्मात्सात्म्यं निरुच्यते ।

ययोस्तु विरोधः शक्यते कर्तुम् । यथा—"क्षीरसात्म्यास्तथा प्राच्या मत्स्यसात्म्याश्च सैन्धवाः" 136 ॥

क्षीरमत्स्ययोर्देशसात्म्यमृतुसात्म्यं चेत्यविरुद्ध एव प्रयोगस्तयोस्तस्मात्सर्वं युक्तम् ॥ ५९ ॥

धातूनाह—

**५६–रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ॥**

दोषानाह—

**५७–वातपित्तकफा दोषा विण्मूत्राद्या मला मताः ॥**

वायुश्चात्र प्रधानत्वादग्रे निर्दिष्टः । प्रधानो हि दोषेभ्यो वायुः शीघ्रकारित्वाच्छुभाशुभार्थकरणं प्रति समर्थतरत्वाद्राजवदुपचाराद्बहुतरविकृतविकारकर्तृत्वाच्च 137 । तं चानु पित्तं मध्यकारित्वान्मित्रवदुपचारात्ततोऽल्पतरविकारकर्तृत्वाच्च । तदनु च श्लेष्मा चिरकारित्वाद्भृत्यवदुपचारादल्पतमरोगकर्तृत्वाच्चेति ।

इदं तत्र विचार्यं कस्माद्वातादय एव दोषा उच्यन्ते न तु धातवः । यावता धातूनामपि रसादीनां वातादिभिः समानः सर्वः पृथङ्निदानादिनिर्देशः कृतः । तत्र निदानं तावद्यथा वातादीनां पृथगुक्तं तथा रसादीनामपि—

"गुरुशीतमतिस्निग्धमतिमात्रनिषेविणम्" 138 इत्यादि। तथा प्रदुष्टबहुतीक्ष्णोष्णैर्मद्यैरित्येवमादि । स्थानमपि 'रसवहानां स्रोतसां हृदयं मूलम् 139 । दश धमन्यः। 'शोणितवहानां स्रोतसां यकृन्मूलं प्लीहा च ' 139 इत्येवमादिकम् । विकारा अपि 'अश्रद्धा चारुचिश्चास्य वैरस्यम् ' इत्याद्याः 140 । उपक्रमोऽपि—

' रसजानां विकाराणां सर्वं लङ्घनमौषधम् ' ॥ 141

इत्येवमादि । दोषसंज्ञा पित्तता यस्मादिपित्तं शोणितमेव

131 च. सू. २१. ४४. 132 च. सू. २१. ३९–४१. 133 च. सू. २१. ४५. 134 च. वि. १. २१. 135 च. सू. ७. ५४. 136 च. चि. ३०. ३१७. 137 च. सू. १२. ८; सु. नि. १. ५–९. 138 च. सू. १७. ७८. 139 च. वि. ५. ७. (४). 140 च. सू. २८. ९–१०. 141 च. सू. २८. २५.

वा । यदि कुप्यतीत्युक्त्वा यथोल्बणस्य दोषस्येत्युक्तम् । तथा दौर्गन्ध्यं मेदोदोषादिति स्यान्न च पृथङ्निदानादिनिर्देशाद्दोषा इति ब्रूमः किं तर्हि दुष्यन्ति यस्मात् । यद्येवं तत्सिद्धं धातूनामपि दोषत्वं यस्मात्तेऽपि दुष्यन्ति । आगमो हि-' तेषां प्रकोपात्स्थानस्थाश्च विमार्गगाश्च शरीरधातवः प्रकोपमापद्यन्ते । ' 142

तथा—" शरत्कालप्रभावाच्च शोणितं संप्रदुष्यति " 143 नैतदेवं धातवो हि दोषैर्दूष्यन्ते न स्वयं दुष्यन्ति । यथोक्तं ' तेषां सर्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति ' 144 दोषास्तु स्वतन्त्रा एव दुष्यन्ति न दोषान्तरेण दूष्यन्ते । तस्माद्वातादय एव दोषा न धातवः । एवमादि न युज्यते । यस्माद्वातादयोऽपि निदानैर्दूष्यन्ते स्वतन्त्रा दुष्यन्ति च । तथा दोषेणापि दोषो दूष्यते । यथा प्रकृतिस्थं पित्तं वायुना कुपितेन तद्धि दूषितं दाहादीञ्जनयति ।

उक्तं च-"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये 145 इत्यादि । न चैतावता वातादीनामदोषत्वं तद्वद्धातूनामपि भविष्यति, तथा धातवोऽपि दूष्यन्ते स्वतन्त्रा दुष्यति च येन धातुजा व्याधयः सहजैशारक्तस्रावोदया दोषकोपः पश्चादुक्तः । 'जन्मप्रभृत्येव हिगुदजैरावृतो मार्गः 146 इत्यादिना ग्रन्थेन । रक्तस्रावश्च विरेचनव्यापत्तिनिमित्तो दोषान्तरेण जायते—" दोषान्हत्वा विनिर्मथ्य जीवं हरति शोणितम् " ॥ 147

इत्यादिवचनादिति । तर्हि दूषणाद्दोषा इति ब्रूमः । दूष्याणां रसादीनां धातूनां वातादयो यस्माद्दूषयन्ति तस्माद्दोषा इति । एवमपि सिध्यति धातूनां दोषत्वं यस्माद्धातवोऽपि धातून्दूषयन्त्यतो धातुष्वपि दोषत्वं प्राप्नोति । उक्तं च-'धातवश्च धातूनेव प्रदूषयन्ति प्रदुष्टाः' 148 धातूनां दूष्यत्वान्न दोषप्राप्तिर्भविष्यतीति चेदेवं सति वातादिष्वपि न दोषत्वप्राप्तिर्भविष्यति । यस्मात्तेऽपि संनिकृष्टनिदानैर्दूष्यन्ते । एवं तर्हि दूषणस्वभावाद्दोषा इति व्याख्यानं करिष्यामः। दोषाः स्वभावाद्धि वातादयः। यथोक्तं-'वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषस्वभावात्' 148। दोषो दुष्टत्वं स स्वभावो येषां ते दोषस्वभावाः । तस्माद्दोषस्वभावात्तद्दोषा इति । एवमपि न युज्यते यस्मादेवमिष्यमाणे समावस्थानामदोषत्वं प्राप्नोत्यदोषवचनं च दुष्टत्वाभावात् न हि समावस्थानां वातादीनां दुष्टस्वभावत्वमुपपद्यते । दोषवचनं शरीरयोगक्षेमकर्तृत्वात् । तदुक्तं ' ते प्रकृतिभूताः शरीरयोगक्षेमकराः ' । उत मन्यसे ते दुष्टस्वभावाः शरीरदूषणात्मकास्तदा ते दोषा न समावस्था इति । एवं सति दोषस्वभावानुपपत्तिरव्यवस्थितत्वात् । यदि दोषाणां दोषत्वं कदाचिद्भवति कदाचिन्न भवत्येवं सति स्वभावो न भवति यस्माद्व्यवस्थितः स्वभावो नाव्यवस्थितः इति । तस्माद्धातूनामपि दोषत्वं सिद्धमिति ॥

अत्र ब्रूमः । यद्यपि धातूनां वातादिभिः सर्वं समानं निर्दिष्टं पृथङ्निदानलक्षणस्थानरोगचिकित्सितदोषसंज्ञादूषणत्वादि तथाऽप्ययमत्र विशेषो येन वातादयो दोषा न धातवः । तथा हि वातादयो धातून्दूषयन्ति नैव कदाचिद्धातुभिर्वातादयो दूष्यन्ते । परस्परं वा न दूषयन्तो वातादय एव दोषा न धातवः । तर्हि दूष्याणां दूषयितव्यत्वात् । अतश्च यो रसरक्तादीनां धातूनां उरुशीततीक्ष्णोष्णादेर्निदानात्प्रकोपः । स दोषप्रकोपणद्वारेणैवोत्पद्यते । दोषा एव हि तैस्तैर्निदानैर्दुष्टा रक्तादीन्यधिष्ठाय दूषयन्ति न तु वातादिदोषप्रकोपात्तिरपेक्षा धातवः कुप्यन्तीति । वाद्वयं (?) येऽपि रसरक्तजा व्याधय इत्युक्तास्ते तत्रस्थैर्दोषैर्दूषितेषु रसादिषु जन्यन्ते । उपचारमात्रेण तु रसजा रक्तजा इति व्यपदिश्यन्ते घृतदग्धवत् । यथा घृताधिष्ठानेनाग्निना दग्धो घृतेन दग्ध इति तद्वद्रसरक्ताधिष्ठानैर्वातादिदोषैर्जनितेषु व्याधिषु रसजा व्याधयो रक्तजा व्याधय इति व्यपदिश्यन्ते । तथा चास्यैवार्थस्य साक्षिभूतमिदमाचार्य उक्तवान् । तत्र रसादिषु स्थानेषु युगपत्कुपितानां दोषाणां यस्मिन्स्थाने ये ये व्याधयः संभवन्ति तांस्तान्यथावदनुव्याख्यास्यामः 149 इति । तथा तदुपक्रमनिर्देशोऽप्युपचारमात्रम् । रसरक्तमांसस्थितानां दोषाणां स्थानापेक्षया दोषोपक्रमे क्रियामाण उपचारमात्रमेतद्रसस्योपक्रमो रक्तस्योपक्रम इति । योऽप्युपक्रमविशेषो रक्तजानां शोणितस्रावो मांसमेदोजानां ग्रन्थ्यर्बुदादीनां शस्त्रमेदादिर्न दोषोपक्रमविलोपनः । सोऽपि वातादिदूषितानां रक्तमांसादीनामुपेक्षणाद्यदाऽतिमहती वृद्धिर्भवति तदा तत्रस्थो दोषः शीतादिभिर्दोषोपक्रमैः प्रशमयितुमशक्योऽतिवृद्धत्वात् । रक्तमांसादिजानामनेनोपायेन तत्रोपशमो भवति। उक्तं च ' बहुदोषाणां पुनर्दोषावसेचनमेवकार्यम् । न ह्यभिन्ने सेतौ पल्वलप्रसेकोऽस्ति ' 150 इति तस्मादुत्पत्य निपत्य वा त्रय एव वातादयो दोषा न धातवो दोषाः इति । एतेन तन्त्रान्तरीयाभीष्टस्य चतुर्थस्य रक्तस्य दोषस्य दोषत्वनिषेधः कृतो बोद्धव्यः । यदुक्तं सुश्रुतेन—'यथा हि महानुदकसंचयो विरुद्धत्वात्सेतुमवदीर्यापरैरौदकैर्भावैर्व्यामिश्रः सर्वतः प्रधावत्येवं दोषाः कदाचिदेकैकशो द्वंद्वशः समस्ताः शोणितचतुर्था वा प्रसरन्ति । तत्र वातः पित्तं श्लेष्मा शोणितमित्येवमादि ' ॥ ६० ॥

५८–कफपित्तानिलाः पूर्वमध्यान्तेषु व्यवस्थिताः ॥
भुक्ताहोरात्रवयसां संधिष्वपि कफानिलौ ॥ ६१ ॥

सुगमम् ॥ ६१ ॥

५९–कृशो रूक्षोऽल्पकेशश्च चलचित्तोऽनवस्थितः ॥
बहुवाग्व्योमगः स्वप्ने वातप्रकृतिको नरः ॥६२॥

सुगमम् ॥ ६२ ॥

142 च. वि. ५. ९. 143 च. सू. २४. १०. 144 च. वि. ५. ९. 145 च. सू. १७. ४५. 146 च. चि. १४. ८. 147 च. सि. ६. ७८. 148 च. वि. ५. ९. 149 च. २८. ८. 150 च. वि. ३. ४९.

६०-अकालपलितो गौरः प्रस्वेदी कोपनो बुधः ॥
स्वप्नेषु दीप्तिमत्प्रेक्षी पित्तप्रकृतिको नरः ॥६३ ॥
सुगमम् ॥ ६३ ॥

६१-स्थिरचित्तः सुबद्धाङ्गः सुप्रजः स्निग्धमूर्धजः ॥
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः ॥
संमिश्रैर्लक्षणैर्ज्ञेया द्वित्रि ( त्र ) दोषान्वया नराः
सुगमम् ॥ ६४ ॥

६२-बहूदकनगोऽनूपः कफमारुतरोगवान् ॥
जाङ्गलोऽल्पाम्बुशाखी च वातपित्तगदोत्तरः ६५
सुगमम् ॥ ६५ ॥

६३-संसृष्टलक्षणोपेतो देशः साधारणः स्मृत ॥ ६६ ॥
ननु साधारणस्याभियलक्षणत्वमयुक्तं परस्परपरिहारस्थितिधर्मकत्वात् । न ह्यानूपजाङ्गलयोर्लक्षणानि मिथोत्यन्तविलक्षानि शीतोष्णवदेकत्र संभवन्ति । अवयववृत्तित्वाविसद्धिर्मविप्यात । साधारणो हि कचिदनूपलक्षणः कचिज्जाङ्गललक्षणाश्चित्रपटवदिति चेत् । नैवम् । यो हि साधारणस्यावयवोऽनूपलक्षणः सोऽनूप एव यो जाङ्गललक्षणः स जाङ्गल एवातल्लक्षणत्वात्तत्कार्यत्वाच्च । तस्मादेतदेवं प्रतिपत्तव्यं य एतेऽनूपजाङ्गलयोर्बहुनिम्नोन्नतादयो व्यञ्जनविशेषास्तरैवानतिशयसहितैः सार्म्यावस्थितैः साधारणो मन्तव्य इति ६६
असुमेवाभिप्रायमाह—

६४-समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः ॥
समता चैव दोषाणां तस्मात्साधारणो वरः ६७
तस्मादनूपजाङ्गलवेदनानामपि साम्यमेव वेदितव्यम् ६७

६५-क्षीरितिक्तकषायाणां द्वादशाङ्गुलमायतम् ॥
दन्तकाष्ठं निषेवेत मुखरोगप्रणाशनम् ॥ ६८ ॥
तिक्तकषायादि दन्तकाष्ठं प्रत्युषसि कफप्रकोपनिवारणाय दन्तधावनस्य द्वादशाङ्गुलत्वं सुखग्रहणसंचारणार्थम् ६८

६६-नवज्वरास्यशोषादौ न सेव्यं दन्तरोगिणा ॥
प्रतिपद्दर्शषष्ठीषु नवम्यां चैव भारत ॥ ६९ ॥
सुगमम् ॥ ६९ ॥

६७-दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥७०॥
सुगमम् ॥ ७० ॥

६८-पत्रैः स्याद्वकुलादीनां तत्र दन्तप्रघर्षणम् ॥
सुगमम् ॥

६९-जिह्वानिर्लेखनाद्रोगास्तद्गता न भवन्ति हि ७१
सुगमम् ॥ ७१ ॥
बहिर्मुखप्रक्षालनमाह—

७०-पित्तरक्तकृती रोगा न स्युर्व्यङ्गादयो मुखे ॥
भिल्लोटककषायेण धात्रीक्वाथेन धावनात् ॥७२॥
आदिशब्दान्नीलिकामुखशोषपिटिका गृह्यन्ते । भिल्लोटकेति । भिल्लोटको हिमवद्वनान्ते केदारभूमौ प्रसिद्धः । गयी तु भिल्लोटककषायम् ॥ ७२ ॥

अन्तर्मुखप्रक्षालनमाह—

७१-आमलकस्य कषायेण नेत्रे प्रक्षालयेत् ।
उभयं शीतोदकेन वा ॥ ७३ ॥
दृष्टिपरिमार्जनार्थं मुखस्य कान्त्यै त्रिदोषशमनाय ॥
सौवीराञ्जनमुक्तं लोचनयो रञ्जनं मुनिना ॥ ७४ ॥
सुगमम् ॥ ७३ ॥ ७४ ॥
सामान्याञ्जनगुणमाह—

७२-शोभार्थमञ्जनं कृष्णं शलाकाभिर्यथेप्सितम् ॥
पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलम् ॥
नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम् ॥ ७५ ॥
पक्ष्मलं घनरोमान्वितम् । कान्तं कमनीयम् । अञ्जनसंयोगादिति । अञ्जनं सौवीराञ्जनादि ॥ ७५ ॥

७३-श्रान्ते प्ररुदिते चैव मद्यपीते नवज्वरे ॥
उष्णवेश्मनि दाहे च अञ्जनं नैव शस्यते ॥ ७६ ॥
सुगमम् ॥ ७६ ॥

७४-निर्गदं निर्मलं चक्षुर्भवत्यञ्जनयोगतः ॥
प्रतिमर्शस्ततो देय ऊर्ध्वजत्रुगदापहः ॥ ७७ ॥
सुगमम् ॥ ७७ ॥

७५-मुखशुद्धिश्च पूगादिकर्पूरसुमनःफलैः ॥ ७८ ॥
श्लेष्महननाय कल्पत इति कर्पूरः ॥ ७८ ॥

७६-अभ्यङ्गोत्सादनस्नानगन्धमाल्यादिभूषितः ॥
पादत्रच्छत्रदण्डैश्च विचरेच्च यथासुखम् ॥ ७९ ॥
अभ्यङ्गस्तु विशेषेण कार्यो विपरीतगुणैर्वातं जित्वा वार्यादि करत्वात् ।
उक्तं च—
" स्नेहेन रौक्ष्यत्वमपास्य वायोर्यद्गौरवाल्लाघवमाशु तस्य ।
उष्णेन शैत्यं विदधाति तैलं वर्यं तुवर्णं सुबलं सुपुष्टिम् इति ॥
स्नेहस्य शिरामुखादिभिः शरीरस्य संतर्पणकालं केचिदत्र पठन्ति—

रोमान्तेष्वनुदेहस्य स्थित्वा मात्राशतत्रयम् ।
ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति त्वचम् ॥
रक्तं व्रजति मात्राणां शतैः पञ्चभिरेव च ।
पड्भिर्मासं प्रपद्येत मेदः सप्तभिरेव च ॥
शतैरष्टाभिरस्थीनि मज्जानं नवभिर्व्रजेत् ।
तत्रस्थाञ्शमयेद्रोगान्वातपित्तकफात्मकान् ॥ 151

उत्सादनं सस्नेहकल्केनोद्वर्पणम् ।
स्नानालेपनमाल्यानि मनोहर्षं वितन्वते ॥
हर्षणान्मनसो वृष्यं प्रभावादुपजायते ।
पादत्रच्छत्रदण्डैरिति । पादत्रगुणाः सुश्रुत उक्ताः—
पादरोगहरं वृष्यमायुष्यं चक्षुषे हितम् ।
सुखप्रचारमोजस्यं सदा पादत्रधारणम् इति ॥ 152
वृष्यत्वे कारणमाचार्यः प्राह—

151 सु. चि. २४. ३. तल्हणः. 152 सु. चि. २४. ७१-७२.

रेतोवहाः पादतलेषु नाड्यः स्थिता उपानद्रहितस्य तासु पित्तानिलाभ्याममिघातकृद्भ्यामुत्पद्यते वीर्यमवृष्यताऽतः॥ पादत्रयुक्तस्य तु कारणैः स्वैर्वृद्धं न नाडीषु विशोषमेति। हृतेऽपि काम्यादिह वृष्यताक्रादिष्टः प्रयोगो मुनिभिः प्रदिष्टः इति ॥ ७९ ॥

७७-श्रोत्रघ्राणशिरःपादतैलनित्येऽथ धूमपः ॥ ८० ॥

कर्णपूरणकालस्य संख्यां वाग्भटः प्राह–

धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयेत्।
रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने इति 153

पादाभ्यगुणाः सुश्रुत उक्ताः—

निद्राकरो देहसुखश्चक्षुष्यः पवनापहः।
पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः इति 154

पादचक्षुषोर्व्यवहितावपि पादाभ्यङ्गश्चक्षुष्यः। उक्तं च—

चक्षुषी प्रतिबद्धे द्वे शिरे पादसमाश्रिते।
तस्माच्चक्षुप्रसादार्थं पादाभ्यङ्गं समाचरेत् इति॥

वाग्भटेऽपि—

"द्वे पादमूले पृथुसंनिवेशे शिरे गते ते बहुधा च नेत्रे।
ताम्रक्षणोद्वर्तनलेपनादीन्पादप्रयुक्तान्नयनं नयन्ति ॥ 155

७८-पृष्ठतोऽर्कं निषेवेत जठरेण हुताशनम् ॥
स्वामिनं सर्वभावेन परलोकममायया ॥ ८१ ॥

सुगमम् ॥ ८१ ॥

७९-राजन्हरितकीं भक्ष तक्रं सलवणं पिब ॥
भुङ्क्ष्व वास्तुकशाकेन नश्यन्तु तव तेन ते॥८२

तेन त इति। ते गुदजाः ॥ ८२ ॥

८० -न वेगान्धारयेन्निद्रावातविण्मूत्ररेतसाम् ॥
जृम्भाबाष्पक्षवोद्गारश्वासतृष्णावमिक्षुधाम् ॥

सुगमम् ॥ ८३ ॥

८१-धारितेषु प्रजायन्ते तन्मार्गस्थानजा गदाः ॥ ८४

तन्मार्गस्थानजा गदा इति। तेषां मार्गस्रोतसि स्थाने वाऽऽश्रये गदा जायन्त इत्यर्थः ॥ ८४ ॥

८२-धार्या वेगास्त्वशस्तानां मनोवाक्कायकर्मणाम् ॥

सुगमम् ॥

८३-न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ॥ ८५

इन्द्रियाणि रसनादीनि कदन्नाशनादिना न पीडयेन्न निगृह्णीयात्। न चैतानीन्द्रियाण्यतिलालयेदतिशयेन विलासयेत् ॥ ८५ ॥

८४-अनुयायायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ॥
सेवेत विषयान्काले त्यक्त्वा तत्परतां वशी ८६
नातिजागरणं निद्रां सर्वभूतहितैषिताम् ॥
देवगोब्राह्मणाचार्यगुरुवृद्धान्सदाऽर्चयेत् ॥८७॥

सर्वधर्मेषु मध्यमां प्रतिपदं प्रतिपत्तिमनुयायात्। सर्वेष्वाचारेषु मध्यमं मार्गमनुवर्तेत नैकत्राऽऽसक्तिं कुर्यादित्यर्थः ॥ ८६ ॥ ८७ ॥

८५-चतुष्पथे नमस्कर्ता दाता यश्च प्रियंवदः॥
क्रुद्धानामनुनेता च दीनानामनसूयकः ॥ ८८ ।
आश्वासकश्च भीतानां बन्धुवत्सर्वदेहिनाम् ॥
रागद्वेषनिदानानां हन्ता धर्मपरायणः ॥ ८९ ॥

दीनानामनसूयक इति। अनसूयकोऽभ्युद्धारकः। बन्धुवदिति। करुणार्द्रमनस्कत्वेन बन्धुरिव। रागद्वेषनिदानानां हन्ता। अहंकारममकारमिथ्याबुद्धयो रागद्वेषहेतवः। रागद्वेषमूलशुभाशुभकर्मप्रसरः प्राणिनाम्। ततो विग्रहसंसारनिगडबन्धः। तं छेदयेत्परं प्रयत्नमाधाय ॥ ८८ ॥८९॥

८६-नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ॥
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः
शिरश्च पादौ च सदाऽर्चयेद्यः स्त्रियं श्रियं नाभिलपेत्परस्य ॥ ९० ॥

नित्यं सदैव हिताहारविहारौ सेवेत। तच्छीलो यः स एवंभूतो नरः। तथा दाता त्यागी त्यागवान्। तथा समः सर्वेषु भूतेषु समचित्तः। तथा सत्यपरोऽवितथवाक् तथा क्षमावायः शक्तोऽपि कृतापराधदण्डेनानुरूपेण न योजयति। तयाऽऽप्तानुपसेवते तच्छीलो यः स आप्तोपसेवी चारोगो भवति। केवलं प्राक्तनविध्यनुष्ठानेनारोगः संपद्यते। यावदाप्तोपसेवी चेति चशब्दार्थः।

येषां त्रिकालमचलं ज्ञानमव्याहतं सदा।
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम् ॥ 156

इत्याप्तलक्षणमिति ॥ ९० ॥

८७-न कुर्याच्चञ्चलं चेतो न कालमतिपातयेत् ॥९१॥
प्रणयेनापि नो वाच्यं वचनं परतापि च ॥
अहिंसा सततं कार्या धार्या चित्तस्य नित्यता ९२

इति श्रीवृन्दप्रणीतवृन्दमाधवापरनामकसिद्धयोगव्याख्यायां श्री श्रीकण्ठदत्तकृतायां व्याख्याकुसुमावल्याख्यायामेकाशीतितमः स्वस्थाधिकारः समाप्तः ८

---

153 अ. हृ. सू. २२. ३२. 154 सु. चि. २४. ७०–७१. 155 अ. हृ. उ. १६. ६५. 156 च. स. ११. १८–१९.

# स्वस्थवृत्तवचनसंग्रहः २

( दिनचर्याप्रकरणम् )

### प्रातरुत्थानम् १

८८-ब्राह्मे मुहूर्ते उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः।
तत्र सर्वाघशान्त्यर्थं स्मरेच्च मधुसूदनम् ॥ १ ॥
दध्याज्यादर्शसिद्धार्थबिल्वगोरोचनस्रजाम्।
दर्शनस्पर्शनं कार्यं प्रबुद्धेन शुभावहम् ॥ २ ॥

### उषःपानम् २

८९-सवितुरुदयकाले प्रसृतीः सलिलस्य पिबेदष्टौ।
रोगजरापरिमुक्तो जीवेद्वत्सरशतं साग्रम् ॥ १ ॥
विगतघननिशीथे प्रातरुत्थाय नित्यं
पिबति खलु नरो यो घ्राणरन्ध्रेण वारि ॥
स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो
वलिपलितविहीनः सर्वरोगैर्विमुक्तः
अर्शःशोथग्रहण्यो ज्वरजठरजराकोष्ठमेदोविकारा
मूत्राघातास्रपित्तश्रवणगलशिरःश्रोणिशूलाक्षिरोगाः ॥
ये चान्येवातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपहरति पयःपीतमन्तेनिशायाः

### शौचविधिः ३

९०-आयुष्यमुपासि प्रोक्तं मलादीनां विसर्जनम्।
तदन्त्रकूजनाध्मानोदरगौरववारणम्।
आटोपशूलौ परिकर्तिका च
सङ्गः पुरीषस्य तथोर्ध्ववातः।
पुरीषमास्यादथवा निरेति
पुरीषवेगेऽभिहते नरस्य ॥१
९१-वातमूत्रपुरीषाणां सङ्गोध्मानं क्लमो रुजा।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ २
९२-बस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा।
विनामो वंक्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ३ ॥
९३-न वेगितोऽन्यकार्यः स्यान्न वेगानीरयेद्बलात्।
कामशोकभयक्रोधमनोवेगान् विधारयेत् ॥ ४ ॥
९४-गुदादिमलमार्गाणां शौचं कान्तिबलप्रदम्।
पावित्र्यकरमायुष्यमलक्ष्मीकलिपापहृत् ॥ ५ ॥
९५-प्रक्षालनं हि पाण्योश्च पादयोः शुद्धिकारणम्।
मलश्रमहरं वृष्यं चक्षुष्यं राक्षसापहम् ॥ ६ ॥

### दन्तधावनम् ४

९६-ततो हि दन्तनिर्लेखं प्रकुर्याद्विधिना नरः।
क्षीरितिक्तकषायाणां द्वादशाङ्गुलमायतम् ॥ ३ ॥
कनिष्ठाग्रसमस्थौल्यं ख्यातवृक्षस्य शोभनम्।
आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ॥ ४ ॥
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते।
इत्यादिस्तुतिवाक्येन यद्गृहीतं वनस्पतेः ॥ ५ ॥
प्रयच्छति भृशं कर्तुरायुःश्रीधीयशःस्थितीः।
दशाङ्गुलं क्षत्रियाणां विप्राणां द्वादशाङ्गुलम् ॥ ६ ॥
अष्टाङ्गुलं तु वैश्यानां शूद्राणां तु षडङ्गुलम्।
दन्तकाष्ठं हि गृह्णीयात् स्त्रीणां तु चतुरङ्गुलम् ॥७॥
९७-मधुको मधुरे श्रेष्ठः करञ्जः कटुके तथा।
निम्बस्तु तिक्तके श्रेष्ठः कषाये खादिरस्तथा ॥
यथोचितै रसैर्वीर्यैर्युक्तं द्रव्ये प्रयोजयेत्।
तेनाऽऽस्यरसवैरस्यं गन्धजिह्वास्यजा गदाः ॥
तद्दौर्गन्ध्योपदेहौ तु श्लेष्माणं चापकर्षति।
वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च ॥
वक्त्रस्य लघुतां चापि ... ... ...
९८-एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेण च।
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् ॥
९९-अर्दिती कर्णशूली च नेत्ररोगी नवज्वरी।
वर्जयेद्दन्तकाष्ठं तु हृदामययुतोऽपि च ॥
मुखादिगलताल्वोष्ठजिह्वारोगसमुद्भवे।
मुखस्य पाके शोथे च श्वासकासवमीषु च ॥
दुर्बलोऽजीर्णभुक्तश्च हिक्कामूर्च्छामदान्वितः।
शिरोरुगार्तस्तृषितः श्रान्तः पानक्लमान्वितः ॥

### जिह्वानिर्लेखनम् ५

१००-जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा।
पाटितं मृदु तत्काष्ठं मृदुपत्रमयं तथा ॥
दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत्सुखम्।
तेनास्यमलवैरस्यगन्धजिव्हास्यदन्तजाः ॥
नश्यन्ति रुचिवैशद्यं लघुता च भवन्ति हि ॥
१०१-जिह्वानिर्लेखनं कुर्यात् प्राङ्मुखो वा ह्युदङ्मुखः ॥८
अलाभे दन्तकाष्ठस्य निषिद्धादिवसेषु च।

### गण्डूषः ६

१०२-गण्डूषमथ कुर्वीत शीतेन पयसा मुहुः।
कफतृष्णामलहरं मुखान्तःशुद्धिकारणम् ॥
सुखोष्णोदकगण्डूषः कफारुचिमलापहः।
दन्तजाड्यहरश्चापि मुखलाघवकारकः ॥

१०३–अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥ ९ ॥
रसनादन्तजा रोगा वैरस्यं मलसंभवः ।
न भवन्ति मुखे, तेन वैशद्यं लाघवं भवेत् ॥ १० ॥
१०४–न चास्य कण्ठशोषः स्यान्नोष्ठयोः स्फुटनाद्भयम् ।
न च दन्ताः क्षयं यान्ति दृढमूला भवन्ति च ॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्ति च ।
परानपि खरान्भक्ष्यान् तैलगण्डूषधारणात् ॥
१०५–विषमूर्च्छामदार्तानां शोषिणां रक्तपित्तिनाम् ।
कुपिताक्षिमलक्षीणरूक्षाणां स न शस्यते ॥

## मुखप्रक्षालनम् ७

१०६–प्रक्षालयेन्मुखं नेत्रे स्वस्थः शीतोदकेन वा ।
नीलिकां मुखशोषं च पिडिकां व्यङ्गमेव च ।
रक्तपित्तकृतान् रोगान् सद्य एव विनाशयेत् ॥
कुर्याद्वापि कदुष्णेन पयसास्यविशोधनम् ।
कफवातहरं स्निग्धं मुखशोषविनाशनम् ॥

## नस्यम् ८

१०७–कटुतैलादि नस्यार्थं नित्याभ्यासेन योजयेत् ॥
प्रातः श्लेष्मणि, मध्यान्हे पित्ते, सायं समीरणे ।
सुगन्धवदनाः स्निग्धनिस्वना विमलेन्द्रियाः ॥
निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः ।
स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयोः ॥
शीते मध्यन्दिने ग्रीष्मे सायं वर्षासु सातपे ।
१०८–नस्यकर्म यथाकालं यो यथोक्तं निषेवते ॥
न तस्य चक्षुर्न घ्राणं न श्रोत्रमपहन्यते ।
न च केशाः प्रमुच्यन्ते वर्धन्ते च विशेषतः ॥
मन्यास्तम्भः शिरःशूलमर्दितं हनुसङ्ग्रहः ।
पीनसार्धावभेदौ च शिरःकम्पश्च शाम्यति ॥
शिराः शिरःकपालानां सन्धयः स्नायुकण्डराः ।
नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥
१०९–न चास्य रोगाः सहसा प्रभवन्त्यूर्ध्वजत्रुजाः ।
जीर्यतश्चोत्तमाङ्गेषु जरा न लभते बलम् ॥

## अञ्जनम् ९

११०–चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो भयम् ।
सौवीरमञ्जनं नित्यं पथ्यमक्ष्णोस्ततो भजेत् ॥
लोचने तेन भवतः सुस्निग्धे घनपक्ष्मणी ।
वक्रे त्रिवर्णे विमले मनोज्ञे सूक्ष्मदर्शने ॥
स्रोतोञ्जनमतः श्रेष्ठं विशुद्धं सिन्धुसम्भवम् ।
दृष्टेः कण्डूमलहरं दाहक्लेदरुजापहम् ॥
अक्ष्णो रूपावहं चैव सहते मारुतातपौ ।
१११–नेत्ररोगा न जायन्ते तस्मादञ्जनमाचरेत् ॥
११२–रात्रौ जागरितः श्रान्तश्छर्दितो भुक्तवांस्तथा ।
ज्वरातुरः शिरस्नातो नाक्ष्णोरञ्जनमाचरेत् ॥

## धूम्रपानम् १०

११३–जत्रूर्ध्वं कफवातोत्थविकाराणामजन्मने ।
उच्छेदाय च जातानां पिबेद्धूमं सदात्मवान् ॥

## व्यायामः ११

११४–शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्धिनी ।
देहव्यायामसङ्ख्याता मात्रया तां समाचरेत् ॥
११५–लाघवं कर्म सामर्थ्यं विभक्तघनगात्रता ।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥
११६–व्यायामदृढगात्रस्य व्याधिर्नास्ति कदाचन ।
विरुद्धं वाऽपि पक्वं वा भुक्तं शीघ्रं विपच्यते ॥
११७–श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता ।
आरोग्यं चापि परमं व्यायामादुपजायते ॥
११८–न च व्यायामिनं मर्त्यं मर्दयन्त्यरयो भयात् ।
स्थिरीभवति मांसं च अनालस्यं मृजा तथा ॥
११९–व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव ॥
१२०–वयोरूपगुणैर्हीनमपि कुर्यात् सुदर्शनम् ।
भवन्ति शीघ्रं नैतस्य वलीशिथिलतादयः ॥
१२१–न चैनं सहसाऽऽक्रम्य जरा समधिरोहति ।
न चास्ति सदृशं तेन किञ्चित्स्थौल्यापकर्षणम् ॥
१२२–वयोरूपशरीराणि देशकालाशनानि च ।
समीक्ष्य कुर्याद्व्यायाममन्यथा रोगमाप्नुयात् ॥
१२३–स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् ।
वसन्ते शीतसमये सुतरां स हितो मतः ॥
अन्यदाऽपि च कर्तव्यो बलार्धेन यथाबलम् ।

## व्यायामे बलार्धलक्षणम् १२

१२४–हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते ॥
मुखं च शोषं लभते तद्बलार्धस्य लक्षणम् ।
किंवा ललाटे नासायां गात्रसन्धिषु कक्षयोः ॥
१२५–यदा सञ्जायते स्वेदो बलार्धं तु तदादिशेत् ।
क्षयतृष्णारुचिच्छर्दिरक्तपित्तभ्रमक्लमाः ॥
कासशोषज्वरश्वासा अतिव्यायामसम्भवाः ।

## व्यायामनिषेधः १३

१२६–रक्तपित्ती कृशः शोषी श्वासकासक्षयी क्षती ।
भुक्तवान् कृतसम्भोगो भ्रमार्तश्च विवर्जयेत् ॥

## अङ्गमर्दनम् १४

१२७–तं कृत्वाऽनुसुखं देहं मर्दयेच्च समन्ततः ।
वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् ॥

## अभ्यङ्गः १५

१२८–अभ्यङ्गमाचरेन्नित्यं सर्वेष्वङ्गेषु पुष्टिदम् ।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥
१२९–सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
अन्यद्द्रव्ययुतं तैलं न दुष्यति कदाचन ॥
१३०–अभ्यङ्गो वातकफहृच्छ्रमशान्तिं बलं सुखम् ।
निद्रावर्णमृदुत्वायुः कुरुते दृष्टिपुष्टिकृत् ॥
१३१–अभ्यङ्गः शीलितो मूर्ध्नि सकलेन्द्रियतर्पणः ।
दृष्टिपुष्टिकरो हन्ति शिरोभूमिगतान् गदान् ॥

१३२-केशानां बहुतां दार्ढ्यं मृदुतां दीर्घतां तथा ।
कृष्णतां कुरुते कुर्याच्छिरसः पूर्णतामपि ॥
१३३-न कर्णरोगा न मलं न च मन्याहनुग्रहः ।
नोच्चैःश्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णपूरणात् ॥
१३४-रसाद्यैः पूरणं कर्णे भोजनात्प्राक् प्रशस्यते ॥
१३५-तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ।
१३६-पादाभ्यङ्गस्तु सुस्थैर्यनिद्रादृष्टिप्रसादकृत् ।
पादसुप्तिभ्रमस्तम्भसङ्कोचस्फुटनप्रणुत् ॥
१३७-मूर्ध्नोऽभ्यङ्गात्कर्णयोः शीतमाहुः
१३८- कर्णाभ्यङ्गात्पादयोरेवमेव ॥
१३९-पादाभ्यङ्गो नेत्ररोगान्हरेच्च
१४०- नेत्राभ्यङ्गाद्दन्तरोगांश्च नश्येत् ॥
१४१-व्यायामक्षुण्णवपुषं पद्भ्यां सम्मर्दितं तथा ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥
१४२-रोमकूपशिराजालधमनीभिः कलेवरम् ।
तर्पयेद्बलमाधत्ते स्नेहो युक्तोऽवगाहने ॥
१४३-अद्भिः संसिक्तमूलानां तरूणां पल्लवादयः ।
वर्धन्ते हि तथा नृणां स्नेहसंसिक्तधातवः ॥
१४४-स्नेहाभ्यङ्गाद्यथा कुम्भश्चर्म स्नेहाविमर्दनात् ।
भवत्युपाङ्गदक्षश्च दृढः क्लेशसहो यथा ॥
तथा शरीरमभ्यङ्गाद् दृढं सुत्वक् च जायते ।
प्रशान्तमारुताबाधं क्लेशव्यायामसंसहम् ॥
१४५-स्पर्शनेऽभ्यधिको वायुः स्पर्शनं च त्वगाश्रितम् ।
त्वच्यश्च परमोऽभ्यङ्गस्तस्मात्तं शीलयेन्नरः ॥
१४६-न चाभिघाताभिहतं गात्रमभ्यङ्गसेविनः ।
विकारं भजतेऽत्यर्थं बलकर्मणि वा क्वचित् ॥
१४७-सुस्पर्शोपचिताङ्गश्च बलवान्प्रियदर्शनः ।
भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पजर एव च ॥
धातूनां पुष्टिजननो मृजा वर्णबलप्रदः ।
१४८-रोमान्तेष्वनुदेहस्य स्थिता मात्रा शतत्रयम् ।
ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति त्वचम् ।
रक्तं गच्छति मात्राणां शतैः पञ्चभिरेव च ।
षड्भिर्मांसं प्रपद्येत मेदः सप्तभिरेव तु ॥
शतैरष्टाभिरस्थीनि मज्जानं नवभिर्व्रजेत् ।
तत्रस्थान् शमयेद्रोगान् वातपित्तकफात्मजान् ॥

### अभ्यङ्गनिषेधः १६

१४९-नवज्वरी ह्यजीर्णी च नाभ्यक्तव्यः कदाचन ।
तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ॥
१५०-आमरोगे कफग्रस्ते तथैव च न योजयेत् ।
पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि च ॥
शेषाणां बहवः प्रोक्ता वह्निसादादयो गदाः ।

### स्नानम् १७

१५१ दीपनं वृष्यमायुष्यं स्नानमोजोबलप्रदम् ।
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपापनुत् ॥
रक्तप्रसादनं चापि सर्वेन्द्रियविशोधनम् ।
१५२-बाह्यैश्च सेकैः शीताद्यैरूष्माऽन्तर्यातिपीडितः ।
नरस्य स्नातमात्रस्य दीप्यते तेन पावकः ॥
१५३-प्रातःस्नानमलञ्च पापहरणं दुःस्वप्नविध्वंसनम्
शौचस्याऽऽयतनं मलापहरणं संवर्धनं तेजसाम् ॥
रूपद्योतकरं शरीरसुखदं कामाग्निसन्दीपनम्
स्त्रीणां मन्मथगाहनं श्रमहरं स्नाने दशैते गुणाः ॥
१५४-शीतेन पयसा स्नानं रक्तपित्तप्रशान्तिकृत् ।
तदेवोष्णेन तोयेन बल्यं वातकफापहम् ॥
१५५-उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः ।
तेनैव चोत्तमाङ्गस्य बलहृत् केशचक्षुषाम् ॥
१५६-शिरःस्नानमचक्षुष्यमत्युष्णेनाम्बुना सदा ।
वातश्लेष्मप्रकोपे तु ज्ञात्वा व्याधिबलाबलम् ॥
काममुष्णाशिरःस्नानं भैषज्यार्थे समाचरेत् ।
१५७-अतिशीताम्बु शीते च श्लेष्ममारुतकोपनम् ॥
अत्युष्णमुष्णकाले च पित्तशोणितवर्धनम् ।
१५८-यः सदाऽऽमलकैः स्नानं करोति स विनिश्चितम् ॥
वलीपलितनिर्मुक्तो जीवेद्वर्षशतं नरः ।
१५९-अशीतेनाम्भसा स्नानं, पयःपानं, युवः स्त्रियः ।
एतद्धि मानवाः ! पथ्यं स्निग्धमल्पं च भोजनम् ॥

### स्नाननिषेधः १८

१६०-स्नानं ज्वरातिसारे च नेत्रकर्णानिलार्तिषु ।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥

### वस्त्रेण तनुमार्जनम् १९

१६०-(अ) स्नानस्यानन्तरं सम्यग् वस्त्रेण तनुमार्जनम् ।
कान्तिप्रदं शरीरस्य कण्डुत्वग्दोषनाशनम् ॥

### उद्वर्तनम् २०

१६१-उद्वर्तनं वातहरं कफमेदोविलापनम् ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥
शिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् ।
उद्धर्षणोत्सादनाभ्यां † जायेयातामसंशयम् ॥
१६२-उत्सादनाद्भवेत् स्त्रीणां विशेषात् कान्तिमद्वपुः ।
प्रहर्षसौभाग्यमृजालाघवादिगुणान्वितम् ॥
१६३-उद्धर्षणं तु विज्ञेयं कण्डूकोठानिलापहम् ।
ऊर्वोः सञ्जनयत्याशु फेनकः स्थैर्यलाघवे ॥
कण्डूकोठानिलस्तम्भमलरोगापहश्च सः ।
१६४-तेजनं त्वग्गतस्याग्नेः शिरोमुखविरेचनम् ॥
१६५-उद्धर्षणं विष्टिकया कण्डूकोठविनाशनम् ।

### ( अनुलेपनम् )

१६६-कुङ्कुमं चन्दनं चापि कृष्णागुरुविमिश्रितम् ॥
उष्णं वातकफध्वंसि शीतकाले तदिष्यते ।
१६७-मुखलेपाद् दृढं चक्षुः पीनगण्डं तथाऽऽननम् ।
अव्यङ्गपिडकं कान्तं भवत्यम्बुजसंनिभम् ॥

---

† उद्धर्षणमस्नेहौषधचूर्णादिभिर्घर्षणम् फेनकेष्टकादिघर्षणमिति वा । सस्नेहकल्केनोद्वर्षणमुत्सादनम् ।

१६८–चन्दनं घनसाराणि वालकेन च मिश्रितम् ॥
सुगन्धि परमं शीतमुष्णकाले प्रशस्यते ।
१६९–चन्दनं घुसृणोपेतं मृगनाभिसमायुतम् ॥ २८ ॥
न चोष्णं न च वा शीतं वर्षाकाले प्रशस्यते ।
१७०–अनुलेपस्तृषामूर्च्छादुर्गन्धश्रमदाहजित् ॥
सौभाग्यतेजस्त्वग्वर्णकान्त्योजोबलवर्धनः ।
१७१–स्नानानर्हस्य लोकस्य त्वनुलेपोऽपि नो हितः ॥

### वस्त्रधारणम् २०

१७२–शीतकाले तु कौशेयं काषायं घर्मवासरे ।
१७३–वर्षासु श्वेतवस्त्रं स्यादेवं वस्त्राणि धारयेत् ॥ २२ ॥
१७४–कौशेयं चित्रवस्त्रं च रक्तवस्त्रं तथैव च ।
वातश्लेष्महरं नृणां शीतकाले प्रधारयेत् ॥ २३ ॥
१७५–मेध्यं सुशीतं पित्तघ्नं काषायं वस्त्रमुच्यते ।
तद्धारयेद्धर्मकाले काषायं वस्त्रमुत्तमम् ॥ २४ ॥
१७६–शुभ्रं च सुखदं वस्त्रं शीतातपनिवारणम् ।
न चोष्णं न च वा शीतं शुक्लं वस्त्रं च धारयेत् ॥ २५॥
१७७–आयुर्लक्ष्मीकरं रक्षोहरं मङ्गलदं शुभम् ।
हिंसादिभयविध्वंसि वशीकरणकारकम् ॥
यशस्यं काम्यमायुष्यं श्रीमदानन्दवर्धनम् ।
त्वच्यं वशीकरं रुच्यं नवं निर्मलमम्बरम् ॥

### मलिनवस्त्रधारणनिषेधः २१

१७८-१७९–कदापि न जनैः सद्भिर्धार्यं मलिनमम्बरम् ।
तत्तु कण्डूक्रिमिकरं ग्लान्यलक्ष्मिकरं परम् ॥

### पुष्पादिधारणम् २२

१८०–केशानां निचये कुर्यात्कस्तूर्याद्यनुलेपनम् ।
१८१–सुपुष्पाणि सुगन्धीनि नित्यं शीर्षे प्रधारयेत् ॥ ३१ ॥
क्लेदायासश्रमुद्भूतस्वेददुर्गन्धनाशनम् ।
चक्षुष्यं दाहशमनं सौमनस्यं च जायते ॥ ३२ ॥
१८२–तीक्ष्णाग्रकुसकेतक्याः कोमलं धारयेद्दलम् ।
१८३–जातीपुष्पं च नैवालं सेवन्तीं कुटजं तथा ॥ ३३ ॥
पाटलं च बृहत्पुष्पं बकुलं चम्पकं तथा ।
श्रीखण्डं चैव गौलालं कस्तूर्या सह धारयेत् ॥ ३४ ॥
१८४–मन्दारं मरुवं चैव कुमुदं नीलमुत्पलम् ।
रक्तोत्पलं पूतिपुष्पं कर्पूरैः सह धारयेत् ॥ ३५ ॥
१८५–अस्नातैर्मल्लिका धार्या सुस्नातैर्जातिबिल्वजम् ॥
अभ्यङ्गे केतकी धार्या धार्यं चोत्पलकं सदा ॥ ३६ ॥
१८६–जातीं कुन्दं च नैवालं श्रीखण्डं बिल्वमल्लिके ।
मकरन्देन संयुक्तं शिरसा धारयेन्नरः ॥ ३७ ॥
१८७–सर्वाण्येतानि तुल्यानि रसतो वीर्यतस्तथा ।
त्रिदोषशमनीयानि सर्वकाले प्रधारयेत् ॥ ३८ ॥
१८८–कैतकं बाकुलं पुष्पं श्रीखण्डं शतपत्रकम् ।
गौलालं चम्पकं पुष्पं वातश्लेष्महरं परम् ॥ ३९ ॥
उष्णवीर्यं च तत्प्रोक्तं शीतकाले प्रधारयेत् ।
श्रीविकं मरुवं चैव नीलोत्पलकवत्सकौ ॥ ४० ॥
कुब्जकं पाटलं चैव श्रीखण्डं च तथैव च ।
नात्युष्णं न च वा शीतं सर्वदोषनिबर्हणम् ॥ ४१ ॥
निर्मलं नेत्ररोगघ्नं वर्षाकाले प्रधारयेत् ।
१८९–षड्यामं जातिकुसुमं नैवालं द्विमुहूर्तकम् ॥ ४२ ॥
त्रिरात्रमुत्पलं चैव पञ्चरात्रं तु कैतकम् ।
द्विरात्रं शतपत्रं तु अर्धरात्रं तु मल्लिका ॥ ४३ ॥
अहोरात्रं चम्पकं तु पूतीपुष्पं मुहूर्तकम् ।
श्रीखण्डमेकरात्रं तु बकुलं माधवी तथा ॥ ४४ ॥
१९०–श्रीपर्णं यावदाहारं तावत्कालं तु धारयेत् ।
१९१–मन्दारं मरुवं चैव दामनं चैव पाटलम् ॥ ४५ ॥
यावत्कालं भजेद्गन्धं तावत्कालं प्रधारयेत् ।
१९२–त्रिदोषशमनी जाती महादाहविनाशिनी ॥ ४६ ॥
सुगन्धं दोषशमनं गौलालं पुष्पमुच्यते ।
१९३–पित्तहृद्विशदं चैव चक्षुष्यं चोत्पलं स्मृतम् ॥ ४७ ॥
१९४–श्लेष्मवातप्रशमनमुष्णवीर्यं च निर्मलम् ।
पुष्पाणां प्रवरं चैव केतकीपुष्पमुच्यते ॥ ४८ ॥
१९५–ईषदुष्णं सुगन्धं च सुशीतं दृष्टिदायकम् ।
शिरोभ्रमविनाशार्हं शतपत्रं तु शोभनम् ॥ ४९ ॥
१९६–अधार्यं मल्लिकापुष्पं दृष्टिहानिकरं परम् ।
चम्पकं वातशमनं चक्षुष्यं विशदं शुभम् ॥ ५० ॥
पाटलं च महच्छीतं श्लेष्मवातविवर्धनम् ।
मन्दाग्निपित्तदोषघ्नं कर्णव्याधिविनाशनम् ॥ ५१ ॥
१९७–पाटलं धारयेद्यस्तु सम्यग्वाससमन्वितम् ।
ज्वरमूर्च्छापिपासाघ्नमायुष्यं दाहनाशनम् ॥ ५२ ॥
१९८–हेमन्ते शिशिरे चैव शतपत्रं तु शोभनम् ।
वसन्ते केतकी धार्या घर्मे नैपालमालती ॥ ५३ ॥
१९९–प्रावृट्सु पाटलं धार्यं चम्पकं शरदि स्मृतम् ।
भूषणैर्भूषयेदङ्गं यथाविभवसारतः ॥ ५४ ॥
२००–शुचि सौभाग्यसन्तोषदायकं काञ्चनं स्मृतम् ।
२०१–सुगन्धिपुष्पपत्राणां धारणं कान्तिकारकम् ।
पापरक्षोग्रहहरं कामोजःश्रीविवर्धनम् ॥
२०२–भूषणैर्भूषयेदङ्गं यथायोग्यं विधानतः ।
२०३–रत्नानां भूषणानां च धारणं ग्रहतुष्टिकृत् ॥ ५५ ॥
धर्मसङ्ग्रहणं कार्यं दीनदानोपवासकैः ।

### माङ्गल्यधारणम् २३

२०४–शुचिसौभाग्यसन्तोषदायकं काञ्चनं स्मृतम् ॥
ग्रहदृष्टिहरं पुष्टिकरं दुःस्वप्ननाशनम् ।
पापदौर्भाग्यशमनं रत्नाभरणधारणम् ॥
२०५–माणिक्यं तरणेः सुनिर्मलमथो चन्द्रस्य मुक्ताफलम् ।
माहेयस्य च विद्रुमो निगदितः सौम्यस्य गारुत्मतम् ॥
देवे यस्य च पुष्परागमसुराचार्यस्य वज्रं शने- ।
नीलं निर्मलमन्ययोश्च गदिते गोमेदवैडूर्यके ॥

२०६-वासःस्रगादिरत्नानां धारणं प्रीतिवर्धनम् ।
रक्षोघ्नमर्घ्यमोजस्य सौभाग्यकरमुत्तमम् ॥

२०७-सततं सिद्धमन्त्रस्य महौषध्यास्तथैव च ।
रोचनासर्षपादीनां माङ्गल्यानां च धारणम् ॥

### सन्ध्योपासनादि २४

२०८-कुलाचारं तु कुर्वीत सन्ध्योपासनमादितः ॥ २९ ॥
सूर्योपास्ति ततः कुर्यादिष्टदेवस्य चार्चनम् ।
दत्त्वा दानं च विप्रेभ्यो गृह्णीयात्तेभ्य आशिषः ॥ ३०
स्वबन्धुपितृदेवानां ब्राह्मणानां च तर्पणम् ॥ ५६ ॥
कार्यं यशस्यमायुष्यं स्वर्ग्यं पापहरं परम् ।

---

### पूजनम् २५

२०९-देवगोविप्रवृद्धानां गुरूणां चैव पूजनम् ।
आयुष्यं वृद्धिदं पुण्यलक्ष्मीकिल्बिषापहम् ॥

### पादुकाधारणम् २६

२१०-पादुकारोहणं कुर्यात्पूर्वं भोजनतः परम् ।
पादरोगहरं वृष्यं चक्षुष्यं चायुषे हितम् ॥

### भोजनम् २७

२११-ततो भोजनवेलायां कृताचारः सहात्मवान् ॥ ५७ ॥
देवान् पितॄन् समभ्यर्च्य कुर्यान्मङ्गलवीक्षणम् ।

२१२-लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ॥५८॥
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ।
एतानि सततं पश्येन्नमस्येदर्चयेत्तथा ॥ ५९ ॥

२१३-प्रदक्षिणं सदा नित्यमायुर्वर्धनमुत्तमम् ।
पत्नीविहितशृङ्गारं प्राप्य भोजनमण्डपम् ॥ ६० ॥
तथा चाग्निबलं वीक्ष्य कुर्याद्भोजनकं नरः ।

२१४-एक एव न भुञ्जीत यदीच्छेत्सिद्धिमात्मनः ॥६१॥
द्वित्रिभिर्बहुभिः सार्धं भोजनं तु दिवानिशम् ।
ततश्चाभीष्टसिद्धिः स्यादिष्टकामं तु सम्पदः ॥ ६२ ॥

२१५-सायंप्रातर्मनुष्याणामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥

२१६-याममध्ये न भोक्तव्यं याममुग्मं न लङ्घयेत् ।
याममध्ये रसोत्पत्तिर्यामयुग्माद्बलक्षयः ॥

२१७-अतीवायतयामास्तु क्षपायेष्वृतुषु स्मृता ।
तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव च ॥

२१८-येषु चापि भवेयुश्च दिवसा भृशमायताः ।
तेषु तत्कालविहित अपराह्णे प्रशस्यते ॥

२१९-रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ।
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ॥

२२०-क्षुत्सम्भवति पक्वेषु रसदोषमलेषु च ।
काले वा यदि वाऽकाले सोऽन्नकाल उदाहृतः ॥

२२१-उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥

२२२-ज्वरितं ज्वरमुक्तं च दिनान्ते भोजयेल्लघु ।
श्लेष्मक्षये प्रवृद्धोष्मा बलवाननलस्तदा ॥

२२३-नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ।
अप्राप्तकालं भुञ्जानः शरीरे ह्यलघौ नरः ॥
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ।

२२४-अतीतकालं भुञ्जानो वायुनोपहतेऽनले ॥
कृच्छ्राद्विपच्यते भुक्तं द्वितीयं च न काङ्क्षति ।

२२५-हीनमन्नमसन्तोषं तनोः कार्श्यं बलक्षयम् ॥
आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ।

२२६-काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते ॥
लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम् ।

२२७-क्षिप्रभुक्तं समं पाकं यात्यदोषं द्रवोत्तरम् ॥
सुखं जीर्यति मात्रावद्धातुसाम्यं करोति च ।

२२८-स्नातः क्षुद्वान् विविक्तस्थो धौतपादकराननः ॥
तर्पयित्वा पितॄन् देवानतिथीन् बालकान् गुरून् ।
प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ॥
समीक्ष्य सम्यगात्मानमनिन्दन्नब्रुवन्द्रवम् ॥
इष्टमिष्टैः सहाश्नीयाच्छुचि भक्तजनाहृतम् ।
काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः ॥
षड्रसं मधुरप्रायं नातिद्रुतविलम्बितम् ।
भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ॥

२२९-शाकावरान्नभूयिष्ठमत्युष्णं लवणं त्यजेत् ।
हीनदीनक्षुधार्तानां पापपाखण्डरोगिणाम् ॥
कुक्कुटादिशुनां दृष्टिर्भोजने नैव शोभना ।

२३०-आहारनिर्हारविहारयोगः सदैव सद्भिर्विजने विधेयः ।

२३१-पितृमातृसुहृद्वैद्यपाककृद्धंसबर्हिणाम् ॥
सारसस्य चकोरस्य भोजने दृष्टिरुत्तमा ।

२३२-शरीरे जायते नित्यं वाञ्छा नॄणां चतुर्विधा ।
बुभुक्षा च पिपासा च सुषुप्सा सुरतस्पृहा ॥

२३३-भोजनेच्छाविघातात्स्यादङ्गमर्दोऽरुचिः श्रमः ।
तन्द्रा लोचनदौर्बल्यं धातुदाहो बलक्षयः ॥

२३४-विघातेन पिपासायाः शोषः कण्ठास्ययोर्भवेत् ।
श्रवणस्यावरोधश्च रक्तशोषो हृदि व्यथा ॥

२३५-निद्राविघाततो जृम्भा शिरोलोचनगौरवम् ।
अङ्गमर्दस्तथा तन्द्रा स्यादन्नापाक एव च ॥

२३६-बुभुक्षितो न योऽश्नाति तस्याऽऽहारेन्धनक्षयात् ।
मन्दीभवति कायाग्निर्नाग्निर्वर्धेन्निरिन्धनः ॥

२३७–आहारं पचति शिखी दोषानाहारवर्जितः पचति ।
दोषक्षये च धातून्पचति च धातुक्षये प्राणान् ॥

२३८–आहारः प्रीणनः सद्यो बलकृद्देहधारकः ।
स्मृत्यायुःशक्तिवर्णौजःसत्त्वशोभाविवर्धकः ॥

२३९–यथोक्तगुणसम्पन्नमुपसेवेत भोजनम् ।
विचार्य देशकालादीन्कालयोरुभयोरपि ॥

### भोजनपात्राणि २८

२४०–दोषहृद् हृद्यिदं पथ्यं हैमं भोजनभाजनम् ।
२४१–रौप्यं भवति चक्षुष्यं पित्तहृत्कफवातकृत् ॥
२४२–कांस्यं बुद्धिप्रदं रुच्यं रक्तपित्तप्रसादनम् ।
२४३–पैत्तलं वातकृद्रूक्षमुष्णं क्रिमिकफप्रणुत् ॥

२४४–आयसे कान्तपात्रे च भोजनं सिद्धिकारकम् ।
शोथपाण्डुहरं बल्यं कामलापहमुत्तमम् ॥
२४५–शैलजे मृण्मये पात्रे भोजनं श्रीनिवारणम् ।
२४६–दारूद्भवे विशेषेण रुचिदं श्लेष्मकृत्तथा ॥

२४७–पात्रं पत्रमयं रुच्यं दीपनं विषपापनुत् ।
२४८–जलपात्रं तु ताम्रस्य तदभावे मृदो हितम् ॥

२४९–पात्रं पवित्रं शीतं च घटितं स्फटिकेन यत् ।
काचेन रचितं तद्वत्तथा वैडूर्यसम्भवम् ॥

२५०–घृतं कार्ष्ण्यायसे देयं पेया देया तु राजते ।
फलानि सर्वभक्ष्यांश्च प्रदद्याद्वैदलेषु च ॥
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ।
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ॥
कट्वराणि खडांश्चैव सर्वान् शैलेषु दापयेत् ।
दद्यात् ताम्रमये पात्रे सुशीतं सुशृतं पयः ॥
पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् ।
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ॥
दद्याद्वैडूर्यचित्रेषु रागषाडवसट्टकान् ।

२५१–तिष्ठन्ति यत्र नवकाञ्चननिर्मितानि
श्रेणीकृतानि परितस्तु कचोलकानि ।
राकाशशाङ्कनवमण्डलभास्वरं यत्
क्षोणीभृतां रजतनिर्मितपात्रकं स्यात् ॥

२५२–अर्धार्धप्रतिमादर्शि कांस्यमादर्शवच्छुचि ।
कांस्यं बुद्धिप्रदं भव्यं पालाशं रुचिकृद्वरम् ॥

### परिवेषकलक्षणम् २९

२५३–स्नातश्चन्दनचर्चितः सुवसनः स्रग्वी प्रसन्नाननः
स्पष्टात्मा सुभगः प्रसन्नहृदयः श्रीकान्तपूजारतः ।
स्वामिस्नेहपरः सुपाकनिपुणः प्रौढो वदान्यः शुचि-
र्विप्रो वा परिवेषकः सुकुलजश्चान्योऽपि वा भूपतेः ॥

२५४–स्नाता विशुद्धवसना नवधूपिताङ्गी
कर्पूरसौरभमुखी नयनाभिरामा ।
बिम्बाधरा शिरसि बद्धसुगन्धिपुष्पा
मन्दस्मिता क्षितिभृतां परिवेषिका स्यात् ॥

### अन्नपरिवेषणम् ३०

२५५–पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ॥
सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ।
फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ॥
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ।
प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ॥
खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ।
सर्वान् गुडविकारांश्च रागषाडवसट्टकान् ॥
पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ।
पुरस्ताद्विमलं पात्रं सुविस्तीर्णं मनोरमम् ।
स्थापितं पीठके शुभ्रे नाभिदेशसमुन्नते ॥

———

२५६–तत्र भक्तं परिन्यस्तं मध्यभागे सुसंयतम् ।
सूपः सर्पिः पलं शाकं पिष्टमन्नं तु मत्स्यकम् ॥
२५७–स्थापयेद्दक्षिणे पार्श्वे भुञ्जानस्य यथाक्रमम् ।
प्रलेहाद्या द्रवाः सर्वे पानीयं पानकं पयः ॥
२५८–चोष्यं सन्धानकं लेह्यं सव्ये पार्श्वे प्रदापयेत् ।
सर्वानिक्षुविकारांश्च पक्वान्नं पायसं दधि ॥
पुरतः स्थापयेद्धीमान्द्वयोः पङ्क्त्योश्च मध्यतः ।
२५९–एवं विज्ञाय मतिमान् परिवेषप्रकल्पनम् ॥
ततोऽर्हो भवति प्राज्ञः सम्यक्च परिवेषितुम् ।

### भोजनविधिः ३१

२६०–स्नातः सुधौतमृदुसुन्दरशुक्लवासा-
स्तत्कालधौतचरणः प्रियपुत्रमित्रैः ।
स्रग्वी प्रसन्नहृदयो रसपाकवेद्यां
भोक्ता प्रविश्य हितसात्म्यसमानवैद्यैः ॥
मृदुतूलमये स्थूले चारुवस्त्रावगुण्ठिते ।
आसने प्राङ्मुखो भोक्तोपविशेद्वाऽप्युदङ्मुखः ॥

२६१–अन्नं ब्रह्म रसो विष्णुर्भोक्ता देवो महेश्वरः ।
इति सञ्चिन्त्य यो भुङ्क्ते दृष्टिदोषो न बाधते ॥
२६२–अञ्जनीगर्भसम्भूतं कुमारं ब्रह्मचारिणम् ।
दृष्टिदोषविनाशाय हनूमन्तं स्मराम्यहम् ॥

२६३–भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम् ॥
अग्निसन्दीपकं रुच्यं जिह्वाकण्ठविशोधनम् ॥
अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।
मध्येऽम्ललवणौ पश्चात्कटुतिक्तकषायकान् ॥

२६४–फलान्यादौ समश्नीयाद्दाडिमादीनि बुद्धिमान् ।
विना मोचफलं तद्वद्वर्जनीया च कर्कटी ॥
२६५–मृणालबिसशालूककन्देक्षुप्रभृतीन्यपि ।
पूर्वमेव हि भोज्यानि न तु भुक्त्वा कदाचन ॥
२६६–प्रियालजम्बूबदरीफलानि
गाङ्गेरिकोदुम्बरतित्तिडीकम् ।
तालीफलानागरनारिकेल-
सारं च भक्ष्यं तिलमिश्रमन्नम् ॥

२६७-अङ्कोलरम्भाफलसावलानां
फलानि वर्ज्यानि सदा प्रभाते ॥
२६८-गुरु पिष्टमयं द्रव्यं लड्डुकान्पृथुकानपि ।
न जातु भुक्तवान् खादेन्मात्रां खादेद् बुभुक्षितः॥
२६९-द्विगुणं च पिबेत्तोयं सुखं सम्यक् प्रजीर्यति ।
घृतपूर्वं समश्नीयात्कठिनं प्राक् ततो मृदु ॥
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ।

---

२७०-यद्यत्स्वादुतरं तद्धि विदध्यादुत्तरोत्तरम् ॥
भुक्त्वा यत्प्रार्थ्यते भूयस्तदुक्तं स्वादुभोजनम् ॥
सौमनस्यं बलं पुष्टिमुत्साहं रसनासुखम् ।
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्ययम् ॥
२७१-अत्युष्णान्नं बलं हन्ति शीतं शुष्कं च दुर्जरम् ।
अति क्लिन्नं ग्लानिकरं युक्तियुक्तं हि भोजनम् ॥

---

२७२-मधुराद्वर्धते रक्तमम्लान्मज्जाप्रवर्धनम् ।
लवणाद्वर्धते त्वस्थि तिक्तान्मेदः प्रवर्धते ॥
कटुकाद्वर्धते मांसं कषायाद्वर्धते रसः ।
अन्नाच्च वर्धते शुक्रं षड्रसा धातुवर्धनाः ॥
२७२-अतिद्रुताशिताहारी गुणान्दोषान्न विन्दति ।
भोज्यं शीतमहृद्यं च स्याद्विलम्बितमश्नतः ॥
२७३-मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।
मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥
२७४-गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।
मात्राप्रमाणं निर्दिष्टं सुखं यावद्विजीर्यति ॥
२७५-मन्दानलो नरो द्रव्यमात्रां गुर्वीं विवर्जयेत्।
स्वभावतश्च गुरु यत् तथा संस्कारतो गुरु ॥
मात्रागुरुस्तु मुद्गादिर्माषादिः प्रकृतेर्गुरुः ।
संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम् ॥
२७६-आहारं षड्विधं चोष्यं पेयं लेह्यं तथैव च ।
भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद्यथोत्तरम् ॥
२७७-मन्दकर्मबलारोग्याः सुकुमाराः सुखोचिताः ।
जन्तवो ये तु तेषां हि चिन्त्येयं परिकीर्तिता ॥
२७८-बलिनः खरभक्ष्याः ये ये च दीप्ताग्नयो नराः ।
कर्मनित्याश्च ये तेषां नावश्यं परिकीर्त्यते ॥
२७९-भोजनं हीनमात्रं तु न बलोपचयौजसे ।
सर्वेषां वातरोगाणां हेतुता च प्रपद्यते ॥
२८०-अतिमात्रं पुनः सर्वानाशु दोषान्प्रकोपयेत् ।
विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता ॥
अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः ।
न चातिमात्रमेवान्नमामदोषाय केवलम् ॥
२८१-द्विष्टं विष्टम्भि दग्धामगुरुरूक्षाहिमाशुचि !
विदाहि शुष्कमत्यम्बुप्लुतं वाऽन्नं न जीर्यति ।
२८२-उपतप्तेन भुक्तं च शोकक्रोधक्षुधादिभिः ॥
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्तते ।
अजातानां विकाराणामनुत्पत्तिकरं च यत् ॥
२८३-द्रवो द्रवोत्तरश्चापि न मात्रागुरुरिष्यते ।
द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते ॥
२८४-विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ।
पिण्डाकृतमसङ्क्लिन्नं विदाहमुपगच्छति ॥
शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ।
२८५-यत्किञ्चिद्दोषमुत्क्लिश्य न हरेत्तत्समासतः ॥
विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ।
२८६-व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ॥
विरोध्यापि न पीडायै सात्म्यमल्पं च भोजयेत् ।
२८७-पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ॥
निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम् ।
२८८-अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा ॥
सात्म्यासात्म्यविकाराय जायते सहसाऽन्यथा ।
२८९-क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ॥
नाप्नुवंति पुनर्भावमप्रकम्प्या भवन्ति च ।
२९०-अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम् ॥
अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति ।
२९१-आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितैः ॥
शरीरं धार्यते नित्यमागारमिव धारणैः ।

---

२९२-न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् ॥
न जलान्तरितानाद्भिः सक्तूनद्यान्न केवलान् ॥
२९३-पुनर्दानं पृथक्पानं सामिषं पयसा निशि ।
दन्तच्छेदनमुष्णं च सप्त सक्तुषु वर्जयेत्॥

---

२९४-न नक्तं दधि सेवेत न चाप्यघृतशर्करम् ।
नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना ॥
२९५-अलक्ष्मीदोषयुक्तत्वान्नक्तं तु दधिवर्जनम् ।
श्लेष्मलं स्यात्ससर्पिष्कं दधि मारुतसूदनम् ॥
२९६-न च सन्धुक्षयेत् पित्तमाहारं च विपाचयेत् ।
शर्करासंयुतं दद्यात्तृष्णादाहनिवारणम्॥
२९७-मुद्गसूपेन संयुक्तं दद्याद्रक्तानिलापहम् ।
सुरसं चाल्पदोषं च क्षौद्रयुक्तं भवेद्दधि ॥
२९८-उष्णं पित्तास्रकृद्दोषान् धात्रीयुक्तं तु निर्हरेत् ॥
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् ।
प्राप्नुयात् कामलां चोग्रां विधिं हित्वा दधिप्रियः॥

---

२९९-मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ।
विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ॥
३००-अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम् ।
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति च॥

---

३०१-विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः ।
मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ॥

३०२–अचोक्षं दुष्टमुत्सृष्टं पाषाणतृणलोष्टवत् ।
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत् ॥
३०३–चिरं सिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ।
अशान्तमुपदग्धं च तथा स्वादु न लक्ष्यते ॥
३०४–तस्मात्सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम् ।
यथोक्तगुणसम्पन्नमुपसेवेत भोजनम् ।

———

३०५–विभज्य दोषकालादीन् कालयोरुभयोरपि ॥
स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठते ।
विदाहिभुक्तमन्यद्वा तस्याप्यन्नं विदह्यते ॥

———

३०६–कुक्षेर्भागद्वयं भोज्यैस्तृतीये वारि पूरयेत् ।
वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत् ॥
३०७–रसेनान्नस्य रसना प्रथमेनोपतर्पिता ।
न तथा स्वादुतामेति ततः सेव्याम्बुनाऽन्तरा ॥

———

३०८–अत्यम्बुपानान्न विपच्यतेऽन्नं निरम्बुपानाच्च स एव दोषः
तस्मान्नरो वह्निविवर्धनाय मुहुर्मुहुर्वारि पिबेदभूरि ॥
३०९–भुक्तस्याऽऽदौ जलं पीतं कार्श्यमन्दाग्निदोषकृत् ।
मध्येऽग्निदीपनं श्रेष्ठमन्ते स्थौल्यकफप्रदम् ॥
३१०–समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपाः ।
तृषितस्तु न चाश्नीयात्क्षुधितो न पिबेज्जलम् ॥
तृषितस्तु भवेत् गुल्मी क्षुधितस्तु जलोदरी ।
३११–आदौ द्रवं समश्नीयात्तत्राम्बु न पिबेद् बहु ॥
मध्ये तु कठिणे भक्ष्ये यथेष्टं शस्यते जलम् ।
तथा न भोजनस्यान्ते पीतमम्बु बलप्रदम् ।
द्रवप्रधानभुक्तान्ते किन्तु तन्मात्रया पिबेत् ॥
दोषवद् गुरु वा भुक्तमतिमात्रमथापि च ।
आदौ सूपाज्यभक्तं सकथिकमुदितं पायसं वाऽथ रम्यं
पक्वान्नं मध्यमध्ये बहुविधपललं व्यञ्जनान्यत्र भोज्ये ॥
अन्ते दुग्धं सिताढ्यं शृतमतुलरसं सान्नमत्यन्तमिष्टम्
दध्यन्नं वा यथेष्टं परिकलितमिदं देशरीत्या विदध्यात् ॥

———

## अनुपानम् ३२

३१२–उषितं पटसम्पूतं सौवर्णे भाजने स्थितम् ।
सव्यभागे जलं भोक्तुः स्थापितं चन्द्रवासितम् ॥
३१३–हेमन्ते शिशिरे चैव सरोजं वा तडागजम् ।
सुशीतं रक्तपित्तघ्नं तृष्णादाहरुजापहम् ॥
३१४–वसन्तग्रीष्मयोः कौपं वाप्यं नैर्झरमेव च ।
सक्षारं पित्तलं कौपं दोषघ्नं चारु नैर्झरम् ॥
३१५–प्रावृट्सु कौपं दिव्यं वा कथितं चैन्द्रसम्भवम् ।
कौपं वातहरं प्रोक्तं दिव्यं दोषत्रयापहम् ॥
३१६–शरत्प्रसन्नमुदयादगस्त्यस्याखिलं हितम् ।
तत्तोयं गुणवज्ज्ञेयं बल्यं दोषत्रयापहम् ॥
३१७–यथोक्तेनानुपानेन सुखमन्नं प्रजीर्यति ॥
विपरीतं यदन्नस्य गुणैः स्यादविरोधि च ।
३१८–अनुपानं समासेन सर्वदा तत्प्रशस्यते ॥

अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढाङ्गताम् ।
अन्नसङ्घातशैथिल्यविक्लित्तिजरणानि च ॥
३१९–रोचनं बृंहणं वृष्यं दोषसङ्घातभेदनम् ।
तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥
दीपनं दोषशमनं पिपासाच्छेदनं परम् ।
बल्यं वर्णकरं सम्यगनुपानं सदोच्यते ॥
३२०–स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम् ।
भवत्याबाधजननमनुपानमतः पिबेत् ॥

———

३२१–अनुपानं हिमं वारि यवगोधूमयोर्हितम् ।
दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु च ॥
शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ।
३२२–सुरा कृशानां पुष्ट्यर्थं स्थूलानां च मधूदकम् ॥
शोषे मांसरसो मद्यं मांसे स्वल्पे च पावके ।
३२३–व्याध्यौषधाध्वभाष्यस्त्रीलङ्घनातपकर्मभिः ॥
क्षीणे वृद्धे च बाले च पयः पथ्यं यथामृतम् ।
३२४–उष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥
... ... ... ... तैले यूषाम्लकाञ्जिकम् ।
३२५–स्निग्धोष्णं मारुते पथ्यं कफे रूक्षोष्णमिष्यते ।
अनुपानं हितं चापि पित्ते मधुरशीतलम् ।
३२६–हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ॥
कषायाणां दाडिमवेत्रासवः, मधुराणां त्रिकटुक-
युक्तखण्डासवः, कटुकानां दूर्वानलवेत्रासवः,
सैन्धवादीनां सुरासव आरनालं च ॥
३२७–सात्म्यं यस्य तु यत्तोयं तत्तस्मै हितमुच्यते ।
उष्णं वाते कफे तोयं पित्ते रक्ते च शीतलम् ॥
३२८–नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ।
गीतभाष्यप्रसङ्गे च स्वरभेदे च तद्धितम् ॥
प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुराः ।
पानं त्यजेयुः ... ... ...
३२९–पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान्न शीलयेत् ।
सर्वो भुक्त्वाऽऽतपं वह्निं यानं पवनवाहनम् ॥
३३०–प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ।
स्यन्दाग्निसादच्छर्द्यादीनामयान् जनयेद् बहून् ॥

———

३३१–यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम्
तेषु तेषु प्रदातव्या रसास्ते ते विजानता ॥
३३२–वर्षासु न पिबेत्तोयं पिबेच्छरदि मात्रया ।
वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत् ॥
३३३–उष्णं हैमे वसन्ते च कामं ग्रीष्मे तु शीतलम् ।
हेमन्ते च वसन्ते च सीध्वरिष्टौ पिबेन्नरः ।
शृतशीतं पिबेद् ग्रीष्मे प्रावृट्काले रसं पिबेत् ॥
यूषं वर्षति तस्यान्ते प्रापिबेत् शीतलं जलम् ॥
३३४–स्वस्थ एवमतोऽन्यस्तु दोषाहारमतानुगः ।
स्नेहं सैन्धवचूर्णेन पिप्पलीभिश्च संयुतम् ॥
पिबेदग्निविवृद्ध्यर्थं न च वेगान् विधारयेत् ।
अग्निदीप्तिकरं नृणां रोगाणां शमनं प्रति ॥

### रोगेषु अन्नोपयोगः ३३

३३५-तृष्णोष्णमन्ददाहार्तान् रक्तपित्तविषातुरान् ।
मूर्च्छार्तान् स्त्रीषु च क्षीणान् शीतैरन्नैरुपाचरेत् ।
३३६-कफवातामयाविष्टान् विरिक्तान् स्नेहपायिनः ।।
प्रक्लिन्नदेहांश्च नरानुष्णैरन्नैरुपाचरेत् ।
३३७-वातिकान रूक्षदेहांश्च व्यायामोपहतांस्तथा ।
व्यायामिनश्चापि नरान् स्निग्धैरन्नैरुपाचरेत् ॥
३३८-मेदसाऽभिपरीतांस्तु स्निग्धान मेहातुरानपि ।
कफाभिपन्नदेहांश्च रूक्षैरन्नैरुपाचरेत् ॥
३३९-शुष्कदेहान् पिपासार्तान् दुर्बलानपि च द्रवैः ।
प्रक्लिन्नकायान् व्रणिनः शुष्कैर्मेहिनमेव च ॥
एककालं भवेद्देयो दुर्बलाग्निविवृद्धये ।
३४०-समाग्नये तथाऽऽहारो देयः कालमथोभयम् ।
३४१-औषधद्वेषिणे देयस्तथौषधसमायुतः ।
३४२-मन्दाग्नये रोगिणे च मात्राहीनः प्रशस्यते ।
३४३-यथर्तुदत्तश्चाहारो दोषप्रशमनः स्मृतः ॥

### भोजनोत्तरकृत्यम् ३४

३४४-एवं भुक्त्वा समाचामेच्चूषग्रहणपूर्वकम् ।
भोजने दन्तलग्नानि निर्हृत्याऽऽचमनं चरेत् ॥
दन्तान्तरगतं चान्नं शोधनेनाऽऽहरेच्छनैः ।
कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥
दन्तलग्नमनिर्हार्यं लेपं मन्ये तु दन्तवत् ।
न तत्र बहुशः कुर्याद्यत्नं निर्हरणम्प्रति ॥
आचम्य जल्युक्ताभ्यां पाणिभ्यां चक्षुषी स्पृशेत् ।
भुक्त्वा पाणितले घृष्ट्वा चक्षुषोर्यदि दीयते ॥
जातरोगा विनश्यन्ति तिमिराणि तथैव च ।

———

३४५-विष्णुरन्नं तथैवान्नपरिणामश्च वै यथा ॥
सत्येन तेन मद्भुक्तं जीर्यत्वन्नमिदं तथा ।
अगस्तिरग्निर्वडवानलश्च भुक्तं ममान्नं जरयन्त्वशेषम् ॥
सुखं ममैतत्परिणामसम्भवं यच्छत्वरोगो मम चास्तु देहः
अङ्गारकमगस्तिं च पावकं सूर्यमश्विनौ ।
यश्चैतान्संस्मरेन्नित्यमन्नं तस्याऽऽशु जीर्यति ॥
अगस्तिं कुम्भकर्णं च शनिं च वडवानलम् ।
आहारपरिपाकार्थे स्मरामि च वृकोदरम् ॥
इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम् ।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥

———

३४६-भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ।
ततः पादशतं गत्वा वामपार्श्वेन संविशेत् ॥
भुक्त्वा शतपदं गच्छेच्छनैस्तेन तु जायते ।
अन्नसङ्घातशैथिल्यं ग्रीवाजानुकटीसुखम् ॥

———

३४७-जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेधते ।
भुक्तमात्रे कफश्चापि क्रमोऽयं भोजनोपरि ॥

### ताम्बूलम् ३५

३४८-धूमेनापोह्य हृद्यैर्वा कटुतिक्तकषायकैः ।
पूगकस्तूरिकर्पूरलवङ्गसुमनःफलैः ॥
फलैः कटुकषायैर्वा मुखवैशद्यकारिभिः ।
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ।
रते सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे
सभायां विदुषां राज्ञां कुर्यात्ताम्बूलचर्वणम् ॥
ताम्बूलं भक्षयेत्पश्चाद्दत्त्वा विप्राय शोभनम् ।
मनसो हर्षदं श्रेष्ठं रतिदं मदकारकम् ॥
मुखरोगकृमिहरं ताम्बूलं रुचिकारकम् ।
पूगाधिकं प्रभाते स्यान्मध्याह्ने खादिराधिकम् ।
चूर्णाधिकं निशायां तु ताम्बूलं भक्षयेत्सदा ।
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः ।
तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत् ।
चूर्णपत्रं हरत्यायुः शिरा बुद्धिविनाशिनी ।
आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता ।

३४९-ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितम्
वातघ्नं कृमिनाशनं कफहरं दुर्गंधिनिर्णाशनम् ॥
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनम्
ताम्बूलस्य सखे त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः ॥
ताम्बूलमुक्तं तीक्ष्णोष्णं रोचनं तुवरं सरम्
तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु ॥
वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् ।
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ॥
तत्तु दन्तमलध्वंसि जिह्वेन्द्रियविशोधनम्
मुखप्रसेकशमनं गलामयविनाशनम् ॥
३५०-नवं तदेव मधुरं कषायानुरसं गुरु ।
बलासजननं प्रायः पत्रशाकगुणं स्मृतम् ॥
३५१-वङ्गदेशोद्भवं पर्णं परं कटुरसं सरम् ।
पाचकं पित्तजनकमुष्णं कफहरं मतम् ॥
३५२-पर्णं पुराणमकटु क्षुल्लकं तनु पाण्डुरम् ।
विशेषाद् गुणवद्देयमन्यद्धीनगुणं मतम् ॥

———

३५३-पूगं गुरु हिमं रूक्षं कषायं कफपित्तनुत् ।
मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् ॥
पूगं स्याद् दृढमध्यं स्यात्स्विन्नं चापि त्रिदोषनुत् ।
सरसं गुर्वभिष्यन्दि तद् भृशं वह्निनाशनम् ॥

———

३५४-खादिरः कफपित्तघ्नः चूर्णं वातबलासनुत्
संयोगतस्त्रिदोषघ्नः सौमनस्यं करोति च ॥
३५५-आद्यं विषोपमं पीतं द्वितीयं मेहि दुर्जरम्
तृतीयादि तु पातव्यं सुधातुल्यं रसायनम् ॥

३५६–आलस्यविद्रध्युपजिह्विकानां सतालुदन्तार्बुदरोगिणां च
गलास्यगण्डापचितालुशोषश्लेष्मामयानां तदतिप्रशस्तम्
न नेत्रकोपे न च रक्तपित्ते क्षते न दाहे न विषे न शोषे।
मदात्यये नापि न मोहमूर्च्छाश्वासेषु तांबूलमुशन्ति वैद्या

३५७–ताम्बूलं नातिसेवेत विरिक्तो न बुभुक्षितः।
देहदृक्केशदन्ताग्निश्रोत्रकर्णबलक्षयः॥
शोषपित्तानिलास्रं स्यादतिताम्बूलभक्षणात्।

\+ \+ \+

३५८–भुक्त्वोपविशतस्तुन्दं शयानस्य बलं भवेत्॥
आयुश्चंक्रममाणस्य मृत्युर्धावति धावतः।
श्वासानष्टौ समुत्तानस्तान् द्विः पार्श्वे तु दक्षिणे॥
ततस्तु द्विगुणान् वामे पश्चात्स्वप्याद्यथासुखम्।

———

३५९–वामदिशायामनलो नाभेरूर्ध्वोऽस्ति जन्तूनाम्॥
तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम्।
भोजनात्प्राक् दिवास्वापात्पाषाणमपि जीर्यति॥
भोजनान्ते दिवास्वापाद्वातपित्तकफोद्भवः।
भोजनानन्तरं निद्रा वातं हरति पित्तहृत्॥

कफं करोति वपुषः पुष्टिं सौख्यं तनोति च।

३६०–शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान्॥
भुक्त्वानुपसेवेत तेनान्नं साधु तिष्ठति।

———

३६१–शब्दरूपरसाः स्पर्शा गन्धाश्चापि जुगुप्सिताः॥
अशुच्यन्नं तथा भुक्तमतिहास्यं च वामयेत्।

३६२–शयनं चासनं चापि नेच्छेद्वापि द्रवोत्तरम्॥
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम्।

३६३–व्यायामं च व्यवायं च धावनं पानमेव च॥
युद्धं गीतं च पाठं च मुहूर्तं भुक्तवांस्त्यजेत्।

———

३६४–न चैकरससेवायां प्रसज्येत कदाचन॥
शाकावरान्नभूयिष्ठमम्लं च न समाचरेत्।

३६५–अत्यम्बुपानाद्विषमाशनाच्च
सन्धारणात्स्वप्नविपर्ययाच्च॥

३६६–कालेऽपि सात्म्यं लघु चापि भुक्त-
मन्नं न पाकं भजते नरस्य॥

———

## (रात्रिचर्याप्रकरणम्)

३६७–रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम्॥

३६८–निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम्।
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च॥

३६९–अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता।
सुखायुषी पराकुर्यात्कालरात्रिरिवापरा॥

३७०–अकालशयनान्मोहज्वरस्तैमित्यपीनसाः।
शिरोरुक्शोफहृल्लासस्रोतोरोधाग्निमान्द्यताः॥

३७१–यथाकालमथो निद्रां रात्रौ सेवेत सात्म्यतः।
असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान्॥

३७२–दिवास्वापं न कुर्वीत यतोऽसौ स्यात्कफावहः।
ग्रीष्मवर्ज्येषु कालेषु दिवास्वापो निषिध्यते॥

३७३–दिवा वा यदि वा रात्रौ निद्रा सात्म्यीकृता तु यैः।
न तेषां स्वपतां दोषो जाग्रतां चोपजायते॥

३७४–उचितो हि दिवास्वापो नित्यं येषां शरीरिणाम्।
वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा॥

३७५–व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतीसारिणः।
शूलश्वासवतस्तृषापरिगताहिक्कामरुत्पीडितान्॥
क्षीणान् क्षीणकफान् शिशून्
मदहतान् वृद्धान् रसाजीर्णिनो
रात्रौ जागरितान्निरशनान्कामं दिवा स्वापयेत्॥

३७६–त्रिदोषशमनी खट्वा तूली वातकफावहा।
भूशय्या बृंहणी वृष्या काष्ठपट्टी तु वातला॥
भूशय्या वातलाऽतीव रूक्षा पित्तास्रनाशिनी।

सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम्॥
श्रमानिलहरं वृष्यं विपरीतमतोऽन्यथा।

३७७–संवाहनं मांसरक्तत्वक्प्रसादकरं परम्॥
प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम्।

३७८–शयनं पित्तनाशाय वातनाशाय मर्दनम्॥
वमनं कफनाशाय ज्वरनाशाय लङ्घनम्।

३७९–ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः॥
दिवास्वापो हितोऽन्यस्मिन् कफपित्तकरो हि सः॥

३८०–भुक्त्वा भाष्येण मद्येन तथा हि भारकर्मणा।
क्रोधशोकभयैः क्लान्तान् दिवास्वापोचितानपि॥
धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति।

३८१–बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाऽहनि॥
विषार्तः कण्ठरोगी च नैव जातु निशास्वपि।

३८२–योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम्॥
नावनं लङ्घनं चिन्तां व्यवायं शोकभीःक्रुधः।
एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात्॥

३८३–शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि।
अभ्यङ्गोद्वर्तनं स्नानं मूर्धकर्णाक्षितर्पणम्॥

३८४–कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता।
मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः॥

३८५–शरीरे जायते नित्यं देहिनां सुरतस्पृहा।
अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः॥

३८६–बलिनो मनसो रोधात्क्रोधाद्वा ब्रह्मचर्यतः।
नारीणामरसज्ञत्वात्क्षीणं शुक्रं भवेन्नृणाम्॥

३८७-दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं भ्रमः ।
क्लैब्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥

३८८-आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः ।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥

३८९-स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः ।
अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ॥

३९०-अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः ।
भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयः ॥
अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ।
शूलकासज्वरश्वासकार्श्यपांड्वामयक्षयाः ॥

३९१-सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् ।
घृतमुष्णोदकस्नानं सद्यःप्राणकराणि षट् ॥

३९२-पूति मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ॥

३९३-वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् ।
वयोधिकां स्त्रियं गत्वा तरुणः स्थविरायते ॥

३९४-व्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः ।
शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवा निशि ॥

३९५-नोपेयात्पुरुषो नारीं सन्ध्ययोर्न च पर्वसु ।
गोसर्गे चार्धरात्रे च तथा सन्ध्यादिनेऽपि च ॥

३९६-अत्याशितोऽधृतिः क्षुद्वान् सव्यथाङ्गः पिपासितः ।
बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ॥

३९७-स्नातश्चन्दनलिप्ताङ्गः सुगन्धसुमनोन्वितः ।
भुक्तवृष्यः सुवसनः सुवेषः समलङ्कृतः ॥
घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा ।
विहारं भार्यया कुर्याद्देशेऽतिशयसंवृते ॥

३९८-रजस्वलामकामां च मलिनामप्रियां तथा ।
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीडिताम् ॥
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम् ।
सगोत्रां गुरुपत्नीं च तथा प्रव्रजितामपि ॥
नाभिगच्छेत्ततो नारीं भूरिवैगुण्यशङ्कया ।

३९९-रजस्वलां गतवतो नरस्यासंयतात्मनः ॥
दृष्ट्यायुस्तेजसां हानिरधर्मश्च ततो भवेत् ।

४००-लिङ्गिनीं गुरुपत्नीं च सगोत्रामथ पर्वसु ॥
वृद्धां च सन्ध्ययोश्चापि गच्छतो जीवनक्षयः ।

४०१-गर्भिण्यां गर्भपीडा स्याद्व्याधितायां बलक्षयः ॥
हीनाङ्गीं मलिनां द्वेष्यां क्षामां वन्ध्यामसंवृते ।
देशेऽभिगच्छतो रेतः क्षीणं म्लानं मनो भवेत् ॥

४०२-क्षुधितः क्रुद्धचित्तश्च मध्याह्ने तृषितोऽबलः ।
स्थितस्य हानिं शुक्रस्य वायोः कोपं च विन्दति ॥

४०३-व्याधितस्य रुजा प्लीहा मूर्च्छा मृत्युश्च जायते ।
प्रत्यूषस्यर्धरात्रे च वातपित्ते प्रकुप्यतः ॥

४०४-तिर्यग्योनावयोनौ वा दुष्टयोनौ तथैव च ।
उपदंशस्तथा वायोः कोपः शुक्रसुखक्षयः ॥

४०५-उच्चारिते मूत्रिते च रेतसश्च विधारणे ।
उत्ताने च भवेच्छीघ्रं शुक्राश्मर्यास्तु सम्भवः ॥

४०६-सर्वमेतत्त्यजेत्तस्मादतो लोकद्वये हितम् ।
शुक्रं तूपस्थितं मोहान्न सन्धार्यं कदाचन ॥

\+ + +

४०७-निशि स्वस्थमनास्तिष्ठेन्मौनी दण्डी सहायवान् ।
एवं दिनानि मे यान्तु चिन्तयेदिति सर्वदा ॥
दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः ।

४०८-एवं कृत्स्नं दिनं नीत्वा रात्रिं यामार्धिकावधिम् ॥
दिवासन्ध्यं वर्जयित्वा सदा पर्वदिनानि च ।
रात्रौ व्यवायं कुर्वीत योषिता निजया सह ॥

४०९-कुचेलां च कुशीलां च विधवां च परस्त्रियम् ।
नारीं नीचकुलोद्भूतां त्यजेत्सम्यग्विचक्षणः ॥

४१०-वयोधिकां स्त्रियं गत्वा तरुणः स्थविरायते ।
वृद्धोऽपि तरुणीं गत्वा यौवनत्वमवाप्नुयात् ॥

४११-ऋतुकाले तु सुरतमवश्यं कारयेद्बुधः ।
स्त्रीनिःश्वासहतो ना हि दुर्भगत्वमवाप्नुयात् ॥

४१२-ऋते वै शोडपाद्वर्षात्तथाऽतिक्रान्तसप्ततेः ।
स्त्रियं कामयमानस्य जायते हि बलक्षयः ॥

४१३-व्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः ।
प्रकामं तु निषेवेत मैथुनं शिशिरागमे ॥

४१४-शीते रात्रौ, दिवा ग्रीष्मे, प्रावृट्सु घनगर्जिते ।
वसन्ते च दिवा रात्रौ शरत्सु सरसः स्मरः ॥

४१५-स्नानानुलेपनहिमानिलखण्डखाद्य-
शीताम्बुदुग्धरसयूषसुराप्रसन्नाः ।
सेवेत चानुशयनं विरतौ रतस्य
तस्यैवमाशु वपुषः पुनरेति धाम

* * *

४१६-एतानि पञ्चकर्माणि संध्यायां वर्जयेद्बुधः
आहारं मैथुनं निद्रां सपानं गतिमध्वनि ॥

४१७-चिन्तयेत्परमात्मानं चराचरपतिं विभुम् ।
भक्तिमान्प्रयतो नित्यं ध्यानयोगपरायणः ॥

४१८-रात्रौ च भोजनं कुर्यात्प्रथमप्रहरान्तरे ।
किञ्चिदूनं समश्नीयाद्दुर्जरं तत्र वर्जयेत् ॥

४१९-विहारं भार्यया कुर्याद्देशेऽतिशयसंवृते ।
रम्ये श्व्याङ्गनागाने सुगन्धे सुखमारुते ॥
देशे गुरुजनासन्ने विवृतेऽतित्रपाकरे ।
श्रूयमाणे व्यथाहेतुवचने न रमेत ना ॥

४२०–स्नातश्चन्दनलिप्ताङ्गः सुगन्धः सुमनोऽन्वितः ।
भुक्तवृष्यः सुवसनः सुवेषः समलङ्कृतः ।
ताम्बूलवदनः पत्न्यामनुरक्तोऽधिकस्मरः ।
पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे ॥

४२१–स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम् ।
वातो मांसरसः स्वप्नः सुरतान्ते हिता अमी ॥

* * *

४२२–अम्भसः प्रसृतीरष्टौ रवावनुदिते पिबेत् ॥
वातपित्तकफाञ्जित्वा जीवेद्वर्षशतं सुखी ॥

पातव्यं नासया नीरं प्रसृतित्रयमात्रया ।
व्यङ्गवलीपलितघ्नं पीनसवैस्वर्यकासशोथहरम् ॥
रजनीक्षयेम्बुनस्यं रसायनं दृष्टिसंजननम् ।

४२३–स्नेहे पीते, क्षते, शुद्धावाध्माने, स्तिमितोदरे ।
हिक्कायां कफवातोत्थे व्याधौ, तद्वारि वारयेत् ॥

४२४–भवेद्यदि प्रातरजीर्णशङ्का
तदाऽभयानागरसैन्धवानाम् ।
विचूर्णितं शीतजलेन भुक्त्वा
भूत्वा विशङ्को मितमन्नमद्यात् ।

## ( ऋतुचर्याप्रकरणम् )

### नामनिर्देशपूर्वकमृतुषट्कम्

४२५–चयकोपशमा यस्मिन्दोषाणां सम्भवन्ति हि ।
ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात् ॥

४२६–ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ ।
सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः शरत् ॥
धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः ॥
मेषवृषौ रविणा संक्रान्तौ । एवं मिथुनकर्कटावित्यादि ॥

अन्येतु–

४२७–शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमाः ।
माघादिमासयुग्मैः स्युर्ऋतवः षट् क्रमादमी ॥

### ऋतुषट्कनामविषयकमतभेदः ।

४२८–गङ्गाया दक्षिणे देशे वृष्टेर्बहुलभावतः ।
उभौ मुनिभिराख्यातौ प्रावृड्वर्षाऽभिधावृतू ॥
तस्या एवोत्तरे देशे हिमप्रचुरभावतः ।
एतावुभौ समाख्यातौ हेमन्तशिशिरावृतू ॥

### दक्षिणोत्तरायणयोर्लक्षणं गुणाश्च ।

४२९–उत्तरायणमाद्यैस्तैः परैः स्याद्दक्षिणायनम् ।
आद्यमुष्णं बलहरं ततोऽन्यद् बलदं हिमम् ॥

### ऋतूनां गुणदोषाः

४३०–हेमन्तः शीतलः स्निग्धः स्वादुर्जठरवह्निकृत् ।
शिशिरः शीतलोऽतीव रूक्षो वाताग्निवर्धनः ॥
हेमन्तः स्वादुः प्रायेण द्रव्येषु स्वादुरसजनकः । एवमन्यत्रापि बोद्धव्यम् ॥

४३१–वसन्तो मधुरः स्निग्धः श्लेष्मवृद्धिकरश्च सः ।
ग्रीष्मो रूक्षोऽतिकटुकः पित्तकृत्कफनाशनः ॥
वर्षाः शीता विदाहिन्यो वह्निमान्द्यानिलप्रदाः ।
शरदुष्णा पित्तकर्त्री नृणां मध्यबलावहा ॥

### ऋतुषु चयप्रकोपोपशमाः ।

४३२–चयप्रकोपोपशमा वायोर्ग्रीष्मादिषु त्रिषु ।
वर्षाऽऽदिषु च पित्तस्य श्लेष्मणः शिशिरादिषु ॥
चीयते लघुरूक्षाभिरोषधीभिः समीरणः ।
तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ॥
तद्विधो रूक्षो लघुश्च । तद्विधे रूक्षे लघौ च ॥

४३३–अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम् ।
पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ॥
तादृशम्=अम्लविपाकम् ॥

४३४–चीयते स्निग्धशीताभिरुदकौषधिभिः कफः ।
तुल्ये च काले देहे च स्कन्नत्वान्न प्रकुप्यति ॥
तुल्येऽपि काले स्निग्धे शीतले च । स्कन्नत्वात्=देहे शुष्कत्वात् ॥

४३५–हिमे याति शमं पित्तं, वायुः श्लेष्मा च चीयते ।
स वायुः शिशिरे कोपं यात्येवोपचितः कफः ॥
हेमन्ते सञ्चितः श्लेष्मा शिशिरे त्वतिचयिते ।
शीतस्निग्धगुरुद्रव्यैः शैत्यस्कन्नो न कुप्यति ॥ ।
स्कन्नः=कठिनीभूतः ॥ ॥

४३६–इति कालस्वभावोऽयमाहारादिवशात्पुनः ।
चयादीन्यान्ति सद्योऽपि दोषाः कालेऽपि वा न तु ॥
चयादीन् चयकोपशमान्; पूर्वाह्णे वसन्तस्य लिङ्गम्, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकम् । शारदमर्धरात्रे, प्रत्युषसि हैमन्तमुपलक्षयेद् । एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षालक्षणं दोषोपचयप्रकोपोपशमैर्जानीयादिति सुश्रुतः ॥

अकाले दोषवृद्धिः ।

४३७-चयकोपशमान्दोषा विहाराहारसेवनैः ।
समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्ययम् ॥

समानैः=तुल्यैः, चयादियोग्यैरिति यावद् । विपर्य्यय-कालेऽपि वैपरीत्यं बोध्यम् ॥

दोषचयलक्षणम् ।

४३८-स्वस्थानस्थस्य दोषस्य वृद्धिः स्यात्स्तब्धकोष्ठता ।
पीतावभासता वह्निमन्दता चाङ्गगौरवम् ॥
आलस्यं चयहेतौ तु द्वेषश्च चयलक्षणम् ।
सञ्चयेऽपहृता दोषा लभन्ते नोत्तरां गतिम् ॥
ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ॥

वर्षर्तौ नियमाः ।

४३९-वर्षासु प्रबलो वायुस्तस्मान्मिष्टादयस्त्रयः ।
रसाः सेव्या विशेषेण पवनस्योपशान्तये ॥

मिष्टादयस्त्रयः=मधुराम्ललवणाः ॥

४४०-भवेद्वर्षासु वपुषः क्लिन्नत्वं यद्विशेषतः ।
तत्क्लेदशान्तये सेव्या अपि कट्वादयस्त्रयः ॥

कट्वादयस्त्रयः-कटुतिक्तकषायाः ॥

४४१-स्वेदनं मर्दनं सेव्यं दध्युष्णं जाङ्गलामिषम् ।
शालयो यवगोधूमा जलं कौपं जलं च्युतम् ॥
न भजेत्पूर्वपवनं वृष्टिं घर्मं हिमं श्रमम् ।
नदीतीरं दिवास्वप्नं रूक्षं नित्यं च मैथुनम् ॥

शरदृतौ नियमाः ।

४४२-सर्पिः स्वादुकषायतिक्तकरसा यच्छीतलं यल्लघु
क्षीरं स्वच्छसितैक्षवः पटुरसः स्वल्पं पलं जाङ्गलम् ।
गोधूमा यवमुद्गशालिसहिता नादेयमंशूदकं-
चन्द्रश्चन्दनमिन्दुरादिरजनी माल्यं पटो निर्मलः ॥

अंशूदकलक्षणम् ।

४४३-दिवसेऽर्ककरैर्जुष्टं निशि शीतकरांशुभिः ।
ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम् ॥

अत्र समग्रदिवसप्राप्त्यर्थं दिवापदमेवं निशापदं च ॥

चन्द्रः-कर्पूरः ॥

४४४-विश्रामः सुहृदां गणेषु मधुरा वाचः सरः क्रीडनं
पित्तानां च विरेचनं बलवतो युक्तं शिरामोक्षणम् ।
एतान्यत्र घनावसानसमये पथ्यानि मुञ्चेद्दधि-
व्यायामाम्लकटूष्णतीक्ष्णदिवसस्वप्नं हिमं चातपम् ॥
इक्षवःशालयो मुद्गाः सरोऽम्भः क्वथितं पयः ।
शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः ॥

हेमन्ततौं नियमाः ।

४४५-प्रातर्भोजनमम्लमिष्टलवणानभ्यङ्गघर्मश्रमान्
गोधूमैक्षवशालिमाषपिशितं पिष्टं नवान्नं तिलान् ।
कस्तूरीं वरकुङ्कुमागुरुयुतामुष्णाम्बु शौचं तथा
स्निग्धं स्रग्धपि सुखं गुरूष्णवसनं सेवेत हेमन्तके ॥

शिशिरर्तौ नियमाः ।

४४६-वान्तिं नस्यमथाभयां च मधुना व्यायाममुद्वर्त्तनं
संसेवेत मधौ कफघ्नकवलं शूल्यं पलं जाङ्गलम् ।
गोधूमान्बहुशालिमेदसहितान्मुद्गान्यवान्षष्टिकां-
ल्लेपश्चन्दनकुङ्कुमागुरुकृतं रूक्षं कटूष्णं लघु ॥
मिष्टमम्लं दधि स्निग्धं दिवास्वप्नं च दुर्जरम् ।
अवश्यायमपि प्राज्ञो वसन्ते परिवर्जयेत् ॥

ग्रीष्मर्तुनियमाः !

४४७-स्वादुस्निग्धहिमं लघु द्रवमयं द्रव्यं रसालां सितां-
सक्तुक्षीरमजाङ्गलानि सितया शालिं रसं मांसजम् ।
शीतांशुं शयनं दिवा मलयजं शीतं पयः पानकं
सेवेतोष्णदिने त्यजेत कटुकक्षाराम्लघर्मश्रमान् ॥

पूर्वोक्तर्तुचर्याचरणे फलम् ।

४४८-ऋतुष्वेषु य एतैस्तु विधिभिर्वर्तते नरः ।
दोषानृतुकृतान्नैव लभते स कदाचन ॥

शतायुष्ट्वोपायाः ।

४४९-वामशायी द्विभुञ्जानः षण्मूत्री द्विपुरीषकः ।
स्वल्पमैथुनकारी च शतं वर्षाणि जीवति ॥

पथ्याचारप्रयोजनम् ।

४५०-नरो दिनादिचर्याभिर्यो न वर्तेत नित्यशः ।
स एव लभते रोगं ततः पथ्यं समाचरेत् ॥

---

## ( गृहादिनिर्माणविधिः । )

४५१-प्रचण्डमार्तण्डकरैः सुदीप्तं
गृहं हि सात्म्याय सुखाय नृणाम् ।
आरोग्यदाता सकृपं निरीक्ष्य
सात्म्यं सुखं यच्छति मानवेषु ॥

४५२-वायुर्गृहाद्दुष्टविषं सबाष्पं
वेगैर्वहन् संहरति स्वभावात् ।
वातायनाढ्यं गृहमेव नित्यं
सुखञ्च सात्म्यं विदधाति नृणाम् ॥

४५३–पयोनिर्गमनार्थञ्च बहिर्मार्गविनिर्गताम् ।
गृहनेमिं प्रकुर्याच्च सदनस्य समन्ततः ॥

४५४–स्रोतोभिरादौ मलनिर्गमाद् यद्
देहे सुखं ना लभते सदैव ।
स्रोतो मलान् वर्जति तद्गृहाणां
सात्म्यं सुखं ना सततं वृणोति ॥
नदी प्रकृत्या विदधाति शान्तिं
तत् स्रोतसा देशमलं विसृज्य ।

४५५–नदीप्रवाहं न कदापि रुन्ध्या-
दसात्म्यवृद्धिर्मलरोधतः स्यात् ॥

४५६–त्यजन्ति श्वासैर्यत् सविषमनिलं जन्तव इह
द्रुमाः पीत्वा नित्यं सगरममृतं नः प्रजिहते ।
द्रुमैर्हीने स्थाने न तु बुधजनः सम्पद्युते
द्रुमैराढ्ये स्थाने वसति सततं सात्म्य-सुखि-ना ॥

४५७–लताद्रुमा गुल्मवीरुत्प्ररोहा
ग्रसन्ति श्वासस्य विषं सुखाय ।
प्राणामृतं सौरदिने त्यजन्ति
कुर्वन्ति रात्रौ विपरीतकर्म ॥

४५८–शुभ्रं शुभं पुण्यनिकेतनं तत्
क्षेत्रे तृणाढ्ये फलपुष्पयुक्तैः ।
द्रुमैः समृद्धे कृतसुप्रतिष्ठं
स्वेच्छाचरद्गोविभवोज्ज्वलं च ॥

४५९–कुर्यादैन्द्र्यां गृहं मुक्तमाग्नेय्यां पाकमन्दिरम् ।
मनोज्ञमण्डपं याम्यां नैर्ऋत्यां समिधालयम् ॥
वारुण्याञ्च जलागारं वायव्यां गोष्ठकेतनम् ।
कौबेर्यां रत्नकोषञ्च ह्यैशान्यां पुष्पमण्डपम् ॥

४६०–कुर्यादैन्द्र्यां दिशि सदनतो हंसकारण्डवाढ्यं
स्वच्छाम्भानं मुकुरसदृशं मारुतैर्नैजयन्तम् ।
सूर्येन्दुभ्यां जलजकुमुदैः सर्वदा फुल्लहृष्टं
वाताकृष्टं सृतजलकणं स्नेहशान्तिप्रसन्नम् ॥

४६१–कुर्याद्याम्यां दिशि सदनतः शष्पवीथीप्रकीर्णम्
मुक्तं क्षेत्रं कमनहरितं धेनुवत्सैः समृद्धम् ।
पुष्पैः फुल्लैः पवनचलितैः सौरभामोदमत्तं
सौरोदीप्तं नयनरमणं स्नेहकान्तं प्रहृष्टम् ॥

४६२–तद्वारुण्यां दिशि सदनतो द्रुमराजीसमेतं
कुर्यान्मुग्धं कममुपवनं वातसङ्गप्रहृष्टम् ।
रक्ताक्षोऽर्को, वितरति करं वारुणीसेवनाय-
त्तुङ्गैः शीर्षैः प्रवरविटपास्तन्निरोद्धुं समर्थाः ॥

४६३–तत्कौबेर्यां दिशि सदनतः पूतिकुण्डं प्रकुर्यात्
कुर्याद्द्वारं तदपि न कदा मुक्तवातायनं वा ।
वायोर्गत्यै खलु विरचयेद्दुद्ध्वातायनं त-
च्छस्ते वासे शमनुवसति निर्मले मुक्तवाते ।

४६४–उदुम्बरञ्च कौबेर्यामैशान्यां शाल्मलिं तथा ।
अश्वत्थञ्च तथा चैन्द्र्यां याम्यां प्लक्षं प्ररोपयेत् ।
न्यग्रोधं दिशि वारुण्यां तथैव स्थापयेत् सुधीः

४६५–ऐशान्यां दिशि गृहतः प्ररोपयेन्ना
तद्धात्रीं सुखशमनाय नारिकेलम् ।
ऐन्द्र्यां तत् पनसरमालबिल्वलुङ्गान्
पद्माढ्यं सरससरः सुरक्षयेच्च ॥

४६६–आग्नेय्यां दिशि गृहतोऽहि चम्पकं वै
याम्यां तत् सकुसुमभूषणांश्च गुल्मान् ।
पुन्नागान् बकुलशमीगुवाकजम्बून्
नैर्ऋत्यां बदरतिलान् लताप्ररोहान् ॥

४६७–वारुण्यामभयगुवाकवंशवट्टा-
नश्वत्थान् विटपिगणान् सुसान्द्रपत्रान् ।
वायव्यां सुविरचयेच्च केतकांस्तत्
कौबेर्यां दिशि रचयेत् कपोतनेष्टिम् ॥

### जनपदविध्वंसनीयम् ।

४६८–वातानलानां प्रकृतेर्दिशाञ्च
यदा विकारो भवति त्वृतूनाम्
देशश्च कालश्च मरुज्जलञ्च
विकारमाप्नोति विकारधर्मात् ॥

४६९–रवीन्दुभौमार्किगुरुज्ञशुक्रा
ग्रहाश्च तारा भगणः खदेवाः ।
यदा लभन्ते प्रकृतेर्विकारं
तदा नराणां सुखसात्म्यहानिः ॥

४७०–भूमिर्विकाराद् विकृतिर्भवेच्च
अब्वातयोर्हानिरसात्महेतोः ।
ध्वंसो जनानां प्रकृतेर्विकृत्या
व्याधेः प्रसारो शुभसात्म्यहानिः ॥

४७१–भौमान्तरीक्ष्यवैकृत्यात् सात्म्यहानिर्भवेद् यदा ।
कार्यस्तत् पूर्वतो वैद्यैरिष्टभैषज्यसंग्रहः ॥

४७२–आत्मादेहगृहग्रामनगरदेशशोधनम्
सर्वैर्नरैः क्रियेतादौ देशोद्ध्वंसनसम्भवे ॥

### संक्रामकरोगाः ।

४७३–प्रसङ्गाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनात् ।
सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥

### संक्रामकरोगे उपायाः ।

४७४–तत्र स्थानपरित्यागशांतिकर्मप्रायश्चित्तमङ्गलजपहोमो-
पहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्यु-
पगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति ।

### वातातपादिगुणाः ।

४७५–आतपः पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत् ॥
दाहवैवर्ण्यकारी च छाया चैतानपोहति ॥

४७६–प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपित्तनुत् ।

स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा ॥
४७७-सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः ।
निवातं ह्यायुषे सेव्यमारोग्याय च सर्वदा ॥
४७८-शोपदाहश्रमस्वेदमूर्च्छाघ्ना व्यंजनानिलाः ।
पूर्वोऽनिलो गुरुः सोष्णः स्निग्धः पित्तास्रदूषकः ॥
विदाही वातलः श्रान्तिकफशोषवतां हितः ।
स्वादुः पटुरभिष्यन्दी त्वग्दोषार्शोविषक्रिमीन् ॥
सन्निपातज्वरश्वासमामवातं प्रकोपयेत् ।
४७९-दाक्षिणः पवनः स्वादुः पित्तरक्तहरो लघुः ॥
वीर्येण शीतलो बल्यश्चक्षुष्यो न च वातलः ।
४८०-पाश्चिमः पवनस्तीक्ष्णः शोषणो बलहृल्लघुः ॥
मंदपित्तकफध्वंसी प्रभञ्जनविवर्धनः ।
४८१-उत्तरो मारुतः शीतः स्निग्धो दोषप्रकोपकृत ॥
क्लेदनः प्रकृतिस्थानबलदो मधुरो लघुः ।
४८२-आग्नेयो दाहकृद्रूक्षो नैर्ऋतो न विदाहकृत् ॥
४८३-वायव्यस्तु भवेत्तिक्त ऐशानः कटुकः स्मृतः ।
४८४-विष्वग्वायुरनायुष्यः प्राणिनां बहुरोगकृत् ।
अतस्तं नैव सेवेत सेवितः स्यान्न शर्मणे ॥

---

## ( पाकप्रकरणम् )

भक्तम् ।

४८५-भक्तादेः पत्रशाकादेरन्नानां मत्स्यमांसयोः ।
क्षीरादेर्गोधुमादेश्च प्रकारा एवमादयः ॥
वक्ष्यन्ते, तत्र भक्तस्य रन्धने विधिरुच्यते ।
वारिणा बहुशः शालितण्डुलान् क्षालितान् बहून् ।
तक्रे संसिच्य तान् तप्ते स्थाल्यम्भासि विनिक्षिपेत् ।
ततः पयोघृतं क्षिप्त्वा स्विन्नानास्रावयेदिमान् ॥
राजार्हं तद्भवेद्भक्तं गन्धवर्णरसान्वितम् ।
एवं हि धान्यजातीनां रन्धनस्य त्वयं क्रमः ॥
स्वेद्यं शालेयमन्नं शशिकरनिकरप्रोज्ज्वलं सिद्धसारं
भ्राम्यद्बाष्पच्छलेन त्रिदशपुरसुधाधेयमाधुर्यतत्त्वम् ।
अन्योन्यं नैव लग्नं परिमलभरिताङ्गारवेदीविभागं
स प्राप्नोति प्रसन्नः प्रमथपरिवृढो यस्य पुंसः सदा स्यात्॥
भक्तं वह्निकरं पथ्यं तर्पणं मूत्रलं लघु ।
सुधौतं स्रावितं चोष्णं विशदं गुणवन्मतम्॥
रन्धनस्य प्रकारोक्तो भक्तस्य च गुणोत्तमः ।
यस्य धान्यस्य यद्भक्तं तस्य तद्गुणमावहेत्॥

सूपः ।

४८६-तां कण्डितां दधिविमर्दितमुद्गदालिं
संसाधितां लवणगन्धसमायुतां च ।
ते भुञ्जते कुमुदहासकरार्धमूर्धा
येषां सदा हृदयचारुगृहं निषण्णः ॥

मुद्गकुल्माषाः ।

४८७-अर्ध विकसितं स्विन्नाः कुल्माषा मुद्गमाषजाः ।
सैन्धवेन सबाह्लीकाः स्वान्नस्य तु गुणावहाः॥
मुद्गसूपो लघुर्ग्राही कफपित्तहरो हिमः ।
स्वादुर्नेत्र्योऽनिलहरः कुल्माषः शुक्रवर्धनः ॥

माषकुल्माषसूपौ ।

४८८-माषसूपोऽथ कुल्माषः स्निग्धो वृष्योऽनिलापहः ।
उष्णः सन्तर्पणो बल्यः सुस्वादू रुचिकारकः ॥

घृतम् ।

४८९-करीषवह्निना तप्तं क्षीरं तदुषितं दधि ।
तज्जमाज्यं न तत्त्वाजं नवीनंनवनीतजम् ॥
मञ्जिष्ठवारिरुचिसारि तनूष्मधारि
सौरभ्यचारि रुचिकारि विलोभहारि ।
भुङ्क्ते नरः स खलु सर्पिरिदं नवीनं
यः पार्वतीचरणमौलिविलोलमौलिः ॥

सामान्यं घृतम् ।

४९०-घृतं रसायनं स्वादु पित्तानिलविषापहम् ।
आयुष्यं बृंहणं शीतं पाप्मालक्ष्मीविनाशकम् ॥

गव्यं घृतम् ।

४९१-गव्यमग्निकरं सर्पिः कफपित्तानिलापहम् ।
चक्षुष्यं बृंहणं शीतं विपाके मधुरं स्मृतम् ॥

माहिषं घृतम् ।

४९२-माहिषं मधुरं पाके रक्तपित्तानिलापहम् ।
सुशीतं बृंहणं वृष्यं चक्षुष्यं रुचिकारकम् ॥

आजं घृतम् ।

४९३-आज्यमाजं हि चक्षुष्यं दीपनं बलवर्धनम् ।
श्वासे कासे क्षये पथ्यं लघु गन्धाद्गुणावहम् ॥

पर्पटः ।

४९४-मुद्गजीरकबाह्लीकत्वर्जिकामरिचान्विताः ।
अरोचकजिगीषूणां पर्पटाः पुरतो भटाः ॥
अङ्गारमृष्टास्ते श्रेष्ठा न तु स्नेहविपाचिताः ।
पर्पटा लघवो रुच्या मुद्गजा विधिपाचिताः ॥

कृशरा ।

४९५-तन्दुलैः षष्टिसम्भूतैः कण्डितैर्न च खण्डितैः ।
अष्टभागयुतैर्मुद्गैः संयुक्तैर्द्वादशांशकैः ॥
सार्द्रा नार्द्रा सुसन्धाना सबाह्लीका वरान्विता ।
सस्नेहा कामिनीवेयं कृशरा शिशिरे हिता ॥
कृशरा दुर्जरा बल्या गुर्वी वातविनाशिनी ।
बलपुष्टिमलश्लेष्मपित्तविष्टम्भकृत्सरा ॥

कर्चरी ।

४९६-क्षाराम्लकृतसंस्कारा शुष्का स्नेहविपाचिता ।
अरोचकादिरोगाणां कर्चरी कण्ठकर्तरी ॥
कर्चरी रुचिकृद्बल्या सुस्वाद्वी त्वतिलेखनी ।
उष्णा पित्तकरा प्रोक्ता कफकृत्सारका स्मृता॥

## शाकप्रकाराः (१)

— ० —

४९७–पत्रं पुष्पं फलं नालं कन्दं मूलं तथैव च ।
शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥
४९८–हिङ्गुजीरयुते तैले क्षिपेच्छाकं सुशोधितम् ।
लवणं चाम्रचूर्णादि सिद्धे हिङ्गूदकं क्षिपेत् ॥
इत्येवं सर्वशाकानां तलने क्वथने विधिः ।
४९९–वास्तुकं काकमाची च तन्दुलीयं पुनर्नवा ॥
चुञ्चुकं नालिका पाठा पच्यन्तेऽम्लेन तद्बुधैः ।
कासमर्दी च मेथी च पुन्नाटं चणकोद्भवम् ॥
रसार्द्रं त्वम्लरहितं पक्वं सम्यग्विचक्षणैः ।
एवं वार्ताककूष्माण्डपटोलादिफलेष्वपि ॥
तलने विधिरुद्दिष्टो विशेषो यः स उच्यते ।
५००–तप्ततैले क्षिपेच्छाकं वास्तुकादिसुखण्डितम् ॥
लवणं तोयमल्पं च क्षिप्तं सिद्धेऽर्धमात्रकम् ।
सधान्यवेशनं तक्रे गालितं क्वथितं क्षिपेत् ॥
ततः शुण्ठीं जीरकं च हिङ्गुं दत्त्वाऽवतारयेत्
इत्थमेवापरस्यापि वर्णस्य करणे यदि ॥
तत्सर्वं स्वेच्छया देयं वर्णकृत्प्रथमं स्मृतम् ।
एवं यत्कठिनं शाकं कषायं कटुतिक्तकम् ॥
तदुत्स्वेद्याम्बुना पूर्वं तक्रेण तदनन्तरम् ।
तप्ततैले विनिक्षिप्य रन्धयेच्च यथेच्छया ॥

### वृन्ताकम् ।

५०१–सर्वासां शाकजातीनां वृन्ताकं शाकनायकम् ।
अतः शाकक्रमं त्यक्त्वा प्रथमं नायकं वदेत् ॥
५०२–भोजनं धिगवृन्ताकं वृन्ताकं धिगवृन्तकम् ।
सवृन्तं धिगतैलाढ्यं तैलाढ्यं धिगरामठम् ॥
५०३–वार्ताकं कलितं सुवृन्तसहितं संस्वेदितं काञ्जिके
शुद्धेऽम्ले घृतधान्यकार्द्रकनिशासंपर्कितं पाचितम् ।
सक्षारं मरिचावचूर्णितमथो तैलेन हिङ्ग्वा लस-
द्वासं दारुमयेऽपि पुंसि कुरुते घ्रातं क्षुधाबोधनम् ॥
५०४–वृन्ताकखण्डा यदि तेऽत्र संवृता-
स्तैलप्लुता हिङ्गुरसन युक्ताः
मरीचधूलीपरिधूसराङ्गा
भवन्ति पुण्योदयराजपुंसाम् ॥
५०५–हरितं स्वामवार्ताकं कटुतैले सरामठे ।
सिद्धं मरिचसंबद्धं कोष्णमेतद्रुचिप्रदम् ॥
वार्ताककर्तला लिप्ताः शुण्ठीधान्यकजीरकैः ।
घृते भृष्टाः समरिचा हिंगुधूपेन धूपिताः ॥
५०६–सवृन्तवृन्ताकतुरीयखण्डं सरामठं तप्तघृते सुपाचितम्
ससैन्धवं चुक्रकशाकसंयुतं सपोलिकं पूर्वजपुण्यदापितम्
५०७–वृन्ताकं वृन्तसहितं कृत्तं बाल्हिकसंयुतम् ।
पक्वमाम्रयुतं स्वाज्ये ललिजिह्वान्तरे स्थितम् ॥
५०८– प्रभ्रष्टतण्डुलसमीकृतनालिकेर-
पिष्टैः सहैव मरिचेन समेलकेन ।
वार्ताकमुत्तमघृतैरनुपाचितं यत्
सिन्धूदरानलमिवानलमातनोति ॥
५०९–स्विन्नार्धवृन्तवृन्ताकं कर्चरेण विपाचितम् ।
जीराज्यवेसवाराढ्यमाम्लवर्गैः सहाशितम् ॥
५१०–वृन्ताकं फलमादृतं सुललितं शस्त्रेण तद्दारिणि
क्षिप्तं तैलविपाचितं नवदलं जम्बीरनीरान्वितम् ।
हिंग्वाद्रेण सुवासितं बहुरसं सिन्धूत्थसंधूलितं
भोक्त्रा केन न निन्दितं बहुगुणं सौधं जलं दुर्लभम् ॥
५११–अकृत्तवृन्तं वृन्ताकं चतुर्धार्धस्य खण्डितम् ।
वेसवारोषणाहिङ्गुतक्रक्वाथेन पाचितम् ॥
अङ्गारपक्वं वार्ताकं क्षोदितं घृतयोजितम् ।
सैन्धवभृष्टवाल्हीके धूपितं स्याद्रुचित्रिकम् ॥
५१२–त्वग्वृन्तगतवृन्ताकं पुटपाकेन पाचितम् ।
सैन्धवेनाज्यहिङ्गुभ्यां मिश्रितं रुचिकारकम् ॥
५१३–सुस्विन्नवृन्ताकफलं भृशाग्निना
संक्षोदितं तत्तु न नालवर्जितं ।
सुवासितं राजिकसैन्धवान्वितं
विमर्थ दध्ना परिवेष्टितं ध्रुवम्
५१४–निर्धूमानलपाचितमामं वार्ताकमुज्झितं बीजैः ।
आर्द्रकनिम्बुकसैन्धवस्नेहैरालोडितं रुचिं धत्ते ॥
५१५–वृन्ताकं स्वादुतिक्तोष्णं कटुपाके च पित्तलम् ।
रुच्यं वातहर हृद्यं दीपनं शुक्रलं लघु ॥ २८
५१६–अपरं श्वेतवार्ताकं कुक्कुटाण्डोपमं फलम् ।
कृष्णाद्धीनगुणं किंचिदर्शसां नाशनं परम् ॥
५१७–वह्नेर्दीप्तिकरं परं रुचिकरं गुल्मापहं पाचनं
प्लीहानं च शिरोरुजं विजयते जीर्णज्वरं कामलाम् ।
हन्याद्वातकफामरोगनिचयं मूत्रग्रहं साश्मरी
वृन्ताको मृदुवह्निना सुपचितः पुंभिः सदा सेव्यते ॥

### बिम्बीफलम् ।

५१८–दलितं तलितं सरामठं नवबिम्बीफलमात्तसैन्धवम् ।
मरिचोद्भवचूर्णसंयुतं घृतपाकेन करोति रोचनम् ॥
५१९– बिम्बीफलं सकलमेव घृते निधाय
तप्ते ससैन्धवमिदं मुहुरुत्क्षिपेच्च ।
सोपस्करं क्वथितमत्र निधाय तक्रं
वाग्धारयेदति च दीपनमेव वह्नेः ॥
५२०–बिम्बीफलार्धकलितं हिंङ्गुसैन्धवमिश्रितम् ।
प्रलेहविधिना पाच्यं परिवृत्य छमत्कृतम् ॥
५२१–अङ्गारभर्जितं बिम्बीफलं संक्षोदितं करैः ।
दीर्घहिङ्गुघृते न्यस्तं सक्षारं रुचिकारकम् ॥
५२२–तिर्यग्वा खण्डितं चार्धस्विन्नं बिम्बीफलं भृशम् ।
दधिराजिकया युक्तं सैन्धवेनानुमिश्रितम् ॥
५२३–बिम्बीफलं स्वादु शीतं रक्तपित्तप्रणाशनम् ।
स्तम्भनं लेखनं चातिविबन्धाध्मानकारकम् ॥

### शिम्बी ।

५२४–नैष्पावकं सुदलितं नवबीजकोशं
तप्तेन हिंङ्गुजकणेन ससैन्धवेन ।
प्रभ्रष्टकल्पतिलतैलकृतप्रबोधं
मान्द्यं हरेच्च जठरान्तरवर्तिवह्नेः ॥
५२५–शिम्बी शीता गुरुर्बल्या श्लेष्मला वातपित्तजित् ।
कोलशिम्बी समीरघ्नी गुर्व्युष्णा कफपित्तकृत्

कोकशातकी।

५२६-निःशेषिताखिलसिरावलिकृत्तखण्डं
दण्डाहतं च मृदुपाकमवाप्यते हि।
हिङ्ग्वम्लतैललवणैः परिपाचितं च
कोशातकीफलमिदं मरिचेन रुच्यम्॥

५२७-राजकोशातकी शीता ज्वरघ्नी कफवातला।
महाकोशातकी तद्वत्सिद्धाऽर्शोऽनिलपित्तहा॥

पटोलम्।

५२८-ऊर्ध्वेन विधिना कृत्तं बृहत्पाटोलकं फलम्।
हिङ्गुना पाचितं तप्ते घृते सुरुचिकारकम्॥

५२९-चचेण्ड कर्तलाकारं कृत्तमाज्ये छमत्कृतम्।
प्रलेहविधिना राद्धं रुच्यं लवणमिश्रितम्॥

५३०-श्वेतराजिकया शुभ्रं बृहत्पाटोलकं फलम्।
पित्तघ्नं वातहृद्वल्यं रुच्यं पथ्यं हि देहिनाम्॥

तुम्बीफलम्।

५३१-अलाबोश्च फलं दीर्घं घृते पक्वं सजीरकम्।
दधिसैन्धवचूर्णेन संसिक्तं तनु खाण्डितम्॥

५३२-मिष्टं तुम्बीफलं हृद्यं वृष्यं पित्तापहं गुरु।
शुभ्रं रुचिकरं प्रोक्तं धातुपुष्टिविवर्धनम्॥

कूष्माण्डम्।

५३३-घृते तप्ते विनिःक्षिप्य खण्डान् कूष्माण्डसंभवान्।
वार्ताकविधिना कुर्यात्प्रलेहं तलनं त्वथ॥

सुस्वादुसुन्दरम्।

५३४-वेसवाराम्लतक्रेण घृते तलनपूर्वकम्।
कूष्माण्डखण्डकं सिद्धं विदुः सुस्वादुसुन्दरम्॥

गुलिका।

५३५-घृतेन गुडयुक्तेन गौडकूष्माण्डखण्डकान्।
रन्धितान् जीरमरिचैरिमान् गुलितलान्विदुः॥

खण्डकूष्माण्डकम्।

५३६-चतुरस्रायताः स्थूलाः स्विन्नाः क्षीरेण क्षोदिताः।
सुपाच्याः खण्डसर्पिर्भ्यां मरिचैलादिवासिताः॥

५३७-कूष्माण्डं गुलिकाकारं खण्डितं घृतभर्जितम्।
हिङ्गुसैन्धवचूर्णेन संयुक्तं रुचिकारकम्॥

आम्लकूष्माण्डम्।

५३८-कूष्माण्डखण्डानि ससैन्धवानि
तनूनि संमर्दितपीडितानि।
जम्बीरनीराश्रितशृङ्गवेरै-
र्भवन्ति वन्हेरपि दीपनानि॥

५३९-कूष्माण्डत्वग्भवाः खण्डाः सुस्विन्नाश्चणकान्विताः।
वेसवारयुते तैले तलयेद्वा प्रलेहयेत्॥

आसुरी।

५४०-खण्डं कनिष्ठिकाकारं कौष्माण्डं स्वेदपिण्डितम्।
राजिकादधिसिन्धूत्थैर्मिश्रितं चासुरी स्मृता॥

५४१-एवं बहुविधः कार्यः कूष्माण्डो हि विचक्षणैः।
प्रलेहतलनस्वादुक्षारसंधानराजिकाः॥

५४२-कूष्माण्डं बृंहणं शीतमसृक्पित्तहरं गुरु।
बालं पित्तापहं शीतं मध्यमं कफकारकम्।
पक्वं नातिहिमं स्वादु सक्षारं दीपनं लघु॥

आमलकफलम्।

५४३-अङ्गारपाकपाचितानि फलानि धात्र्या
आज्येन जीरलवणेन विमिश्रितानि।
बाल्हीकधूपपरिधूपितसौरभाणि
संधुक्षयन्ति जठरानलमुद्धतानि॥

५४४-प्रोक्तं धात्रीफलं वृष्यं विशेषाद्रक्तपित्तजित्।
त्रिदोषशमनं पथ्यं ज्वरघ्नं च रसायनम्॥

कारवेल्लीफलम्।

५४५-कारवेल्लीफलं भूयात्कवले कवले मम।
बहिर्मरकतश्याममन्ते विद्रुमसंनिभम्॥

५४६-कारवेल्लीफलं तक्रे स्वेदितं हिङ्गुमर्दितम्।
भर्जितं नवनीतेन सैन्धवेन समन्वितम्॥

५४७- विदलितमुखमीषत्कारवेल्लं कठोरं
पुलकितमिव तैले साधितं रामठेन।
चरितमरिचचूर्णं सैन्धवेनातिपूर्णं
पुलकितरसनाग्रं लोलतामातनोति॥

५४८-कारवेल्लफलं भेदि लघु तिक्तं च शीतलम्।
पित्तास्रकामलापाण्डुकफमेदःकृमीञ्जयेत्॥

कर्कोटकफलम्।

५४९-ईषद्विभिन्नमरिचैः परिपूर्णगर्भं
तैलेन राद्धमथ सैन्धवजातयोगम्।
बाह्लीकयुक्तपयसा विहिताभिषेकं
कर्कोटकीफलमिदं रुचिकृन्नराणाम्॥

५५०-फलं कार्कोटकं कुष्ठकिलासारुचिनाशनम्।
भेद्यं रुचिकरं वृष्यं कटु पाके च दीपनम्॥

हरितचणकम्।

५५१-सुहरितहरिमन्थः क्षोदक्षुण्णो नखाग्रैः
प्रथममुदकसिक्तो वेसवारेण सिद्धः।
लवणमरिचसङ्गात्तैलहिङ्गुप्रसङ्गा-
च्छिखरयति हि भोक्तुर्जाठरं मन्दवह्निम्॥

५५२-छोलाविधानकफलं परिगृह्य शुद्धं
तप्ते घृते सुपचितं कथितोपणाभ्याम्।
संसाधितं सुरभितं शुचिरामठेन
जिह्वातले विशति नर्तति च प्रकामम्॥

५५३-हरितेन भृतं कापि निर्माणाच्छोलकं क्वचित्।
कथ्यते स्थौल्यकफकृत्किंचिद्वातकरं सरम्॥

उदुम्बरफलम्।

५५४-फलमौदुम्बरं बालमम्लतक्रेण स्वेदितम्।
वेसवारभृते स्वाज्ये पाचितं सैन्धवान्वितम्॥

५५५-शीतं कषायमधुरं रक्तपित्तप्रणाशनम्।
मूत्रकृच्छ्रहरं सम्यग्विबन्धाध्मानकारकम्॥

आर्द्रकचरम्।

५५६-नापक्वं नातिपक्वं च खण्डितं त्वग्विवर्जितम्॥
वेसवारघृतक्षारैः सिद्धं पित्ताग्निवर्धनम्।

कर्कटीफलम्।

५५७-त्वग्बीजरहिता प्रौढा गुलिकाकारखण्डिता।
तलिता सुघृते तप्ते कर्कटी वा प्रलेहिता॥

५५८–विपाण्डुखण्डं घृतदुग्धराद्धं विभावितं वह्निजशर्कराभ्याम्। कृतैलवासं च कटूष्णमेतत्प्रतिक्षणं रोचकमादधाति ॥

५५९– कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः।
रुच्या पित्तहरा पक्का पाकोष्णा पित्तकृत्सरा ॥

कुटजफलम् ।

५६०–सलिलपरिचितं मुखे कृशानोरथ मथितेन विपाचितं सुतैले ॥ सुलवणसहितं सहिंगुवासं रुचिजनकं गिरिमल्लिकाफलं स्यात्॥

५६१–कौटजं सुलघु स्वादु मृदु ग्राहि च शीतलम् ।
ज्वरहृद्रोगपित्तासृगुदावर्ताख्यशूलजित् ॥

कदलीफलम् ।

५६२–सहिंगुकाज्ये हि कृताधिवासं मोचाफलं सैन्धवसारशालि । एलामरीचप्रतिवर्धयोगान्निहन्ति मान्द्यं जठरानलस्य ॥

५६३–कादलयं मधुरं शीतं फलं विष्टम्भि पित्तजित् ।
स्निग्धं गुरुतरं दाहक्षतक्षयसमीरजित् ॥

राजमाषादिफलम् ।

५६४–राजमाषमकुष्ठादिफलं बीजविवर्जितम् ।
पक्वं घृतेऽथ पत्रं च सर्वोपस्करसंयुतम् ॥

५६५–राजमाषं सुहृद्यं च कफपित्तहरं परम् ।
आध्मानवातकृद्ग्राहि तत्पत्रं तद्गुणावहम् ॥

एरण्डजफलम् ।

५६६–तक्रे संस्वेदितं पूर्वं बालमैरण्डजं फलम् ।
पाचितं तिलजे तैले सर्वोपस्करसंयुतम् ॥
ऐरण्डं वातजिद्बल्यं कषायं वातनाशनम् ।
आमवातहरं स्निग्धं रुच्यमुष्णं तु पाचकम् ॥

वास्तुकम् ।

५६७– कृतयवसविवेचम्लानवास्तूकशाकं
क्वथितमिलिततक्रं तैलहिंगुप्रसक्तम् ।
लवणमरिचयुक्तं स्पष्टराद्धं सफेनं
चपलयति रसज्ञां वीक्षणादेव पुंसाम् ॥

५६८–वास्तूकं पाचनं रुच्यं लघु शुक्रबलप्रदम् ।
सरं प्लीहार्शःपित्तासृक्कृमिदोषत्रयापहम् ॥

तण्डुली ।

५६९– आलोलितं नवीनकोमलतण्डुलीय-
मुद्धापितं सलिलकाञ्जिकमेलके च ।
पिण्डीकृतं लवणतैलविपाच्यमेत-
न्मन्दाग्निमङ्कुरयाति घृतहिंगुवासम् ॥

५७०–कतिपयकरमर्दकैरुपेतं नवदलकोमलतण्डुलीयशाकम् ।
तिलरसपरिपाकहिङ्गुसङ्गं लवणविपाचितमग्निमान्द्यमाथि ॥

५७१–तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित् ।
सृष्टमूत्रमलो रुच्यो दीपनो रक्तपित्तहा ॥

शतपुष्पा ।

५७२–एकैवाहं बहुरसा स्ववासेनैव वासिता ।
शतपुष्पा वदत्येतच्छत्रं दत्वा जिगीषया ॥
भर्जिता कटुतैलेन सिन्धुजेनावमर्दिता ।
शतपुष्पा हसत्येषा परवासव्यपेक्षकम् ॥
शतपुष्पा कटुः स्निग्धा तीक्ष्णोष्णा श्लेष्मवातहा ।
रुच्या नेत्ररुजं हन्ति बस्तिकर्मणि शस्यते ॥

मेथिका ।

५७३–स्ववासवासिता चाहं शतपुष्पा यदीरितम् ।
किं तया क्रियते भूत्या स्वेनैव स्वोपभोगिका ॥
मद्वासेनैव सकलं भोजनागारमङ्गणम् ।
वासितं मेथिकाऽऽचष्टे किं स्ववाससुवासिता ॥
मेथीशाकं पयसि विधृतं स्वेदितं पीडितं हि
प्राज्ये स्वाज्ये जरणसहिते मेलितं भर्जितं हि ।
कासोच्छ्वासं प्रसृतमधिकं कर्षितो जाठराग्नि-
र्येन प्राणं सुबहुगुणितं भक्ष भूयोऽपि भूयः ॥

५७४–मेथिका दीपनी हृद्या बद्धविट् कृमिशुक्रनुत् ।
रूक्षोष्णं तत्फलं कासानिलश्लेष्मवमीञ्जयेत् ॥

प्रपुन्नाटः ।

५७५–द्विपत्रजातं प्रपुन्नाटशाकं सुस्वेदितं पीडितगाढबाढम् सैसन्धवं राजिकया सुदध्ना विमर्थ सेव्यं क्वथितेऽथ पाच्यम्॥

५७६–प्रपुन्नाटो लघुः स्वादुर्वातश्लेष्महरः परः ।
तिक्तः कण्ड्वामयहरः कासकुष्ठकृमीञ्जयेत् ॥

लोणिका ।

५७७–शाकं लौणिकसंज्ञकं सुदलितं तप्ते घृते तापितं
हिंग्वार्द्रेण विमिश्रितं सलवणं तक्रेण संपाचितम् ।
नो वा स्वेद्यमिदं सुहिंगुसहिते तैले सुवाग्घारितं
खिन्नं तण्डुलसंयुतं सलवणं तक्रैर्विना पाचितम् ॥

५७८–लोणिकं गुरु शीतोष्णं रूक्षं विष्टम्भकृत्सरम् ।
दोषकृन्मधुरं पाके वातकृत्त्वम्लपित्तलम् ॥

चणकशाकम् ।

५७९–सुकृत्तं चाणकं शाकं तप्ततैले सुपाचितम् ।
सुतण्डुलालनयुतं हिङ्ग्वार्द्रकाविमिश्रितम् ॥
सशिखं चाणकं शाकमम्लतक्रेण स्वेदितम् ।
सहिंगुलवणे तैले भर्जितं नागरान्वितम् ॥ १३४ ॥

५८०– क्षाराम्लभावसहजाश्चणकप्रवालाः
समर्दिता मरिचसैन्धवशृङ्गवेरैः ।
संचूर्णिताः कटुकतैलयुतैः समस्तै-
र्मृष्टैः सुहिंगुजकणैः परिदत्तवासाः ॥

५८१–चाणकं शाकमुद्दिष्टं दुर्जरं कफवातकृत् ।
विष्टम्भजननं हृद्यं विशेषात्पुष्पवर्जितम् ॥

पालिक्यकम् ।

५८२–पालिक्यं दलितं शाकं तिलतैले विपाचितम् ।
अम्लद्रव्यसमाकीर्णं हिंगुसैन्धवसंयुतम् ॥
पालिक्या वातला शीता भेदिनी श्लेष्मला गुरुः ।
विष्टम्भजननी चैव नेत्ररोगकरी हि सा ॥

चुक्रकम् ।

५८३–चुक्रकं सुतिलतैलपाचितं सूपधूपमिलितं ससैन्धवम् ।

वृन्तकेन सहितं सुसौख्यदं भामिनीव मिलिता सुकामिनम् ॥

५८४-चुक्रं चुक्रतरं स्वादु वातघ्नं पित्तकृत्परम् ।
रुच्यं लघुतरं पाके सवृन्ताकं सुरोचकम् ॥

**कौसुम्भम् ।**

५८५-कौसुम्भं कोमलं शाकं कासमर्दविमार्दितम् ।
पाचितं तप्तके तैले मणिमन्थविमाथितम् ॥

५८६-कौसुम्भं कासजिच्छाकं रूक्षमुष्णं च पित्तलम् ।
सुस्वादु मधुरं पाके लघु रुच्यं सरं हि तत् ॥

**कुटजपुष्पम् ।**

५८७-कांजिकेन मधुरेण मुहूर्तं स्वेदितः कुटजपुष्पगुलुच्छः ।
पंचितः सलवणस्तिलतैले याति हिंगुसुरभी रुचिरत्वम् ॥

५८८-कौटजं कुसुमं ग्राही सुस्वादु मृदुशीतलम् ।
लघु हृद्रोगपित्तास्रगुदावर्तज्वरं जयेत् ॥

**शोभाञ्जनम् ।**

५८९-शिग्रुमूलफलपुष्पमिश्रितं तैलपक्वमुदकेऽथ साधितम्
क्षिप्तसैन्धवरजः सहिंगुना जायते सुरभि दीपनं वसोः

५९०-शिग्रुकः कटुतीक्ष्णोष्णः स्नायुशोथसमीरनित् ।
कृमिजित्कफदोषघ्नो विद्रधिप्लीहगुल्महा ॥

**कञ्चनारः ।**

५९१-काञ्चनारः कषायश्च उष्णः शीतहरो लघुः ।
रूक्षः पित्तास्रप्रदरग्रहणीक्षयकासनुत् ॥

**अगस्तिकुसुमम् ।**

५९२-आगस्त्यं कुसुमं तथा मृदुफलं केनाहृतं जन्तुना
धन्यं चाद्य दिनं यदद्य मिलितं वस्त्रास्यमालोकितम्
स्विन्नं तक्रयुतं सुहिंगुललितं तप्ते घृते पाचितं
भोक्त्रा सत्वरभाषितं प्रियतमे नाद्यापि संपाचितम् ॥

५९३-आगस्त्यं पित्तकफजिच्चातुर्थकहरं हिमम् ।
तत्फलं पीनसश्लेष्मवातनक्तान्ध्यनाशनम् ॥

**कोशातकीपल्लवः ।**

५९४- कोशातकीवल्लिभवाग्रपल्लवाः
सुपीडितास्तक्रयुताः सुसंभृताः ।
संभर्जिताः सैन्धवहिंगुनाऽधिके
तैलेऽतिरुच्या तनुपुष्टिदायकाः ॥

**आम्रपल्लवाः ।**

५९५-स्विन्ना निष्पीडिताः कामं कोकिलाहारपल्लवाः ।
घृतसिन्धूत्थसंसिद्धा रुच्या रामठवासिताः ॥

५९६-सर्पिषा खण्डयुक्तेन तलयेदाम्रपल्लवम् ।
लवणार्द्रकसंयुक्तमरुचौ रुचिकारकम् ॥

**निम्बपल्लवाः ।**

५९७- निम्बस्य कोमलतराणि दलानि भृष्ट्वा
स्वाज्ये क्षिपेत्तदनु सैन्धवयुक्ततक्रे ।
शालेयतण्डुलकणैः सह रामठेन
वाघारितं ददाति रोचनमेव लक्ष्मम् ॥

५९८-निम्बः शीतो लघुर्ग्राही दाहजिद्वह्निकारकः ।
व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् ॥

**कदलीदण्डः ।**

५९९-वृन्तच्छिन्नः सलिलविधृतः कृत्ततन्तुः प्रयत्नात् ।
कम्बुभ्रान्त्या जलविरहितः क्षारजम्बीरमृष्टः ।
मध्ये मध्ये तनुसकलितश्चार्द्रकेनातिपूर्णः
स्वादुस्तूर्णं भवति सुतरां गर्भदण्डः कदल्याः ॥

६००-योनिदोषहरो दण्डः कादलोऽसृग्दरं जयेत् ।
रक्तपित्तहरः शीतः सुरुच्यो बलवर्धनः ॥

**सार्षपः ।**

६०१-सार्षपः कोमलो दण्डः स्विन्नस्तक्रेण पीडितः ।
तप्ततैले सुहिंग्वाढ्ये भर्जितः सैन्धवान्वितः ॥
सार्षपी कन्दली सूक्ष्मा खण्डिता स्निग्धभाजने ।
स्थापिता मण्डसहिता त्वथवा तण्डुलोदकैः ॥
सप्तरात्रात्परं चुक्रतुल्यं सम्यक्प्रजायते ।
तत एव समाकृष्य तलयेद्वा प्रलेहयेत् ॥
काप्यकेति समाख्याता सूदधर्मोपजीवकैः ।
सार्षपं कटुतीक्ष्णोष्णं वातश्लेष्मव्रणापहम् ॥
कृमिकण्डूहरं दद्रुकुष्ठघ्नं रुचिकारकम् ।

**मूलकम् ।**

६०२-सपत्रः स्वेदितस्तक्रे दण्डो मूलस्य सूक्ष्मकः ।
घृते पक्वः सुहिङ्ग्वाढ्ये लवणेन विमिश्रितः ॥
सुरुच्यं मूलकं शाकं विष्टम्भि रुचिकारकम् ।
वातपित्तहरं श्रेष्ठं तत्फलं तद्गुणावहम् ॥

**कदलीकन्दः ।**

६०३-कन्दः कदल्या दलितो नितान्तं संस्वेदितो हिङ्गुघृतेन राद्धः । उध्दूलितः सैन्धवरेणुनाऽयं मरीचसंपार्कित एव रुच्यः ॥१९३

६०४-कदल्याः शीतलो बल्यः कन्दः केश्योऽम्लपित्तजित् ।
वह्निकृद्दाहहारी च सुस्वादू रुचिकारकः ॥

**सूरणम् ।**

६०५-अम्लीकापत्रचूर्णेन मिश्रितेन जलेन वा ।
काञ्जिकेनाथवा क्वाथ्यः सूरणो रौद्रतां त्यजेत् ॥

६०६-दिग्धो वाल्हीकतोये रजनिरसयुतैर्गोचरे सूर्यमेरोः संक्षिप्योत्क्षिप्य पात्रे तिलरससहिते साधितः सैन्धवेन जातः स्निग्धः सुगन्धिर्मरिचपरिचितः पाकरागं दधानो दुर्नामघ्नस्तु कन्दः सपदि मदयते प्राशितो जाठराग्निम् ॥

६०७-कन्दस्तूदरमृत्तिकाभिरहितः संवेष्टितोऽसौ मृदा
कारीषानलपाचितस्त्वगयुतः क्षोदीकृतो मिश्रितः ।
शुद्धः सैन्धवतैलजीरकजरज्जम्बीरनीरार्द्रकै-
र्जाड्यं पाण्डुरतां तथैव हरते वह्नेरयं पूरणः ॥

६०८-सूरणं कटुतैलेन तलित्वाऽम्लरसैः सह ।
शोषयेद्देसवाराढ्यं यथा भोक्तुरभीप्सितम् ॥

६०९-मृल्लिप्तं सौरणं कन्दं पक्त्वाऽग्नौ पुटपाकवत् ।
अद्यात्सतैललवणं रामठेनानुवासितम् ॥

६१०-सूरणोऽग्निकरो रूक्षः कासार्शःकर्तनो लघु ।
सन्धानयोगसंप्राप्तस्तदाऽतिगुणकारकः ॥

मृणालम् ।

६११- बिसाङ्कुरा भोक्तुयशोङ्कुरोत्थिताः
समाहृताः कृष्यजलादगाधतः ।
संकृत्तखण्डास्तनुतारकप्रभाः
प्रलेहयोगैः सुधिया विपाचिताः ॥

६१२--मृणालं दुर्जरं शीतं पित्तघ्नं कफवातकृत् ।
कषायं मधुरं स्वादु विष्टम्भाध्मानकारकम् ॥

शाकोपसंहारः ।

६१३-संख्याऽनन्ता कति कति न ते शाकपाकप्रभेदाः
किं तैरुक्तैरहितविरसैरल्पसत्त्वप्रदुष्टैः ।
मूलं पत्रं कुसुममथवा पल्लवं वा फलं वा
भक्त्या राद्धं भवति चतुरैः सर्वमेवातिरुच्यम्

६१४-अतिजीर्णमकालोत्थं रूक्षसिद्धमभूमिजम् ।
जरठं कोमलं चाति शीतव्यालादिदूषितम् ॥
तत्सर्वं वर्जनीयं हि भिषजा हितकारिणा ।
सुशुष्कं सकलं शाकं नाश्नीयान्मूलकैर्विना ॥
सर्वं शाकमचक्षुष्यमजिघ्रेयमपौरुषम् ।
विना पटोलवास्तूककाकमाचीपुनर्नवाः ॥

## क्षुद्बोधकवस्तूनि (२)

—०—

६१५- तक्रं चिरं क्वथितमर्पितशृङ्गवेरं
बाह्लीकसैन्धवरजोमरिचाल्पचूर्णम् ।
एलाभवेन रजसा सुरभीकृतं त-
तूर्णं प्रदीपयाति शान्ततनूनपादम् ॥

६१६-अजाजीधान्याकैर्मरिचरजनीमेथिककणैः
समं पिष्टं तक्रे क्वथितममलैः सारकफलैः ।
युतं सिन्धूत्थेन ज्वलितनवबाह्लीकसुरभिः
प्रलेहः सन्देहं जनयति सुधायामतिरसः ॥

६१७-प्रलेहः पाचनो हृद्यो रुच्यो वह्निप्रदो लघुः ।
कफानिलविबन्धघ्नः किञ्चित्पित्तप्रकोपकः ॥

नारङ्गक्षुद्बोधकम् ।

६१८- नारङ्गकेसरमपाकृतबीजपुञ्जं
योऽश्नाति खण्डमरिचोद्भवचूर्णमिश्रम् ।
अन्नं गले विशति तस्य नरस्य तूर्णं
संगृह्यमाण इव राहुजवेन चन्द्रः ॥

६१९-नारङ्गं तु वरं रुच्यं सुगन्धमतिचारुणम् ।
वातघ्नं कफदं किञ्चित्पित्तघ्नं विशदं स्मृतम् ॥

जम्बीरभवम् ।

६२०-विभावितं शुभ्रसितामरीचै-
रेलारजोभावनयाऽतिरुच्यम् ।
जीवातवे तस्य नरस्य भोक्तु-
र्जम्बीरजं केसरमाद्रियन्ति ॥

६२१-जम्बीरः पाचनो हृद्यः कफवातहरः परः ।
सुरभिर्दीपनो रुच्यो मुखवैशद्यकारकः ॥

बीजपूरकम् ।

६२२-सैन्धवार्द्रकसंयुक्तं बीजपूरकमत्ति यः ।
शाकिनीभिरिवाकृष्टं विशत्युदरमोदनम् ॥

६२३-केसरं मातुलुङ्गस्य लघु श्लेष्मानिलापहम् ।
रोचनं दीपनं हृद्यं गुल्मशूलार्शसां जयेत् ॥

बीजपूरकषड्ऋतुभक्षणम् ।

६२४-सिन्धूत्थेन घनागमे च सितया काले शरत्सातपे
हेमन्ते लवणार्द्रहिङ्गुमरिचैः सिद्धार्थतैलान्वितैः ।
एतैस्तैः शिशिरे मधावपि तथा ग्रीष्मे गुडेनान्यथा
सर्वान् दोषचयान् करोति नितरां द्राग्बीजपूरः सदा ।

तिलकल्कसंस्कारः ।

६२५-तिलकल्कं सनिम्बूकसैन्धवार्द्रकमत्ति यः ।
तस्यामितम्पचः पुंसो हेमन्तेऽग्निः प्रजायते ॥

६२६-तिलनिम्बादिसंयुक्तः कल्को रुच्यो बलप्रदः ।
वह्निसंजननः प्रोक्तो विशेषेणानिलापहः ॥

सट्टकम् ।

६२७-लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितम् ।
दाडिमीबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् ॥
सट्टकं तु प्रमोदाख्यं नलादिभिरुदाहृतम् ।
हृद्यं सुगन्धि मधुरं स्निग्धं वातहरं लघु ॥
पित्तघ्नं तृप्तिदं बल्यं सुरुच्यं सट्टकं स्मृतम् ।

विष्यन्दनः ।

६२८-दधिक्षीरे समे पक्त्वा त्वर्धभागावशेषिते ॥
अष्टमांशान् क्षिपेत्तत्र तन्दुलान्निस्त्वचांस्तिलान् ।
प्रियालपनसाब्जानां मज्जां मात्रासमां क्षिपेत् ॥
क्षीरादर्धं घृतं चैव शर्करां च तथा न्यसेत् ।
सिद्धे त्रिकटुकोपेतः कर्पूरेणाधिवासितः ॥
एष विष्यन्दनो नाम देवलोकेऽपि दुर्लभः ।

६२९-यस्मिन् पक्वेऽपि हि घृतं स्यन्दते सर्वतोमुखम् ॥
तस्मात्सूपविधानज्ञैर्विष्यन्दन इति स्मृतः ।

६३०-विष्यन्दो बृंहणो हृद्यः पित्तानिलहरो गुरुः ॥
रुच्यो बहुतरं स्वादुर्बलशुक्रकरो हि सः ॥

आम्रपल्लवमुकुलप्रकारौ ।

६३१- आम्रातकस्य नवताम्ररुचः प्रवालाः
खण्डीकृता लवणमिश्रितपिण्डिताश्च ।
बाह्लीकधूपनजुषो घृतदुग्धसिद्धा ।
सन्दीपयन्ति पवनस्य सखायमेते ॥

६३२-मुकुलः सहकारशाखिनः शतखण्डीकृतसैन्धवान्वितः।
दधिमन्थमरीचसंस्कृताश्चिरजामरुचिं छिनत्ति हि ॥

६३३-कफपित्तहरौ हृद्यौ मुखवैरस्यनाशनौ ।
वह्निसञ्जननौ रुच्यौ चूतजौ पुष्पपल्लवौ

मृणालक्षुद्बोधकम् ।

६३४- बिसाङ्कुराश्चन्द्रकलानुकारिणो
विभाविताः सैन्धवनिम्बुकाभ्याम् ।
विकीर्य खण्डीकृतशृङ्गवेर-
जलेऽपि वह्निं लघु दीपयन्ति ॥

६३५-मृणालं शीतलं हृद्यं कषायं कफनाशनम् ।
रक्तपित्तहरं स्वादु दुर्जरं दाहनाशनम् ॥

शिग्रुमूलम् ।

६३६-धौतं कुञ्जरदन्तदीप्तिसदृशं सिन्धूत्थतैलासुरी-
पीताभिः क्रमितोत्तरोत्तररसं मूलं नवं शिग्रुजम् ।
तस्याहो वदनान्तरे निविशते श्रीचन्द्रचूडप्रिया-

पादाम्भोरुहरेणुराजितशिरा यः पूर्वकाले पुमान् ।

६३७-शिग्रुमूलं तु वातघ्नं श्रेष्ठमर्शोविनाशनम् ।
शमनं स्नायुरोगस्य पित्तकृत्कफनाशनम् ॥

आमलकफलम् ।

६३८-स्निग्धं धात्रीफलं यज्ज्वलदनल-
शिखासन्निभं स्निग्धपात्रे
क्षिप्तं प्रभ्रष्टहिङ्गूकणरजनिरजस्तैलसिन्धूत्थयोघैः ।
संश्लिष्टं जातपाकं कतिपयदिवसैरुल्लसत्सौरभाढ्यं
तस्य स्वादानुवादं कथितुमपि वरो नेश्वरः कस्तदन्यः

६३९-हन्ति पित्तं तु माधुर्यात् कफं तिक्तकषायतः ।
वायुमम्लप्रभावत्वाद्धात्री दोषत्रयापहा ॥

## पानकानि ( ३ )

— ० —

अपकाम्रफलपानकम् ।

६४०-आम्रमामं परिस्विन्नं मर्दितं मुष्टिना दृढम् ।
पयसाऽर्धयुते तोये शर्करामरिचान्विते ॥
अपकाम्ररसोद्भूतं पानकं वातनाशनम् ।
कफपित्तकरं किञ्चित् प्रत्यहं यदि सेवितम् ॥

सुपकाम्रफलपानकम् ।

६४१-सुपक्वमाम्रस्य फलं समुष्टिना
संमर्दितं शर्करया समन्वितम् ।
एलालवङ्गार्द्रकवासवासितं
वर्णान्वितं कस्य न रोचकप्रदम् ॥

६४२-पानकं त्वाम्रसम्भूतं स्वाद्वम्लं गुरु पित्तजित् ।
सुहृद्यं श्लेष्मकृद्बल्यं वर्ण्यं वृष्यं रुचिप्रदम् ॥

अम्लिकाफलपानकम् ।

६४३-आम्लिकायाः फलं पक्वं मर्दितं वारिणा दृढम् ।
शर्करामरिचोन्मिश्रं लवङ्गेनाधिवासितम् ॥
चाश्नेयं शर्करायुक्तं कर्पूरोदकमर्दितम् ।
फलमार्द्रकसंयुक्तं प्राहुस्तत्पानकान्तरम् ॥

६४४-अम्लिकाफलसम्भूतं पानकं वातनाशनम् ।
कफपित्तकरं किञ्चित्सुरुच्यं वह्निबोधकम् ॥

जम्बूफलपानकम् ।

६४५-जम्बूफलं त्वास्थिविवर्जितं हि
सुमर्दितं शर्करयाऽम्बुनाऽलम् ॥
सुवासितं बलिजभृङ्गपत्रै
रुचिं विधत्ते विरुचौ जनानाम् ॥
जम्बूफलभवं रुच्यं पानकं कफनाशनम् ।
कषायं वातकृत्स्तोकं स्वाद्वम्लं ग्राहिकं वरम् ॥

बीजपूरपानकम् ।

६४६-मातुलुङ्गरसे योज्यं त्रिगुणं शार्करं जलम् ।
कर्पूरमरिचोन्मिश्रं पानकं स्यादिदं वरम् ॥

६४७-मातुलुङ्गभवं पानं शूलाजीर्णविनाशनम् ।
श्वासकासारुचौ वातविड्बन्धेषु च पूजितम् ॥

हेमकिरणपानकम् ।

६४८-शर्करा नालिकेरं च बीजपूररसप्लुतम् ।
सम्भूतं सवेहेमकिरणं नाम पानकम् ॥

६४९-पानकं हेमकिरणं रुच्यं वृष्यं बलप्रदम् ।
सुस्निग्धं वातहृच्छुभ्रं किञ्चित्कफकरं गुरु ॥

निम्बूफलपानकम् ।

६५०-भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम् ।
लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥

६५१-निम्बूफलभवं पानमत्यम्लं वातनाशनम् ।
हृद्यं रुचिकरं भव्यं सर्वाहारस्य पाचकम् ॥

कारमर्दम् ।

६५२-लवङ्गार्द्रकसंयुक्तं सुपिष्टं वारिणा युतम् ।
कारमर्दं करैर्मर्द्यं सप्तभागसितान्वितम् ॥

६५३-वातहृद्रुचिदं बल्यं हृद्यमम्लतरं स्मृतम् ।
रक्तपित्तकरं चोक्तमकण्ठ्यं कारमर्दकम् ॥

नारङ्गफलपानकम् ।

६५४- सुपक्वनारङ्गफलं सुपीडितं
संयोजितं शर्करयाऽतिशुभ्रया ।
सहार्द्रकं चेन्दुकणेन वासितं
महीतले केन न संस्तुतं क्षणम् ॥

६५५-नारङ्गफलसम्भूतं पानकं वातनाशनम् ।
मधुरं विशदं रुच्यं सुस्निग्धं पित्तहृद्गुरम् ॥

जम्बीरपानकम् ।

६५६-एकं पाकविशेषसौरभरजं जम्बीरनीरांशकं
ग्रावग्रन्थिकदर्थितक्षितिधरस्रोतोजलांशाष्टकम् ।
सप्तांशैर्मिलितासिताविलुलितं कर्पूरचूर्णान्वितं
ह्येतत्पानकमाधिहृद्रुचिकरं सम्यक्प्रदिष्टं बुधैः ॥

६५७-पानं जम्बीरसम्भूतं तृष्णाशूलकफापहम् ।
वातघ्नं विशदं प्रोक्तं पित्तकृद्रुचिकारकम् ।

बदरफलपानकम् ।

६५८-सुस्विन्नं बादरं पक्वं फलं शर्करयाऽन्वितम ।
जलमिश्रं पटे पूतं चातुर्जातकसंयुतम् ॥

६५९-पानकं बदरोद्भूतं पित्तघ्नं मधुरं सरम् ।
स्निग्धं रुचिकरं भव्यं छर्दिदोषविनाशनम् ॥

चारोद्भवम् ।

६६०-चारवृक्षसुफलं सशर्करं मर्दितं शिशिरवारिणा दृढम् ।
एलयाऽऽर्द्रकजलेन सुवासं
भक्तसिक्थमिलितं कृतहासम् ॥

६६१-चारस्य फलजं पानं गुरु वृष्यं रुचिप्रदम् ।
कफपित्तहरं श्रेष्ठं हृद्यं मधुरपाकि च ॥

६६२-परुषाजीरचुक्राम्लद्राक्षादाडिमजं तथा ।
एकैकसम्भवं भिन्नं पानकं क्रियते बुधैः ॥

६६३-एवमम्लस्य पुष्पस्य फलस्याम्लस्य वा तथा ।
शर्करामरिचोन्मिश्रो रसः स्यात्पानकं वरम् ॥

६६४-एवं हि पानकं कार्यं सुधिया सुष्ठु यत्कृतम् ।
गुणा द्रव्यानुसारेण ज्ञातव्याः पानकेषु च ॥

तक्रम् ।

६६५-शशिकुन्दसमुज्ज्वलशङ्खनिभं
युवताकेरानामतानमथितम् ।

घृतसैन्धवहिङ्गुयुतं मधुरं
पिब तक्रमहो नृप रोगहरम् ॥

६६६–गव्यदध्नोऽष्टतोयांशः कृतं तक्रंससैन्धवम् ।
भृष्टजीरयुतं चाथ दग्धहिङ्गुरजोन्वितम् ॥

६६७–तक्रं वातहरं रुच्यं शूलाध्मानार्शसां हितम् ।
अग्निसन्धनं श्रेष्ठं कफपित्तनिबर्हणम् ॥

## गौरीतक्रम् ।

६६८–विश्वामरीचलवणजीरनारङ्गजत्वचाम् ।
चूर्णान्वितं च तत्तक्रं धूपयेद्धृतहिङ्गुना ॥

६६९–पार्वत्या विहितं तक्रं सर्वदोषनिबर्हणम् ।
सुरुच्यं पाचनं दिव्यं महेशस्य महाप्रियम् ॥

६७०–वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् ।
पिबेत्तक्रं कफे चापि व्योषक्षारसमन्वितम् ॥

६७१–अमरत्वं यथा स्वर्गे देवानाममृताद्भवेत् ।
तक्राद्भूमौ तथा नृणाममरत्वं हि जायते ॥

६७२–तस्मात्तक्रं नरैः सेव्यं सर्वदोषनिबर्हणम् ।
क्षयं मूर्च्छां भ्रमं दाहं रक्तपित्तामयं विना ॥

६७३–पिष्टान्ने सलिलं प्रियालफलजे पथ्या हिता मांसजे
क्षीरे गव्यभवे च तक्रमुचितं मोचाफलं सर्पिषि ।
नारङ्गे गुडभक्षणं च कथितं मत्स्योद्भवे काञ्जिकं
गोधूमेऽपि च कर्कटी हिततरा शेषाणि बुद्ध्या भजेत् ।

## मांसरन्धनविधिः ( ४ )

— ० —

६७४–तलितं भृष्टकं स्विन्नं शुष्कं बहुरसं स्मृतम् ।
तान्दूरं वण्टितं चैवं शूल्यं च पुटपाकजम् ॥

६७५–तलितं त्रिविधं प्रोक्तं भृष्टकं द्विविधं स्मृतम् ।
सुस्विन्नमस्विगलितं शुष्कं तद्रसवर्जितम् ॥

६७६–सरसं रसवज्ज्ञेयं तान्दूरं वह्निपाचितम् ।
वण्टितं तु शिलापिष्टं तत्पाको बहुधा स्मृतः ॥

६७७–शूलेन पक्वं मांसं यत्तज्ज्ञेयं शूलपाचितम् ।
गर्तयन्त्रेण यत्पक्वं तज्ज्ञेयं पुटपाकजम् ॥

६७८–एवं बहुविधः पाकः सूपकारधिया कृतः ।
यस्य जन्तोर्हि यन्मांसं तन्मांसं तद्गुणावहम् ॥
विशेषोऽत्र यदुद्दिष्टः स ज्ञेयः सुष्टुपाकतः ।

६७९–एवं बहुविधं मांसं प्रत्यङ्गं च पृथक्कृतम् ॥
स्थूलातिस्थूलविहितं सूक्ष्मात्सूक्ष्मतरं च तत् ।
खण्डशः कलितं मांसं धान्यहिङ्ग्वम्बुना क्रमात् ॥
क्षालयित्वा पुनर्हिङ्गुतोयमिश्रं पचेत्ततः ।

६८०–हिङ्ग्वार्द्रजीरमरिचैर्युक्तं वेसवारकम् ॥
तच्च तैले पचेत्पूर्वमाज्ये वा सात्म्ययोगतः ।

६८१–अर्धस्विन्ने क्षिपेत्तक्रमथवा दाडिमीरसम् ॥
सिद्धे पाके च दातव्यं चूर्णमुद्धूलनस्य यत् ।
मांसं तैलेन यत्सिद्धं तन्मांसं गुरु पित्तलम् ॥
वीर्योष्णं रुचिदं वृष्यं वातघ्नं पुष्टिकारकम् ।

६८२–मांसमाज्येन यत्सिद्धं लघु रुच्यमपित्तलम् ॥
अनुष्णवीर्यं बल्दं हृद्यं दृष्टिप्रसादनम् ।

## सुस्विन्नमांसरन्धनम् ।

६८३–सवेसवारपानीये हिङ्गुधान्यजलेऽथवा ॥
केवले वा जले स्वेद्यं मांसं सुस्विन्नको विधिः ।

६८४–पश्चाद्धाघारितं तप्ते स्नेहे सम्यक्कलिते ॥
छमत्कारस्तथा कार्यो रुचिः स्यात्प्रतिवेशिनाम् ।

६८५–तत उद्धूलनं देयं शुद्धमांसमिति स्मृतम् ॥
सुस्विन्नं कोमलं हृद्यं बल्यं वृष्यं रुचिप्रदम् ।
त्रिदोषशमनं चेति श्रेष्ठमग्निकरं परम् ॥

## कोमलसुगन्धम् ।

६८६–कुठेरपृथुकर्चूरगुञ्जापामार्गजस्तथा ।
कुठेरकादिजक्षारवारिणा चाशुकारिणा ॥
पाचितं धूपितं मांसं सुगन्धमतिकोमलम् ।
सुगन्धं रुचिकृन्मांसं बल्यं वृष्यं रुजापहम् ।
अग्निसंजननं श्रेष्ठं ग्राम्यं वा जाङ्गलोद्भवम् ॥

## आजमांसम् ।

६८७–तिलजतैलसुपाकपाचितं कासमर्दसुरसे विमर्दितम् ।
सूपधूपभवधूमधूपितं मणिमन्थमथितं त्वजापलम् ॥

६८८–यादृशा धावतो नृणां अजानामपि तादृशाः ।
अतो धातुविवृध्यर्थमाजं मांसं प्रशस्यते ॥

## बर्करः ।

६८९–सहिङ्गुनाऽऽज्येन युतं सुपक्वमजासुतस्यामिषमल्पकस्य । एलालवङ्गोषणयोगयोगात् करोति पुष्टिं जठरानलस्य ॥

६९०–अजासुतस्य बालस्य मांसं गुरुतरं स्मृतम् ।
हृद्यं मृदुतरं श्रेष्ठं सुस्वादु बलदं भृशम् ॥

## बर्करी ।

६९१–सिद्धार्थसंभवे तैले घृते चोपस्करान्विते ।
साधितं त्वप्रसूतायाः पलमाजं गुणोत्तमम् ॥

६९२–अप्रसूताजसंभूतं मांसं पीनसनाशनम् ।
शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् ॥

× × × ×

६९३–अजासुतस्य पीनस्य यौवनस्थस्य साधितम् ।
घृतरामठसिन्धूत्थोपस्करै रसवत्पलम् ॥

६९४–वातपित्तहरं बल्यं सुस्वादु रुचिकारकम् ।
हृद्यं पीनसकासार्शोदोषघ्नं पुष्टिकृद्वरम् ॥

× × × ×

६९५–शूलनिष्काशिताण्डस्य मांसं कृत्तमनस्य च ।
रन्धितं बहुधा सूदैराखुरादा च मस्तकम् ॥

६९६–तन्मांसं मांसदं बल्यं रुच्यं पित्तानिलापहम् ।
सुस्वादु मधुरं पाके किञ्चित्कफकरं सरम् ॥

## मेषमांसम् ।

६९७–मेषस्य मांसं बहुधा निकृत्तं सुपाचितं रामठयुक्ततैले
सुयोजितं वह्निजसैन्धवाभ्यां रुचिं विधत्ते भुवि सर्वकाले

६९८–मेषमांसं गुरु स्निग्धं बल्यं पित्तकफप्रदम् ।
मेदःपुच्छामिषं वृष्यं कफपित्तकरं गुरु ॥

मृगी।

६९९-मृगमातृपलं सुकोमलं शतखण्डीकृतमाज्यभृष्टकम्। दधिसैन्धवहिङ्गुकोषणैररुचिं शीघ्रमपोहति शृतम्

७००-मृगस्य जननी शीता असृक्पित्तविनाशिनी। सन्निपातज्वरश्वासहरा मधुरपाकिनी ॥ ९४ ॥

मृगमांसम्।

७०१-मांसं मार्गं बहुशकलितं स्विन्नमीषच्च तोये तप्ते स्नेहे जरणसहिते पाचितं शब्दमुच्चैः। सार्द्रं सान्द्रं लवणसहितं दाडिमेनातिचुक्रं खादन् खादन् कलयति शिरश्चन्द्रचूडोऽपि नूनम्

७०२-एणमांसं हिमं ग्राहि रुच्यं दोषत्रयापहम्। षड्रसं बलदं पथ्यं लघु हृद्यं ज्वरापहम् ॥ ९६ ॥

शशकः।

७०३-निरस्थिकृत्तं पलमेव शाशं सहिङ्गुनाऽऽज्येन कृतं सुपाकम्। ससैन्धवं धूलनदत्तवासं करोति कोष्ठाग्निमति प्रकाशम् ॥ ९९ ॥

७०४-शशः शीतो लघुः स्वादुर्ग्राही पथ्योऽग्निदीपनः। सन्निपातज्वरश्वासरक्तपित्तकफापहः

साम्बरमांसम्।

७०५-मांसं साम्बरसंभूतं पाचितं बहुधा घृते। वेसवारोषणाकीर्णे हिङ्गुसैन्धवसंभृते ॥ बलपुष्टिकरं रुच्यं विष्टम्भि गुरु पाचनम्। साम्बरं बलदं शीतं सुस्वादु पललं मतम् ॥ रसे पाके च मधुरं रक्तपित्तनिबर्हणम् ॥

चित्तलः।

७०६-आंससततिलोद्भवतैलविपकं लवणयुतं नवहिङ्गुरसाढ्यम् ॥ त्रिकटुकयुक्तनिशार्द्रकमिश्रं बहुगुणचित्तलमांसमनेष्यम्॥

७०७-विचित्रशम्बरो शीतो गुरुस्निग्धो कफावहो। रसे पाके च मधुरो रक्तपित्तविनाशनो ॥

गवयः।

७०८-तैले संपाचितं तप्ते हिङ्गुसैन्धवसंयुते। मांसं गवयसंभूतं सुस्विन्नं भूरिवारिणा ॥

७०९-गवयो मधुरो वृष्यः स्निग्धोऽग्नः कफपित्तलः। गुरुर्विदाही विष्टम्भकारको विरसः सदा ॥

वराहः

७१०-वराहस्य तनुं तप्ततोयैः प्रक्षालितां मुहुः। तृणाग्निनाऽथवा दग्धां किञ्चित्तोयेन सेचिताम्॥ शस्त्रेण दंशयेत्तत्र यथा निर्लोमता भवेत्।

७११-ततस्तीक्ष्णशस्त्रेण पाटयित्वा यथोचितम् ॥ गृह्णीयादामिषं तस्य पृथगङ्गविभागतः। रन्धयेद्बहुधा भ्रष्टं प्रलेहतलनादिकम् ॥

७१२-स्वेदनं बृंहणं वृष्यं शीतलं तर्पणं गुरु। श्रमानिलहरं स्निग्धं वाराहं बलवर्धनम् ॥

पक्षिमांसप्रकारः (५)

—०—

७१३-स्वक्पक्षरहितं मांसं स्विन्नं तक्रेण वा जले। अथवा पुटपाकेन स्वेदितं वाऽथ दार्विके ॥

७१४-शलाकास्थं पचेदग्नौ दधिसैन्धवहिङ्गुभिः। संस्कृतं मरिचैलाभिरेतत्पक्वतमं स्मृतम् ॥

७१५-अथवा स्वेदितं मांसं पाचितं वेसवारिकम्। घृते द्रवे वा विरले प्रलेहविधिवत्पचेत् ॥

महाबलपाकः।

७१६-कृत्वा पक्षविहिनं तद्बीजपूरार्द्रसैन्धवैः। लवङ्गैलायुतं पेष्यं लोष्टीकृत्य सुखेदितम् ॥ ततः कृत्तं शलाकास्थं भृष्टकं स्यान्महाबलम्।

बलभूतिपाकः।

७१७-त्वक्पक्षरहितं स्विन्नं गुम्फितं चान्तरान्तरम् ॥ शलाकायां च संपाच्यं भृष्टोपस्करसंयुतम्।

७१८-शूल्यं सर्वोत्तमं मांसं लघु रुच्यमपित्तलम् ॥ कफवातहरं श्रेष्ठं सर्वपाकोत्तमोत्तमम्।

लावकः।

७१९-लावो हृद्यो हिमः स्निग्धो ग्राही वह्निप्रदीपनः। पांसुलः श्लेष्मलस्तेषामुष्णवीर्योऽनिलापहः ॥

७२०-गौरकः कफवातघ्नो रूक्षो वह्निप्रदः परम्। पौण्ड्रकः पित्तकृत्किञ्चिल्लघु श्लेष्मश्रमापहः ॥

७२१-दर्मरो रक्तपित्तघ्नो हृदामयहरो हि सः। शीतलो रुचिकृद्बल्यः पथ्यदः शीघ्रपाचनः ॥

कपोतः।

७२२-कपोतको गुरुः स्निग्धो रक्तपित्तानिलापहः। संग्राही शुक्रलः शीतः सुस्वादू रुचिकारकः।

मयूरः।

७२३-मायूरं पाचितं मांसं घृते स्वोपस्कारान्विते। ईषल्लवणसंयुक्तं मरिचैलासमन्वितम् ॥ मायूरमुष्णं काषायं कफानिलहरं गुरुः।

७२४-वर्षाकाले न तत्सेव्यं दुष्टकीटादिभक्षणात् ॥

मत्स्यमांसरन्धनम् (६)

—०—

७२५-मत्स्यखण्डानि संघृष्य क्षालयेत्प्रथमं जले। ततो वेसनतक्राभ्यां बहुशः क्षालयेत्पुनः ॥

गन्धनाशनम्।

७२६-हरिद्राशुण्ठिधान्याककटुतैलैर्विमर्दयेत्। प्रक्षाल्य हिङ्गुना लिम्पेद्गन्धस्तेनोपशाम्यति॥

मत्स्योत्तमरन्धनम्।

७२७-तप्ततैले क्षिपेद्धान्यं कासमर्दं सहिङ्गुकम्। भृष्टं मत्स्यं सलवणं तक्रं क्षिप्त्वा पुनः पचेत् ॥

७२८-अर्धपके क्षिपेदाम्रसिद्धचूर्णं सनागरम्। दग्धं हिङ्गु विनिक्षिप्य साधयेन्मत्स्यमुत्तमम् ॥

मत्स्यप्रलेहः।

७२९-मांसप्रलेहवत्कार्यः प्रलेहो मत्स्यसंभवः। आदौ तैले खरे पक्वं सर्वमन्यद्धि पूर्ववत् ॥

७३०-वर्णस्य करणे देयं पूर्वोक्तं द्रव्यकं हि यत्। उद्धूलनं सुगन्धाय दातव्यं पूर्वमीरितम् ॥

मत्स्यखण्डप्रलेहः।

७३१-सम्यक्प्रक्षालितं मत्स्यं वेसवारेण वेष्टितम्।

तप्ततैले क्षिपेत्खण्डं हिङ्गुसैन्धवमिश्रितम् ॥
प्रलेहविधिवत्साध्यो मत्स्यखण्डप्रलेहकः ।

### मत्स्यपिष्टिका ।

७३२–गतत्वक्कण्टको मत्स्यो वेसवारेण संयुतः ॥
शिलायां पेषितो भूयः प्रोच्यते मत्स्यपिष्टिका ।
तैले विपाचयेत्पश्चाच्चतुर्थांशाम्लसंयुतम् ॥
वेसवारेण च युतं शिलायां पेषयेत्पुनः ।
अनया पूर्ववत्कार्या मांसस्येव प्रकारकाः ॥
वटिका वटकाद्याश्च सूपकारधियोचिताः ।

### मत्स्यपूरणम् ।

७३३–तक्रेण स्विन्नं मत्स्यस्य खण्डं प्रक्षाल्य पेषयेत् ॥
बीजपूरार्द्रमरिचहिङ्गुसैन्धवजीरकैः ।
संयुक्तं कटुतैलाढ्ये घृते पक्त्वाऽथ चूर्णयेत् ॥

### मत्स्यपुटपाकः ।

७३४–गतत्वक्क्षालितं मत्स्यं कदलीपत्रवेष्टितम् ।
मृदा लिप्तं पुटे पक्वं संस्कृतं दाडिमादिना ॥
वरो मत्स्यः पुटे पक्वो जीरतण्डुललेपितः ।
तविकायां पुनः पक्त्वा संमिश्रो मरिचादिना ॥

### मरगलमत्स्यः ।

७३५–करालविधिना भृष्टं मुद्गपिष्टेन लेपितम् ।
बृहन्मत्स्योदरात्खण्डं रन्धयेत्तलनादिना ॥

### रोहितः ।

७३६–रोहितोदरखण्डाश्च कासमर्देन मर्दिताः ।
कटुतैलपरिभृष्टा हिङ्गुसैन्धवयोजिताः ॥
शकलं पिष्टसंभूतं रोहितं दधिमर्दितम् ।
वेसवारान्वितं पाच्यं प्रलेहविधिना भृशम् ॥

### रोहितगुणाः ।

७३७–रोहितस्योत्तमं देहं प्रलेहेनावलेहितम् ।
सोऽश्नातीह नरः पूर्वजन्मवैनायको ध्रुवम् ॥
रोहितः प्रवरो मत्स्यो नातिपित्तकरो गुरुः ।
७३८–वातहा पुष्टिदो हृद्यः स्निग्धः पथ्यो समीरिणाम् ।

### पालाशिमत्स्यः ।

७३९–पालाशिखण्डं तिलतैलयुक्तं विपाचितं सैन्धवकासमर्दैः
हिङ्ग्वार्द्रधात्रीफलचूर्णकीर्णं नवं नवं रोचकमातनोति
पालाशिर्बलदा वृष्या वातहा पित्तकृत्सरा ।
गुर्वी कफकरा चोष्णा मेदःशुक्रविवर्धिनी ॥

### पाठीनः ।

७४०–पाठीनः खण्डितः शल्कैर्वेसवारसमन्वितः ।
कटुतैले परिभृष्टो हिङ्गुतक्रेण योजितः ॥
पाठीनः कफकृद्बल्यो निद्रालुर्वातनाशनः ।
मांसाशी वातरक्तस्य कारकः शुक्रधारकः ॥

### मङ्गूरिका ।

७४१–मङ्गूरी मुण्डरहिता कटुतैले सुभर्जिता ।
मणिमन्थनिशायुक्ता हिङ्गुना धूपिता च सा ॥
७४२–मङ्गूरी वातहा पथ्या रुच्या वृष्या बलप्रदा ।
अग्निसञ्जननी हृद्या तद्वदुक्ता च भृङ्गिका ॥

### गुण्डी ।

७४३–पुच्छशीर्षेण रहिता कासमर्दविमर्दिता ।
हिङ्गुतैले च संतप्ता गुण्डीमत्स्यस्य खण्डकाः ॥
७४४–गुण्डी वातहरा बल्या वृष्या पथ्याऽग्निवर्धिनी ।
सुरुच्या शुक्रदात्यर्थं किञ्चित्कफकरा सरा ॥

### मत्स्यमण्डकम् ।

७४५–मत्स्यस्य पिष्टिकां कृत्वा पर्णस्थां मण्डलाकृतिम् ।
आधारेण समुत्स्विन्ना संयुक्ता धूलनेन तु ॥

### मत्स्येण्डरी ।

७४६–कासमर्दीयचूर्णेन मत्स्यपिष्टीं नियोजिताम् ।
भर्जितां कटुतैलेन कुर्यान्मत्स्येण्डरीं च सा ॥

### सूक्ष्ममत्स्याः ।

७४७–भर्जितास्तिलतैलेन सर्वसंभारसंभृताः ।
सूक्ष्ममत्स्याः स्वादुरसा दोषत्रयनिबर्हणाः
परं सूक्ष्मस्तु ये तेषु सर्वे ते पुंस्त्वनाशनाः ।
( भोजनकुतूहलम् )



# मन्वादिधर्मशास्त्रोक्तं स्वस्थवृत्तम् ।

## ( दिनचर्या । )

### अथ दिवसप्रथमभागकृत्यम् ।

**प्रातरुत्थानम् ।**

७४८–ब्राह्मे मुहूर्ते बुद्ध्येत धर्मार्थावनुचिन्तयेत् । §
कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ ( मनुः )

७४९–" मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥
हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ।
ऊर्ध्वबाहुर्विरोम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ।
न जातु कामान्न भयान्न लोभा-
द्धर्मं त्यजेज्जीवितस्यापि हेतोः
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥
इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति " ॥
( भारतसावित्री )

७५०–रोचनं चन्दनं गन्धान्मृदङ्गं दर्पणं मणिम्
गुरुमग्निं रविं पश्येन्नमस्येत्प्रातरेव हि ॥
पापिष्ठं दुर्भगं चान्धं नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम् ॥
( कात्यायनः )

**मूत्रपुरीषोत्सर्गविधिः ।**

७५१–ततः प्रातः समुत्थाय कुर्याद्विण्मूत्रमेव च ।
नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ( पराशरः )

७५२–न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च पर्वते ॥ ( मनुः )

७५३–पथि गोष्ठे नदीतीरे तडागे कूपसंनिधौ ।
तथा च वृक्षच्छायायां कान्तारे वन्हिसंनिधौ ॥
देवालये तथोद्याने कृष्टभूमौ चतुष्पथे ।
ब्राह्मणानां समीपे तु तथा गोगुरुयोषिताम् ॥
तुषाङ्गारकपालेषु जलमध्ये तथैव च ।
एवमादिषु देशेषु मलमूत्रं न कारयेत् ॥ (बृहन्नारदीये)

७५४–दशहस्तं परित्यज्य मूत्रं कुर्याज्जलाशयात् ।
शतहस्तं पुरीषं च तीर्थे नद्याश्चतुर्गुणम् ॥
उत्थाय पश्चिमे यामे तत आचम्य चोदकम् ।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः ।
कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥ (अङ्गिराः)

७५५–दिवा संध्यासु कर्णस्थब्रह्मसूत्र $ उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥
( याज्ञवल्क्यः )

७५६–कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे समाहितः ॥
( आंगिराः )

७५७–क्षपितर्पणचाण्डालभाषणे शववाहने
विण्मूत्रोत्सर्जने स्त्रीणां रतिसंगे निर्वीतयः ॥ (अत्रिः)

७५८–गृहीत्वा जलपात्रं तु विण्मूत्रं कुरुते यदि ।
तज्जलं मूत्रसदृशं पीत्वा चान्द्रायणं चरेत् ॥
मलमूत्रं समुत्सृज्य विस्मत्यैवोपवीतधृक् ।
उपवीतं तदुत्सृज्य दध्यादन्यन्नवं तदा ॥ ( सायणः )

७५९–प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा ॥ ( यमः )
मलमूत्रयोर्वेगं न धारयेत् । नोपरुद्धः क्रियां कुर्यादिति-
वचनात् ।

**शौचविधिः ।**

७६०–गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ (याज्ञवल्क्यः)

७६१–उद्धृत्योदकमादाय मृत्तिकां चैव वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ॥
( ब्रह्माण्डपुराणम् )

७६२–एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातं शकृति त्रिगुणं भवेत्
( शातातपः )

७६३–यावत्तु शुद्धिं मन्येत तावच्छौचं विधीयते ।
प्रमाणं शौचसंख्यायां न शिष्टैरुपदिश्यते ( देवलः )

७६४–तिस्रस्तिस्रः प्रदातव्याः पादयोर्मृत्तिकाः पृथक् ।
( बृहन्नारदीये )

७६५–प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः ।
न हसन्नैव संजल्पन्नाऽऽत्मानमवलोकयन् ॥
इत्येवं मृद्भिराजानु प्रक्षाल्य चरणौ पृथक् ।
हस्तावामणिबन्धाच्च कुर्यादाचमनं ततः ॥
( स्मृतिदीपिकायाम् )

७६६–अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

**गण्डूषः ।**

७६७–कुर्याद्द्वादश गण्डूषान्पुरीषोत्सर्जने द्विजः ।
मूत्रे चत्वार एव स्युर्भोजने न तु षोडश ।
भक्ष्यभोज्यावसाने च गण्डूषाष्टकमाचरेत् ॥

---

§ रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते ( पितामहः ) । $ कर्णश्चात्र दक्षिणः ।

### आचमनम् ।

७६८–कृत्वाथ शौचं प्रक्षाल्य हस्तौ पादौ च मृज्जलैः।
निबद्धशिखकच्छस्तु द्विज आचमनं चरेत् ॥
( वृं. पराशरः )

७६९–अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥
कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् । ( योगी )

### दन्तधावनम् ।

७७०–प्रक्षाल्य हस्तौ पादौ च मुखं च सुसमाहितः ।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरे ततः ।।
प्राङ्मुखश्चोपविष्टस्तु भक्षयेद्वाग्यतो नरः । (भारते)
वितीस्तमात्रमुद्दिष्टं दन्तकाष्ठं द्विजन्मनाम् ।
कनिष्ठाङ्गुलिवत्स्थूलं तदग्रकृतकूर्चकम् (आश्वलायनः)
पुरोदयाद्रवेस्त्वथान्नोदितेऽस्तमिते रवौ। (आश्वलायनः)
खदिरश्च करञ्जश्च कदम्बश्च वटस्तथा ।
तिन्तिडी वेणुपृष्ठं च आम्रनिम्बौ, तथैव च ॥
अपामार्गश्च बिल्वश्च अर्कश्चौदुम्बरस्तथा ।
बदरी तिन्दुकास्त्वेस्ते प्रशस्ता दन्तधावने॥(नारसिंहे)
प्रतिपद्दर्शषष्ठीपु नवम्यां दन्तधावनम् ।
पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव हि॥ (व्यासः)

### केशप्रसाधनम् ।

७७१–स्वाचान्तस्तु पुरःकुर्यात्पुनाङ्केशप्रसाधनम् ।

### स्नानविधिः ।

७७२–नित्यमभ्युदयात्पूर्वं स्नातव्यं शुद्धिमिच्छता ।
एष साधारणो धर्मश्चतुर्वर्णस्य कीर्तितः ॥ ( कौर्मे )
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ।
स्त्रियन्ति हि सुपुप्तस्य इन्द्रियाणि स्रवन्ति हि ॥
अंगानि समतां यान्ति चोत्तमान्यधमैः सह ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ॥
स्रवत्येव दिवा रात्रौ प्रातःस्नानं विशोधनम् ।
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥
गुणादशस्नानपरस्य साधो रूपं च तेजश्च बलं च शौचं
आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्नघातश्च तपश्च मेधा।
( याज्ञवल्क्यः)

नद्यां स्नानानि पुण्यानि तडागे मध्यमानि च ।
वापीकूपे जघन्यानि गृहे प्रत्यवराणि च ॥
प्रातः स्नातुमशक्तस्य रोगार्वैर्वा भयाच्च वा ।
पूर्ववस्त्रं परित्यज्य गौणस्नानेन शुद्धता ॥

### वस्त्रधारणम् ।

७७३–स्नानवस्त्रं ततः पीड्य पुनराचमनं चरेत् ।
( कार्ष्णाजिनिः )

७७४–अज्ञाने शक्तौ वस्त्रेण पाणिना न च मार्जयेत्।
धौताम्बरेण वा प्रोञ्छय विभृयाच्छुष्कवाससी ॥
( देवलः )

७७५–'शुक्लमहतं वासो ब्राह्मणस्य कार्पासं मांजिष्ठं क्षौमं क्षत्रियस्य ' ( वसिष्ठः )

७७६–ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ ( प्रचेताः )

७७७–अभावे धौतवस्त्रस्य शाणक्षौमाऽऽविकानि च ।
कुतपं यांगपट्टं वा द्विवासा येन वै भवेत् ॥
( याज्ञवल्क्यः )

### नग्नलक्षणम् ।

७७८–नग्नःस्यान्मलवद्वासा नग्नः कौशेयकेवलः ।
विकच्छोऽनुत्तरीयश्च द्विकक्षोऽ वस्त्र एव च ।
नग्नः कषायवस्त्रः स्यान्नग्नश्चार्धपटावृतः (प्रभासखंडे)

७७९–नग्नो द्विगुणवस्त्रः स्यान्नग्नो दग्धपटः स्मृतः ।
नग्नस्तु स्यूतवस्त्रः स्यान्नग्नो ग्रथितवल्कलः ।
नग्नश्च बहुवस्त्रः स्यान्नग्नः कौपीनकेवलः ॥ ¶( भृगुः )

### वस्त्रशोषणप्रकारः ।

७८०–प्रागग्रमुदगग्रं वा धौतं वस्त्रं प्रसारयेत् ।
पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षलनाच्छुचि ॥
( शातातपः )

### अवस्थानुरूपं वस्त्रधारणम् ।

७८१–अन्यदेव भवेद्वासः. शयनीयं नराधिप ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥
अन्यच्च लोकयात्रायामन्यदीश्वरदर्शने ॥ (भारते)

७८२–अन्यत्स्नाने तथा माने भोजने चान्यदेवहि । (सुमन्तुः)

### तिलकः ।

७८३–सितेन भस्मना कुर्यात्त्रिसन्ध्यं च त्रिपुंड्रकम् ।
सर्वपापविनिर्मुक्तः शिवेन सह मोदते ॥ (भवि०पुराणे

---

+ ईषद्धौतमकारुधौतम् । स्वयं धौतमिति भावः । अधौत कारुधौतं च पूर्वेद्युर्धौतमेव च । अप्सु यत्पीडितं वस्त्रं तत्त्याज्यं सर्वथा द्विजैः ॥ पूर्वेऽह्नि धौतं कार्पासं देवै मिश्र्ये च कर्मणि । ग्राह्यं शुध्दं विजानीयात्तदन्यत्क्षालनाच्छुचि ॥ ( कात्यायनः ) तदन्यद्दिनद्वयात्पूर्वं धौतमित्यर्थः । पट्टवस्त्रं कम्बलं च धौतमष्टदिनावधि । शुद्धं तदन्यथाऽ-शुध्दं पुनः प्रक्षालनाच्छुचि ॥ ( प्रयोगचिंतामणौ ) ऽ क्षौममतसीसूत्रकृतम् । कुतपो नेपालकम्बलः । द्विवासा इति पदोपादानाचोत्तरीयत्वेन शाणादीनां ग्रहणम् । ¶ कौशेयकेवलस्य नग्नत्वोक्तेर्वासोन्तरसहितकौशेयसत्वे न नग्नत्वम् । परिहितवस्त्रोपरीतदुत्तरार्धेन वस्त्रान्तरेण वा कटिबन्धने द्वितीया कक्षा, तद्वान्द्विकक्षः । एकस्य पटस्यार्धं प्रावृण्वानोऽर्धपटावृतं खंण्डपटं वसानो वा ।

७८४-स्नात्वा पुण्ड्रं मृदा कुर्यात् धृत्वा चैव तु भस्मना ।
देवानभ्यर्च्य गन्धेन जलमध्ये जलेन तु ॥ (पारिजाते)

७८५-मध्यमानामिकांगुष्ठैरनुलोमाविलोमतः ।
अतिस्वल्पमनायुष्यमतिदीर्घं तपोहरम् ।
नेत्रयुग्मप्रमाणेन त्रिपुण्ड्रं धारयेद्द्विजः ॥
ललाटे हृदि नाभौ च गलेंऽसे बाहुसंधिषु ।
पृष्ठदेशे शिरस्येवं स्थानेष्वेतेषु धारयेत् ॥
( स्मृतिरत्नावल्याम् )

७८६-अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि ।
माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनम् ।
( ज्योतिर्निबंधे )

७८७-मृत्पुण्ड्रं भस्मपुण्ड्रं च स्नानं शीतोदकेन च ।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि (स्मृतिसंग्रहे)

## सन्ध्योपासनम् ।

७७८-प्रातःसंध्या+ सनक्षत्रा मध्याह्ना मध्यगे रवौ ।
पश्चिमा तु समाख्याता रविनक्षत्रवर्जिता ॥
प्रणवव्याहृतियुतां गायत्रीं शिरसा सह । §
उच्चार्य दत्त्वाऽर्घ्यमादौ संध्याकर्म समाचरेत् ॥

इतः परमौपासनहोमजप सूर्यनमस्कार-देवपूजा कर्तव्या । ततः परं मङ्गलदर्शनं कार्यम् ।

## अथ दिवसद्वितीयभागकृत्यम्

७८९-द्वितीये च तथा भागे वेदाभ्यासो विधीयते । ¶
समित्पुष्पकुशादीनां स कालः समुदाहृतः ( दक्षः )

## अथ दिवसतृतीयभागकृत्यम् ।

### पोष्यपोषणम् ।

७९०-तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ( दक्षः )
माता पिता गुरुर्भार्या प्रजाहीनः समाश्रितः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः । (दक्षः)
वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ ( मनुः )

### धनार्जनम् ।

७९१-उपेयादीश्वरं चाथ योगक्षेमार्थसिद्धये ।
साधयेद्विविधानर्थान्कुटुम्बार्थे ततो द्विजः ॥ ( कौर्मे )

७९२-आपद्यनन्तरावृत्तिर्ब्राह्मणस्य विधीयते ।
वैश्यवृत्तिस्ततश्चोक्ता न जघन्या कथं च न ॥
( नारदः )

७९३-कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः ।
सेवानूपं नृपो भैक्षमापत्तौ जीवनानि तु † ॥
( याज्ञवल्क्यः

### अर्जितधनस्य विभागः ।

७९४-धर्मेणार्थः समाहार्यो धर्मलब्धं त्रिधा धनम् ।
कर्तव्यं धर्मपरमं मानवेन प्रयत्नतः ।
एकेनांशेन धर्मार्थश्चर्तव्यो भूतिमिच्छता ।
एकेनांशेन कामार्थमेकमंशं विवर्धयेत् § । ( दानधर्मे )

७९५-तस्मात् त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः ॥ (शिवधर्मे)

७९६-धर्माय यशसेऽर्थाय, कामाय, स्वजनाय च ।
पञ्चधा विभजन्वित्तमिहामुत्र च मोदते । (भागवते)

## अथ दिवसचतुर्थभागकृत्यम् ।

७९७-अत्र मध्याह्नस्नानम्, ब्रह्मयज्ञः, मध्याह्नसंध्या इत्येतेषां कर्मणामन्तर्भावः ।

## अथ दिवसपञ्चमभागकृत्यम् ।

७९८-अत्र वैश्वदेवः, पितृयज्ञः, अतिथिपूजा, भिक्षादानम्, भोजनम् इत्यादीनि कर्माणि कर्तव्यानि । तत्र भोजने विशेष उच्यते—

सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ❀ (मनुः)

७९९-अभक्ष्यस्य निवृत्तौ तु विशुध्दं हृदयं भवेत् ।
आहारशुद्धौ चित्तस्य विशुद्धिर्भवति स्वतः ।
अभक्ष्यभक्षणाच्चित्तमशुद्धं भवति स्वतः ।

---

+ अत्र संध्यापदस्य संधिरूपकालयोगाद्दर्शपूर्णमासादिपदवत्कर्मनामधेयत्वमभिमतम् । तत्रार्घ्यप्रक्षेपणं, गायत्रीजपः, सूर्योपस्थानं चेति त्रितयं संध्याकर्मणि प्रधानम् । मार्जनाचमनादीनां समस्तानामङ्गत्वम् । त्रितयेऽप्यर्घ्यप्रक्षेपणं बलवत्, गायत्र्याभिमन्त्रिता अप ऊर्ध्वं विक्षिपन्तीति श्रुतौ तावन्मात्रस्यैव प्रधानत्वेन-विधानात् । गायत्रीजपोपस्थानप्रतिषेधपूर्वकमाशौचादावप्यर्घ्यप्रक्षेपणमात्रविधानाच्चेति केचित् । अन्ये तु-'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येतिय एवं वेद' इति श्रुतौ ध्यानमात्रोक्तेः, ते तथैव महाराज दंशिता रणमूर्धनि । संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥ इति भारते रणे साङ्गानुष्ठानासमर्थैरर्जुनादिभिः सूर्योपासन-शब्दवाच्यसूर्यध्यानमात्रस्यानुष्ठितत्वाच्च गायत्रीजपरूपध्यानस्यैव प्राधान्यं मन्यन्ते । आश्वलायनगृह्ये-संध्यामुपासीतेत्युपक्रम्य जपमात्रस्यैव विधानादाश्वलायनानां त्विदमेव युक्तम् । §शिरसा सह-शिरोव्याहृत्या सह । ¶ वेदाभ्यास इत्युपलक्षणमन्येषामपि शास्त्राणाम् । † कृषिः स्वकृता, शिल्पं क्रियाकौशलम्, भृतिर्वेतनम्, विद्या भृतकाध्यानादि, कुसीदं स्वयंकृता वृद्धिः, शकटं धान्यादिवाहनेन जीवनसाधनम् । एवं गिरितृणादिना । अनूपं जलप्रायदेशः शाकादिना । § कामः कुटुम्बस्यात्मनश्चावश्यको भोगः । वर्धयेदित्यनेन धनेन धनान्तरमर्जयेदिति प्राप्यते । ❀ अत्र प्रातःशब्दोऽष्टधा विभक्तदिनपञ्चकपरः । सायंशब्दश्च घटिकात्रयोर्ध्वरात्रिपरः ।

अशुद्धाद्भ्रान्तिविज्ञानं जायते सुदृढं नृणाम् ।
तस्मादभक्ष्यं यत्नेन दूरतः परिवर्जयेत् ॥ (व्यासः)

८००–जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम् ।
संसर्गाश्रयदुष्टं च सहृल्लेखं स्वभावतः (अपरार्के)
लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
वृन्ताकं नालिकालाबु उपेयाज्जातिदूषितम् ।
न भक्षयेत् क्रियादुष्टं यद्दुष्टं पतितैः पृथक् ।
कालदुष्टं तु विज्ञेयमशृतं चिरसंस्थितम् ।
दधिभक्ष्यविकारांश्च मधुवर्जं तदिष्यते ।
सुरालशुनसंसृष्टं पीयूषादिसमन्वितम् ॥
अभोज्यान्नं विजानीयादन्नमाश्रयगर्हितम् । +
विचिकित्सा तु हृदये अन्ने यस्मिन्प्रजायते ।
सहृल्लेखं तु विज्ञेयं पीयूषं तु स्वभावतः ॥
काले सात्म्यं लघु स्निग्धमुष्णक्षिप्रं रसोत्तरम् ।
बुभुक्षितोऽन्नमश्नीयान्मात्रातावद्धितागमः ॥

## पात्राणि ।

८०१–सौवर्णे राजते ताम्रे पद्मपत्रपलाशयोः ।
भाजने भोजने चैव त्रिरात्रफलमश्नुते ॥
(पराशरमाधवीये)
पलाशस्तिन्दुकः कुब्जः प्रियालः पनसस्तथा ।
पद्मिनीप्लक्षजम्ब्वाम्रकदलीचम्पकादयः ॥
भोज्यपत्रा स्मृता वृक्षा न दोषो भोजनाद्भवेत् । *

## भोजननियमाः ।

८०२–अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः ॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनं तथा ।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ॥
(स्मृतिरत्नावल्याम्)
अष्टौ ग्रासा मुने भक्ष्याः षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य अमानं ब्रह्मचारिणः ॥
वक्त्रप्रमाणपिण्डांश्च ग्रसेदेकैकशः पुनः ।

## अथ दिवसषष्ठसप्तमभागकृत्यम् ।

८०३–भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् ॥ (दक्ष)
भूयोऽप्याचाम्यकर्तव्यं ताम्बूलस्य च भक्षणम् ।
श्रवणं चेतिहासस्य ततः कुर्यात्समाहितः ॥
(मार्कंडेयपुराणे)
दन्तधावनताम्बूलं क्षौराभ्यङ्गमभोजनम्
रत्यौषधिपरान्नं च श्राद्धकृत्सप्त वर्जयेत् । (जाबालिः)

## ताम्बूलभक्षणोत्तरकर्म ।

८०४–न भुक्तमात्र आयस्येन्न निषिद्धं लभेत्सुखम् ।
धर्मोत्तराभिरथ्याभिः कथाभिस्त्रिगुणात्मभिः
८०५–मध्यं दिनस्य गमयेदिष्टशिष्टसहायवान् ।
सुजनैः संगतं कुर्याद्धर्माय च सुखाय च ॥

## सुजनाः ।

८०६–बुद्धिविद्यायशःशीलधैर्यस्मृतिसमन्वितान् ।
त्यागविज्ञानसत्त्वाढ्य महापक्षान्प्रियंवदान् ॥
वृद्धोपसेविनः स्निग्धान्स्वभावज्ञान्गतव्यथान् ।
सुसुखान्सर्वभूतेषु प्रशान्तान्छंसितव्रताम् ।
धीरान्सन्मार्गनिरतान्पुण्यश्रवणदर्शनाम् ॥
सद्वंशजातानद्वेष्यान्सहायान्परिकल्पयेत् ॥

## दुष्टजनाः ।

पापवृत्तवचःसत्त्वान्सूचकान्कलहप्रियान् ।
धर्मोपहासिनो लुब्धांश्चपरोरिपुसेविनः॥
परापवादनिरतान्परवृद्धौ द्विषः खलान् ।
पाखण्डिनो विकर्मस्थान्वैडालव्रतिनः शठान् ॥
लोकभूपतिविद्विष्टान्निर्घृणान्धर्मदूषकान् ।
हैतुकान्बकवृत्तांश्च दुर्जनान्दूरतस्त्यजेत् ॥
८०७–अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः § (याज्ञवल्क्यः)

## अथ दिवसाष्टमभागकृत्यम् ।

८०८–अष्टमे लोकयात्रा तु बहिःसंध्या। ततः पुनः। (दक्षः)

## सायंसंध्या ।

८०९–दृश्यमाने रवौ चैकमदृश्ये द्विमुहूर्तकम् ।
संध्याकालः स विज्ञेयस्तत्र सर्वं समाचरेत् ॥
(स्मृतिसंग्रहकारः)
८१०–घटिकैकाऽवशिष्टः स्याद्रवेरस्तमितस्य च ।
प्रक्षाल्य पाणिपादं च द्विराचान्तः शुचिर्भवेत् ।
प्राङासीनः समाचम्य सायंसंध्यां समाचरेत्
(आश्वलायनः)
८११–सायंसंध्यामुपासीत कुर्याद्धोमं च पूर्ववत् (दक्षः)

## दीपकालः ।

### (रात्रिचर्या ।)

रवेरस्तं समारभ्य यावत्सूर्योदयो भवेत् ।
यस्य तिष्ठेद्गृहे दीपस्तस्य नास्ति दरिद्रता ॥
८१२–सायंसंध्यां होमं च निर्वर्त्य भोजनात्प्राग्वैश्वदेवं कुर्यात् ।

## सायंभोजनम् ।

८१३–उपास्य पश्चिमां सन्ध्यां हुत्वाग्नीन्समुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥
(याज्ञवल्क्यः)
८१४–चत्वारीमानि कार्याणि संध्यायां परिवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥
सायंसंध्या त्रिघटिका ह्यस्तादुपरि भास्वतः ‡

---

+ अभोज्याः कदर्यबद्धचौरादयः । पीयूषोऽभिनवं पयः प्रस्रवानन्तरं दशदिनपर्यन्तं यत्पयस्तस्य नाम ॥

* कुब्जः–आघाडा, प्रियालः–चार, प्लक्षः–पायरी.

§ अत्र अहःशेषे एव भोजनात्परं कंचित्कालं विहारार्थसंपादनकार्यमप्यनायाससाध्यं कर्तव्यं सति प्रयोजने।

‡ एवं चास्तात् त्रिघटिकाकालादूर्ध्वं भुञ्जीतेति सिद्धम् ।

८१५-निशायाः प्रथमे यामे जपयज्ञार्चनादिकम् ।
स्वाध्यायो भोजनं प्रोक्तं वर्जयित्वा महानिशाम्॥ ‡ (शौनकः)

## रात्रिभोजने निषिद्धानि द्रव्याणि ।

८१६-शुण्ठी दधि क्षौद्रतिलं च तैलं सर्वाणि शाकानि च तिक्तवन्ति ।
रात्रौ न भुञ्जीत विदाहि चान्नमायुःक्षयं क्षीणबलं करोति॥

## रात्रिभोजननिषेधः ।

८१७-आदित्ये पर्वसंक्रान्तौ व्यतीपाते पितुर्दिने ।
अभ्यङ्गं चोपवासं च न कुर्यान्निशि भोजनम् (शौनक)

## रात्रिभोजनोत्तरं कर्तव्यम् ।

८१८-प्रदोषपश्चिमौ यामौ वेदाभ्यासेन § वै नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥ (दक्षः)

## शयनविधिः ।

८१९-कृतपादादिशौचश्च भुक्त्वा सायं ततो गृही ।
गच्छेदस्फुरितां शय्यां ततो दारुमयीं नृप ॥
( चन्द्रिकायाम् )

८२०-गच्छेच्छय्यामस्फुरितामेकदारुमयीं नृप ।
नाविशालां न वै भग्नां नासमां मलिनां तथा ॥
न च दन्तमयीं शय्यामधितिष्ठेदनास्तृताम् । ¶
( विष्णुपुराणे )

## शय्याप्रमाणम् ।

८२१-चतुराशीति पर्वाणि दैर्घ्येण परिकल्पयेत् ।
षष्ट्यङ्गुलानि विस्तारं मञ्चकं हस्तसंमितम् ऽ ॥
८२२-एवं शय्या विधातव्या सर्वेषां शयनोचिता ।
मानाधिक्ये दरिद्रः स्यान्मानहीने सुखक्षयः ॥

## पर्यङ्कप्रमाणम् ।

८२३-आयामः सप्ततालः स्याच्चतुस्तालं च विस्तृतम् ।
द्वितालमुन्नतं ज्ञेयमेतत्पर्यङ्कलक्षणम् ॥ §

## परशय्यानिषेधः ।

८२४-आत्मशय्यासनं वस्त्रं जायाऽपत्यं कमण्डलुः ।
शुचीन्यात्मन एतानि परेषामशुचीनि वै ॥(बौधायनः)

## शयनसामग्री ।

८२५-शुचि देशं विविक्तं तु गोमयेनोपलेपयेत् ।
प्रागुदक्प्रवणं चैव संविशेत्तु तदा बुधः॥ ( व्यासः )
८२६-उपानद्वैणवं दण्डमम्बुपात्रं तथैव च ।
ताम्बूलादीनि सर्वाणि समीपे स्थापयेद्गृही ॥
८२७-यानि कानि च पुष्पाणि यत्किंचिदनुलेपनम् ।
अलक्ष्मीपरिहारार्थं नित्यं कुर्याद्विलक्षणः ॥ (स्कांदे)
८२८-मङ्गल्यं पूर्णकुम्भं च शिरःस्थाने निधापयेत् ।
अभीष्टदेवतां स्मृत्वा संविशेन्मङ्गलध्वनौ ॥ ( गार्ग्यः )

## शयनपद्धतिः

८२९-स्वपेत्तु दक्षिणशिराः प्राक्शिरा वा स्ववेश्मनि ।
नोत्तराभिमुखः स्वप्यात्पश्चिमाभिमुखो न च ॥
( पारिजाते)
न दशां पादयोः कृत्वा प्रोर्णुयाद्वाससा बुधः ।
नोर्वोर्निधाय हस्तं च स्वपेन्मध्ये त्वधोमुखः ॥
उत्तानवक्षा न शयन्नाधोवक्षाश्च कर्हिचित् ।

## स्त्रीसंभोगः ।

८३०-पत्नीमृतुमतीं स्निग्धां तृप्तां भोगविवर्जिताम् ।
उपेयान्मध्यरात्रान्ते जीर्णेऽन्ने तृप्तमानसः ॥
( आश्वलायनः )
८३१-ततोऽर्धयाममात्रे तु विहारार्थं समुत्थितः ।
ताम्बूलपूरितमुखस्तन्वच्छिद्रामलाम्बरः @
८३२-षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् ।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ॥
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्× (याज्ञवल्क्य)
८३३-दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती ।
श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोर्थी न च पर्वसु
८३४-ऋतुकालाभिगमनं पुंभिः कार्यं प्रयत्नतः (शिवरहस्ये)
सदैव वा पर्ववर्ज्यं स्त्रीणामभिमतं हि तत् (बृहस्पति)
८३५-याथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्याः प्रयत्नतः ॥
( याज्ञवल्क्यः )
८३६-कुंकुमं चाञ्जनं चैव ताम्बूलं सिन्दुरं तथा ।
धौतवस्त्रं च कुसुमं संयोगे च शुभावहम्
( ज्योतिर्निबन्धे )
ताम्बूलमादौ चर्वित्वा भार्यासङ्गं समाचरेत्
८३७-विनाताम्बूलवदनां नग्नामाक्रन्दरोदनाम् ।
दुर्मुखां क्षुधयायुक्तां संयोगे परिवर्जयेत्

## उपगमनविधिः ।

८३८-स्वपेत्स्त्रीं प्राक्शिरां कृत्वा प्रत्यक्पादौ प्रसारयेत् ।
भुक्तवानुपविष्टस्तु शय्यायामभिसंमुखः ॥
संस्मृत्य परमात्मानं पत्न्या जङ्घे प्रसारयेत् ।
योनिं दृष्ट्वा जपेत्सूक्तं विष्णुर्योनिं प्रजापतेः ॥
रेतः संक्रान्ततो योन्यां तस्माद्गर्भं बिभर्ति सा ।

---

‡ महानिशा तु विज्ञेया मध्यं यामद्वयं निशि । सार्धप्रहरयामान्त इति केचित् । अतः 'घटिकादशकादर्वाङ्निशि भुञ्जीत नित्यशः' इति वचनं संगच्छते । § वेदशब्दस्तदङ्गोपाङ्गानामप्युपलक्षणम् । ¶ एकदारुमयीमेकवृक्षस्य दारुणा निर्मिताम् । दन्तमयीम्-मृतहस्तिदन्तमयीम् । दन्तमयीमित्यत्र जन्तुमयीमित्यपि पाठः, स च श्रेयान् । ऽ उच्चमिति शेषः । § अङ्गुष्ठादिकनिष्ठान्तं भवेन्मानचतुष्टयम् । प्रदेश-ताल-गोकर्ण-वितस्तिस्तु यथाक्रमम् । @ रतिं कुर्यादिति शेषः । ×पर्वाणीतिबहुवचनादष्टमीचतुर्दश्योर्ग्रहणम् ।

